॥ श्रीगणेशाय नमः ॥

न्यास-पदमञ्जरी-भावबोधिनी-हिन्दी-व्याख्यासहिता

# काशिका

## अथ सप्तमाध्याये द्वितीयः पादः

### ३२८०. सिचि वृद्धिः परस्मैपदेषु ॥ १ ॥ (२२९७)

**परस्मैपदपरे सिचि परत इगन्तस्याङ्गस्य वृद्धिर्भवति । अचैषीत् । अनैषीत् । अलावीत् । अपावीत् । अकार्षीत् । अहार्षीत् । अन्तरङ्गमपि गुणमेषां वृद्धिर्वचनाद्बाधते । (म० भा०)**

**न्यासः**

**सिचि वृद्धिः परस्मैपदेषु ॥** 'सार्वधातुकार्धधातुकयोः' इति गुणे प्राप्ते वचनमिदमारभ्यते । सिचीति, परस्मैपदेष्विति च—द्वे अप्येते परसप्तम्यौ; तत्र सिचोऽङ्गापेक्षं परत्वम्, परस्मैपदानां तु सिजपेक्षम् । **परस्मैपदपर इति** । परस्मैपदं परं यस्मात् स तथोक्तः । **इगन्तस्येति** । 'इको गुणवृद्धी' इत्यस्योपस्थाने सतोऽङ्गं विशिष्यते, विशेषणेन च तदन्तविधिर्भवतीत्याह—**इगन्तस्याङ्गस्य वृद्धिर्भवतीति** । **अचैषीत्, अनैषीदिति** । 'चिञ् चयने', 'णीञ् प्रापणे', भूते लुङ्, 'च्लेः सिच्', 'एकाच.' इत्यादिनेट्प्रतिषेधः, अडागमः,

**पदमञ्जरी**

**सिचि वृद्धिः परस्मैपदेषु ॥** अत्र सिचि, परस्मैपदेष्विति द्वे अपि परसप्तम्यौ, तत्र सिचोऽङ्गापेक्षं परत्वम्, परस्मैपदानां सिजपेक्षम् । 'इको गुणवृद्धी' इति वचनादिकः इत्युपतिष्ठते, तत्रेकाङ्गस्य विशेषणात्तदन्तविधिर्भवतीत्याह—**इगन्तस्याङ्गस्येति** । उदाहरणेषु 'अस्तिसिचोऽपृक्ते' इतीट्, सेटः सिचः 'इट ईटि' इति लोपः । ननु चान्तर्भूतसिज्मात्रापेक्षत्वाद् गुणोऽन्तरङ्गः, बहिर्भूतं परस्मैपदं सिचं चापेक्षत इति वृद्धिर्बहिरङ्गा, ततश्च पूर्वं गुणे कृते इगन्तस्याङ्गस्येति नोपपद्यते ? इत्यत आह—**अन्तरङ्गमपीति** ।

यथैव तर्हि गुणं बाधते तथोवङमपि बाधेत, तत्राह—**न्यनुवीन्यधुवीदित्यत्रेति** । 'णू स्तुतौ', ( धा० पा० १३९७ ) 'धूञ् विधूनने' ( धा० पा० १३९८ ) कुटादी । यत्र हि वृद्धिः प्रवर्त्तते तत्रान्तरङ्गं बाधेत, इह तु प्रतिषेधादप्रवृत्ता सती नोत्सहते बाधितुम् । ननु च यथा गुणो बाध्यते, एवं प्रतिषेधोऽपि बाधनीयः ? 'येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति' ( व्या० पा० ४९ ), गुणे च नाप्राप्ते वृद्धिरारभ्यते,

**भावबोधिनी**

**सारदां शारदां नत्वेभास्यं काशीश्वरं गुरून् ।**
**द्वितीयं सप्तमे पादं व्याचष्टे 'जयशङ्करः' ॥**

अब सप्तम अध्याय में द्वितीय पाद प्रारम्भ होता है—

परस्मैपद ( संज्ञावाले ) प्रत्यय के परे रहने पर इगन्त ( इ, उ, ऋ, ऌ जिसके अन्त में हैं ऐसे ) अङ्ग की वृद्धि होती है । उदा०—अचैषीत् । अनैषीत् । अलावीत् । अपावीत् । अकार्षीत् । अहार्षीत् । इन ( शब्दों ) के अन्तरङ्ग भी गुण का बाध वृद्धि कर लेती है क्योंकि यह [ स्वतन्त्र ] वचन [ बनाया गया ] है । [ इनमें क्रमशः 'चिञ् चयने' 'णीञ् प्रापणे' इन इकारान्त तथा ईकारान्त धातुओं से लुङ्, अट्, तिप्, च्लि, च्लि का सिच् करने पर अ चि+स्+ति, अ नी+स्+ति । एकाच् होने से इडागम का निषेध होता है । 'इतश्च' (३।४।१००)

**न्यनुवीत्, न्यधुवीत्–इत्यत्र कुटादित्वाण्ङित्त्वे सति प्रतिषिद्धायां वृद्धावुवङादेशः क्रियते ।**

**न्यासः**

'नित्यं ङितः' इत्यनुवर्त्तमाने 'इतश्च' इतीकारलोपः, 'अस्तिसिचोऽपृक्ते' इतीट्, 'इण्कोः' इत्यनुवर्त्तमाने 'आदेशप्रत्यययोः' इति षत्वम् । **अलावीत्, अपावीदिति ।** पूर्ववल्लुङ्, 'आर्धधातुकस्येड्वलादेः' इतीट्, पूर्ववदीट्, 'इट ईटि' इति सिचो लोपः । **अकार्षीदित्युदाहरणं** सुबोधम् । ननु चात्रान्तरङ्गत्वाद् गुणेन भवितव्यम्, अन्तरङ्गत्वं पुनस्तस्यार्धधातुकापेक्षत्वात्; वृद्धेस्त्वार्द्धधातुकविशेषं परस्मैपदपरं सिचमपेक्ष्य बहिरङ्गत्वम् ? अत आह—**अन्तरङ्गमपीत्यादि ।** यद्यन्तरङ्गत्वाद् गुणः स्यात्, तदैतद्वचनमनर्थकं स्यात् । तस्माद्वचनसामर्थ्याद् बहिरङ्गापि वृद्धिर्गुणं बाधते । यद्येवम्, तर्हि यथा वचनसामर्थ्याद् वृद्धिरन्तरङ्गमपि गुणं बाधते, तथोवङादेशमपि बाधेत; ततश्च न्यनुवीत्, न्यधुवीदिति न सिध्येत् ? इत्यत आह—**न्यनुवीन्न्यधुवीदित्यादि ।** यत्र हि वृद्धेः प्रतिषेधो नास्ति, तत्र वचनसामर्थ्याद्विध्यन्तरं बाधित्वाऽसौ प्रवर्त्तते । इह तु ङित्त्वे सति 'क्ङिति च'

**पदमञ्जरी**

प्रतिषेधे च प्राप्ते चाप्राप्ते चेति । अथैवं कस्मान्न कल्प्यते—अन्तरङ्गत्वाद् गुणे कृते वचनादनिकोऽपि वृद्धिर्भवति, यथा—अचैषीदित्यादावेकारस्य, अहौषीदित्यादावोकारस्येति; तत्रायमर्थः—'ह्म्यन्तक्षण' इत्यत्र ण्श्वि-ग्रहणं न कर्त्तव्यं भवति, कथम् ? औनयीत्, अश्वयीदित्यादौ अन्तरङ्गत्वाद् गुणायादेशयोः कृतयोर्यान्तानां 'ह्म्यन्त' इत्येव प्रतिषेधः सिद्धः ? नैवं शक्यं कल्पयितुम्; एवं हि कल्प्यमाने अभैत्सीदित्यादौ व्यञ्जनस्यापि वृद्धिप्रसङ्गः । 'वदव्रजहलन्तस्याचः' इत्येषा व्यञ्जनवृद्धिं बाधिष्यते ? नाप्राप्तायां तस्यामारम्भात् । यत्र तर्हि सा प्रतिषिध्यते—अनन्दीत्, अदेवीदित्यादौ, तत्र व्यञ्जनस्य सिचि वृद्धिः प्राप्नोति ? नैष दोषः; 'नेटि' इत्यनेन हलन्तस्य या च यावती च वृद्धिः प्राप्नोति–'वदव्रज' इति वा, सिचि वृद्धिः' इति वा, सा सर्वा प्रतिषिध्यते । इह तर्हि अगवीदिति गोशब्दस्याचारक्विबन्तस्य सिचि वृद्धिः प्राप्नोति ? अत्राप्यन्तरङ्गत्वाद-वादेशे कृते हलन्तलक्षणाया वृद्धेः 'नेटि' इति प्रतिषेधः । 'अतो हलादेर्लघोः' इति विकल्पस्तु सत्यपि सिचि वृद्धिरिग्लक्षणत्वे भवति । इह तर्हि न्यनुवीत्, न्यधुवीदिति–'क्ङिति च' इति प्रतिषेधो न प्राप्नोति, अनिग्ल-क्षणत्वात् ? मा भूत्प्रतिषेधः; अन्तरङ्गत्वादुवङादेशो भविष्यति । इह च अकार्षीदिति–गुणे रपरत्वे च कृते

**भावबोधिनी**

से इकार की इत्संज्ञा लोप करने के बाद 'अस्तिसिचोऽपृक्ते' ( ७।३।९६ ) सूत्र से ईट् का आगम अचि + सीत्, अनी+ सीत्, यहाँ "आदेशप्रत्यययोः" से षत्व करने पर सिच् परे मान कर इ, ई की वृद्धि 'ऐ' होती है—अनैषीत्, अचैषीत् । 'लूञ् छेदने' 'पूञ् पवने' धातुओं से पूर्ववत् लुङ् आदि करने के बाद "आर्धधातुकस्येड् वलादेः" (७।२।३५) सूत्र से इट् आगम करने पर अ पू + इ स् ति, अ लू + इ स् ति, इलोप के बाद "अस्तिसिचोऽपृक्ते" सूत्र से ईट् आगम— अपू इ स् ई त्, अ लू इ स् ई त् में "इट ईटि" ( ८।२।२८ ) सूत्र से सिच् लोप होने पर भी प्रस्तुत सूत्र से ऊकार की वृद्धि औ, आव् आदेश—अपावीत्, अलावीत् । 'डुकृञ् करणे' 'हृञ् हरणे' से पूर्ववत् लुङ् की सारी प्रक्रिया करने पर अ कृ+स् ईत्, अहृ + स् ईत्, षत्व, ऋ की वृद्धि आ, रपर—अकार्षीत्, अहार्षीत्, । इनमें आर्धधातुक-सामान्य की अपेक्षा करने के कारण 'सार्वधातुकार्धधातुकयोः' सूत्र से अन्तरङ्ग गुण प्राप्त होता है । परन्तु यह अन्तरङ्गत्व सर्वत्र सम्भव होने से कहीं भी वृद्धि नहीं हो सकेगी । अतः इस वचन को बनाने के कारण वृद्धि द्वारा गुण का बाध कर लिया जाता है । ]

'न्यनुवीत्, न्यधुवीत्'—इनमें कुटादि होने से ङित्व रहने पर वृद्धि का प्रतिषेध हो जाने पर उवङ् आदेश किया जाता है ।

**परस्मैपदेष्विति किम्? अच्योष्ट। अप्लोष्ट॥**

**३२८१. अतो ल्रान्तस्य ॥ ७।२।२॥ (२३३०)**

**न्यास**

इति वृद्धिः प्रतिषिध्यते, प्रतिषिद्धा च सती नोत्सहत उवङादेशं बाधितुम्। तेन तस्यां प्रतिषिद्धायाम् 'अचि श्नुधातु' इत्यादिनोवङादेशः क्रियते। ङित्त्वं पुनरत्र 'णू स्तवने', 'धू विधूनने'—इत्येतयोः कुटादिषु पाठाद् गाङ्कुटादि-सूत्रेण। यथा सामर्थ्याद् वृद्धया गुणो बाध्यते, तथा प्रतिषेधोऽपि बाध्येत एव? नैतदस्ति; गुणे हि नाप्राप्ते वृद्धिरारभ्यते, प्रतिषेधे तु प्राप्ते चाप्राप्ते च। तत्र येन नाप्राप्तिन्यायेन गुणस्यैव बाधा युक्ता, न प्रतिषेधस्य।

**अच्योष्ट, अप्लोष्टेति।** 'च्युङ् छ्युङ्, ज्युङ्, झ्युङ् प्रुङ् प्लुङ् गतौ', ङित्वादात्मनेपदम्॥ १॥

**अतो ल्रान्तस्य॥** अन्तशब्दोऽयमस्त्यवयववचनः; यथा—वस्त्रान्तः, वसनान्त इति। अस्ति च समीपवाची, यथा—उदकान्तं प्रियं प्रोथमनुव्रजेदिति। उदकसमीपमित्यर्थः। अत्रावयववाचिनोऽन्तशब्दस्य

**पदमञ्जरी**

हलन्तलक्षणा वृद्धिः? यत्रापि सा प्रतिषिध्यते-अतारीत्, अस्तारीदिति, तत्रापि 'अतो ल्रान्तस्य' इति वृद्धिः सिद्धा। इह तर्ह्यलावीत्, अयावीदन्तरङ्गत्वाद् गुणावादेशयोः कृतयोर्हलन्तलक्षणायाः 'नेटि' इति प्रतिषेधे 'अतो हलादेर्लघोः' इति विकल्पः प्राप्नोति? 'अतो ल्रान्तस्य' इत्यत्र वकारोऽपि प्रश्लिष्यते। किं वकारो न श्रूयते? लुप्तनिर्दिष्टो वकारः। इहापि तर्हि प्राप्नोति—मा भवानवीद्, अमवीदिति? णिश्विग्रहणमिह पक्षे न कर्त्तव्यमित्युक्तम्, तयोः स्थाने अविमवी प्रक्षेप्स्यामि। यर्त्तहि लाघवमस्मिन्पक्षे प्रदर्शितम्—णिश्विग्रहणं न कर्त्तव्यं भवतीति, तदेवं सति हीयते; किं चागवीदित्यत्रापि 'अतो हलादेर्लघोः' इति विकल्पं बाधित्वा वकारप्रश्लेषान्नित्या वृद्धिः प्राप्नोति; तथा चिप्रभृतिभ्यो यङ्लुगन्तेभ्यो लुङि अचेचायीदित्यादौ गुणायादेशयोः कृतयोर्यान्तानां नेति प्रतिषेधः प्राप्नोति; तथा चिरिणोति-जिरिणोत्योः अचिरायीत्, अजिरायीद्। तस्मादन्त-रङ्गमपि गुणमेषा वृद्धिर्वचनाद्बाधत इत्येतदेव साम्प्रतम्। न पुनरन्तरङ्गस्य प्रवृत्तिमभ्युपेत्य वचनादनिकोऽपि भवतीति। किं पुनः कारणमियमेव कल्पना भवति? णिश्विग्रहणात्, अन्यथा णिश्विग्रहणं न कर्त्तव्यं भवतीत्यनन्तरमेवोक्तम्॥ १॥

**अतो ल्रान्तस्य॥** अन्तशब्दोऽयमस्त्यवयववचनः—वस्त्रान्तः, वसनान्त इति; अस्ति समीपवचनः—उदकान्तं गत इति; तत्राद्ये पक्षे 'ल्रान्तस्य' इति बहुव्रीहिः, अङ्गमन्यपदार्थः अन्यस्यार्थस्यासम्भवात्। तत्र

**भावबोधिनी**

परस्मैपद परे रहते—इसका क्या फल है? अच्योष्ट। अप्लोष्ट। [ यहाँ आत्मनेपद प्रत्यय परे होने से वृद्धि नहीं होती है गुण होता है। ]

**विमर्श**—इस सूत्र से जहाँ जहाँ वृद्धि प्राप्त रहती है वहाँ सर्वत्र गुण भी प्राप्त रहता है और गुण अन्तरङ्ग भी है क्योंकि गुण सिच् मात्र की अपेक्षा रखता है किन्तु वृद्धि को सिच् तथा परस्मैपद इन दो की अपेक्षा होती है। अतः वृद्धि बहिरङ्ग है। परन्तु अन्तरङ्ग और बहिरङ्ग की स्थिति में सर्वत्र गुण ही होगा, वृद्धि नहीं हो सकेगी। अतः व्यर्थ होकर इस सूत्र के प्रणयन के कारण वृद्धि ही गुण का बाध करती है। अतः वृद्धि ही होती है गुण नहीं।

वृद्धि जैसे गुण का बाध करती है वैसे ही इयङ् तथा उवङ् का बाध नहीं करती है क्योंकि 'न्यनुवीत् न्यधुवीत्' इनमें कुटादिगण की '√णूञ् स्तुतौ' '√धूञ् विधूनने' धातु में 'गाङ्कुटादिभ्यो' ( १।२।१ ) सूत्र से प्रत्यय ङित् मान लिया जाने के कारण "क्ङिति च" सूत्र से वृद्धि तथा गुण दोनों का प्रतिषेध होने से इयङ् तथा उवङ् ही होते हैं। अतः प्रस्तुत वृद्धि गुण का ही अपवाद है, इयङ् उवङ् का नहीं॥ १॥

जो रेफ और लकार अकार ( ह्रस्व ) के अन्त = समीप में है, तदन्त ( = रेफान्त और लान्त ) अङ्ग के अकार के स्थान पर ही वृद्धि होती है। [ पूर्ववर्त्ती सूत्र इगन्त अंग की ही वृद्धि करता है प्रस्तुत सूत्र ह्रस्व अ की। ]

**रेफलकारौ यावतोऽन्तौ = समीपौ, तदन्तस्याङ्गस्य अत एव स्थाने वृद्धिर्भवति। क्षर-अक्षारीत्। त्सर-अत्सारीत्। ज्वल-अज्वालीत्। ह्मल-अह्मालीत्। 'अतो हलादेर्लघोः' (७.२.७) इति विकल्पस्यायमपवादः।**

**न्यासः**

ग्रहणे इहान्तग्रहणमनर्थकं स्यात्? तस्य ह्युपादानस्यैतत् प्रयोजनम्—रेफलकारान्तस्य यथा स्यादिति। एतच्च 'येन विधिस्तदन्तस्य' इत्यनेनैव सिध्यति। तस्मात् समीपवाचिन एव ग्रहणमिति मत्वाऽऽह—**रेफलकारौ यावतोऽन्तौ समीपाविति।** यदि तर्हि लरावन्तौ यस्य समीपावत इत्यनेन निर्दिश्यते वृद्धिभाग् न निर्दिष्टः स्यात्। एवञ्च 'अलोऽन्त्यस्य' इत्यन्त्यस्य स्यात्; अकारसमीपभूतस्य लरान्तस्यान्त्यस्य वृद्धिभाज इकोऽभावादित्यत आह—**अत एव स्थान इति।** एवं मन्यते—अकारस्य श्रुतत्वादकारस्यैव स्थाने वृद्धिर्विज्ञायत इति। **अक्षारीदित्यादि।** 'क्षर सञ्चलने', 'त्सर छद्मगतौ', 'ज्वल दीप्तौ', 'ह्वल ह्मल चलने'—इत्येतेषां रूपाणि। **अतो हलादेर्लघोरित्यस्य विकल्पस्यायमपवाद इति।** एतेन नित्यार्थतामस्य योगस्य दर्शयति।

**पदमञ्जरी**

वर्णग्रहणे सर्वत्र तदन्तविधिरित्येव सिद्धत्वादन्तग्रहणमतिरिच्यते। तस्मात्समीपवचनोऽन्तशब्दः। तत्रापि यदि षष्ठीसमासः स्यात्—रेफलकारयोः समीपभूतस्यातो वृद्धिर्भवतीति, ततो लषिरणिप्रभृतिष्वेव स्यात्। यदि परसमीपवचनोऽन्तशब्दः, अथ तु समीपमात्रवचनस्तदा इष्टविषये तावत्सिध्यति, अनिष्टेऽपि तु विषये प्राप्नोति, तथा अखल्लीदित्यत्रापि प्रसङ्गः। तस्मात्कर्मधारयः, निपातनाच्च विशेषणस्य परनिपातः। समीपभूतौ रेफलकारौ लरान्तशब्देन विवक्षितौ। कस्य समीपभूतावित्यपेक्षायाम् अत इत्यनेन सम्बन्धः। एवं विशेषिताभ्यां रेफलकाराभ्यामङ्गस्य विशेषणात्तदन्तविधिः। अतः समीपभूतौ यौ रेफलकारौ तदन्तस्याङ्गस्येति। यद्येवम्, एकत्वाद् 'अतः' इत्यस्य तस्य च रेफलकारयोः विशेषणे एव उपक्षीणत्वान्न वृद्धिभाङ्निर्दिष्टः स्यात्? विशेषणत्वेनापि तावदकारस्य श्रुतत्वात्तस्यैव वृद्धिर्भवतीत्यदोषः, तदिदमुक्तम्—**रेफलकारौ यावतः समीपभूतावित्यादि।**

वयं तु ब्रूमः—'समीपभूतरेफलकारान्तस्याङ्गस्यातः स्थाने वृद्धिर्भवतीत्येवाक्षरव्यापारः। तत्र कस्य समीपभूतावित्यपेक्षायां सन्निधानादतः समीपभूताविति गम्यते' इति। अपर आह—'रश्च लश्च लरम्, आगन्तुकोऽकारः, षष्ठ्या लुका निर्देशः, अत्र लरेणाङ्गस्य विशेषणात्तदन्तविधौ लरान्तस्याङ्गस्य योऽकारस्तत्र वृद्धिर्भवति। कीदृशस्यातः? समीपभूतस्य। सन्निधानाच्च लरं प्रति समीपभूतस्येति। अन्तशब्दश्च समीपमात्रवचनो न तु परसमीपवचनः' इति।

उदाहरणेषु 'क्षर सञ्चलने (धा० पा० ८५१), 'त्सर छद्म गतौ' ( धा० पा० ५५४ ), 'ज्वल दीप्तौ' ( धा० पा० ८०४ ), 'ह्वल चलने' ( धा० पा० ८०५ )।

**भावबोधिनी**

उदा० '√क्षर' [ = सञ्चलन अर्थ में हैं ]—अक्षारीत्। √त्सर [ = छद्मरूप से गमन अर्थ में है ]—अत्सारीत्। [ क्षर + लुङ्, त्सर + लुङ् अट्, तिप्, सिच्, इट् इलोप, ईट्, सिच्लोप, सवर्णदीर्घ—अक्षर् + ईत्, अत्सर् + ईत्। यहाँ रेफ अन्त में है। अतः अ की वृद्धि होती है—अक्षारीत्, अत्सारीत्। ] √ज्वल [ = जलना अर्थ में है ]—अज्वालीत्। 'ह्वल, ह्मल्' [ = ये दोनों चलना अर्थ में हैं ]—अह्वालीत्, अह्मालीत्। [ कहीं कहीं एक का ही पाठ है। पूर्ववत् अ की ही वृद्धि होती है। ] यह नित्य वृद्धि 'अतो हलादेर्लघोः' ( ७।२।७ ) से प्राप्त वैकल्पिक वृद्धि की अपवाद है। [ अतः रेफान्त और लान्त में नित्य तथा इनसे भिन्न में वैकल्पिक वृद्धि होती है। ]

**अत इति किम् ? न्यखोरीत् । न्यमीलीत् ।**
**ल्रान्तस्येति किम् ? मा भवानटीत् । मा भवानशीत् ।**
**अन्तग्रहणं किम् ? अवभ्रीत् । अश्वल्लीत् । अत्र यौ रेफलकारावङ्गस्यान्तौ न तावतः समीपौ ॥**

**न्यासः**

**न्यखोरीत्, न्यमीलीदित्यादि ।** 'खुर छेदने', 'मील श्मील स्मील क्ष्मील निमेषणे' । **मा भवानटीद्, मा भवानशीदिति ।** 'अट पट गतौ', 'अश भोजने' । 'न माङ्योगे' इत्याट्प्रतिषेधार्थो माङ्योगः । **भवानिति ।** अयं सन्देहनिरासार्थः; अतोऽन्यत्र विशेषाभावात् ।

**अवभ्रीदिति ।** 'अभ्र वभ्र मभ्र चर गत्यर्थाः' । **अश्वल्लीदिति ।** 'श्वल श्वल्ल आशुगमने' । **न तावतः समीपाविति ।** भकारलकाराभ्यां व्यवधानादिति ॥ २ ॥

**पदमञ्जरी**

**न्यखोरीत् न्यमीलीदिति ।** 'खुर छेदने' ( धा० पा० १३४२ ), 'मील निमेषणे' ( धा० पा० ५१७ ) **मा भवानित्यादि ।** 'अट गतौ' ( धा० पा० २९५ ), 'अश भोजने' ( धा० पा० १५२६ ), माङः प्रयोग अडागमनिवृत्त्यर्थः ।

**अवभ्रीत् अखल्लीदिति ।** 'वभ्रिर्गत्यर्थः' ( धा० पा० ५५७ ), 'खल्लिराशु गमने' । **अथान्तग्रहणं किमर्थम्,** न 'लरः' इत्येवोच्येत ? इहापि तर्हि प्राप्नोति–अवभ्रीत् अखल्लीदिति ? अकारमेव सिच्परत्वेन विशेषयिष्यामः–लरान्तस्याङ्गस्य योऽकारस्तस्य सिच्यनन्तरे वृद्धिर्भवतीति । न च रेफलकारान्तस्याङ्गस्य योऽकारस्तस्य सिजव्यवहितः सम्भवतीति सामर्थ्यात् 'येन नाव्यवधानं तेन व्यवहितेऽपि' वचनप्रामाण्यात्, (व्या० पा० ४६), इत्येकेन वर्णेन व्यवधानमाश्रयिष्यते । अथ वा–'अतो हलादेर्लघोः' इत्यस्यानन्तरमिदं कर्त्तव्यम्, तत्रायमप्यर्थः–अत इत्यपि न वक्तव्यं भवति, तत्र 'लघोः' इत्यनुवृत्तेरखल्लीदित्यादौ न भविष्यति । एवमपि चतुश्शब्दादाचारक्विपि लुङि सिचि चकारस्यापि प्राप्नोति ? तत्रापि सिचाऽऽनन्तर्यं विशेषयिष्यामः, तत्र यथा अचकासीदित्यत्र 'अतो हलादेर्लघोः' इति चकाराकारस्य वृद्धिर्न भवति, तत्कस्य हेतोः ? सिचा आनन्तर्यं विशेष्यत इति । एवं चतुश्शब्देऽपि न भविष्यति । एवं च कृत्वा 'लघोः' इत्यपि न वक्तव्यं भवति ? तथा तु न कृतमित्येव ॥ २ ॥

**भावबोधिनी**

ह्रस्व अकार की [ ही वृद्धि होती है ]—इसका क्या फल है ? न्यखोरीत्, न्यमीलीत् । [ '√खुर' छेदन अर्थ में है और '√मील' आँख बन्द करना अर्थ में है । पूर्ववत् सिच् आदि होते है । रेफान्त और लान्त भी हैं किन्तु उनके पास ह्रस्व अ नहीं है अपि तु उकार है । अतः वृद्धि नहीं होती है । ]

लान्त और रेफान्त धातु का—इसमें क्या फल है ? मा भवान् अटीत् । मा भवान् अशीत् । [ √अट् गति अर्थ में है √अश भोजन करना अर्थ में है । ये दोनों रेफान्त या लान्त नहीं है । अतः इससे वृद्धि नहीं होती है । 'माङ्' का प्रयोग आट् आगम रोकने के लिए किया गया है । अन्यथा आट् कर देने पर 'आटीत्' 'आशीत्' इस प्रकार के रूपों में वृद्धि के होने या न होने से कोई अन्तर नहीं दिखाई पड़ता । ]

अन्त—इसके ग्रहण का क्या फल है—अवभ्रीत् । अश्वल्लीत् । [ इनमें √वभ्र यह गति अर्थ में और √श्वल्ल यह आशुगमन अर्थ में है ] इन दोनों में जो रेफ और लकार अङ्ग के अन्त में हैं वे दोनों अकार के समीप में नहीं हैं । [ क्योंकि 'भ्' तथा 'ल्' का बीच में व्यवधान है । पदमञ्जरीकार ने '√खल्लि आशुगमन अर्थ में मानकर 'अखल्लीत्, ऐसा रूप उद्धृत किया है । ] ॥ २ ॥

## ३२८२. वदव्रजहलन्तस्याचः ॥ ३ ॥ (२२६७)

**वदव्रजोर्हलन्तानां चाङ्गानामचः स्थाने वृद्धिर्भवति सिचि परस्मैपदे परतः । अवादीत् । अव्राजीत् । विकल्पबाधनार्थं वदिव्रजिग्रहणम् ।**

**हलन्तानाम्—अपाक्षीत् । अभैत्सीत् । अच्छैत्सीत् । अरौत्सीत् ।**

**अत्र योगविभागे सति हलन्तग्रहणमन्तरेणापि सिद्धयति, कथम् ? वदिव्रज्योरित्यत्र प्रथमयोगे**

**न्यासः**

**वदव्रजहलन्तस्याचः** ॥ अनिगन्तार्थोऽयमारम्भः । अथ वदिव्रज्योर्ग्रहणं किमर्थम्, यावता हलन्तत्वादेव वृद्धिः सिध्यति ? इत्यत आह—**विकल्पबाधनार्थमित्यादि** । 'अतो हलादेः' इति विकल्पं वक्ष्यति, तस्य बाधो यथा स्यात् । **अपाक्षीदिति** । 'डुपचष् पाके', 'चोः कुः' इति कुत्वम् । **अभैत्सीदिति** । 'भिदिर् विदारणे', 'खरि च' इति चर्त्वम्—दकारस्य तकारः । **अरौत्सीदिति** । 'रुधिर् आवरणे' ।

**अत्रेत्यादि** । 'वदिव्रज्योः' इत्येको योगः, 'अच' इति द्वितीयः; एवं योगविभागे सति हलन्तग्रहणमन्तरेणापीष्टं सिध्यत्येव । **कथमिति** । असम्भावयतः प्रश्नः । **वदिव्रज्योरित्यादिना** यथा योगविभागे सति सिध्यति तथा दर्शयति । तत्र प्रथमयोगे पूर्वसूत्रात् 'अतः' इति स्थान्यनुवर्त्तते । तेनावादीद्, अव्राजीदित्येतावत्सिध्यति । ततो यदच इति द्वितीयं सूत्रम्, तत्र विशेषणविशेष्यभावयोर्यथेष्टत्वात् प्रकृतेनाङ्गेनाज्विशिष्यते—अङ्गस्य योऽजिति । तेनाङ्गस्याचो यत्र तत्रोपस्थितस्य सिचि परतो वृद्धिर्भवति । अपाक्षीदित्याद्यपि सिध्यति ।

**पदमञ्जरी**

**वदव्रजहलन्तस्याचः** ॥ **विकल्पबाधनार्थमिति** । 'अतो हलादेर्लघोः' इति विकल्पो वक्ष्यते । 'नेटि' इति प्रतिषेधे प्राप्त इति तु नोक्तम्; विकल्पस्यैव वस्तुतः प्राप्तत्वात् । **अत्रेत्यादि** । 'वदव्रज्योः' इत्येको योगः, '**अचः**' इति द्वितीयः, तत्राङ्गेनाज्विशेष्यत इति—अङ्गस्य योऽच् यत्र तत्र स्थितस्तस्येति, तेन हलन्तस्य सिद्धा वृद्धिरिति भावः । किं पुनः कारणमङ्गेनाज्विशेष्यते, न पुनरचाऽङ्गस्येति ? असम्भवात् । अचिकीर्षीदित्यादौ अदन्तस्य तावत् 'नेटि' इति प्रतिषेधः, आकारान्तं तु सिचि न सम्भवति; 'यमरमनमातां सक्च' इति सग्विधानात् । सम्भवे वा नास्ति विशेषः सत्यां वा वृद्धावसत्यां वा । इगन्तस्य तु 'सिचि वृद्धिः' इत्येव सिद्धा वृद्धिः । एजन्तमप्यात्वविधानान्नैव सम्भवति । अगवीदित्यत्र तु 'नेटि' इति प्रतिषेधः । तदेवमङ्गे-

**भावबोधिनी**

वद, व्रज ( धातुओं ) के तथा हलन्त अङ्गों के अच् के स्थान पर वृद्धि परस्मैपद सिच् परे रहते होती है । [ इगन्त से भिन्न की वृद्धि के लिए यह सूत्र है । ] उदा० अवादीत् । अव्राजीत् । [ √वद व्यक्त बोलना अर्थ में है । √व्रज गमन अर्थ में है । वद् + लुङ्, व्रज + लुङ् अट् सिच् = अ की वृद्धि होती है । ] विकल्प का बाध करने के लिए 'वद' और 'व्रज' का ग्रहण है । [ क्योंकि इन दोनों में 'अतो हलादेर्लघोः' सूत्र से विकल्प से 'अ' की वृद्धि प्राप्त है । वहाँ यह नित्य वृद्धि करता है । ]

हलन्त अङ्गों के उदा०—अपाक्षीत् । अभैत्सीत् । अच्छैत्सीत् । अरौत्सीत् । [ √डुपचष् पकाना अर्थ में है । √भिदिर् √छिदिर् विदारण करना अर्थ में हैं । √रुधिर् आवरण = रोकना अर्थ में है । लुङ् = तिप्, सिच् = स्, इलोप, ईट् आगम करने पर अपच् + स् ईत्, अभिद् + स् ईत्, अच्छिद् + स् ईत्, अरुध् + स् ईत्—में अच् की वृद्धि और कुत्व, चर्त्व आदि होने पर रूप बनते हैं । ]

इस सूत्र में योगविभाग कर देने पर 'हल्' इस ग्रहण के बिना भी सिद्ध होता है । कैसे ?

**'अतः' इति स्थानी अनुवर्त्तते, ततो यत् 'अचः' इति सूत्रम्, तत्राङ्गेनाज्विशेष्यते—अङ्गस्याचः सिचि परतो वृद्धिर्भवति। तदेतद्धल्ग्रहणं हल्समुदायपरिग्रहार्थम्। इहापि स्यात्—अराङ्क्षीत्, असाङ्क्षीत्। अन्यथा हि येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यादित्येकेन वर्णेन व्यवधाने स्यात्, अनेकेन हला न स्यात्।**

**न्यासः**

यद्येवम्, योगविभाग एव कर्त्तव्यः, किं हल्ग्रहणेन? इत्यत आह—**तदेतदित्यादि**। हल्समुदायपरिग्रहः **किमर्थो** यतस्तदर्थोऽयं यत्नः क्रियते? इत्याह—**इहापीत्यादि**। **अराङ्क्षीदिति**। 'रञ्ज रागे'। **असाङ्क्षीदिति**। 'षञ्ज सङ्गे'। ननु चाङ्गस्य योऽच् तस्य सिचि परतो वृद्धिरुच्यते, न चात्राङ्गसम्बन्धिनोऽचोऽनन्तरः परः सिच् सम्भवति यस्यानेन वृद्धिर्विधीयते। तथा ह्यकारान्तस्याङ्गस्य तावद् 'अतो लोपः' इति लोपेन भवितव्यम्। न च वचनादतो लोपं वृद्धिर्बाधिष्यत इति शक्यते वक्तुम्; यदि ह्यकारान्तस्यैव वृद्धिः स्यात् प्रत्याहारग्रहणमनर्थकं स्यात्, 'अतः' इत्येवं ब्रूयात्। अथ वा—तदपि न ब्रूयात्, पूर्वसूत्रात् 'अतः' इत्यनुवर्त्तयिष्यते। तस्मादकारान्तस्य तावदङ्गस्य सम्बन्धी योऽच् ततोऽनन्तरः सिज्न सम्भवति। आकारान्तस्य तु कामं सम्भवति यावा-प्रभृतेः। न तु तस्यास्ति विशेषः सत्यां वा वृद्धावसत्यां वा। इगन्तस्य पुनः 'सिचि वृद्धिः' इत्यादिनैव वृद्धिर्विहिता। सन्ध्यक्षराणां च नास्त्येव, 'आदेच उपदेशेऽशिति' इत्यात्वविधानात्। उदवोढाम्, उदवोढमित्यत्रास्तीति चेत्? न; ढलोपस्यासिद्धत्वात्। तदयं न क्वचिदचोऽन्तरः परस्मैपदपरः सिच् सम्भवति, उच्यते चेदं वचनम्; ततो येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्याद् यथाऽपाक्षीदित्यादौ वृद्धिर्भवति, तथाऽराङ्क्षीदित्यादावपि वृद्धिर्भविष्यति, ततो नार्थो हल्ग्रहणेन? इत्यत आह—**अन्यथा हीत्यादि**। एकेन वर्णेन सर्वत्र व्यवधानमस्ति। हल्समुदायेन क्वचिदेवाराङ्क्षीदित्यादौ। अपाक्षीदित्यादौ नास्ति, तत्रासति हल्ग्रहणेऽनन्तरोक्तया नीत्या यत्रैकेन वर्णेन व्यवधानमस्ति—अपाक्षीदित्यादौ तत्रैव स्यात्, यत्र त्वनेकवर्णेन व्यवधानमस्ति—अराङ्क्षीदित्यादौ, तत्र न स्यात्, यथाऽपिपठिषीदित्यादौ आद्ययोरचोर्व्यवधानान्न भवति। हल्ग्रहणे तु सति हल्समुदायेन व्यवधानेऽपि भवति; हल्ग्रहणसामर्थ्यात्।

**पदमञ्जरी**

नाज्विशेष्यत इति सहृदयमभिधानम्। एवं प्रत्याख्याते हल्ग्रहणे, प्रयोजनमाह—**तदेतदिति**। किं पुनः कारणमन्तरेण हल्ग्रहणं हल्समुदायस्य परिग्रहो न सिद्ध्यति? अत आह—**अन्यथा हीति**। एतच्च यदा वृद्धिभागजेव सिच्परत्वेन विशेष्यते, तदा वेदितव्यम्। अङ्गे तु विशेष्यमाणे सर्वत्र सिध्यति। न चैवमकासीदित्यादिष्वनेकाक्षु पूर्वस्याप्यचो वृद्धिप्रसङ्गः; 'नेटि' इति प्रतिषेधात्। न चानेकाजनिडस्ति। न चापाक्षीदित्यादावट प्रसङ्गः; किं कारणम्? लुङि यदङ्गं सिजन्तं तद्भक्तोऽडागमस्तद्ग्रहणेनैव गृह्यते न तु सिचि यदङ्गं तद्ग्रहणेन। यत्रापि सिचो लुक् क्रियते—अदात्, अधात् इति, तत्र सिच्परत्वाभावाद् वृद्धेरप्रसङ्गः।

**भावबोधिनी**

'वदव्रज्यो॰' इस प्रथम योग में 'अतः' (अकार का)—इस स्थानी की अनुवृत्ति होती है। इसके बाद दूसरा योग है 'अचः' इसमें अङ्ग से अच् विशेषित होता है—अङ्ग के अच् की सिच् परे वृद्धि होती है। [ अतः हलन्त अङ्ग के भी अच् की वृद्धि सम्भव है। ] इस कारण हल् का ग्रहण हलों के समुदाय का ग्रहण कराने के लिए है, जिससे यहाँ भी हो सके—अराङ्क्षीत्, असाङ्क्षीत्। [ '√रञ्ज रागे' और 'षञ्ज सङ्गे' इन धातुओं से लुङ् आदि सभी प्रक्रिया की जाती है। इनके अन्त में दो हल् होने से हल्समुदाय है। अतः वृद्धि हो जाती है। ] अन्यथा 'जिससे कभी भी अव्यवधान नहीं होता है उससे व्यवधान में भी वचनप्रामाण्य से कार्य होता है' इस (परिभाषा) से एक ही वर्ण के व्यवधान में वृद्धि हो पाती, अनेक हलों के व्यवधान में वृद्धि नहीं हो सकती। [ जब हल्ग्रहण से हलों के समुदाय का ग्रहण माना जाता है तब दो के व्यवधान में भी वृद्धि होने में बाधा नहीं है। ]

**उदवोढाम्, उदवोढमित्यत्र वहेः सिचि ढत्वसलोपादीनाम् 'पूर्वत्रासिद्धम्' (८.२.१) इत्यसिद्धत्वात्पूर्वं हलन्तलक्षणा वृद्धिः क्रियते, पश्चाद् ढलोपनिमित्तमोत्त्वम् । तत्र कृते पुनर्वृद्धिर्न भवति; कृतत्वात् ।**

**यत्र त्वकृता वृद्धिः, ओकारस्यैव तत्र भवति—सोढामित्रस्यापत्यं सौढामित्रिरिति ।।**

**न्यासः**

उदवोढाम्, उदवोढमित्यत्र वहेर्वृद्धिः कस्मान्न भवति, ढलोपे कृतेऽहलन्तत्वादिति चेत् ? न, ढलोपस्यासिद्धत्वादिति यश्चोदयेत्, तं प्रत्याह–क्रियत एवात्र वृद्धिः । तस्यास्त्वोत्त्वं विधीयत इति दर्शयितुमाह—**उदवोढामित्यादि ।** आदिशब्देन धात्वादयो गृह्यन्ते । वहेरुत्पूर्वाल्लुङ्, तस्थसौ, तयोः 'तस्थस्थमिपाम्' इत्यादिना तान्तमादेशौ यथाक्रमम्, हलन्तलक्षणा वृद्धिः, 'हो ढः' इति ढत्वम्, 'झलो झलि' इति सिचो लोपः, 'झषस्तथोर्धोऽधः' इति धत्वम्, 'ष्टुना ष्टुः' इति ष्टुत्वम्, 'सहिवहोरोदवर्णस्य' इत्योत्त्वम् । तत्र ह्योत्त्वे पुनर्वृद्धिः कस्मान्न भवति ? इत्याह—**तत्र कृते पुनरित्यादि ।** एकं ह्यत्र वृद्धिशास्त्रम्, तेन च प्रागेव कृता वृद्धिरिति कृतकार्यत्वाद् वृद्धिशास्त्रस्य, पुनस्तन्न व्याप्रियत इति न भवति पुनर्वृद्धिः ।

सौढामित्रिरित्यत्र तर्हि कथमोत्त्वे कृते वृद्धिर्भवति ? इत्याह—**यत्र त्वित्यादि ।** यत्र प्राग्वृद्धिः कृता तत्र कृतार्थत्वाद् वृद्धिशास्त्रस्य पुनर्न व्याप्रियत इति न भवति वृद्धिः, सोढामित्रिरित्यत्र तु न कृता वृद्धिः । तस्मादकृतार्थत्वाद् वृद्धिशास्त्रं व्याप्रियत इति भवत्येव वृद्धिः । सा च भवन्त्योकारस्य भवति, नाकारस्य वृद्धिरिति; वृद्धिविधानकाल ओकारस्यैव वृद्धिभाजः सन्निहितत्वात् । सहेर्निष्ठा, तत्र ढत्वादिषु कृतेषु सोढ इति भवति, सोढोऽमित्रोऽनेनेति सोढामित्रः, तस्यापत्यमिति 'अत इञ्', 'तद्धितेष्वचामादेः' इति वृद्धिः । 'येन विधिस्तदन्तस्य' इत्येव सिद्धे तदन्तत्वेऽन्तग्रहणमसन्देहार्थम् । 'हलोऽचः' इत्युच्यमाने सन्देहः स्यात्—किमजन्तस्याङ्गस्य हलो वृद्धिर्भवति ? उत हलन्तस्याच इति ? ।। ३ ।।

**पदमञ्जरी**

**उदवोढामिति ।** वहेर्लुङ्, तसस्ताम्, सिच्, वह् + स् + तामिति स्थिते–वृद्धिश्च प्राप्नोति ढत्वादीनि च, आदिपदेन 'झलो झलि' इति सिचो लोपः, 'झषस्तथोर्धोऽधः' इति धत्वं ष्टुत्वं ढलोप इत्येतेषां ग्रहणम् । तत्र ढत्वादीनामसिद्धत्वात्पूर्वं वृद्धिः क्रियते, पश्चात् ढलोपनिमित्तमोत्त्वम् । अथ तस्य पुनर्वृद्धिः कस्मान्न भवति ? तत्राह–**तत्र कृत इति । कृतत्वादिति ।** यद्यप्योकारस्य न कृता वृद्धिः, तथापि प्रयोगेऽस्मिन् कृतेति भावः ।

**यत्र त्विति ।** न ह्योकारत्वनिबन्धनो वृद्धेरभावः, किन्तु कृतत्वनिबन्धन इति भावः । सोढा = अभिभूता अमित्रा येन स सोढामित्रः ।। ३ ।।

**भावबोधिनी**

उदवोढाम्, उदवोढम्—इनमें √वह् धातु से [ लुङ् = तिप् ] सिच् करने पर [ उद् अ वह् स् + ताम् में "हो ढः" से ढत्व और "झलो झलि" से स् लोप आदि "पूर्वत्रासिद्धम्" ( ८।२।१ ) सूत्र से असिद्ध हो जाते हैं । इसलिये पहले हलन्तलक्षणा ( हलन्त मानकर होने वाली ) वृद्धि की जाती है, इसके बाद ढलोप को निमित्त मानकर होने वाला ओत्व होता है । इसमें ( वृद्धि ) कर लेने पर पुनः वृद्धि नहीं होती है क्योंकि की जा चुकी है । [ नियम यह है कि एक लक्ष्य में एक शास्त्र की प्रवृत्ति एक ही बार होती हैं । अतः दुबारा सम्भव होने पर भी ओकार की वृद्धि नहीं होती है । ]

परन्तु जहाँ पर वृद्धि की नहीं गई है वहाँ पर ओकार की ही वृद्धि होती है—सोढामित्रस्य अपत्यम्—इस अर्थ में 'सौढामित्रिः ।' [ सोढ = अभिभूत किये गये हैं अमित्र = शत्रु जिससे वह—'सोढामित्र' है । उसका अपत्य—इस अर्थ में इञ् प्रत्यय होने पर "तद्धितेष्वचामादेः" इस सूत्र से ओकार की वृद्धि होती ही है । ]

**विमर्श—**योगविभाग द्वारा कार्य सम्भव होने पर भी हल् का ग्रहण करने से हल्समुदाय अन्त में रहने पर भी वृद्धि होती है ।

**३२८३. नेटि ॥ ४ ॥ (२२६८)**

**इडादौ सिचि हलन्तस्याङ्गस्य वृद्धिर्न भवति । अदेवीत् । असेवीत् । अकोषीत् । अमोषीत् ।**
**'हलन्तस्य' इत्येव—अलावीत् ।**
**नन्वत्रैतदप्यन्तरङ्गत्वाद् गुणावादेशयोः कृतयोर्हलन्तं भवति ? नैतदेवम्; 'अन्तरङ्गमपि गुणं वचनारम्भसामर्थ्यात्सिचि वृद्धिर्बाधते' इत्युक्तम् ॥**

**३२८४. ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम् ॥ ५ ॥ (३२९९)**

**हकारान्तानां मकारान्तानां यकारान्तानामङ्गानाम्, क्षण, श्वस, जागृ, णि, श्वि—इत्येतेषामेदितां**

**न्यासः**

**नेटि ॥** हलन्तस्याच इति या वृद्धिः प्राप्ता सा हलन्तलक्षणा वृद्धिरनेन प्रतिषिध्यते 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति कृत्वा । **अदेवीत्, असेवीदिति** । 'दिवु क्रीडादौ', 'सिवु तन्तुसन्ताने' । वृद्धौ प्रतिषिद्धायाम् 'पुगन्तलघूपधस्य' इति गुणः । **अकोषीदमोषीदिति** । 'कुष निष्कर्षे', 'मुष स्तेये' । **नन्वत्रैतदन्तरङ्गत्वादिति** चोद्यम् । **नैतदेवमिति** परिहारः । उभयं चैतद् गतार्थम् ॥४ ॥

**ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम् ॥ अग्रहीदिति** । 'ग्रह उपादाने' । **अस्यमीदिति** । 'स्यमु स्वन ध्वन शब्दे' । **अवमीदिति** । 'टुवम उद्गिरणे' । **अव्ययीदिति** । 'व्यय वित्तसमुत्सर्गे' । **अक्षणीदिति** । 'क्षणु

**पदमञ्जरी**

**नेटि ।** उदाहरणेषु—'दिवु क्रीडादौ' ( धा० पा० ११०७ ), 'सिवु तन्तुसन्ताने' ( धा० पा० ११०८ ) 'कुष निष्कर्षे' ( धा० पा० १५१८ ), 'मुष स्तेये' ( धा० पा० १५ ३० ), इति धातवः ।
**ननु चेत्यादि चोद्यम् । नैतदेवमित्यादि** परिहारः । उभयमप्येतत् सिचिवृद्धिसूत्रे व्याख्यातम् ॥ ४ ॥
**ह्म्यन्तक्षणश्वसजागृणिश्व्येदिताम् ॥** उदाहरणेषु 'ग्रह उपादने' ( धा० पा० १५३३ ) 'स्यमु स्वन ध्वन शब्दे' ( धा० पा० ८२६, २७, २८ ), 'टुवम उद्गिरणे' ( धा० पा० ८४९ ), 'व्यय वित्तसमुत्सर्गे'

**भावबोधिनी**

"येन विधिस्तदन्तस्य" नियम से अन्तग्रहण के विना भी हलन्त का ज्ञान सम्भव था फिर भी 'अन्त' का ग्रहण स्पष्टता और सन्देहनिवृत्ति के लिये है । क्योंकि 'वदव्रजहलोऽचः' ऐसा सूत्र बनाने पर यह सन्देह हो सकता था कि—अजन्त अंग के हल् की वृद्धि होती है अथवा हलन्त के अच् की ? ऐसा न्यास और कैयटप्रदीप में लिखा हैं ॥३॥

इडादि सिच् परे रहते हलन्त अङ्ग की वृद्धि नहीं होती है । उदा० अदेवीत् । असेवीत् । अकोषीत् । अमोषीत् । [ दिव् + लुङ् = तिप्, अट्, च्लि = सिच्, इट्, इलोप, ईट्, अ दिव् इ + स् + ई त्, सिच् लोप, सवर्णदीर्घ—अदिव् + ईत्, यहाँ पूर्वसूत्र से हलन्तलक्षणा वृद्धि प्राप्त होती है किन्तु प्रस्तुत सूत्र से निषेध हो जाता है । 'पुगन्तलघूपधस्य च' इस सूत्र से गुण होता है—अदेवीत् । 'दिवु' यह क्रीडा-विजिगीषा आदि अनेक अर्थों में है । 'षिवु' सीना अर्थ में है—असेवीत् । 'कुष निष्कर्ष' अर्थ में हैं—अकोषीत् । मुष स्तेय = चुराना अर्थ में है—अमोषीत् । ]

हलन्तलक्षणा का ही निषेध होता है—इसका क्या फल है—अलावीत् । [ 'लू' धातु अजन्त है । अतः वृद्धि का निषेध नहीं होता है । ]

प्रश्न—यह धातु भी तो अन्तरङ्ग होने से गुण तथा अवादेश कर देने पर ( अर्थात् 'लव्' ऐसा बना देने पर ) हलन्त हो जाती है ? ऐसा नहीं है, वृद्धिविधायक वचन बनाने के कारण सिच परे रहते अन्तरङ्ग भी गुण का बाध वृद्धि कर लेती है । यह पहले सूत्र में कहा जा चुका है । [ इस कारण पहले वृद्धि की ही प्राप्ति होती है । उसका निषेध हो जाता है । तब लघूपध गुण होता है । ] ॥ ४ ॥

हकारान्त, मकारान्त तथा यकारान्त अङ्गों की, क्षण, श्वस, जागृ, णि, ( ण्यन्त ) श्वि—इन धातुओं की

**च इडादौ सिचि परस्मैपदे परतो वृद्धिर्न भवति। ग्रह–अग्रहीत्। स्यम्–अस्यमीत्। व्यय–अव्ययीत्। टुवम्–अवमीत्। क्षण–अक्षणीत्। श्वस्–अश्वसीत्। जागृ–अजागरीत्। णि–औनयीत्, ऐलयीत्। श्वि–अश्वयीत्। एदिताम्–रगे, अरगीत्। कखे–अकखीत्।**

**ह्म्यन्तक्षणश्वसामेदितां च 'अतो हलादेर्लघोः' (७.२.७) इति विकल्पे प्राप्ते प्रतिषेधः। जागृ-णि-श्वीनां तु सिचि वृद्धिः प्राप्ता, सा च 'नेटि' (७.२.४) इति न प्रतिषिध्यते। न च अन्तरङ्गत्वादत्र पूर्वं गुणो भवति; सिचि वृद्धेरनवकाशत्वात्।**

**न्यासः**

हिंसायाम्'। **अश्वसीदिति**। 'श्वस प्राणने'। **अजागरीदिति**। 'जागृ निद्राक्षये'। **औनयीत्, ऐलयीदिति**। 'ऊन परिहाणे', 'ईल प्रेरणे', चुरादिणिच्। 'नोनयति' इत्यादिना चङि प्रतिषिद्धे सिजेव भवति, 'आडजादीनाम्' इत्याट्, 'आटश्च' इति वृद्धिः। **अश्वयीदिति**। 'टुओश्वि गतिवृद्ध्योः'। **अरगीत्, अलगीदिति**। 'रगे लगे सङ्गे'। **अस्थगीदिति**। 'स्थगे संवरणे'। **अकखीदिति**। 'कखे हसने'।

**सा च नेटीति न प्रतिषिध्यत इति**। अनन्तराया हलन्तलक्षणाया वृद्धेः प्रतिषेधः, न पूर्वस्याः। अथ किमर्थं णिश्विग्रहणम्, यावतान्तरङ्गत्वादेवात्र गुणेन भवितव्यम्, कृते गुणेऽयादेशेन, ततश्च यकारान्तत्वादेव तयोः प्रतिषेधो भविष्यति? इत्याह—**न चेत्यादि**। इदमन्तरङ्गत्वं सिच्यभ्युपेत्योक्तम्। इदानीमन्त-

**पदमञ्जरी**

(धा० पा० १९३२), 'क्षणु हिंसायाम्' (धा० पा० १४६५), 'श्वस प्राणने' (धा० पा० १०६९), 'जागृ निद्राक्षये' (धा० पा० १०७२), 'ऊन परिहाणे' (धा० पा० १८८८), 'ईल प्रेरणे' (धा० पा० १६६०), चुरादी, 'टुओश्वि गतिवृद्ध्योः' (धा० पा० १०१०), 'रगे लगे सगे संवरणे' (धा० पा० ७८५, ७८६, ७८९), कखे खगे कगे हसने' (धा० पा० ७८४, ७९१), इति धातवः। ऊनयत्येलयत्योर्नोनयतिध्वनयतीति चङः प्रतिषेधः।

**भावबोधिनी**

और एदित् (एकार की इत्संज्ञा वाली) धातुओं की इडादि सिच् परस्मैपद परे रहते वृद्धि नहीं होती है। उदा० ग्रह—अग्रहीत्। [ 'ग्रह्' धातु हकारान्त है। ] स्यम्—अस्यमीत्। [ स्यम्—यह मकारान्त है। ] टुवम्—अवमीत्। [ यह भी मकारान्त है। ] व्यय—अव्ययीत्। [ यह यकारान्त है। सभी में लुङ्, सिच् इट् परे वृद्धि प्राप्त होती है, इस सूत्र से निषेध हो जाता है। ] क्षण्—अक्षणीत्। [ 'क्षणु' धातु हिंसा अर्थ में है। ] जागृ—अजागरीत्। [ 'जागृ' निद्राक्षय = जागना अर्थ में है। ] णि = ण्यन्त—औनयीत्। ऐलयीत्। [ 'ऊन' परिहाण अर्थ में तथा 'ईल' प्रेरणा अर्थ में हैं। चौरादिक स्वार्थिक णिच् होता है। अतः वृद्धि नहीं होती है। ] श्वि—अश्वयीत्। [ 'टु ओ श्वि' धातु गति तथा वृद्धि अर्थों में है। वृद्धिनिषेध होने पर गुण होता है। ] एदित् रगे—अरगीत्। कखे—अकखीत्। [ 'रगे तथा लगे' धातुयें संग करना अर्थ में हैं। ए की इत्संज्ञा होने से वृद्धि नहीं होती है। 'कखे हँसना अर्थ में है। एदित् होने से वृद्धि नहीं होती है। न्यासकार ने 'स्थगे संवरणे' धातु का 'अस्थगीत्' यह भी लिखा है। एदित् होने से वृद्धि नहीं होती है। ]

हकारान्त, मकारान्त, यकारान्त, क्षण्, श्वस् तथा एदित् धातुओं का 'अतो हलादेर्लघोः' सूत्र से विकल्प के प्राप्त रहते यह प्रतिषेध किया जाता है। जागृ, णि (ण्यन्त) और श्वि—इनकी तो सिच् परे वृद्धि प्राप्त है और उसका "नेटि" इस सूत्र से प्रतिषेध नहीं होता है [ अतः इससे प्रतिषेध किया जाता है। ] इनमें अन्तरङ्ग होने से पहले गुण होता है, ऐसा नहीं कहना चाहिए, क्योंकि [ ऐसा मानने पर तो ] सिच् परे रहते वृद्धि का अवकाश नहीं होता है।

**यदि पूर्वं गुणः स्यात्, इह णिश्विग्रहणमनर्थकं स्यात्; गुणायादेशयोः कृतयोर्यकारान्तत्वादेव प्रतिषेधस्य सिद्धत्वात्। तस्मादिदमेव णिश्विग्रहणं ज्ञापकम्—न सिच्यन्तरङ्गमस्तीति।**

**अथ जागृग्रहणं किमर्थम्, 'जाग्रोऽविचिण्णल्ङित्सु' (३.७.८५) इति जागर्तेर्गुणो वृद्धेरपवादो विधीयते, स यथा 'अचो ञ्णिति' (७.२.११५) इति वृद्धिं बाधते, तथा सिचिवृद्धिमपि बाधिष्यते ? नैतदस्ति; कृते गुणे 'अतो ल्रान्तस्य' (७.२.२) इति या वृद्धिः प्राप्नोति सा प्रतिषिध्यते।**

**न्यासः**

रङ्गत्वमेव सिचि नास्तीति दर्शयितुमाह—**यदीत्यादि**। किं कारणं णिश्विग्रहणमनर्थकं स्यात् ? इत्यत आह—**गुणायादेशयोरिति**। यदि तर्हि सिच्यन्तरङ्गत्वं नास्ति, यदुक्तम् 'अन्तरङ्गमपि गुणमेषा वृद्धिर्वचनाद् बाधते' इति तद्विरुध्यते ? नास्ति विरोधः, अध्यारोप्य तथाभिधानात्।

**अथेत्यादि**। अत्र वक्ष्यमाणोऽभिप्रायः। अथ जागृग्रहणं किमर्थमिति पृष्टस्य **किं कारणं** जागृग्रहणं न कर्त्तव्यमिति प्रश्नावसरे येनाभिप्रायेण पृष्टवांस्तमाविष्कर्तुमाह—**जाग्रोऽविचिण्णित्यादि**। यथा जागरयतीत्यादौ 'अचो ञ्णिति' इति प्राप्तां वृद्धिं जागर्त्तेर्गुणो बाधते तथा सिचिवृद्धिमपि बाधिष्यते, वृद्ध्यपवादत्वाद् गुणशास्त्रस्य। **गुणे कृत इत्यादि**। अकृते हि गुणे या सिचि वृद्धिः प्राप्नोति सापवादत्वाद् गुणेन बाध्यते; अकृतार्थत्वाद् गुणशास्त्रस्य। न च सानेन वचनेन बाधिष्यते, किं तर्हि ? गुणे कृते रपरत्वे च 'अतो ल्रान्तस्य' इत्युत्तरकालं या वृद्धिः प्राप्नोति तस्याः प्रतिषेधो विधीयते, न च शक्या गुणेन बाधितुं सा। न हि 'जाग्रोऽविचिण्णल्ङित्सु' इति शास्त्रं पुनः प्रवर्त्तितुमुत्सहते; कृतार्थत्वात्। न चान्यद् गुणलक्षणमस्त्युत्तरकालवृद्धेर्बाधकम्। तत्र यदि जागृग्रहणं न क्रियते, 'अतो ल्रान्तस्य' इति वृद्धिः स्यात्।

**अथेत्यादि** चोदकः। यदि गुणेऽपि कृते पुनर्वृद्धिः स्याद्, वृद्धिविषये गुणविधानमनर्थकं स्यात्। तस्मात् गुणविधानसामर्थ्याद् यापि गुणे कृते रपरत्वे च पश्चाद् 'अतो ल्रान्तस्य' इति वृद्धिः प्राप्नोति सा प्रतिषिध्यते, यथा—जागरयतीत्यत्र। गुणे कृते रपरत्वे च या प्राप्नोति 'अत उपधायाः' इत्युत्तरकालभाविनी वृद्धिः, सापि न भवति; गुणेन बाधित्वात्। **तथा चेत्यादि**। गुणविधानसामर्थ्यादुत्तरकालभाविन्यपि वृद्धिर्गुणेन

**पदमञ्जरी**

**यदि च पूर्वं गुणः स्यादित्यादि**। एतदपि सिचिवृद्धिसूत्र एव व्याख्यातम्। **अथ जागृग्रहणं किमर्थमिति**। येन पृष्टं स एव यथैतन्न कर्त्तव्यं तथा दर्शयति—**जाग्रोऽविचिण्णल्ङित्स्विति**। **कृते गुणे इत्यादि**। 'अङ्गवृत्ते पुनर्वृत्तावविधिः' (व्या० पा० ३८) इत्येतत् नाश्रितम्; निष्ठितत्वस्य दुर्ज्ञानत्वात्। **अथ त्विति**। अन्यथा वृद्धिविषये गुणविधानमनर्थकं स्यादिति भावः। **तथा चेति**। चिण्णलोः प्रतिषेधेन उत्तरकालभाविवृद्धिमात्रं न भवतीति सामान्येन ज्ञाप्यते, न तूपधालक्षणवृद्धिर्न भवतीत्येवं विशेषेणेति भावः। जागृग्रहणे सति चायं सूत्राणां प्राप्तिक्रमः, जागृ + इस् + ईत् इति स्थिते पूर्वं यण् प्राप्तः, तमपवादत्वात् 'सार्वधातुकार्धधातुकयोः' इति गुणो बाधते, तमपि सिचि वृद्धिः, तामपि जागर्तिगुणः, तत्र कृते हलन्तलक्षणा वृद्धिः, तस्याः 'नेटि' इति

**भावबोधिनी**

यदि पहले गुण कर दिया जाय तो इस सूत्र में णि, श्वि—इनका ग्रहण अनर्थक हो जायगा, कारण यह है कि गुण तथा अय् आदेश कर लेने पर इनके यकारान्त हो जाने से ही [ वृद्धि का ] प्रतिषेध सिद्ध हो जाता है। इस लिए यह णि और श्वि का ग्रहण ही ज्ञापक है कि—सिच् परे रहते अन्तरङ्ग ( गुण ) नहीं होता है।

प्रश्न यह है कि जागृ का ग्रहण किसलिए है क्योंकि "जाग्रोऽविचिण्णल्ङित्सु" (७।३।८५) इस सूत्र से जागृ की वृद्धि के अपवाद गुण का विधान किया गया है, वह (गुण) जैसे "अचो ञ्णिति" (७।२।११५) से होनेवाली वृद्धि का बाध करता है उसी प्रकार सिच् परे रहते भी वृद्धि का बाध कर लेगा ? नहीं, ऐसा नहीं है क्योंकि गुण कर लेने पर "अतो ल्रान्तस्य" (७।२।२) सूत्र से जो वृद्धि प्राप्त होती है उसका भी प्रतिषेध होता है।

अथ गुणविधानसामर्थ्यादुत्तरकालभाविन्यपि वृद्धिर्बाध्यते, यथा जागरयतीत्यत्र 'अत उपधायाः' (७.१.११३) इत्यपि वृद्धिर्न भवति, तथा चिण्णलोः प्रतिषेधोऽर्थवान्भवति इति शक्यमिह जागृग्रहणमकर्त्तुम् ? तत्तु क्रियते विस्पष्टार्थम् ॥

## ३२८५. ऊर्णोतेर्विभाषा ॥ ६ ॥ (२४४९)

ऊर्णोतेरिडादौ सिचि परस्मैपदपरे परतो विभाषा वृद्धिर्न भवति। प्रौर्णवीत्, प्रौर्णावीत् 'विभाषोर्णोः' (१.२.३) इत्यङित्वपक्षे वृद्धिविकल्पोऽयम्। ङित्वपक्षे तु गुणवृद्ध्योरभावे उवङ् भवति— प्रौर्णुवीत्।

## ३२८६. अतो हलादेर्लघोः ॥ ७ ॥ (२२८४)

**न्यासः**

बाध्यत इति, तदेव द्रढयति। एवञ्च चिण्णलोः प्रतिषेधोऽर्थवान् भवति यद्युत्तरकालभाविन्यपि वृद्धिर्बाध्यते; अन्यथा हि गुणे कृते रपरत्वे च 'अत उपधायाः' इति वृद्ध्या भवितव्यम्। चिण्णलोर्यः प्रतिषेधः क्रियते सोऽनर्थकः स्यात्। तस्मादुत्तरकालभाविन्यपि वृद्धिर्गुणेन बाध्यत इति स्थितमेतत्। ततश्च शक्यमेव जागृग्रहणमकर्तुम्। एवं प्रत्याख्याते जागृग्रहणे, इतर आह—**तत् क्रियत इत्यादि**। य एवं प्रतिपत्तुं न शक्तः, तं प्रति विस्पष्टार्थं जागृग्रहणं क्रियते ॥ ५ ॥

**ऊर्णोतेर्विभाषा** ॥ नित्यं वृद्धिप्रसङ्गे प्राप्ते विकल्पार्थं वचनम् ॥ ६ ॥

**अतो हलादेर्लघोः** ॥ 'नेटि' इति प्रतिषेधे प्राप्ते विकल्पार्थमिदमारभ्यते। **अकणीत् अकाणीदिति**।

**पदमञ्जरी**

प्रतिषेधः, ततः 'अतो हलादेर्लघोः' इति विकल्पः, ततः 'अतो ल्रान्तस्य' इति नित्या वृद्धिः, ततोऽयं प्रतिषेध इति। आह च—

'गुणो वृद्धिर्गुणो वृद्धिः प्रतिषेधो विकल्पनम्।
पुनर्वृद्धिर्निषेधोऽतो यण्पूर्वाः प्राप्तयो नव' ॥ ५ ॥ ६ ॥

**अतो हलादेर्लघोः** ॥ **न्यकुटीत्, न्यपुटीदिति**। 'कुट कौटिल्ये' (धा० पा० १३६६), 'पुट संश्लेषणे'

**भावबोधिनी**

अच्छा, गुणविधान के सामर्थ्य से उत्तरकाल में होनेवाली भी वृद्धि का बाध कर लिया जाता है, जैसे 'जागरयति' इसमें 'अत उपधायाः' इससे भी वृद्धि नहीं होती है उसी प्रकार चिण् तथा णल् परे भी प्रतिषेध अर्थवान् ( सार्थक ) होता है, इसलिए इसमें जागृ धातु का ग्रहण नहीं किया जा सकता है ? उत्तर है कि यह तो ( जागृ का ग्रहण ) स्पष्टता के लिए है। [ भाव यह है कि जो पूर्वोक्त रीति नहीं जानता उसे शीघ्र समझाने के लिए 'जागृ' का ग्रहण है। ] ॥ ५ ॥

परस्मैपदपरक इडादि सिच् परे रहते ऊर्णुञ् की विकल्प से वृद्धि नहीं होती है। उदा० प्रौर्णवीत्, प्रौर्णावीत्। [ वृद्धिनिषेध होने पर गुण होता है। ] "विभाषोर्णोः" इस सूत्र से विकल्प से अङिद्भाव करने पर यह वृद्धि का विकल्प करने वाला है। किन्तु जब ङित् माना जाता है तब तो गुण और वृद्धि के अभाव में उवङ् ही होता है— प्रौर्णुवीत्। [ प्र + ऊर्णु + लुङ्, आड्, वृद्धि, सिच् इडादि करने पर जब 'णु' के उ की वृद्धि नहीं होती है तब गुण, अव् आदेश—(१) प्रौर्णवीत्। वृद्धि होने पर आव् आदेश—(२) प्रौर्णावीत्। दोनों न होने पर उवङ् आदेश— प्रौर्णुवीत् ] ॥ ६ ॥

परस्मैपदपरक इडादि सिच् परे रहते हलादि अङ्ग के लघु अकार की विकल्प से वृद्धि नहीं होती है।

**हलादेरङ्गस्य लघोरकारस्य इडादौ सिचि परस्मैपदपरे परतो विभाषा वृद्धिर्न भवति। अकणीत्, अकाणीत्। अरणीत्, अराणीत्।**

**अत इति किम्? अदेवीत्। असेवीत्।**

**न्यकुटीत्, न्यपुटीत्—इत्यत्र 'अतः' इत्यस्मिन्नसति स्थानिनिर्देशार्थम् 'अचः' इत्येतदनुवर्तयितव्यम्। तत्र अज्लक्षणा वृद्धिरिग्लक्षणा न भवतीति 'क्ङिति च' (७.२.११८) इति प्रतिषेधो न स्यात्।**

**हलादेरिति किम्? मा भवानशीत्। मा भवानटीत्।**

**लघोरिति किम्? अतक्षीत्। अरक्षीत्।**

**न्यासः**

'अण रण वण कण भण क्वण' इति भ्वादौ पठ्यते। **अरणीत्, अराणीदिति।** रणिरपि तत्रैव।

**न्यकुटीदिति।** 'कुट कौटिल्ये'। **न्यपुटीदिति।** 'पुट संश्लेषणे'। ननु चात्र कुटादित्वान्ङित्वे सति 'क्ङिति च' इति प्रतिषेधो भविष्यति, ततो नैतत्तन्निवृत्त्यर्थम् 'अतः' इत्येतत् कर्त्तव्यम्? इत्यत आह— **अत इत्येतस्मिन्नसतीत्यादि।** यदि 'अतः' इति नोच्येत, ततोऽवश्यम् 'वदव्रजहलन्तस्याचः' इत्यनुवर्तयितव्यम्; अन्यथा ह्यनिर्दिष्टस्थानिकत्वादिक एव लघोर्विकल्पेन वृद्धिः स्यात्—अदेवीदित्यादौ, अकाणीदित्यादौ त्वकारस्य न स्यात्। अज्ग्रहणानुवृत्तौ तु सत्यामज्लक्षणेयं वृद्धिः स्यात्, नेग्लक्षणा; निर्दिष्टस्थानिकत्वात्। यत्र हि स्थानी न निर्दिश्यते स इग्लक्षणाया वृद्धेर्विषयः, न तु यत्र स्थानी निर्दिश्यते सोऽपि, ततश्च 'क्ङिति च' इति प्रतिषेधो न स्यात्; तत्र 'इकः' इत्यधिकारात्। तस्मान्न्यकुटीत्, न्यपुटीदित्यत्र विकल्पेन वृद्धिर्मा भूदित्येवमर्थमत इति वक्तव्यम्।

**अतक्षीद्, अरक्षीदिति।** 'तक्षू त्वक्षू तनूकरणे', 'रक्ष पालने'। इह सिच आनन्तर्येऽकारस्य वृद्धिरुच्यते, न क्वचिदनन्तरः सिच् सम्भवति। तत्र येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यादिति व्यवधानेऽपि वृद्ध्या भवितव्यम्।

**पदमञ्जरी**

(धा० पा० १३६७)। नन्वत्र कुटादित्वान्ङित्वे सति 'क्ङिति च' इति प्रतिषेधादेव वृद्धिर्न भविष्यति, किमत्र 'अतः' इत्यनेन? तत्राह—**अत इत्येतस्मिन्नसतीति। अतक्षीत्, अरक्षीदिति।** 'तक्षू त्वक्षू तनूकरणे' (धा० पा० ६५५, ५६), 'रक्ष पालने' (धा० पा० ६५८), सिच्परत्वेनाङ्गस्य विशेषणादत्र प्रसङ्गः।

**भावबोधिनी**

उदा० अकणीत्, अकाणीत्। अरणीत्, अराणीत्। [ कण तथा रण धातुओं से लुङ् = तिप्, सिच् परे 'नेटि' सूत्र से वृद्धिनिषेध प्राप्त होने पर इससे वैकल्पिक निषेध होता है। ]

अकार की वृद्धि—इसका क्या फल है? अदेवीत्। असेवीत्। [ दिव् तथा सिव् धातुओं के इकार की वृद्धि का निषेध नहीं होता है। ]

न्यकुटीत्, न्यपुटीत्—इनमें [प्रस्तुत सूत्र में] 'अतः' यह न रहने पर स्थानी के निर्देश के लिये 'अचः' इसकी अनुवृत्ति करनी पड़ेगी। इसमें अज्लक्षण वृद्धि इग्लक्षणा नहीं होती है [अच् को मानकर होने वाली वृद्धि इक् को मानकर नहीं होती है]—इसलिए 'क्ङिति च' सूत्र से निषेध नहीं हो सकता। [ इसलिए 'अतः' के ग्रहण की आवश्यकता है। ]

हलादि की—इसका क्या फल है? मा भवान् अशीत्, मा भवान् अटीत्। [ इनमें 'अश्' और 'अट्' के लिङ् में वैकल्पिक निषेध न होकर नित्य निषेध होता है। ]

लघु अकार की वृद्धि—इसका क्या फल है? अतक्षीत् अरक्षीत् [ 'तक्ष्' तनू करण अर्थ में और 'रक्ष' पालन करना अर्थ में है। क् + ष् = क्ष् से पूर्व अकार गुरु मान लिया जाता है। अतः वृद्धिनिषेध वैकल्पिक न होकर नित्य ही निषेध होता है। ]

**अथेह कस्मान्न भवति—अचकासीदिति ? येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यादिति हला व्यवधानमाश्रितम्. न पुनरचापि व्यवधानमिति वृद्धिर्न भवति ।**

**अथ पुनरेकेन वर्णेन व्यवधानमाश्रीयते, न पुनरनेकेन—इति कल्पने 'शक्यमकर्तुम् 'लघोः' इति, अतक्षीदित्यत्रानेकेन व्यवधानमिति न भविष्यति ? तत्क्रियते विस्पष्टार्थम् ।**

**इटीत्येव—अपाक्षीत् ॥**

**न्यासः**

एवं यथा अकाणीदित्यत्र लघोरकारस्य भवति, तथा अचकासीदित्यत्रापि लघोरकारस्य वृद्धया भवितव्यमेव ? इत्यनेनाभिप्रायेणाह—**अथेह कस्मान्न भवत्यचकासीदिति** । 'चकासृ दीप्तौ' । **येनेत्यादि** परिहारः । **हला व्यवधानमाश्रितमिति** । हलन्तस्यैत्यनुवृत्तेरित्यभिप्रायः ।

लघोरिति किमिति येनैवं पृष्टम्, स एव लघुग्रहणं प्रत्याचिख्यासुराह—**अथ पुनरित्यादि** । यद्येवं परिकल्प्यते, वचनप्रामाण्याद् हला व्यवधानमाश्रीयते, न त्वचा, 'अतो लघोः' इति वक्तव्यम्, अन्यथा ह्यतक्षीदित्यादावपि स्यात् ? अत्र हि हला व्यवधानम्, नाचा । अथ पुनरिदं परिकल्प्यते—येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यादित्येकेन वर्णेन व्यवधानमाश्रीयते, न पुनरनेकेनेति नार्थो लघोरित्यनेनेति, न ह्येवं परिकल्प्यमानेऽतक्षीदित्यादौ प्राप्नोति यद्यनेकेन वर्णेन व्यवधानम् ? इत्यत आह—**तत् क्रियत इत्यादि** ॥ ७ ॥

**पदमञ्जरी**

**अथेह कस्मान्न भवतीति** । यदि सिच्परत्वेनाङ्गं विशेष्यते, ततो अत्रापि प्रसङ्ग इति प्रश्नः । 'सिच्परत्वेनाचो विशेष्यते' इत्याश्रित्योत्तरम् । **येन नाव्यवधानमिति वचनप्रामाण्यादिति** । अपिपठिषीदित्यादावनन्तरस्याकारस्यातो लोपेन भवितव्यम् । ननु चोभयोरप्यनित्ययोः परत्वाद्वृद्धिः प्राप्नोति ? अस्तु वृद्धिः, 'आतो लोप इटि च' इत्याकारलोपो भविष्यति ? न भविष्यति; परत्वात्सगिटौ स्याताम् ? एवं तर्हि 'ण्यल्लोपावियङ्यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषिद्धौ' (कात्या० वा ४०८०), इत्यतो लोपो भविष्यति, यथा—चिकीर्षक इत्यत्र । युक्तं तत्र; 'अचो ञ्णिति' इति वृद्धिरन्यत्र चरितार्था, इयं तु सिच्यन्तरस्यातो विधीयमाना निरवकाशा ? एवं तर्हि 'हलन्तस्य' इत्यनुवृत्तेरनन्तरोऽकारो न सम्भवतीत्येतत्सामर्थ्यम् ।

**अथ त्विति** । व्यवधानेन भवितव्यमिति स्थिते हला व्यवधानमिति कल्पनायां लघुग्रहणं कर्त्तव्यम्, एकेन वर्णेनेति तु कल्पनायां न कर्तव्यमित्यर्थः ॥ ७ ॥

**भावबोधिनी**

[ जिस प्रकार अकाणीत् अकणीत् में लघु अकार की वृद्धि का वैकल्पिक निषेध होता है उसी प्रकार ] 'अचकासीत्' यहाँ पर क्यों नहीं होता है ? 'जिससे अव्यवधान नहीं होता है अर्थात् व्यवधान ही रहता है उसके व्यवधान रहने पर भी होता है' इस वचन के प्रामाण्य से हल् का व्यवधान तो मान लिया जाता है किन्तु अच् का व्यवधान नहीं माना जाता है । [ अचकास्—में सिच् और लघु अकार के बीच में 'का' दीर्घ आ के व्यवधान के कारण वृद्धिनिषेध विकल्प से नहीं होता है । नित्य ही निषेध होता है । ] इसलिये वृद्धि नहीं होती है ।

अब यदि एक वर्ण द्वारा व्यवधान मान लिया जाता है न कि अनेक वर्णों द्वारा—इस प्रकार से मान लेने पर तो 'लघोः' ( लघु अकार की )—इसकी कल्पना की आवश्यकता नहीं है । कारण यह है कि 'अतक्षीत्' आदि में अनेक हलों ( = क् ष् = क्ष् ) का व्यवधान होने से ही वैकल्पिक निषेध नहीं होगा ? यदि ऐसा है तब तो 'लघोः' इसका ग्रहण स्पष्टता के लिए किया गया है ।

इट् परे ही ( विकल्प से निषेध होता है )—अपाक्षीत् । [ अ पच् + सिच् + ई त् में इट् परे नहीं है । अतः निषेध न होकर वृद्धि ही होती है । ] ॥ ७ ॥

**३२८७. नेड्वशि कृति ॥ ८ ॥ ( २९८१ )**

**वशादौ कृति प्रत्यये परत इडागमो न भवति । वरमनादौ प्रयोजनम् । ईशिता, ईशितुम्–ईश्वरः । दीपिता, दीपितुम्–दीप्रः । भसिता, भसितुम्–भस्म । याचिता, याचितुम्–याच्ञा ।**

**वरमनादौ इत्युदाहरणप्रदर्शनार्थम्, न परिगणनम् । तेन 'ञमन्ताड्डः' (उणादि ११९) इत्येवमादावपि हि प्रतिषेधो भवति । अथ तत्र 'उणादयो बहुलम्' (३.३.१) इति समाधीयते ? सम्भवोदाहरणप्रदर्शनमेतत् ।**

**न्यासः**

**नेड् वशि कृति ॥** 'आर्धधातुकस्येड् वलादेः' इतीटं वक्ष्यति, तस्य यत्र प्रकृतिलक्षणः प्रतिषेधो नास्ति तत्रानेन प्रतिषेधः क्रियते । पुरस्तात् प्रतिषेधकाण्डस्य प्रयोजनं क्रादिनियमसूत्रे वक्ष्यति । ईशितेत्यादिप्रत्ययान्तरे त्विटो भावेन 'एकाच उपदेशेऽनुदात्तात्' इति यः प्रकृतिनिमित्तकः प्रतिषेधस्तदभावमेवाचष्टे । **ईश्वर इति ।** 'ईश ऐश्वर्ये', 'स्थेशभास' इत्यादिना वरच् । **दीप्र इति ।** 'दीपी दीप्तौ', 'नमिकम्पि' इत्यादिना रः । **भस्मेति ।** 'भस भर्त्सनदीप्त्योः । 'आतो मनिन्क्वनिब्वनिपश्च' इत्यादौ 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन् । **याच्ञेति ।** 'टु याचृ याच्ञायाम्' । 'यजयाच' इत्यादिना नङ् ।

'वरमनादौ प्रयोजनम्' इति यदुक्तम्, तत्र परिगणनत्वमवधार्य य एवं चोदयेद्—यदि वरमनादाविति परिगणनं क्रियते तदा 'षणु दाने', 'ञमन्ताड्डः'-षण्डः, शमेः खः'-शङ्ख इत्यादौ प्रतिषेधो न प्राप्नोतीति-तं प्रति नेदं परिगणनमिति दर्शयितुमाह—**वरमनादावित्युदाहरणमिति । अथ तत्रेत्यादि ।** तत्रौणादिके डप्रत्यये समाधीयेतेति परिगणनपक्षभावि चोद्यं परिह्रियत इत्यर्थः । **सम्भवोदाहरणप्रदर्शनार्थमेतदिति ।** अत्रापि न

**पदमञ्जरी**

**नेड्वशि कृति ॥ वशि कृतीति** सप्तमीनिर्देशस्तदादिविध्यर्थः, तस्य च दयं पुरस्तात्करणस्य प्रयोजनं क्रादिसूत्रे वक्ष्यामः । ईशितेत्यादेरुपन्यासः 'प्रकृत्याश्रयः प्रतिषेधो न सिध्यति' इति प्रदर्शनार्थः । **ईश्वर इति ।** 'स्थेशभास' इत्यादिना वरच् । **दीप्रमिति ।** 'नमिकम्पि' इत्यादिना रः । **भस्मेति ।** 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन् । औणादिके त्वव्युत्पत्तिपक्षाश्रयणेनापि सिद्धम् । **याच्ञेति ।** 'यजयाच' इत्यादिना नङ् ।

**सम्भवोदाहरणप्रदर्शनमिति ।** एतावन्त्युदाहरणानि सम्भवतीति प्रदर्शनार्थमित्यर्थः । **रुदिव, रुदिम**

**भावबोधिनी**

वशादि ( वश् प्रत्याहार का वर्ण है आदि में जिसके ऐसे ) कृत् प्रत्यय परे रहते इट् का आगम नहीं होता है । व, र, म, न—ये जिनके आदि में हैं उनमें इस सूत्र का प्रयोजन है । [ अर्थात् उक्त वर्ण जिसके आदि में हैं ऐसे कृत् प्रत्यय के परे रहते इट् नहीं होता है । ] उदा० ईशिता, ईशितुम् [ इनमें ईश् धातु से तृच्, तुमुन् में इट् होता है किन्तु] ईश्वरः [इसमें नहीं होता है । 'ईश' धातु से 'स्थेशभास' सूत्र से वरच् प्रत्यय होने पर प्राप्त होने वाले इट् का निषेध होता है ] । दीपिता, दीपितुम् [ इनमें इट्निषेध नहीं होता है किन्तु ] दीप्रः । [ यहाँ दीप् धातु से "नमिकम्पि' उणादिसूत्र से 'र' प्रत्यय होने पर प्राप्त इट् का निषेध होता है । ] भासिता, भसितुम् । [ इनमें इट् होता है । किन्तु ] भस्म । [ यहाँ मनिन् = मन् प्रत्यय परे इट् नहीं होता है । ] याचिता, याचितुम् [ इनमें इट्निषेध नहीं होता है । किन्तु ] याच्ञा । [ यहाँ इट्निषेध होता है । याच् धातु से "यजयाच" सूत्र से नङ् प्रत्यय होने पर प्राप्त इट् का निषेध होता है श्चुत्व आदि होता है । ]

व, र, म, न—ये आदि में हों—ऐसा कथन उदाहरण-प्रदर्शन के लिए है न कि परिगणन है । [ अतः अन्यत्र भी इट्निषेध होता है । ] इसीलिए "ञमन्ताड्डः" [ ञमन्त से 'ड' प्रत्यय होने पर 'षण्डः' ] आदि में भी इट् का प्रतिषेध होता है । यदि उनमें 'उणादयो बहुलम्' इस बहुल से समाधान किया जाता है, ऐसा है ? तब तो यह

कृतीति किम् ? रुरुदिव । रुरुदिम ॥

३२८८. तितुत्रतथसिसुसरकसेषु च ॥ ९ ॥ ( ३१६३ )

ति, तु, त्र, त, थ, सि, सु, सर, क, स—इत्येतेषु कृत्सु इडागमो न भवति । 'ति' इति–क्तिन्क्तिचोः सामान्यग्रहणम् ।

क्तिच्—तनिता, तनितुम्—तन्तिः । क्तिन्-दीपिता, दीपितुम्—दीप्तिः ।

तु—'सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन्', (उणादि० ७२), सचिता, सचितुम्–सक्तुः ।

**न्यासः**

परिगणनमेतदिति सम्बध्यते । प्रतिषेधस्य सम्भव उदाह्रियते । यत्र कृति प्रतिषेधः सम्भवति तस्य प्रदर्शनार्थमेतदुक्तं भवति । यत्र वशादौ कृतीट्प्रतिषेधः सम्भवति, तस्य प्रदर्शनार्थं वरमनादावित्युक्तम्, न पुनरेतत् परिगणनमिति । रुरुदिव, रुरुदिमेति । अत्र कृद्ग्रहणादार्धधातुकस्येटो न भवति प्रतिषेधः ॥ ८ ॥

तितुत्रतथसिसुसरकसेषु च ॥ अवशाद्यर्थोऽयमारम्भः । तन्तिरिति । 'तनु विस्तारे', 'क्तिच्क्तौ च संज्ञायाम्' इति क्तिच् । 'अनुदात्तोपदेशवनतितनोति' इत्यादिनाऽनुनासिकलोपः प्राप्नोति, 'अनुनासिकस्य क्विझलोः क्ङिति' इति दीर्घश्च, तदुभयमपि 'न क्तिचि दीर्घश्च' इति प्रतिषेधान्न भवति ।

दीप्तिरिति । 'क्तिन्नाबादिभ्यश्च' इति क्तिन् । रोदिति, स्वपितीत्यत्र प्रतिषेधो न भवति, कृतीत्यनुवृत्तेः ।

सक्तुरिति । 'सच समवाये' ।

**पदमञ्जरी**

इति । असति कृद्ग्रहणे 'रुदादिभ्यः सार्वधातुके' इत्यस्यापि इटोऽत्र प्रतिषेधः स्यात्, तस्य त्ववशादिरवकाशः—रोदितीति । क्वचिद् रुरुदिव, रुरुदिमेति लिटि पठ्यन्ते, तदयुक्तम्; क्रादिनियमादेवेटः सिद्धत्वात् ॥ ८ ॥

तितुत्रतथसिसुसरकसेषु च ॥ क्तिन्क्तिचोः सामान्येन ग्रहणमिति । रोदितीत्यस्य तिप एकानुबन्धकस्याप्यग्रहणम्; 'कृति' इत्यनुवृत्तेः ।

दीप्तिरिति । 'क्तिन्नाबादिभ्यश्च' (वा० ३०७) इति क्तिन् ।

**भावबोधिनी**

[ उक्त 'वरमनादौ प्रयोजनम्'—वचन ] सम्भव उदाहरण का प्रदर्शन है । [ अर्थात् ऐसे उदाहरण हो सकते हैं—यही बतलाना उद्देश्य है परिगणन नहीं है । ]

कृत् प्रत्यय परे-इसका क्या फल है ? रुरुदिम, रुरुदिव । [ यहाँ वस् मस् ये तिङ् प्रत्यय हैं कृत् नहीं । स् का लोप हुआ है । ]

विमर्श—सामान्यतया पहले विधान किया जाता है बाद में उसका निषेध । किन्तु यहाँ ऐसा नहीं है । इसका स्पष्टीकरण आगे 'कृसृभृ' ( ७।२।१३ ) सूत्र पर किया जायगा ।

कृत् प्रत्यय के प्रत्युदाहरण के रूप में प्रायः—'रुरुदिव, रुरुदिम' ऐसा लिखा गया है परन्तु पदमञ्जरीकार इसे ठीक नहीं मानते हैं । उनके अनुसार—'रुदिवः, रुदिमः' ये ही उचित हैं क्योंकि रुरुदिव, रुरुदिम में तो क्रादिनियम से ही इट् आगम सिद्ध है । पदमञ्जरीकार का वक्तव्य भाष्य और प्रदीप के अनुकूल है ॥ ८ ॥

ति, तु, त्र, त, थ, सि, सु, सर, क और स—इन कृत् प्रत्ययों के परे रहते इट् का आगम नहीं होता है । 'ति' इससे क्तिन् और क्तिच् दोनों का सामान्यरूप से ग्रहण होता है ।

(१) क्तिच् का उदा० तनिता, तनितुम्—[ इनमें इट् होता है किन्तु ] तन्तिः । [ इसमें इट् का प्रतिषेध हो जाता है । ]

क्तिन् का उदा०—दीपिता, दीपितुम् [ इनमें होता है किन्तु ] दीप्तिः । [ इसमें क्तिन् परे रहते इट् नहीं होता है । ]

त्र—'दाम्नीशसयुयुज' ( ३.३.१८२ ), इति ष्ट्रन्, पतिता, पतितुम्—पत्त्रम् = वाहनम् । उणादिष्वपि 'सर्वधातुभ्यः ष्ट्रन्' (उणादि० ६०८), तनिता, तनितुम्—तन्त्रम् ।

त—'हसिमृग्रिण्वमिदमितमिलूपूधुर्विभ्यस्तन्', (उणादि० ३७३), हसिता, हसितुम्—हस्तः । लविता, लवितुम्—लोतः । पविता, पवितुम्—पोतः । धूर्विता, धूर्वितुम्—धूर्तः । औणादिकस्यैव तशब्दस्य ग्रहणमिष्यते, न पुनः क्तस्य; हसितमित्येव हि तत्र भवति ।

थ—'हनिकुषिनीरमिकाशिभ्य क्थन्', (उणादि० १६७), कोषिता, कोषितुम्, कुष्ठम् । काशिता, काशितुम्—काष्ठम् ।

सि—'प्लुषिशुषिकुषिभ्यः क्सिः' (उणादि० ४४३), कोषिता, कोषितुम्—कुक्षिः ।

सु—'सुक् च इषेः' (उणादि० ४४५), एषिता, एषितुम्—इक्षुः ।

सर—'अशेः क्सरन्' (उणादि० ३५७), अशिता, अशितुम्—अक्षरम् ।

**न्यासः**

पत्त्रमिति । 'पत्लृ गतौ' । तन्त्रमिति । 'तनु विस्तारे' ।

हस्त इति । 'हस हसने' । लोत इति । 'लूञ् छेदने' ।

औणादिकस्येत्यादि । 'ऊर्णोतेर्विभाषा' इत्यतो विभाषाग्रहणमनुवर्त्तते, सा च व्यवस्थितविभाषा । तेनौणादिक एव तशब्दे प्रतिषेधेन भवितव्यम्, नान्यत्र । यत्र प्रतिषेधेन भवितव्यं तस्यैव ग्रहणं युक्तमित्यौणादिक तशब्दस्य ग्रहणमिष्यते, न तु क्तस्य । तेन हसितमित्यत्रेडागमो भवत्येव ।

कुष्ठमिति । 'कुष निष्कर्षे' । काष्ठमिति । 'काशृ दीप्तौ' । शकारस्य व्रश्चादिसूत्रेण षत्वम्, 'ष्टुना ष्टुः' इति ष्टुत्वम् ।

कुक्षिरिति । कुषेः 'षढोः कः सि' इति कत्वम्, 'इण्कोः' इति षत्वम् ।

इक्षुरिति । 'इषु इच्छायाम्' । पूर्ववत् कत्वषत्वे ।

अक्षरमिति । 'अशू व्याप्तौ', व्रश्चादिसूत्रेण षत्वम्, पूर्ववत् कत्वम् । शल्कमिति । 'शल गतौ' ।

**पदमञ्जरी**

औणादिकस्यैवेति । एतच्च भूयोभिरौणादिकैः साहचर्याल्लभ्यते ।

**भावबोधिनी**

(२) तु—का उदा० "सितनिगमिमसिसच्यविधाञ्क्रुशिभ्यस्तुन्" ( उणादि सू० ) [ इससे तुन् प्रत्यय होने पर प्राप्त इट् का प्रतिषेध होता है अतः ] सचिता, सचितुम् । [ इनमें इट् होता है किन्तु ] सक्तुः । [ इसमें प्राप्त इट् का प्रतिषेध होता है । ]

(३) त्र—का उदा० "दाम्नीशस्" ( पा० सू० ) इससे ष्ट्रन होता है । पतिता, पतितुम् । [ इनमें इट् का निषेध नहीं होता है किन्तु ] पत्त्रम् = वाहन । [ इसमें प्राप्त इट् का निषेध होता है । ]

(४) त—"हसिमृग्रिण्वमिदमितमिलूपूधुर्विभ्यस्तन्" ( उणादिसूत्र ) [ इससे त प्रत्यय होता है । ] हसिता, हसितुम् । [ इनमें इट् होता है किन्तु ] 'हस्तः' । [ इसमें प्राप्त इट् का निषेध हो जाता है । ] लविता, लवितुम् [ इनमें इट् होता है किन्तु ] लोतः' । [ इसमें निषेध हो जाता है । ] पविता, पवितुम् । [ इट् होता है किन्तु ] पोतः । [ इसमें इट् निषेध होता है । ] धूर्विता, धुर्वितुम् । [ इनमें इट् होता है । ] 'धूर्तः' । [ इसमें नहीं होता है । ] इस सूत्र में औणादिक 'त' का ही ग्रहण है न कि 'क्त' के 'त' का, अतः हस् + क्त में 'हसितम्' यही होता है ।

(५) थ—'हनिकुषिनीरमिकाशिभ्यः क्थन्" ( उणादिसूत्र ) [ से क्थन् होता है । ] कोषिता, कोषितुम् । [ इनमें इट् होता है किन्तु ] कुष्ठम् । [ यहाँ नहीं होता है—कुष् + थ, ष्टुत्व से थ का ठ । ] काशिता । काशितुम् [ इनमें इट् होता है । ] काष्ठम् । [ इनमें नहीं । काश + थ, 'व्रश्चादि' सूत्र से श् का ष्, ष्टुत्व होता है । ]

(६) सि—'प्लुषिशुषिकुषिभ्यः क्सिः' [ उणादि सूत्र से क्सि = सि होता है ] कोषिता, कोषितुम् ।

क—'इणभीकापाशल्यतिमर्चिभ्यः कन्' (उणादि० ३२०), शलिता, शलितुम्—शल्कः ।

स—'वृतृवदिहनिकमिकषियुमुचिभ्यः सः' (उणादि० ३४९), वदिता, वदितुम्—वत्सः ।

❀ तितुत्रतथेष्वग्रहादीनामिति वक्तव्यम् ❀ । (का० वा०) ग्रहादयो ग्रहप्रकाराः, येषामिट् क्तिनि दृश्यते । निगृहीतिः । उपस्निहितिः । निकुचितिः । निपठितिः ।

'कृति' इत्येव—रोदिति । स्वपिति ॥

**३२८९. एकाच उपदेशेऽनुदात्तात् ॥ १० ॥ (२२४६)**

उपदेशे य एकाच् धातुरनुदात्तश्च तस्मादिडागमो न भवति । प्रकृत्याश्रयोऽयं प्रतिषेधः ।

**न्यासः**

**वत्स इति** । 'वद व्यक्तायां वाचि', चर्त्वम्—तकारः ।

**तितुत्रतथेष्वग्रहादीनां वक्तव्यमिति** । 'तितुत्रथ' इत्यादिसूत्रमुपलक्षयति । तितुत्रथेत्यादौ ग्रहादीनां प्रतिषेधो न भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्—इहापि 'विभाषा' इत्यनुवर्त्तते, सा च व्यवस्थितविभाषा, तेन ग्रहादीनां प्रतिषेधो न भवति । **ग्रहादयो ग्रहप्रकारा इति** । अनेनादिशब्दस्य प्रकारार्थतामाचष्टे । के पुनर्ग्रहप्रकाराः ? इत्याह—**येषामित्यादि** । **निगृहीतिरिति** । 'स्त्रियां क्तिन्', 'ग्रहोऽलिटि दीर्घः' इति दीर्घः, ग्रह्यादिना सूत्रेण सम्प्रसारणम् । **उपस्निहितिरिति** । 'ष्णिह प्रीतौ । **निकुचितिरिति** । 'कुच सङ्कोचे' ।

अत्र त्वौणादिकानां ग्रहणं शक्यमकर्त्तुम्; यथैव हि 'उणादयो बहुलम्' इति बहुलवचनात् 'त्रमन्ताड्डः' इत्येवमादाविण्न भवति, तथा तेष्वपि न भवितव्यम् ? प्रपञ्चार्थं तेषां ग्रहणं वेदितव्यम् ॥ ९ ॥

**एकाच उपदेशेऽनुदात्तात् ॥ अनुदात्तादिति** बहुव्रीहिरयम्—नास्योदात्तोऽस्तीत्यनुदात्तः । अन्वर्थ-

**पदमञ्जरी**

**तितुत्रेष्विति** । अस्मिन् सूत्र इत्यर्थः । **अग्रहादीनामिति** । ग्रहादिव्यतिरिक्तानां धातूनां सम्बन्धिषु तितुत्रादिषु प्रतिषेध इत्यर्थः । आदिशब्दः प्रकार इत्याह—**ग्रहप्रकारा इति** । कः पुनः प्रकार ? इत्याह—**येषामिति** । **निकुचितिरिति** । कुञ्चेः पूर्ववत् क्तिन्, उपधालोपः, 'कुच शब्दकरणे' इत्येतस्माद्वा क्तिन् ॥ ९ ॥

**एकाच उपदेशेऽनुदात्तात् ॥ अनुदात्तादिति** बहुव्रीहिः—न विद्यते उदात्तो यस्मिन् सोऽयमनुदात्तः ।

**भावबोधिनी**

[ इनमें इट् होता है । ] कुक्षिः । [ इनमें नहीं होता है । कुष् + सि, 'षढोः कः सि' सूत्र से ष् का क् 'इण्कोः' सूत्र से स् का ष । क् + ष् का क्ष् होता है । ]

(७) सु—'सुक् च इषेः' ( उणादिसूत्र ) [ इससे सुक् प्रत्यय होता है ] एषिता एषितुम् । [ इनमें इट् होता है किन्तु ] इक्षुः । [ इनमें नहीं होता है । इष् + सु, कत्व, षत्व, क्षत्व होता है ]

(८) सर—'अशेः क्सरन्' (उणादिसूत्र) [ अश् धातु से क्सरन् प्रत्यय होता है । ] अशिता, अशितुम् [ इनमें इट् होता है किन्तु ] अक्षरम् [ इसमें नहीं होता है अश् + सरन् श् का ष, कत्व, षत्व, क्षत्व ] ।

(९) क—'इण्भीकापाशल्यतिमर्चिभ्यः कन्' ( उणादिसूत्र ) [ इनसे कन् प्रत्यय होता है । ] शलिता, शलितुम् [ इनमें इट् होता है किन्तु ] शल्कः । [ इसमें नहीं होता है । ]

(१०) स—'वृतुवदिहनिक्रमिकषियुमुचिभ्यः सः' ( उणादिसूत्र ) [ इससे 'स' प्रत्यय होता है । ] वदिता, वदितुम् [ इनमें इट् होता है । ] वत्सः । [ इसमें इट् नहीं होता है—वद् + स, चर्त्व से द् का त् । ]

* ति, तु, त्र, त, थ—इनके परे रहते ग्रहादि को छोड़कर [ इट्निषेध ] कहना चाहिए । * ग्रहादि = ग्रहप्रकार, जिनका क्तिन् परे इट् देखा जाता है [ वैसी ग्रहादि लेनी चाहिए । ] उदा० निगृहीतिः । उपस्निहितिः । [ ग्रह + क्तिन् 'ग्रहोऽलिटि दीर्घः' से दीर्घ होता है । इट् का निषेध नहीं होता है । ऋ का सम्प्रसारण होता है ।] निकुचितिः । निपठितिः [यहाँ भी इट् का निषेध नहीं होता है । ]

कृत्—प्रत्यय परे ही [निषेध होता है]—रोदिति, स्वपिति । [यहाँ तिङ् परे निषेध नहीं होता है] ॥ ९ ॥

उपदेश (अवस्था) में जो धातु एकाच् और अनुदात्त ( उदात्त नहीं है जिसका ऐसी ) होती है उससे

के पुनरुपदेशेऽनुदात्ताः ? ये तथा गणे पठ्यन्ते, त एव विस्पष्टार्थमनिट्कारिकासु प्रविभक्ताः प्रदर्श्यन्ते—

अनिट्स्वरान्तो भवतीति दृश्यताम्, इमांस्तु सेटः प्रवदन्ति तद्विदः।
अदन्तमृदन्तमृतां च वृङ्वृञौ श्विडीङिवर्णेष्वथ शीङ्श्रिञावपि॥
गणस्थमूदन्तमुतां च रुस्नुवौ क्षुवं तथोर्णोतिमथो युणुक्ष्णवः।
इति स्वरान्ता निपुणं समुच्चिताः, ततो हलन्तानपि सन्निबोधत[1]॥ [ ? ]

**न्यासः**

शब्दोऽयमनुदात्तशब्दः। शास्त्रीये ह्यनुदात्ते गृह्यमाण एकवर्णा एव धातवो गृह्येरन्। तथा चान्येषां धातूनामनुदात्तप्रतिज्ञानमनर्थकं स्यात्। इह चेकाज्ग्रहणमुपदेशविशेषणम्।

**उपदेश इति**। प्रकृतिपाठः इत्यर्थः। **अनुदात्तश्चेति**। 'उपदेश' इत्यपेक्षते, तेनोपदेशग्रहणमुभयविशेषणमिति दर्शयति। तस्य प्रयोजनं प्रत्युदाहरणेष्वाविष्करिष्यति। **ये तथा गणे पठ्यन्त इति**। एतेन गणपाठादेव ते वेदितव्या इति दर्शयति। **त एवेत्यादिना** द्वितीयं परिज्ञानहेतुमाह। काः पुनस्ता अनिट्कारिकाः ? इत्याह—**अनिट् स्वरान्त इत्यादि**। यावान् कश्चित् स्वरान्तोऽजन्तो धातुः स सर्वोऽनिड् भवतीत्येतद् **दृश्यताम्** अवगम्यताम्। अनिडिति बहुव्रीहिः—नास्मादिडस्तीति। 'अनिट् स्वरान्तः' इत्यस्योत्सर्गस्यापवादमाह—**इमांस्त्वित्यादि**। इमांस्त्वदन्तादीन् वक्ष्यमाणान् सेटः प्रवदन्ति। इटा सह वर्त्तन्त इति सेटः। के वदन्ति ? **तद्विदः** सेडनिड्विद् इत्यर्थः। **अदन्तमिति** बहुव्रीहिः—अकारस्तपरोऽन्तो यस्य स तथोक्तः। तपरकरणं दीर्घनिवृत्त्यर्थम्। **ऋदन्तमिति**। अयमपि बहुव्रीहिः। तपरकरणमसन्देहार्थम्।

**पदमञ्जरी**

पारिभाषिके त्वनुदात्तेऽज्मात्राणामिणादीनामेव ग्रहणं स्यात्, नाज्झल्समुदायरूपाणां पचिभृतीनाम्। ततश्च तेषामनुदात्तोपदेशोऽनर्थकः स्यात्। अथ वा—अनुदात्ताचकत्वात्समुदाय एवानुदात्त इत्युच्यते, यथा 'अनुदात्तं पदम्' इति। उपदेशः = प्रकृतिपाठः। **अनुदात्तश्चेति**। 'उपदेशे' इत्यपेक्षते। उभयविशेषणं चैतदिष्यते। अन्यतरविशेषणं तु यदि विज्ञायेत—उपदेश एकाचः सम्प्रत्यनुदात्तादिति, इहापि च प्रसज्येत—लविष्यति, पविष्यतीति, भवति ह्येतत् प्रत्ययस्योदात्तत्वे शेषनिघातेन सम्प्रत्यनुदात्तम्; इह च न स्यात्—कर्त्ता, कर्त्तुम्, नित्स्वरेण सम्प्रत्युदात्तत्वात् प्रकृतिपाठे चैषामनुदात्तोपदेशोऽनर्थकः स्यात्। अथ विज्ञायेत—उपदेशेऽनुदात्तादेकाचः श्रूयमाणादिति ? क्रादिसूत्रे नियमो नोपपद्येत, चकृव, चकृमेत्यादौ श्रूयमाणरूपस्यानेकाच्त्वाद्विधिरेव स्यात्, तत्र को दोषः ? बिभिदिव,बिभिदिम अत्रेडागमो न स्यात्। ननु च सम्प्रत्यनेकाच्त्वादत्र प्रतिषेधस्या-

**भावबोधिनी**

परे इट् का आगम नहीं होता है। यह प्रतिषेध प्रकृति को आधार बना कर किया गया है। [ सामान्यतः प्रत्यय को इट् का प्रतिषेध होता है। ]

कौन सी धातुयें उपदेश में अनुदात्त हैं ? जो गणपाठ में उसी प्रकार अनुदात्त ही पढ़ीं गईं हैं। उन्हीं धातुओं को सुस्पष्टता के लिए अलग-अलग रूप से अनिट् कारिकाओं में दिखाया जा रहा है—

स्वरान्त=अजन्त धातुयें अनिट् होती हैं—ऐसा समझना चाहिए। [ यह सामान्य कथन है। अब स्वरान्तों में भी विशेषरूप से सेट् का निरूपण किया जा रहा है ] उन ( सेट् तथा अनिट् ) को जानने वाले इनको सेट् ( इट् आगम सहित ) कहते हैं—ह्रस्व अकारान्त ( अदन्त ), ऋकारान्त ( दीर्घ ऋकारान्त ), और ह्रस्व ऋकारान्तों में वृङ् तथा वृञ्, और इकारान्तों में श्वि ( टु ओ श्वि गति, वृद्धि अर्थों वाली ) डीङ् ( डीङ् आकाश में गतिवाली उड़ना अर्थ वाली ), [ इन्हें सेट् कहते हैं। ] और शीङ् ( शयन अर्थवाली ) श्रिञ् ( सेवा अर्थवाली ) को [ भी सेट् कहते हैं ]।

गणपाठस्थ दीर्घ ऊकारान्त ( जैसे लूञ् छेदन अर्थवाली, पूञ् पवित्र करना अर्थवाली ) सेट् हैं, ह्रस्व उकारान्त में रु ( शब्द करना अर्थवाली ), स्नु ( प्रस्रवण = बहना अर्थवाली ) क्षु ( टु क्षु शब्द करना अर्थवाली ), ऊर्णुञ्

१. केचित् इदं नात्र पठन्ति।

द्वये एव धातवः—स्वरान्ताः, व्यञ्जनान्ताश्च। तत्र सर्वे स्वरान्ता एकाचोऽनुदात्ताः, अदन्तादीन्वर्जयित्वा। दाता। नेता। चेता। स्तोता। कर्त्ता। हर्त्ता। अदन्तादय उदात्ताः—आवधिष्ट।

ॠदन्तम्—तरिता, तरीता।

ऋतां च वृङ्वृञौ—निर्वरिता, निर्वरीता। प्रवरिता, प्रवरीता।

श्विडीङिवर्णेष्वथ शीङ्श्रियावपि—श्वयिता, उड्डयिता, शयिता, श्रयिता।

**न्यासः**

रन्तमित्युच्यमाने, किमयं रेफस्य निर्देशः ? उत ऋकारस्य ?—इति सन्देहः स्यात्। **ऋतां चेति**। ऋतामिति निर्धारणे षष्ठी। ऋकारान्तानां मध्ये वृङ्वृञौ सेटौ प्रवदन्ति। तपरकरणं पादपूरणार्थम्। पूर्वमृकारान्तग्रहणादेव हि ह्रस्वस्य ग्रहणमिहावसीयते। **श्विडीङिवर्णेष्विति**। निर्धारणे सप्तमी। इवर्णान्तेषु मध्ये श्विडीङौ सेटौ प्रवदन्ति। 'टुओश्वि गतिवृद्ध्योः', 'डीङ् विहायसा गतौ'। **अथ शीङ्श्रियावपीति**। अथेत्यानन्तर्ये। अनयोः पूर्वोक्तयोरनन्तरं शीङ्श्रियावपि सेटौ प्रवदन्ति। 'शीङ् स्वप्ने', 'श्रिञ् सेवायाम्'।

**गणस्थमिति**। स्वरूपाख्यानमेतत्, न तु विशेषणम्—गणनिवृत्त्यर्थमिति; तस्यासम्भवात्। **ऊदन्तमिति**। 'लूञ् छेदने', 'पूञ् पवने'—इत्येवमादयः। **उतां चेति**। निर्धारणषष्ठी। 'रु शब्दे', 'स्नु प्रस्रवणे'। **क्षुवं तथोर्णोतिमित्यादि**। 'टुक्षु शब्दे', 'ऊर्णुञ् आच्छादने', 'यु मिश्रणे', 'णु स्तुतौ', 'क्ष्णु तेजने'। **आवधिष्टेति**। आङ्पूर्वाद्धन्तेर्लुङ्, 'आङो यमहनः' इत्यात्मनेपदम्, 'आत्मनेपदेष्वन्यतरस्याम्' इति वधादेशः। स चावधीदित्यत्र वृद्धिर्मा भूदित्येवमर्थमदन्तः पठ्यते। इट्, 'अतो लोपः' इत्यकारलोपः।

**पदमञ्जरी**

प्रसङ्गादेवेड् भविष्यति ? इह तर्हि पेचिव, पेचिम, एत्वाभ्यासलोपयोः कृतयोरेकाचः श्रूयमाणादिट्प्रतिषेधः प्राप्नोति। परत्वादिटि कृते एत्वाभ्यासलोपौ भविष्यतः ? नित्यावेत्वाभ्यासलोपौ—कृतेऽपीटि प्राप्नुतोऽकृतेऽपि; इट् पुनरनित्यः—कृतयोस्तयोरेकाचः श्रूयमाणादिति प्रतिषेधात्। एवं तर्हि 'थलि च सेटि' इत्यत्र सेट्ग्रहणं कालावधारणार्थं भविष्यति, कथम् ? तत्र थल्ग्रहणं न कर्त्तव्यम्, सेटीत्येतावता सिद्धम्, 'अत एकहल्मध्ये' इत्यादि सर्वमनुवर्त्तते, किद्ग्रहणमेकं निवृत्तम्, न च थलोऽन्यः सेट् किल्लिट् सम्भवति। सोऽयमेवं सिद्धे यत्थल्ग्रहणं करोति तस्यैतत्प्रयोजनम्—किता सह समुच्चयार्थम्, थलि च किति च सेटि एत्वाभ्यासलोपौ

**भावबोधिनी**

( आच्छादन अर्थवाली ) तथा यु (मिश्रण करना अर्थवाली), णु ( स्तुति करना अर्थवाली ), क्ष्णु ( तेजन = धार रखना अर्थवाली )—इन स्वरान्तों को निपुणता से (अच्छी तरह सोच कर) एकत्र लिखा गया है। इसके बाद हलन्तों को भी ( सेट्, अनिट् ) समझना चाहिए।

[ कारिका की व्याख्या स्वयं काशिकाकार कर रहे हैं—] दो ही प्रकार की धातुयें होती हैं—(१) स्वरान्त और (२) व्यञ्जनान्त। उनमें सभी एकाच् अनुदात्त ( उदात्त से रहित ) स्वरान्त [ अनिट् हैं ] अदन्त आदि ( पूर्वोक्त ) को छोड़ कर। उदा० दाता। नेता। चेता। स्तोता। कर्त्ता। हर्ता। [ इनमें डुदाञ् दाने, णीञ् प्रापणे, चिञ् चयने, ष्टुञ् स्तुतौ, डुकृञ् करणे, हृञ् हरणे—धातुयें स्वरान्त एकाच् और अनुदात्त ( उदात्तरहित) हैं। अतः अनिट् होने से वलादि परे इट् का निषेध हो जाता है। ] अदन्त आदि उदात्त हैं—आवधिष्ट। [ आङ् पूर्वक 'हन्' धातु से 'आङो यमहनः' सूत्र से आत्मनेपद और "आत्मनेपदेष्वन्यतरस्याम्" सूत्र से हन् का वध आदेश होता है। यह अकारान्त है। अ का लोप होता हैं। इसीलिए स्थानिवद्भाव के कारण वृद्धि नहीं होती है। उदात्तरहित =अनुदात्त न होने से इट् का निषेध नहीं होता है। ]

ॠकारान्त—तरिता, तरीता। [ तॄन् सेट् है। इट् के बाद "वृतो वा" ( ७।२।३८ ) सूत्र से वैकल्पिक दीर्घ होता है। ]

ह्रस्व ऋकारान्तों में वृङ् तथा वृञ् [ सेट् हैं ]—निर्वरिता, निर्वरीता। प्रवरिता, प्रवरीता। [ निपूर्वक वृङ् तथा प्रपूर्वक वृञ् के रूप हैं। ]

**गणस्थमूदन्तम्—लविता। पविता।**

**उतां च रुस्नुवौ क्षुवं तथोर्णोतिमथो युणुक्ष्णवः—रविता। प्रस्नविता। क्षविता। प्रोर्णविता।**

**'वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम्'— इत्यतिदेशादेकाच्त्वमूर्णोतेरस्तीति उदात्त उपदिश्यते। यविता। नविता। क्ष्णविता।**

**इति स्वरान्ता निपुणं समुच्चिताः; ततो हलन्तानपि सन्निबोधत[1]।**
**शकिस्तु कान्तेष्वनिडेक इष्यते, घसिश्च सान्तेषु वसिः प्रसारणी॥**

**न्यासः**

अथ किमर्थमूर्णोतिरुदात्त उपदिश्यते? इट्प्रतिषेधो मा भूदिति चेत्? नैतदस्ति; एकाचो ह्मीट्प्रतिषेध उच्यते, न चास्यैकाच्त्वमस्ति? इत्यत आह—**वाच्य ऊर्णोर्नुवद्भाव इति। एकाच्त्वमिति।** पदान्तस्यापि कुत्वाभावः; कुत्वस्यानित्यत्वात्। अनित्यत्वं तु 'बह्वच्पूर्वपदाद्', 'अल्पाच्तरम्' इति निर्देशाद् वेदितव्यम्। इतीत्येवमर्थः। **निपुणमिति।** सम्यगविपरीतमित्यर्थः। क्रियाविशेषणश्चैतत्। **समुच्चिता इति।** उदात्तानुदात्तसङ्कीर्णाद्धातुराशेः पृथग्व्यवस्थिता इत्यर्थः।

**तत इति।** स्वरान्तधातुसमुच्चयनादुत्तरकालम्! **हलन्तानपि निबोधत** अवगच्छतेत्यर्थः। **शकिस्त्वित्यादि।** 'शक्लृ शक्तौ'। **घसिश्चेत्यादि।** ननु चादि हृदिमित्यादेः स्वरूपग्रहणे सति तस्य स्थाने 'लुङ्सनोर्घस्लृ' इति विहितस्य घस्लादेशस्यापि स्थानिवद्भावेनानिट्त्वं सिध्यत्येव, तत् किमर्थं घसिः पृथगुपादीयते?

**पदमञ्जरी**

भवत इति। तत्र किति पूर्वेणैव सिद्धे कालावधारणार्थमिदं वचनमिति कृते एत्वाभ्यासलोपौ यथा स्याताम्, अकृते मा भूतामिति, यथा—'निष्ठायां सेटि' इत्यत्र। एवमपि विधित्सति, चिच्छित्सतीत्यत्र नित्यत्वाद् द्विर्वचने कृते एकाचः श्रूयमाणादिति प्रतिषेधो न स्यात्? तस्मादुभयविशेषणमुपदेशग्रहणम्, अत एवेदं मध्ये पठितम्। यद्युभयविशेषणम्, बेभिदिता, चेच्छिदिता—अत्रापि प्राप्नोति? अल्लोपस्य पूर्वस्मादपि विधौ स्थानिवद्भावान्न भविष्यति। यङ्लुगन्ते तर्हि प्राप्नोति—बेभेदिता, चेच्छिदिता? 'यत्रैकाज्ग्रहणं किञ्चित्पञ्चैतानि न यङ्लुकि' इति वचनान्न भविष्यति। के **पुनरिति।** पाठे सङ्करसम्भवात्प्रश्नः। 'असङ्करेण पठितव्याः' इत्युत्तरम्। **प्रविभक्ता इति।** स्वरान्तहलन्तककारादिवर्णभेदेनेत्यर्थः। श्लोकेष्वनिड्ग्रहणमनुदात्तोपलक्षणम्। षष्ठीसप्तम्यश्च धातुविषयनिर्धारणे द्रष्टव्याः। **श्विडीङिति।** समाहारद्वन्द्वे द्वितीयान्तम्।

**गणस्थमिति।** श्लोकपूरणार्थम्। स्वभावकथनमेतत्। **मत्** मत्तः, **निबोधत,** अवगच्छत।

**द्वयेत्यादिश्लोकयोर्द्वयोर्विवरणम्। इति स्वरान्ता इति।** अस्य पुनः पाठो निगदव्याख्यानतां दर्शयितुं द्रष्टव्यः। अन्ये तु पूर्वं न पठन्ति।

**भावबोधिनी**

इवर्णवाली धातुओं में 'श्वि, डीङ्, शीङ् और श्रिञ् भी [ सेट् समझनी चाहिए। ] श्वयिता। उड्डयिता। [ उत् उपसर्ग पूर्वक डीङ् का रूप है। ] शयिता, श्रयिता।

गण में स्थित ऊकारान्त [ सेट् होते हैं ]—लविता। पविता। [ लूञ् तथा पूञ् के रूप हैं। ]

ह्रस्व उकारान्तों में रु, स्नु, क्षु, ऊर्णुञ्, यु, णु, क्ष्णु [—ये भी सेट् हैं। ] रविता। स्नविता। क्षविता। प्रोर्णविता [ प्र + ऊर्णुञ् का रूप है। ]

'ऊर्णुञ् का णुवद्भाव कहना चाहिए, यङ् प्रत्यय की सिद्धि प्रयोजन है' इस अतिदेश के कारण ऊर्णु का एकाच्त्व है इसलिए उदात्त उपदेश किया जाता है। [ भाव है कि ऊर्णुञ् में वास्तव में दो अच् होने पर भी अतिदेश से एकाच्त्व मानकर एकाच्सम्बन्धी कार्य करने चाहिए। उदात्त से इट् निषेध नहीं होता है। ] यविता। नविता। क्ष्णविता।

इतनी स्वरान्त धातुओं का सावधानी से समुच्चय किया गया। अब हलन्त भी [ सेट् तथा अनिट् ] समझ लीजिए।

---

१. 'मन्निबोधत' इति पदमञ्जरीसम्मतः पाठः।

घसिः प्रकृत्यन्तरमस्ति—घस्ता। वसिः प्रसारणी—वस्ता। प्रसारणीति किम्? वसिता वस्त्राणाम्। 'वस निवासे' (धा० पा० १००६) इत्यस्य यजादित्वात्सम्प्रसारणं विहितम्, न तु 'वस आच्छादने' (धा० पा० १०२४) इत्यस्य।

रभिस्तु भान्तेष्वथ मैथुने यभिस्ततस्तृतीयो लभिरेव नेतरे।

आरब्धा। यब्धा। लब्धा।

यमिर्यमन्तेष्वनिडेक इष्यते रमिश्च यश्च श्यनि पठ्यते मनिः।
नमिश्चतुर्थो हनिरेव पञ्चमो गमिश्च षष्ठः प्रतिषेधवाचिनाम्॥

**न्यासः**

इत्याह—**घसिः प्रकृत्यन्तरमस्तीति**। अन्यदेव हीदं धात्वन्तरम् 'घस्लृ अदने' इत्यदादौ पठ्यते, तस्येदं ग्रहणम्, न त्वादेशस्य। **प्रसारणीति**। प्रसारणम्=सम्प्रसारणम्, तदस्यास्तीति प्रसारणी। **वसितेति**। 'वस आच्छादने', **'वस निवासे' इत्यस्य सम्प्रसारणं विहितमिति**। वच्यादिसूत्रेण। एतेन निवासार्थो वसिः प्रसारणी, न त्वाच्छादनार्थ इति दर्शयति।

**रभिश्चेत्यादि**। 'रभ राभस्ये', 'यभ मैथुने', 'डुलभष् प्राप्तौ'।

**यमिर्ञमन्तेष्वित्यादि**। 'ञमिति[1] ञकारादरभ्य ञमो मकारेण प्रत्याहारग्रहणम्। 'यम उपरमे', 'रमु क्रीडायाम्', 'मन ज्ञाने', 'णम प्रह्वत्वे शब्दे च', 'हन हिंसागत्योः', 'गम्लृ सृप्लृ गतौ'। **श्यनि पठ्यत इति**। श्यन्ग्रहणेन साहचर्यात् दिवादिर्लक्ष्यते। दिवादौ पठ्यत इत्यर्थः। **प्रतिषेधवाचिनामिति**। प्रतिषेधं वक्तुं शीलं येषां ते तथोक्ताः। धातव एव ह्यनुदात्तलिङ्गानुषक्ताः प्रतिषेधं प्रतिपादयन्तीति प्रतिषेधवाचिन उच्यन्ते। अथ वा—इट्प्रतिषेधमात्मविषयमाचार्येण वाचयन्त्यभिधापयन्तीति प्रतिषेधवाचिन इत्युच्यन्ते। एवञ्चात्र सम्बन्धः कर्त्तव्यः—ञमन्तेषु मध्ये ये प्रतिषेधवाचिनो धातवस्तेषां मध्ये यमिरनिडिष्यते। **रमिश्चेत्यादि**। अथ वा प्रतिषेधवाचिनामित्यत्र मतेनेत्याध्याहार्यम्। तत्रैवं सम्बन्धः कर्त्तव्यः—इट्प्रतिषेधवाचिनामाचार्याणां मतेन यमिर्ञमन्तेष्वनिडक इष्यत इति।

**पदमञ्जरी**

**यमिर्यमन्तेष्विति**। **श्यनि पठ्यत इति**। दिवादौ पठ्यत इत्यर्थः। **प्रतिषेधवाचिनामिति**। इट्

**भावबोधिनी**

(१) कान्त (ककारान्त) में एकमात्र 'शकि' (शक्लृ शक्तौ) धातु अनिट् इष्ट है।

(२) सान्तों में घस् तथा सम्प्रसारणवाली 'वस' (वस निवास अर्थवाली) अनिट् है।

घस्—यह दूसरी स्वतन्त्र धातु है [न कि अद् की आदेशभूत घस्]—घस्ता। वस् धातु सम्प्रसारणवाली वस्ता। [इट् नहीं होता है।] सम्प्रसारणवाली—इसका क्या फल है? वसिता वस्त्राणाम्। [वस आच्छादनार्थक में इट्निषेध नहीं होता है।] 'वस निवासे' इसी का सम्प्रसारण यजादि होने के कारण किया गया है, न कि 'वस आच्छादने' इसका।

(३) भान्तों में 'रभ्' और मैथुन अर्थ वाली 'यभ्' इसके बाद तीसरी 'डुलभष्' ये [अनिट् हैं] और कोई अनिट् नहीं है। आरब्धा। [आङ् लभ् + तृच्] यब्धा। लब्धा।

(४) [यम् प्रत्याहार का वर्ण जिनके अन्त में हैं—ऐसी] यमन्त धातुओं में एक 'यम्' अनिट् इष्ट है और दूसरी 'रम' तीसरी 'मन' धातु जो श्यन् परे पठित अर्थात् दिवादिगण की 'मन ज्ञाने' चौथी 'नम', पाँचवीं 'हन्' तथा छठी गम्—ये धातुयें इट्प्रतिषेध के वाचक आचार्यों के मत में समझनी चाहिए। [भाव यह है कि यम्—यमङणन—इनमें से कोई भी वर्ण जिनके अन्त में ऐसी धातुओं में इट् का प्रतिषेध करने वाले आचार्यों के मत से उपर्युक्त—यम, रम, मन, (दिवादिगणीय), नम, हन् और गम्—ये छः ही अनिट् हैं।] यन्ता। रन्ता। मन्ता।

---

१. ञमिति व्याघ्रभूतिनानिट्कारिकाकृता गृहीतः प्रत्याहारः, तदर्थमाचष्टे—ञमितीति। काशिकायां तु यमिर्यमन्तेष्वति पाठः। तत्र यमिति प्रत्याहार एतच्छास्त्रोक्तः, यथा—'हलो यमां यमि लोपः' इति।

यन्ता । रन्ता । मन्ता ।

श्यनीति किम् ? मनुतेर्मनिता—इत्येव भवति । नन्ता । हन्ता । गन्ता ।

दिहिर्दुहिर्मिहतिरोहती वहिर्नहिस्तु षष्ठो दहतिस्तथा लिहिः ।
इमेऽनिटोऽष्टाविह मुक्तसंशया गणेषु हान्ताः प्रविभज्य कीर्तिताः ॥

देग्धा । दोग्धा । मेढा । आरोढा । वोढा । नद्धा । दग्धा । लेढा ।

मुक्तसंशया इति किम् ? तन्त्रान्तरे चत्वारोऽपरे पठ्यन्ते—सहिमुहिरिहिलुहयः । तत्र सहेर्विकल्पस्तकारादौ, मुहिरपि रधादौ पठ्यते, तेन तौ ससंशयौ सविकल्पौ । इतरौ तु धातुषु न पठ्येते । कैश्चिदभ्युपगम्येते इति स्वरूपेणैव ससंशयौ ।

न्यासः

मनुतेरिति । 'मनु अवबोधने'—इत्येतस्य तानादिकस्य ।

दिहिरित्यादि । 'दिह उपचये', 'दुह प्रपूरणे', 'मिह सेचने', 'रुह जन्मनि प्रादुर्भावे', 'वह प्रापणे', 'णह बन्धने', 'दह भस्मीकरणे', 'लिह आस्वादने' । मुक्तसंशया इति । मुक्तः=त्यक्तः संशयो येषु यैर्वा ते तथोक्ताः । प्रविभज्य कीर्त्तिता इति । सेडनिड्विभागेन व्यवस्थाप्य कीर्त्तिता इत्यर्थः ।

देग्धा, दोग्धा इति । 'दादेर्धातोर्घः' इति घत्वम्, 'झषस्तथोर्धोऽधः' इति धत्वम्, 'झलां जश् झशि' इति जश्त्वमित्येते विधयः कर्त्तव्याः । मेढा । आरोढेति । 'हो ढः' इति ढत्वम्, पूर्ववद्धत्वम्, 'ष्टुना ष्टुः' इति ष्टुत्वम्, 'ढो ढे लोपः' इति ढलोपः । वोढेति । पूर्ववड्ढत्वादि, 'सहिवहोरोदवर्णस्य' इत्योत्वम् । नद्धेति । 'नहो धः' इति धत्वम्, पूर्ववज्जश्त्वम् । तन्त्रान्तर इति । आपिशले व्याकरणे । सहेर्विकल्पस्तकारादाविति । 'तीषसह' इत्यादिना तकारादौ सहेर्विकल्प उक्तः । मुहिरपि रधादौ पठ्यत इति । एतेन मुहेरपि 'रधादिभ्यश्च' इति विकल्पं दर्शयति । तेन तौ ससंशयौ सविकल्पाविति । एतेन विकल्पात्मकेन संशयेन तौ ससंशयौ, न तु सन्देहात्मकेनेति दर्शयति । इतराविति । रिहि-लुही । कैश्चिदभ्युपगम्येते इति । आपिशलिप्रभृतिभिः । स्वरूपेणैव ससंशयाविति । स्वरूपेणेति स्वभावेन । ससंशयौ=ससन्देहौ । संशयो ह्यत्र सन्देहे वर्त्तते ।

पदमञ्जरी

प्रतिषेधं कुर्वतामाचार्याणां मतेनेत्यर्थः । दिहिर्दुहिरिति । यद्विषयः संशयः पुरुषाणां नास्ति ते मुक्तसंशयाः । तन्त्रान्तरम्=व्याकरणान्तरम्, आपिशलादि । सहेर्विकल्प इति । 'तीषसह' इत्यादिना । सविकल्पाविति । विकल्पस्तद्विषयः संशय इत्यर्थः । स्वरूपेणैव ससंशयाविति । तौ स्तो न इत्यपि संशयस्तत्रेत्यर्थः ।

भावबोधिनी

श्यन् परे रहने वाली मन्—इसका क्या फल है ? 'मनु अवबोधने' का तो 'मनिता' यही होता है । नन्ता । हन्ता । गन्ता । [ इनमें इट् नहीं होता है । ]

(५) 'दिह, दुह, मिह, रुह, वह, छठीं नह, दह, तथा लिह्—ये आठ अनिट् धातुयें संशयशून्य रूप से विमर्श करके यहाँ हान्तों में कहीं गई है । [ (१) दिह उपचय = बढ़ना अर्थ में हैं । (२) दुह-प्रपूरित करना, दुहना अर्थ में है । (३) मिह-सींचना अर्थ में हैं । (४) रुह—जन्म लेना प्रादुर्भूत होना अर्थ में है । (५) वह—पहुँचाना, ढोना अर्थ में हैं । (६) णह=नह-बाँधना अर्थ में है । (७) दह-जलाना अर्थ में है । (८) लिह-आस्वादन करना, चाटना अर्थ में हैं । ]

देग्धा । दोग्धा । [ दिह् तथा दुह् से तृच् प्रत्यय 'दादेर्धातोर्घः' सूत्र से 'ह' का घ, 'झषस्तथोर्धोऽधः' सूत्र से त् का ध्, 'झलां जश् झशि' सूत्र से जश्त्व से घ् का ग्—देग्धृ, दोग्धृ, विभक्तिसम्बन्धी कार्य । ] मेढा । आरोढा । वोढा । [ मिह् + तृच्, आरुह् + तृच्, वह + तृच् में—'हो ढः' सूत्र से 'ह्' का ढ्, 'झषस्तथोर्धोऽधः' सूत्र से त् का ध्, ष्टुत्व से ध् का ढ, उपधागुण 'मेढ्ढ्ऋ' आदि में 'ढो ढे लोपः' से एक ढ्का लोप, विभक्तिसम्बन्धी कार्य—मेढा । वोढा—में 'सहिवहोरोदवर्णस्य' सूत्र से अ का ओ होता है । ] नद्धा । दग्धा । [ नह् + तृच्, इसमें 'नहो धः' से ह का ध्, त् का ध् पूर्ववत्, जश्त्व । दह् + तृच्, यहाँ देग्धा की प्रक्रिया होती है ] लेढा । [ लिह् + तृच् इसमें मेढा के समान प्रक्रिया है । ]

**दिशिं दृशिं दंशिमथो मृशिं स्पृशिं रिशिं रुशिं क्रोशतिमष्टमं विशिम् ।**
**लिशं च शान्तानिटः पुराणगाः पठन्ति पाठेषु दशैव नेतरान् ॥**

देष्टा, द्रष्टा, दंष्टा; आम्रष्टा, आमर्ष्टा; स्प्रष्टा, स्पर्ष्टा । ऋदुपधानामुदात्तोपदेशानां मृजिदृशी वर्जयित्वा 'अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्' (६.१.५९) इति रमागमविकल्पः । रेष्टा, रोष्टा, क्रोष्टा, प्रवेष्टा, लेष्टा ।

**रुधिः सराधिर्युधिबन्धिसाधयः क्रुधिक्षुधी शुध्यतिबुध्यती व्यधिः ।**
**इमे तु धान्ता दश येऽनिटो मतास्ततः परं सिध्यतिरेव नेतरे ॥**

न्यासः

सन्देहस्तु—धातुष्वपाठात्, अथ च केश्चिदभ्युपगमाच्च । तयोश्चैको हिंसायां वर्त्तमानोऽभ्युपगम्यते, अपरस्तु गार्ध्ये ।

**दिशि दृशिमित्यादि ।** 'दिश अतिसर्जने' 'दृशिर् प्रेक्षणे', 'दन्श दशने' । **अथोशब्दः** पादपूरणे । 'मृश आमर्द्दने', 'स्पृश संस्पर्शे', 'रुश रिश हिंसायाम्', 'क्रुश आह्वाने रोदने च', 'विश प्रवेशने', 'लिश अल्पीभावे' । **पुराणगा इति ।** पुराणम्=व्याकरणम्, चिरन्तनत्वात्, तद् गायन्त्यधीयते ये ते पुराणगाः । **पाठेष्विति ।** अनिट्कारिकापाठेषु, धातुपाठेषु वा । **नेतरानिति ।** 'स्पश बाधनस्पर्शनयोः' इत्येवमादीनिति ।

**देष्टेति ।** व्रश्चादिसूत्रेण षत्वम् 'अनुदात्तस्य' इत्यादिना मृशिप्रभृतीनामनुदात्तेट्प्रतिषेधादधिकं फलं दर्शयति ।

**रुधिः सराधिरित्यादि ।** सह राधिना वर्त्तत इति सराधिः । 'रुधिर् आवरणे', 'राध साध संसिद्धौ' । 'राधोऽकर्मकाद्वृद्धौ' इति द्वयोरपि ग्रहणमिष्यते, विशेषाभावात् । 'युध सम्प्रहारे', 'बन्ध बन्धने', 'क्रुध कोपे', 'क्षुध बुभुक्षायाम्', 'शुध शौचे', 'बुध अवगमने', 'व्यध ताडने', 'सिधु संराद्धौ' । **नेतर इति ।** इन्धिप्रभृतयः ।

पदमञ्जरी

**दिशि दृशिमिति ।** पुराणम्=चिरन्तनं व्याकरणं येऽधीयते ते **पुराणगाः** । पाठेषु, धात्वादिषु । ऋदुपधानामित्यादिना तेष्वनुदात्तोपदेशस्य प्रयोजनान्तरं समुच्चिनोति । एवं च श्लोकेष्वनिट इत्यस्यानुदात्तोपलक्षणत्वं निश्चितम् ।

**रुधिः सराधिरिति । न्याय्यविकरणयोरिति ।** न्याय्यः=उत्सर्गः, शब्विकरणयोरित्यर्थः । क्वचित्तु तथैव पाठः । केचिद्धौवादिकं सिधिमुदितं पठन्ति—'सिधु गत्याम्' ( धा० पा० ४७ ) इति, तेन तस्य क्त्वायां

भावबोधिनी

मुक्तसंशय—इसका क्या फल है ? अन्य व्याकरण में ( अर्थात् आपिशल में ) अन्य भी चार धातुयें पढ़ी गई हैं—(१) सहि, (२) मुहि, (३) रिह, (४) लुह । इनमें सह का तकारादि परे विकल्प कहा गया है । [ अर्थात् 'तीषसहलुभ०' सूत्र से इट् विकल्प से कहा गया है । ] और 'मुह' धातु भी रधादि गण में पठित है, [ अतः इसमें भी 'रधादिभ्यश्च' से विकल्प से इट् कहा गया है । ] इस कारण ये दोनों संशययुक्त विकल्पवाली हैं । और शेष दोनों अर्थात् रिह और लुह का तो धातुओं में पाठ ही नहीं है । कुछ लोगों ने इन्हें स्वीकार किया है इसलिए स्वरूप से ही संशययुक्त हैं ।

(६) दिश्, दृश, दंश, मृश, स्पृश्, रिश, रुश्, तथा आठवीं क्रुश, ( नवमी ) विश, ( दशमी ) लिश्—इन दश ही शकारान्तों को पुराणगा = व्याकरणज्ञ अनिट् धातुओं के पाठ में पढ़ते हैं अन्यों को नहीं । [ इनमें (१) दिश अतिसर्जन अर्थ में, (२) दृशिर् देखना अर्थ में, (३) दन्श्—दशन = डसना अर्थ में, (४) मृश आमर्दन अर्थ में (५) स्पृश = छूना, अर्थ में (६) रुश् (७) रिश् ये दोनों हिंसा अर्थ में, (८) क्रुश बुलाना और रोना अर्थ में, (९) विश प्रवेश करना अर्थ में, (१०) लिश् अल्प होना अर्थ में है । ] देष्टा, द्रष्टा, दंष्टा, आम्रष्टा, आमर्ष्टा, स्प्रष्टा, स्पर्ष्टा । ऋकारोपध उदात्तोपदेश धातुओं में मृज और दृशि को छोड़कर शेष को 'अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्' इस सूत्र से विकल्प से रम् का आगम होता है । [ वास्तव में "अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्" ( ६।१।५९ ) सूत्र से अम् आगम ही होता है किन्तु मित् होने से अन्त्य अच् अर्थात् ऋ के बाद करने पर ऋ का यण् होने से 'र' बन जाता है इसीलिए

रोद्धा। राद्धा। योद्धा। बन्द्धा। साद्धा। क्रोद्धा। क्षोद्धा। शोद्धा। बोद्धा। व्यद्धा। सेद्धा। बुध्यतिसिध्यत्योः श्यना निर्देशात् न्याय्यविकरणयोर्बुधिसिध्योरिड् भवत्येव—बोधिता, सेधिता। निष्ठायामपि प्रतिषेधाभावात्—बुधितम्, सिधितमित्येव भवति।

शिषिं पिषिं शुष्यतिपुष्यती त्विषिं विषिं श्लिषिं तुष्यतिदुष्यती द्विषिम्।
इमान् दशैवोपदिशन्त्यनिड्विधौ गणेषु षान्तान् कृषिकर्षती तथा॥

**न्यासः**

**न्याय्यविकरणयोरिति**। शब्विकरणयोरित्यर्थः। 'बुध बोधने', 'षिधु गत्याम्'—इत्येतयोः। **निष्ठायामपीत्यादि**। अथ कथं बुधेर्भौवादिकस्य प्रतिषेध आशङ्कितः? सिधेरुदित्त्वेन प्रतिषिद्धत्वात् 'उदितो वा' इति क्त्वाप्रत्यये विकल्पविधानाद् 'यस्य विभाषा' इति निष्ठायां प्रतिषेधेन भवितव्यमिति युक्ता प्रतिषेधाशङ्का। बुधेस्तु न किञ्चिन्निष्ठायां प्रतिषेधाशङ्काकारणमस्ति। तस्याप्यस्ति—इह भौवादिकदैवादिकयोर्बुध्योरर्थरूपे समाने, अतश्चार्थरूपसाम्यादुपजातभ्रान्तिः प्रतिपत्ता; एक एवायं धातुः, विकरणद्वयार्थमुभयोर्गणयोः पाठः, तस्य चार्द्धधातुके इडप्युक्तः, अनेन सूत्रेणेट्प्रतिषेधोऽपीत्येकविषयत्वाद् विधिप्रतिषेधयोः पर्यायप्रतिपत्तौ विभाषेट्त्वम्, अतः 'यस्य विभाषा' इति निष्ठायां प्रतिषेधेन भवितव्यमिति कैश्चिन्मन्यते। तस्मात् तन्मतमाशङ्क्येदमुक्तम्—निष्ठायामपीत्यादि। एवं मन्यते—अत एव भौवादिको बुधिर्यस्येड्विधिः, अन्यश्च दैवादिको यस्येट्प्रतिषेधः; तस्माद् भिन्नविषयत्वाद्विधिप्रतिषेधयोर्विभाषेट्त्वं नोपपद्यत इति। अथ सिधेर्निष्ठायां प्रतिषेधाभावः कथमुक्तः, यावतोदित्त्वात् तस्य 'उदितो वा' इति विभाषेट्त्वात् 'यस्य विभाषा' इति निष्ठायां भवितव्यमेव प्रतिषेधेन? एवं मन्यते—सिधेरुदित्त्वमनार्षमेव, यदि तस्योदित्त्वं स्याद्, भ्वादौ पाठोऽनर्थकः स्यात्; यदनेन साध्यं रूपं तस्य 'षिधू शास्त्रे' इत्यनेनैव सिद्धत्वात्। अनुदित्त्वे तु तस्य सिधितमित्येतत्सिद्धयेऽर्थवान् पाठो भवति। न ह्येतत् 'षिधू शास्त्रे' इत्यनेन सिध्यतीति। ऊदित्त्वेनास्य 'स्वरितसूति' इत्यादिना विभाषितेटः 'यस्य विभाषा' इति निष्ठायामिट्प्रतिषेधात्। तस्माद् भ्वादिपाठादेव सिद्धे सिधेरुदित्त्वमनार्षमेव।

**शिषिं पिषिमित्यादि**। 'शिष्लृ विशरणे', 'पिष्लृ सञ्चूर्णने', 'शुष शोषणे', 'पुष पुष्टौ', 'त्विष दीप्तौ'। 'जिषु विषु मिषु सेचने', 'विष्लृ व्याप्तौ'—द्वयोरपि ग्रहणम्। 'श्लिष आलिङ्गने', 'श्रिषु श्लिषु प्रुषु प्लुषु

**पदमञ्जरी**

विकल्पितेट्कत्वान्निष्ठायाम् 'यस्य विभाषा' इति प्रतिषेधेन भवितव्यम्। तथा दैवादिकस्य भौवादिकस्य च बुधेरर्थे रूपे वा विशेषो नास्ति, ततश्चैक एवायं बुधिः, विकरणद्वयार्थं तु द्वयोर्गणयोः पाठः, तस्य चार्धधातुकलक्षण इडप्युक्तः, प्रतिषेधोऽपीत्येकविषयत्वाद्विभाषितेट्कत्वम्, ततश्च तस्यापि निष्ठायां प्रतिषेधेन भवितव्यमिति मन्यमानं प्रत्याह—**निष्ठायामपीति**। सिधेरुदित्त्वं तावदनन्यार्थम्। न च यथाकथञ्चिदिटो भावाभावौ निष्ठायां निषेधस्य निमित्तम्, किं तर्हि? विकल्पवाचिना विभाषादिशब्देन विकल्पितेट्त्वमिति भावः।

**भावबोधिनी**

सर्वत्र 'रमागमविकल्पः' ऐसा ही पाठ है। इसीलिये मृश, स्पृश के दो दो रूप लिखे गये हैं। ] रेष्टा, रोष्टा, क्रोष्टा, प्रवेष्टा, लेष्टा। [ रिश् + तृच् आदि में 'व्रश्चादि' सूत्र से श् का ष् करने पर ष्टुत्व होता है। ]

(७) राध के साथ रुध, युध, बन्ध, साध्, क्रुध्, क्षुध, शुध, बुध, व्यध—ये धकारान्त दश धातुयें अनिट् मानी गई हैं। इनके बाद ग्यारहवीं सिध धातु ही अनिट् है अन्य कोई नहीं है। [ रुधिर् आवरण अर्थ में है, राध संसिद्धि अर्थ में है, युध सम्प्रहार अर्थ में है, बंध बन्धन अर्थ में हैं, साध संसिद्धि अर्थ में, क्रुध कोप अर्थ में, क्षुध भूख लगना अर्थ में, शुध शौच = पवित्र होना अर्थ में है, बुध ज्ञान करना अर्थ में है, व्यध ताड़ित करना अर्थ में है, सिध संसिद्धि अर्थ में है। ] रोद्धा। राद्धा। योद्धा। बन्द्धा। साद्धा। क्रोद्धा। क्षोद्धा। शोद्धा। बोद्धा। व्यद्धा। सेद्धा। इनमें बुध और सिध का श्यन् विकरण के साथ निर्देश होने से न्याय्यविकरणवाली = शप्विकरणवाली बुध और सिध को इट् आगम होता ही है—बोधिता, सेधिता। [ अर्थात् 'बुध बोधने' और 'षिधु गत्याम्' इन भ्वादिगणीयों से इट् का प्रतिषेध नहीं होता है। ] निष्ठा प्रत्यय परे भी प्रतिषेध न होने से—बुधितम्, सिधितम्—यही होता है।

**शेष्टा । पेष्टा । शोष्टा । पोष्टा । त्वेष्टा । वेष्टा । श्लेष्टा । तोष्टा । दोष्टा । द्वेष्टा । क्रष्टा, कर्ष्टा । कृषेस्तौदादिकस्य, भौवादिकस्य च कृषिकर्षती—इति निर्देशः ।**

**तपिं तिपिं चापिमथो वपिं स्वपिं लिपिं लुपिं तृप्यतिदृप्यती सृपिम् ।**
**स्वरेण नीचेन शपिं छुपिं क्षिपिं प्रतीहि पान्तान् पठितांस्त्रयोदश ॥**

**तप्ता । तेप्ता । आप्ता । वप्ता । स्वप्ता । लेप्ता । लोप्ता । तृप्यतिदृप्यत्योरनुदात्तत्वममागमार्थमेव । इट् त्वनयो रधादिपाठाद्विकल्पेन भवति—त्रप्ता, तर्प्ता, तर्पिता; द्रप्ता, दर्प्ता, दर्पिता । तुदादिषु तु यौ तृपिदृपी तावुदात्तावेव—त्रप्ता, तर्प्ता । शप्ता । छोप्ता । क्षेप्ता ।**

**न्यासः**

दाहे'—द्वयोरपि ग्रहणम् । 'तुष तुष्टौ', 'दुष वैकृत्ये', 'द्विष अप्रीतौ', 'कृष विलेखने'—भौवादिकतौदादिकौ । **पुष्यतीति** । श्यना निर्देशो भौवादिकक्रैयादिकयोर्निवृत्त्यर्थः । शुष्यतिप्रभृतीनां तु वृत्तभङ्गपरिहारार्थः । **क्रष्टा, कर्ष्टेति** । पूर्ववद् विकल्पेनामागमः ।

**तपिं तिपिमित्यादि** । 'तप सन्तापे', 'तप ऐश्वर्ये'—द्वयोरपि ग्रहणम् । 'तिपृ तेपृ ष्टेपृ क्षरणार्थाः', 'आप्लृ व्याप्तौ', टुवप बीजतन्तुसन्ताने', 'ञिष्वप् शये', 'लिप उपदाहे', 'लुप्लृ छेदने', 'तृप प्रीणने', 'दृप हर्षणमोचनयोः', 'गम्लृ सृप्लृ गतौ' । **स्वरेण नीचेनेति** । अनुदात्तेनेत्यर्थः । 'शप आक्रोशे', 'शप उपलम्भे'—उभयोरपि ग्रहणम् । 'छुप स्पर्शे', 'क्षिप प्रेरणे' । तृप्यतिदृप्यत्योरनुदात्तत्वममागमार्थम्, 'अनुदात्तस्य' इत्यादिना पक्षेऽमागमो यथा स्यात् । इट्प्रतिषेधार्थं कस्मान्न भवति ? इत्याह—**इट् त्वनयोरित्यादि । तुदादिषु यौ तृपिदृपी इति** । 'तृप तृम्प तृप्तौ', 'दृप उपक्लेशे' इत्येतौ ।

**पदमञ्जरी**

**तपिं तिपिमिति । तिपिक्षपी** इति पाठः । **नीचेन स्वरेणा**नुदात्तेन **पठितान्प्रतीहि** = निबोधतेति । प्रस्तावात्प्रतीतेति पाठः, प्रतीहीति पाठे उत्तरानुरोधः—विद्ध्यनिट्स्वरानिति ।

**भावबोधिनी**

(८) शिष, पिष, शुष, पुष्, त्विष्, विष्, श्लिष, तुष, दुष्, द्विष—इन्हीं दश षकारान्तों को तथा कृष, और कर्ष को अर्थात् कुल बारह को गणपाठ में अनिट् धातुओं में उपदिष्ट मानते हैं, कहते हैं । [ शिष्लृ विशरण अर्थ में है । पिष्लृ चूर्ण करना ( पीसना ) अर्थ में हैं । शुष शोषण ( सुखाना ) अर्थ में है । पुष पोषण करना अर्थ में है । त्विष् दीप्त होना अर्थ में है । विषु सींचना और विष्लृ व्याप्त करना अर्थ में—दोनों का ग्रहण होता है । श्लिष आलिङ्गन अर्थ में तथा श्लिषु दाह अर्थ में है, दोनों का ग्रहण है । तुष् तुष्ट होना अर्थ में है । दुष् विकृत होना अर्थ में द्विष = अप्रीति ( अप्रसन्नता ) अर्थ में है । कृष् = विलेखन ( हल जोतना ) अर्थ में हैं । यह भ्वादि गण में होने से शप् के कारण गुण होने से 'कर्षति' लिखा गया । तथा तुदादि गण में भी होने से 'कृषि' यह लिखा गया । ]

शेष्टा । पेष्टा । शोष्टा । पोष्टा । त्वेष्टा । वेष्टा । श्लेष्टा । तोष्टा । दोष्टा । द्वेष्टा । क्रष्टा । कर्ष्टा । [ कृष्+तृच् में "अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्" सूत्र से विकल्प से अम् आगम होने से दो रूप बनते हैं । ] तुदादिगण की तथा भ्वादिगण की कृष् धातु का ग्रहण है इसलिए कृषि तथा कर्षति—ये निर्देश है । [ दोनों के दो दो रूप हैं । ]

(९) तप, तिप, आप् और वप, स्वप्, लिप्, लुप्, तृप, दृप्, सृप्, शप्, क्षुप, क्षिप—इन तेरह पकारान्तों को अनुदात्त स्वर के साथ पढ़ा हुआ समझना चाहिए । [ तप सन्ताप अर्थवाली और तप ऐश्वर्य अर्थवाली—इन दोनों का ग्रहण है । तिपृ–क्षरण अर्थवाली है । आप्लृ–व्याप्त करना अर्थवाली है । वप बीज बोना अर्थवाली है । स्वप-शयन अर्थवाली, लिप उपदाह अर्थवाली, लुप छेद करना अर्थवाली, तृप् प्रसन्न करना अर्थवाली, दृप हर्षणमोचन अर्थवाली, सृप्लृ गमन अर्थवाली है । शप आक्रोश अर्थवाली तथा शप उपालम्भ अर्थवाली है, दोनों का ग्रहण है । क्षुप—स्पर्श अर्थवाली, क्षिप प्रेरित करना अर्थवाली है । ]

तप्ता । तेप्ता । आप्ता । वप्ता । स्वप्ता । लेप्ता । लोप्ता । तृप् तथा दृप् का अनुदात्तत्व अम् आगम के लिए ही है । [ अर्थात् "अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्" सूत्र से अम् का आगम हो—इसी के लिए इन दोनों को

**अदिं हदिं स्कन्दिभिदिच्छिदिक्षुदीन् शदिं सदिं स्विद्यतिपद्यती खिदिम्।**
**तुदिं नुदिं विद्यति विन्त इत्यपि प्रतीहि दान्तान्दश पञ्च चानिटः॥**

**अत्ता। हत्ता। स्कन्ता। भेत्ता। छेत्ता। क्षोत्ता। शत्ता। सत्ता। स्वेत्ता। स्विद्यतीति श्यना निर्देशः—'ञिष्विदा' ( धा० पा० ९७९ ) इत्यस्य ग्रहणं मा भूत्। उदात्त एवायम्। पत्ता। खेत्ता। तोत्ता। नोत्ता। वेत्ता। विद्यति विन्त इत्यपि—श्यना श्नमा च निर्देशोऽन्यविकरणनिवृत्त्यर्थः। वेत्तिविन्दती उदात्तावेव—वेदिता विद्यानाम्, वेदिता धनस्य॥**

**पचिं वचिं विचिरिचिरञ्जिपृच्छतीन्,**
**निजिं सिजिं मुचिभजिभञ्जिभृज्जतीन्।**

**न्यासः**

**अदिं हदिमित्यादि।** 'अद भक्षणे', 'हद पुरीषोत्सर्गे', 'स्कन्दिर् गतिशोषणयोः', 'भिदिर् विदारणे', छिदिर् द्वैधीकरणे', क्षुदिर् सम्पेषणे', 'शद्लृ शातने', षद्लृ विशरणगत्यवसादनेषु', ञिष्विदा गात्रप्रक्षरणे', 'पद गतौ'। 'खिद दैन्ये', खिद परिघाते'—उभयोरपि ग्रहणम्। 'तुद व्यथने', 'णुद प्रेरणे', 'विद् सत्तायाम्', 'विद विचारणे'। **ञिष्विदेत्यस्य ग्रहणं मा भूदिति।** 'ञिष्विदा स्नेहमोचनयोः' इत्यस्य। **अन्यविकरणनिवृत्त्यर्थ इति।** 'विद ज्ञाने' इति लुग्विकरणस्य, 'विद्लृ लाभे' इत्यस्य शविकरणस्य च निवृत्त्यर्थः। 'विद वेदनाख्यानविवासेषु' इत्यस्य चौरादिकस्यानेकाच्त्वादेवाप्रसङ्गः।

**पचिं वचिमित्यादि।** 'डुपचष् पाके'। 'वच परिभाषणे', 'ब्रुवो वचिः' इति च द्वयोरपि ग्रहणम्। सौत्रोऽप्युपदेशो भवत्येव। 'विचिर् पृथग्भावे', 'विचिर् विवेचने', 'रञ्ज रागे', 'प्रच्छ ज्ञीप्सायाम्', 'णिजिर् शौचपोषणयोः', 'षिचिर् क्षरणे', 'मुच्लृ मोक्षणे', 'भज सेवायाम्', 'भञ्जो आमर्दने', 'भ्रस्ज पाके', 'त्यज

**पदमञ्जरी**

**तेप्तेति।** 'तिपृ तेपृ ष्टिपृ ष्टेपृ क्षरणे' ( धा० पा० ३६२–६५ ) **छोप्तेति।** 'छुप स्पर्शने' (धा० पा० १४१८)। **पचिं वचिमिति। सृजिमृजीति।** समाहारद्वन्द्वः। अनिट्त्वस्य हेतुः स्वरो येषां तेऽनिट्स्वराः।

**भावबोधिनी**

अनुदात्त किया गया है।] कारण यह है कि इट् वैकल्पिक आगम तो रधादि गण में पाठ के कारण 'रधादिभ्यश्च' सूत्र से होता है—त्रप्ता, त्रर्प्ता, तर्पिता। द्रप्ता, दर्प्ता, दर्पिता। [ तृप् + तृच्, विकल्प से अम् का आगम, तृ अ प् + तृ, यण्—त्रप्ता। अम् न होने पर गुण, रपर—तर्प्ता। इट् होने पर गुण, रपर—तर्पिता।] परन्तु तुदादि गण में जो तृप और दृप् पठित हैं वे तो उदात्त ही हैं। [ अतः उनमें इट् नहीं ही होता है।] त्रप्ता, तर्प्ता। द्रप्ता, दर्प्ता। [ इट् वाला रूप नहीं होता है।] शप्ता। छोप्ता। क्षेप्ता।

(१०) अद्, हद, स्कन्द, भिद, छिद्, क्षुद्, शद, सदि, स्विद, पद, खिद, तुद, नुद, विद (ज्ञानार्थक), विद्लृ (लाभार्थक) —इन दश और पांच=पन्द्रह दकारान्तों को अनिट् समझना चाहिए। [अद् भक्षण अर्थवाली, हद=पुरीषत्याग करना अर्थवाली, स्कन्दिर गति और शोषण अर्थवाली, भिदिर् विदारण अर्थवाली, छिदिर् द्वैधीभाव (दो टुकड़ा करना) अर्थवाली, क्षुदिर सम्पेषण ( पीसना ) अर्थवाली, शद्लृ तीखा करना अर्थवाली, षद्लृ विशरण, गति और अवसादन अर्थवाली, ञिष्विदा गात्रप्रक्षरण अर्थवाली, पद गति अर्थवाली, खिद दैन्य अर्थवाली और खिद परिघात अर्थवाली दोनों का ग्रहण है। तुद व्यथित करना अर्थवाली, णुद प्रेरित करना अर्थवाली, विद—सत्ता अर्थवाली तथा विद विचार करना अर्थवाली दोनों का ग्रहण है। विद ज्ञान अर्थवाली तथा विद्लृ लाभ अर्थवाली—दोनों का ग्रहण नहीं है।]

(१३) अत्ता। हत्ता। स्कन्ता। भेत्ता। छेत्ता। क्षोत्ता। शत्ता। सत्ता। स्वेत्ता। 'स्विद्यति' ऐसा श्यन् के साथ निर्देश 'ञिष्विदा स्नेहने' इसका ग्रहण न हो [ इसके लिए है ]। यह उदात ही है। पत्ता। खेत्ता। तोत्ता। नोत्ता। वेत्ता। 'विद्यति' तथा 'विन्त' ये श्यन् और श्नम् के द्वारा निर्देश अन्य विकरणों की निवृत्ति के लिए है अर्थात् इन्हीं दो के साथ वाली धातु का ग्रहण है। वेत्ति विन्दति—ये उदात्त ही हैं—वेदिता विद्यानाम्, वेदिता धनस्य। [ इट् होता है क्योंकि इनमें 'विद ज्ञाने' और 'विद्लृ लाभे' का प्रयोग है।]

त्यजिं यजिं युजिरुजिसञ्जिमज्जतीन्
भुजिं स्वजिं सृजिमृजि विद्ध्यनिट्स्वरान् ॥[1]

पक्ता। वक्ता। विवेक्ता। रेक्ता। रङ्क्ता। प्रष्टा। निर्णेक्ता। सेक्ता। मोक्ता। भक्ता। भङ्क्ता। भ्रष्टा, भर्ष्टा। त्यक्ता। यष्टा। योक्ता। रोक्ता। सङ्क्ता। मङ्क्ता। भोक्ता। परिष्वक्ता। स्रष्टा। मार्ष्टा।

मृजिरयमूदित्पठ्यते, ततोऽस्य विकल्पेनेटा भवितव्यम्—मार्ष्टा, मर्जिता इति; अमागमोऽप्यस्य न

**न्यास**

हानौ', 'यज देवपूजासङ्गतिकरणदानेषु'। 'युजिर् योगे', 'युज समाधौ—द्वयोरपि ग्रहणम्'। रुजो भङ्गे', 'षन्ज सङ्गे', 'टुमस्जो शुद्धौ'। 'भुज पालनाभ्यवहारयोः', 'भुजो कौटिल्ये'—द्वयोरपि ग्रहणम्। 'ष्वन्ज परिष्वङ्गे'। कृतानुनासिकलोपस्य निर्देशो वृत्तभङ्गपरीहारार्थः। 'सृज विसर्गे'। 'मृजू शुद्धौ' आदादिकः। 'मृज शौचालङ्कारयोः' इति चौरादिकोऽप्यस्ति, सोऽपि यदा 'आ धृषाद्वा' इति णिज्नास्ति, तदा शक्य एव ग्रहीतुम्। यदा त्वस्ति, तदानेकाच्त्वादेवेट्प्रतिषेधाप्रसङ्गः।

मृजिरयमित्यादिनेट्प्रतिषेधार्थतां मृजेरिह निरस्यति। अमागमोऽप्यस्येत्यादि। अनेनामागमार्थताम्। तदिहेत्यादि। यत्र एव हि प्रयोजनद्वयं न सम्भवति, तस्मादिहास्य पाठे प्रयोजनं चिन्त्यम्। तत्र केचिदाहुः—यद्यप्यमागमो न दृश्यते, तथाप्यसौ कर्त्तव्य एव; अन्यथा ह्यस्य पाठोऽनर्थकः स्यात्। न हि यत्र दृश्यते तेन न भवितव्यमेव, अन्यथा हि 'यथालक्षणमप्रयुक्तेषु, इत्येतद् वचनमप्रयुज्यमानं स्यात्। अन्ये तु वर्णयन्ति—मृजेर्निरुपपदात् क्विबन्ताद् विकारावयवविवक्षायां मार्ज इति 'अनुदात्तादेरञ्' इत्यज् यथा स्यात्—इत्येतत् प्रयोजनमिति, एतच्चायुक्तम्; एकाच्त्वाद्धि नित्यं मयटा भवितव्यम्। तथा हि—नित्यं वृद्धशरादिभ्यः' इत्यत्र नित्यग्रहणं किमर्थम्, यावतारम्भसामर्थ्यादेव नित्यं भविष्यति ?—इति चोदिते, इदमुक्तम्—'एकाचो नित्यं मयटमिच्छन्तीति तदर्थमेतत् क्रियते—त्वङ्मयं वाङ्मयम्' इति। केचिदित्यादि। केचित् प्रयोजनमपश्यन्तो मृजेः

**पदमञ्जरी**

ततोऽस्य विकल्पेन भवितव्यमिति। तेनानिट्स्वरार्थोऽनुदात्तपाठो न भवति। अमागमोऽपीति। तेन तदर्थोऽप्यनुदात्तपाठो न भवति। तत्कस्मादिहानिट्कारिकासु पठ्यते ? इत्यत आह—केचिदित्यादि।

**भावबोधिनी**

(१४) 'पच' ('डुपचष् पाके'), वच ('वच परिभाषणे' तथा ब्रू का आदेशभूत वच्' दोनों का ग्रहण है) विचिर् ('विचिर् पृथग्भावे') रिचिर् ('रिचिर् विरेचने), रन्ज (रन्ज रागे), प्रच्छ (प्रच्छ ज्ञीप्सायाम्) निज (णिजिर् शौचपोषणयोः), 'सिच' ('षिचिर् क्षरणे'), मुच् ('मुच्लृ मोक्षणे'), भज (भज सेवायाम्), भञ्ज (भन्जो आमर्दने), भृज्ज ('भ्रस्ज पाके'), त्यज ('त्यज हानौ') यज ('यज-देवपूजा-संगतिकरणदानेषु'), युज ('युजिर् योगे' 'युज समाधौ' इन दोनों का ही ग्रहण है।) रुज ('रुजो भङ्गे'), 'सञ्जि' ('षञ्ज सङ्गे), मज्ज (टुमस्जो शुद्धौ), भुजि ('भुज पालनाभ्यवहारयोः, 'भुजो कौटिल्ये'—इन दोनों का ग्रहण है।) स्वज ('ष्वन्ज परिष्वङ्गे) सृज (सृजविसर्गे), मृज ('मृजूष् शुद्धौ' इस अदादिगणीय का तथा 'मृज शौचालङ्कारयोः' इस चुरादिगणीय का का ग्रहण है।) इनको अनिट् स्वर वाली समझना चाहिए।

[ उपर्युक्त के उदाहरण-] पक्ता। [ डुपचष् = पच् + तृच् अथवा लुट् = तिप् = डा, तास् आदि करने पर आस् = टि के लोप करने पर इट् प्राप्त है उसका निषेध होता है—पच् + ता, कुत्व करने पर रूप बनता है–पक्ता।] वक्ता। विवेक्ता। रेक्ता। रङ्क्ता। प्रष्टा। निर्णेक्ता। सेक्ता। मोक्ता। भक्ता। भङ्क्ता। भ्रष्टा, भर्ष्टा। त्यक्ता। यष्टा। योक्ता। रोक्ता। सङ्क्ता। मङ्क्ता। भोक्ता। परिष्वक्ता। स्रष्टा। मार्ष्टा।

---

1 अत्र रुचिरा च्छन्दः। तल्लक्षणं यथा—'रुचिरा जभौ स्जौ गः चतुर्ग्रहैः' इति।

**दृश्यते ? तदिह पाठस्य प्रयोजनं चिन्त्यम् । केचिदस्य स्थाने विजिं पठन्ति—सृजिं विजिं विद्धयनिट्स्वरानिति । निजादिषु यो विजिरसावनिडिष्यते । तथा च ग्रन्थान्तरे[1]—'निजिविजिष्वञ्जिवर्जम्' इत्युक्तम् ।**

**एकाच इति किम् ? अवधीत् । वृद्धिनिवृत्त्यर्थमदन्तो वधिरुपदिश्यते ।**

**न्यासः**

स्थाने विजिं पठन्ति । किं कारणमित्याह—**निजादिषु हीत्यादि ।** 'विजिर् पृथग्भावे' इति निजादिषु विजिः पठ्यन्ते, स यस्मादनिडिष्यते तस्मान्मृजिमपनीय तस्य स्थाने विजिं पठन्ति । कथं ज्ञायतेऽसावनिडिष्यते ? **तथा चेत्यादि । तन्त्रान्तर इति । आपिशलिव्याकरणे ।** अथ 'सृजिविजी' इत्यस्मिन् पाठे 'ओविजी भयचलनयोः' इत्यस्य ग्रहणं कस्मान्न भवति ? ईदित्त्वात् । तद्धेयवमर्थं क्रियते—'श्वीदितो निष्ठायाम्' इतीट्प्रतिषेधो यथा स्यात् । यदि च तस्यापीह ग्रहणं स्यादनेनैव सिद्धत्वादीदित्त्वमनर्थकं स्यात् ।

**अवधीदिति ।** 'लुङि च' इति वधादेशोऽदन्तः । स चानुदात्तस्यादेशः स्थानिवद्भावेनैव भवति । उपदेशेऽनुदात्त एकाच उपदेशो न भवतीति न भवति प्रतिषेधः । कथं पुनरयमेकाज्भवति ? इत्याह—**वृद्धिनिवृत्त्यर्थमित्यादि ।** यदि ह्यदन्तो वधिर्नोपदिश्येत, 'अतो हलादेर्लघोः' इति विकल्पेन वृद्धिः स्यात् । अदन्ते तु सति न भवति, तत्र येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यादित्येकेन वर्णेन व्यवधानमाश्रीयते, न त्वनेकेनेति हला व्यवधानमाश्रितम् । अदन्तत्वे तु सति बधेरकारलोपस्य पूर्वविधौ स्थानिवद्भावेनापि व्यवधानं भवति, न केवलं हलैव । यापि हलन्तलक्षणा वृद्धिः, साप्यदन्तत्वे सति न भवत्येव; अकारलोपस्य स्थानिवद्भावादहलन्तत्वात् । तस्माद् वृद्धिनिवृत्त्यर्थमदन्तो वधिरुपदिश्यते, तथापि स्थानिवद्भावेनैकाजिति व्यपदेशे सति भवितव्यमेव प्रतिषेधेन ? नैतदस्ति; एवं ह्येकाज्ग्रहणमनर्थकं स्यात् । तथा हि—जागृदरिद्राचकास्प्रभृतीनामुदात्तत्वात् नैकाज्ग्रहणं ते प्रयोजयन्ति । सनाद्यन्तानां धातूनामुपदेशत्वं नास्ति; लाक्षणिकत्वात् समुदायस्य । न चान्योऽनेकाज् धातुरुपदेशेऽनुदात्तोऽस्ति य एकाज् ग्रहणं प्रयोजयति । न चास्मिन् व्यपदेशे कर्त्तव्ये स्थानिवद्भावोऽस्ति; अल्विधित्वात् ।

**पदमञ्जरी**

युक्तं चैतदित्याह—**निजादिषु हीति ।** 'णिजां त्रयाणां गुणः श्लौ' इत्यत्र पठिता निजादयः । अत्रैव व्याकरणान्तरानुमतिं दर्शयति—**तथा चेति ।**

**अवधीदिति ।** किं पुनरयमुपदेशेऽनुदात्तः ? ओमित्याह । क्व पुनरस्योपदेशः ? 'हनो वध लिङि' इति । किमेकाज्ग्रहणं न निवर्त्तयिष्यामीत्यनुदात्त उपदिश्यते, न ह्यस्यान्यदनुदात्तत्वे प्रयोजनम् ? न ब्रूमः—अस्मिन्नुपदेशेऽयमनुदात्त इति, हन्तिरनुदात्तस्तस्य स्थाने भवन्स्थानिवद्भावेनानुदात्तः । क्रियमाणेऽपि तर्ह्येकाज्ग्रहणे यावता स्थानिवद्भावः कस्मादस्य प्रतिषेधादिति चेत् ? हन्तैवमनुदात्तव्यपदेशोऽपि स्थान्यलाश्रयत्वात्कथमिवास्य स्यात् ! स्यादेतत् । नात्र स्थानिवद्भावेन प्रसङ्गः, किं तर्हि ? उपदेशग्रहणेन, यथा—कर्त्ता, कर्तुमित्यादौ रूपभेदे स्वरभेदे च भवति । तत्कस्य हेतोः ? यः स उपदेशेऽनुदात्तः स एवेमामवस्थामापन्न इति कृत्वा, न तु स्थानिवद्भावात्; एवमिहापि य उपदेशेऽनुदात्तो हन्तिः स एवायमिति उपदेशग्रहणात्प्रसङ्ग

**भावबोधिनी**

'मृजि' यह तो ऊदित् ( 'मृजूष् शुद्धौ' ) पठित है इस कारण इसका विकल्प से इट् [ "स्वरतिसूतिसूयतिधूञूदितो वा" सूत्र से ] होना चाहिए—मार्ष्टा, मर्जिता । [ जब इट् होता है तब गुण होता है । इट् के अभाव पक्ष में 'मृजेर्वृद्धिः' सूत्र से ऋ की वृद्धि रपर होता है । "व्रश्चभ्रस्ज" सूत्र से ज् का ष् तथा ष्टुत्व होने पर 'मार्ष्टा' रूप बनता है । ] इस धातु को अम् का आगम भी नहीं देखा जाता है ? इस कारण इस 'मृज' के यहाँ पाठ करने का प्रयोजन चिन्तनीय है । [ भाव यह है कि यहाँ अनिट् कारिकाओं में 'मृज्' के पाठ के दो प्रयोजन सम्भावित हैं (१) इट् का प्रतिषेध और (२) अम् का आगम । किन्तु ये दोनों इसमें नहीं संभव है । अतः इसके पाठ का प्रयोजन चिन्तनीय ही है इसी कारण ] 'मृज्' इसके स्थान पर कुछ लोग 'विज' का पाठ मानते हैं—सृज् तथा विज् को

---

१. तन्त्रान्तरे—इति न्याससम्मतः पाठः ।

उपदेशग्रहणं किम् ? इह च यथा स्यात्—लविष्यति, पविष्यति[1]। इह च मा भूत्—कर्ता कटान्, कर्तुमिति ॥

**न्यासः**

**इह च यथा स्यादिति।** असत्युपदेशग्रहणे, एकाचो धातोरनुदात्तादिडागमो न भवतीत्येष सूत्रार्थः; एवं च लविष्यति, पविष्यतीत्यत्रेडागमो न स्यात्। भवत्यत्र प्रत्ययस्वरे कृते शेषानुदात्तत्वे धातुरनुदात्तः। तथा च—कर्त्ता कटान्, कर्त्तुमिच्छतीत्यत्र त्विडागमः स्यादेव; तृनि तुमुनि च कृते नित्स्वरेण धातोरुदात्तत्वात्। उपदेशग्रहणे तु सति तेनाद्यावस्था विशिष्यत इति न भवत्येष दोषप्रसङ्गः। यद्यप्युत्तरकालं लुनातिपुनाती अनुदात्तौ, तथाप्युपदेशावस्थायामुदात्तावेव। तथा यद्यप्युत्तरकालं करोतिरुदात्तः, तथाप्युपदेशावस्थायामनुदात्त एव। अथ बिभित्सतीत्यत्र कथं प्रतिषेधः, यावता बिभिच्छब्दस्य प्रकृतिपाठो नास्ति, उपदेशेनाप्येइति। क्रियमाणेऽपि तर्ह्येकाज्ग्रहणे कथमिवास्य व्यावृत्तिः, यावता उपदेशग्रहणस्योभाभ्यां सम्बन्धः—य उपदेशे एकाच् स एवायमिति स्यादेव प्रसङ्गः? तस्माद्धेराद्युदात्तनिपातनं कर्त्तव्यम्, तत्सामर्थ्याद्धिन्त्युपदेशविषया-

**पदमञ्जरी**

**भावबोधिनी**

अनिट् स्वर वाली समझो। [ 'णिजां त्रयाणां गुणः श्लौ' इस सूत्र के अन्तर्गत ] 'निज' ( णिजिर् ) आदि में जो 'विजि' है वह अनिट् ही इष्ट है। जैसा कि अन्यत्र 'निज, विज, तथा ष्वञ्ज' को छोड़कर' ऐसा कहा गया है।

एक अच् वाली—इसका क्या फल है? अवधीत्। वृद्धि को रोकने के लिए यह 'वध' धातु अदन्त पठित है। [ 'हनो वध लिङि', "लुङि च" इन सूत्रों से हन् का वध आदेश होता है। यह अकारान्त है। अतः अनेकाच् है। अतः अनिट् नहीं है। यह अकारान्त मानना आवश्यक है। क्योंकि लुप्त अकार का स्थानिवद्भाव हो जाने के कारण ही वृद्धि नहीं हो पाती है। ]

उपदेश [ में जो एकाच् उसको इट् आगम नहीं होता है ] इसके ग्रहण का क्या फल है? लविष्यति, पविष्यति इनमें जिस कारण इट् हो सके। और इनमें [ इट् ] न हो सके—कर्त्ता कटान्, कर्त्तुम्।

**विमर्श**—भाव यह है कि 'उपदेशे' यह न रहने पर—एकाच् अनुदात्त धातु से इट् आगम नहीं होता है—ऐसा ही सूत्रार्थ होगा। इस स्थिति में लू + स्य + ति यहाँ तिप् प्रत्यय का स्वर उदात्त हो जाने पर 'अनुदात्तं पदमेकवर्जम्' सूत्र से शेष सभी अनुदात्त हो जाते है। अतः इट् आगम नहीं हो सकेगा। इसके विपरीत 'कर्त्ता कटान्' में कृ + तृन्, कर्तुम् में कृ + तुमुन् में प्रत्यय नित् हैं अतः 'ञ्नित्यादिर्नित्यम्' सूत्र से धातु उदात्त हो जाता है। इट् का प्रतिषेध नहीं हो सकता। इसीलिए उपदेश अवस्था में अनुदात्त लिया है। और चूंकि कृ उपदेशावस्था में अनुदात्त है अतः इससे इट् का निषेध होता है। लू पू उपदेशावस्था में उदात्त ही हैं अतः इनसे इट का निषेध नहीं होता है।

सिद्धान्त-कौमुदी में अनिट् कारिकायें इस रूप में पठित हैं—

ऊदॄदन्तैर्यौति-रु-क्ष्णु-शीङ्-स्नु-नु-क्षु-श्वि-डीङ्-श्रिभिः। वृङ्वृञ्भ्यां च विनैकाचोऽजन्तेषु निहताः स्मृताः ॥१॥
शक्ल-पच्-मुच्-रिच्-वच्-विच्-सिच्-प्रच्छि-त्यज्-निजिर्-भजः।
भञ्ज्-भुज्-भ्रस्ज्-मस्जि-यज्-युज्-रुज्-रञ्जि-विजिर-स्वञ्जि-सञ्ज-सृजः ॥ २ ॥
अद्-क्षुद्-खिद्-छिद्-तुदि-नुदः, पद्य-भिद्, विद्यतिर्विनद्। शद्-सदी, स्विद्यति, स्कन्दि-हदी, क्रुध् क्षुधि-बुध्यती ॥ ३ ॥
बन्धियुधिरुधी, राधिव्यध-शुधः, साधिसिध्यती। मन्य-हन्नाप-क्षिप्-छुपि-तप्- तिपस्तृप्यति-दृप्यती ॥ ४ ॥
लिप्-लुप्-वप्-शप्-स्वप्-सृपि-यभ्-रभ्-लभ्-गम्-नम्-यमो रमिः।
क्रुशिर्दंशिदिशी दृश-मृश-रिश्-रुश्-लिश्-विश-स्पृशः कृषिः ॥ ५ ॥
त्विष्-तुष्-द्विष्-दुष्-पुष्य-पिष्-विष्-शिष्-शुष्-श्लिष्यतयो घसिः। वसतिर्दह-दिह-दुहो नह-मिह-रुह-लिह-वहिस्तथा ॥ ६ ॥
अनुदात्ता हलन्तेषु धातवो द्व्यधिकं शतम्। तुदादौ मतभेदेने स्थितौ यौ च चुरादिषु ॥ ७ ॥
तृप् दृपी, तौ वारयितुं श्यना निर्देश आहृतः। स्विद्यपद्यौ सिध्यबध्यौ मन्य-पुष्य-श्लिषः श्यना ॥ ८ ॥

---

१. पचिष्यति—इति प्रकाशितपाठः सर्वथा अशुद्धः।

## ३२९०. श्र्युकः किति ॥ ११ ॥ (३३८१)

**'श्रि' इत्येतस्य, उगन्तानां च किति प्रत्यये परत इडागमो न भवति। श्रित्वा, श्रितः, श्रितवान्। उगन्तानां च—युत्वा, युतः, युतवान्। लूत्वा, लूनः, लूनवान्। वृत्वा, वृतः, वृतवान्। तीर्त्वा, तीर्णः, तीर्णवान्।**

**श्र्युक इति किम्? विदितः। कितीति किम्? श्रयिता, श्रयितुम्, श्रयितव्यम्।**

**केचिदत्र द्विककारनिर्देशेन गकारप्रश्लेषं वर्णयन्ति—भूष्णुरित्येवं यथा स्यात्, सौत्रत्वाच्च निर्देशस्य**

**न्यासः**

काच्त्वम्? नैष दोषः; यद्यपि बिभिच्छब्दस्य प्रकृतिपाठो नास्ति, नाप्येकाच्त्वम्; तथापि भिदेस्तूभयमिदमस्ति। 'द्विष्प्रयोगो द्विर्वचनम्' इत्ययमपि तत्र पक्ष आश्रितः, तेन भिदिरेव तत्र द्विरुच्यते, तस्य चोभयविशेषण-विशिष्टत्वात् सिध्यत्येव प्रतिषेधः ॥ १० ॥

**श्र्युकः किति ॥** उदात्तार्थ आरम्भः। **लून इति।** 'ल्वादिभ्यश्च' इति नत्वम्। **तीर्ण इति। अत्रापि** 'रदाभ्याम्' इति।

**केचिदित्यादि।** 'ग्लाजिस्थश्च क्स्नुः' इति 'भुवश्चेति वक्तव्यम्' इत्यत्र भवतेः क्स्नुप्रत्यये गिति कृते सति विधीयमानत्वाद् गितीट्प्रतिषेधो न प्राप्नोति, ततश्च भूष्णुरिति न सिध्येत्। तस्माद् भूष्णुरित्यत्रेट्-प्रतिषेधार्थं केचित् **श्वभूति-व्याडिप्रभृतयः** 'श्र्युकः किति' इत्यत्र द्विककारनिर्देशेन हेतुना चर्त्वभूतो **गकारः**

**पदमञ्जरी**

नुदात्तत्वाश्रयोऽपि प्रतिषेधो न भवति। न ह्येतदाद्युदात्तत्वं प्रयोगसमवायि, प्रत्ययस्वरेण बाधितत्वादित्येवमत्र परिहारो वाच्यः। एकाज्ग्रहणमुत्तरार्थम् ॥ १० ॥

**श्र्युकः किति ॥** येषां प्रकृत्याश्रयः प्रतिषेधो नास्ति तदर्थमिदम्। **श्रितः, श्रितवान्; युतः, युतवान् इति।** 'सनीवन्तर्ध' इति विकल्पितेट्त्वाद् 'यस्य विभाषा' इति प्रतिषेधः सिद्धः।

**केचिदित्यादि।** यथा 'ग्लाजिस्थश्च क्स्नुः' इत्यत्रोक्तम्—'क्स्नोर्गित्वान्न स्थ ईकारः' इत्यादि।

**भावबोधिनी**

वसिः शपा लुका यौतिर्निर्दिष्टोऽन्यनिवृत्तये। णिजिर्-विजिर्-शक्लृ इति सानुबन्धा अमी तथा ॥ ९ ॥
विन्दतिश्चान्द्रदौर्गादेरिष्टो भाष्येऽपि दृश्यते। व्याघ्रभूत्यादयस्त्वेनं नेह पेठुरिति स्थितम् ॥ १० ॥

रञ्ज-मस्जी, अदि-पदी, तुद्, क्षुध्, मुषि-पुषी शिषि।
भाष्यानुक्ता नवेहोक्ता व्याघ्रभूत्यादिसम्मतेः ॥ ११ ॥

काशिका तथा सिद्धान्तकौमुदी की कारिकाओं का आशय एक ही है ॥ १० ॥

'श्रि' इसको तथा उगन्त धातुओं को कित् प्रत्यय परे रहते इट् का आगम नहीं होता है। उदा० श्रित्वा, श्रितः, श्रितवान्। [ श्रि + क्त्वा, श्रि + क्त, श्रि + क्तवतु के ये रूप हैं। क् की इत्संज्ञालोप होने के कारण इट् आगम का निषेध हो जाता है। ] उगन्त के उदा० युत्वा, युतः, युतवान्। [ यु + क्त्वा, क्त, क्तवतु के रूप हैं। इट् निषेध होता है। ] लूत्वा, लूनः, लूनवान्। [ लू + क्त्वा, लू + क्त, लू + क्तवतु इनमें इट् निषेध के बाद "ल्वादिभ्यश्च" सूत्र से निष्ठा के त' का न् होता है। ] वृत्वा, वृतः, वृतवान्। [ वृ + क्त्वा, क्त, क्तवतु के रूप हैं। तीर्त्वा, तीर्णः, तीर्णवान् ] [ तॄ + क्त्वा, क्त, क्तवतु—ॠ का ईत्व, रपर 'रदाभ्यां निष्ठातो नः पूर्वस्य च द'' इस सूत्र से त का न, और णत्व होता है। उक् प्रत्याहार का वर्ण है अन्त में जिसके वह उगन्त है। ]

श्रि और उगित्—इनसे परे—इसका क्या फल हैं? विदितः। [ विद् + क्त, उपर्युक्त में नहीं है। अतः इट् निषेध न होकर इट् आगम ही होता है। ]

कित् होने पर—इसका क्या फल है? श्रयिता, श्रयितुम्, श्रयितव्यम्। [ श्रि + तृच्, तुमुन्, तव्यत्—ये कित् नहीं हैं। अतः इट् का निषेध नहीं होता है। ]

'श्रयुकः किति' इत्यत्र चर्त्वस्यासिद्धत्वमनाश्रित्य रोरुत्वं न कृतम्, विसर्जनीयश्च कृत इति। 'ग्लाजिस्थश्च क्स्नुः' ( ३.२.१३९ ) इत्यत्र स्था + आ इत्याकारप्रश्लेषेण 'स्थास्नोः' सिद्धत्वान्न किञ्चिदेतत्।

'उपदेश' इत्येव—तीर्णं इत्यत्रापि यथा स्यात्। इत्वे हि कृते रपत्वे च न स्यात्। मा भूदेवम्, 'इट्

**न्यासः**

प्रश्लिष्ट इत्येवमाचक्षते। यदि चर्त्वंभूतो गकारः प्रश्लिष्टः, एवं सति 'ससजुषो रुः' इति रुत्वे कृते चर्त्वस्यासिद्धत्वाद् 'हशि च' इति रोरुत्वेन भवितव्यम्, न तु विसर्जनीयेन, ततश्च 'श्रयुकः किति' इति निर्देशो न युज्यते?—इत्येतच्चोद्यं निराकर्तुमाह—**सौत्रत्वान्निर्देशस्येत्यादि**। चर्त्वभूतस्यासिद्धत्वमनाश्रित्य रोरुत्वं न कृतम्, विसर्जनीयश्च कृत इति वर्णयन्ति। किमर्थं पुनस्ते क्स्नुप्रत्यये गित्वं प्रतिजानते, यस्मिन् सतीदं व्याख्यानं

**पदमञ्जरी**

यदि गकारः प्रश्लिष्यते 'श्रयुकः किति' इति निर्देशो नोपपद्यते; गकारे परतः 'हशि च' इत्युत्वं प्राप्नोति; चर्त्वे च कृते 'कुप्वोः ≍क ≍पौ च' इत्येष विधिर्भवति, चर्त्वस्यासिद्धत्वादुत्वमेव प्राप्नोति? तत्राह—**सौत्रत्वादिति**। अत्रापि ग्रन्थे 'वर्णयन्ति' इत्यस्य सम्बन्धः। तदेतद्दूषयति—**ग्लाजिस्थश्च ग्स्नुरित्यत्रेति**। आकारप्रश्लेषे सति तिष्ठतेराकारान्तादित्यर्थो भवति, तिष्ठतिश्चाकारान्त एव, तत्र विशेषणमुत्तरकालभावीकारनिवृत्त्यर्थं विज्ञायते, ततश्च—

कथं प्रकृतिनिर्देशे पञ्चम्यां परतः श्रुतः।
आकारोऽयं विधेयः स्यादिति चोद्यमपाकृतम्॥

**स्थास्नोः**। स्थास्नुशब्दस्य। **न किञ्चिदेतदिति**। एतद् गकारप्रश्लेषवर्णनमशोभनमित्यर्थः। ग्स्नुप्रत्ययस्य गित्वे हि गप्रश्लेषो युज्यते, कित्वेऽपि तिष्ठतेरीत्वमुक्ताद्धेतोर्निवर्त्तते[1]।

**तीर्णं इत्यत्रापि यथा स्यादिति**। इह तु तीर्त्वा, पूर्त्वेति आनुपूर्व्यात्सिद्धम्, कथम्? तत्वा, पत्वा इति स्थिते यावदिट्प्रतिषेधो न प्रवर्तते तावदित्वोत्वे प्राप्नुतः, किं कारणम्? 'क्ङिति' इत्युच्यते, न चाकृते इट्प्रतिषेधे क्त्वा किद्भवति; 'न क्त्वा सेट्' इति प्रतिषेधात्। किञ्च भो इत्वोत्वे किति विधीयेते? न किति

**भावबोधिनी**

कुछ ( विद्वान् ) इस सूत्र में दो ककारों के निर्देश के द्वारा गकार के प्रश्लेष का वर्णन करते हैं। जिससे—'भूष्णुः' ऐसा बन सके। [ भू + क्स्नु में एक गकार का प्रश्लेष है। अतः चर्त्व द्वारा ककार के रूप में होने से गित् परे भी इट् का निषेध होता है—'भूष्णु' बनता है। यदि प्रश्लेष नहीं होगा तो गित् में निषेध न होने पर इट् आगम प्रसक्त होने से अनिष्ट रूप बनने लगेगा। ] और यह निर्देश सूत्र का है इसलिए 'श्रयुकः किति' इसमें चर्त्व की असिद्धता का आश्रय न लेकर रु का उत्व नहीं किया गया और विसर्ग किया गया। [ 'श्रयुकः किति' में यदि गकार का प्रश्लेष है तब तो "हशि च" सूत्र से ग् हश् परे मानकर रु का उत्व और गुण करके 'श्रयुको किति' ऐसा होना चाहिए था? यहाँ गकार का चर्त्व ककार असिद्ध नहीं माना जाता है। इसलिए हश् परे न मिलने से उत्व आदि नहीं होते हैं। ] "ग्लाजिस्थश्च क्स्नुः" इस सूत्र में स्था + आ इस प्रकार से आकार के प्रश्लेष के द्वारा 'स्थास्नु' यह सिद्ध हो जाता है इसलिए यह ( गकार का प्रश्लेष ) कुछ नहीं है, अर्थात् इसका कोई फल नहीं है। [ भाव यह है कि स्था + क्स्नु यहाँ कित् होने से ईत्व को प्राप्ति है। इसे रोकने के लिये गकार का प्रश्लेष करते हैं। परन्तु 'स्था + आ' यह आकार का प्रश्लेष करके 'आकारान्त स्था' से क्स्नु' होता है—यह अर्थ किया जाता है। चूंकि 'स्था' आकारान्त ही है। अतः यह विशेषण भावी ईकारान्तता का निवारण करता है। इसलिए 'स्थास्नु' में ईत्व नहीं हो सकता। क्योंकि 'क्स्नु' आकारान्त से होता है। इस कारण प्रस्तुत सूत्र में गकार प्रश्लेष व्यर्थ है। ]

'उपदेश में ही' [ इसकी अनुवृत्ति ] 'तीर्णः' इसकी सिद्धि जिस प्रकार से हो सके, उसके लिये है। इत्व और रपर कर देने पर यह निषेध नहीं हो सकेगा। [ तिर् ऐसा बन जायगा। किन्तु उपदेश में 'तॄ' यह उगन्त है। निषेध हो जाता है। ]

---

१. अत्र पद्यमिदं सम्भवति—ग्स्नुप्रत्ययस्यागित्वे हि गप्रश्लेषो न प्रयुज्यते।
कित्वेऽपि तिष्ठतेरीत्वमुक्ताद्धेतोर्निवर्तते॥

**सनि वा (७.२.४१) इति विकल्पे विहिते 'यस्य विभाषा' (७.२.१५) इति निष्ठायां प्रतिषेधो भविष्यति ? कस्य पुनः सा विभाषा ? ऋतः। यद्येवम्, इत्वे हि कृते नायमृकारान्तो भविष्यति ? स्थानिवद्भावाद् भविष्यति। अनल्विधौ स्थानिवद्भावः, अल्विधिश्चायम् ? तस्मादनुवर्त्तयितव्यमुपदेश इति। तथा च सति–**

**न्यासः**

कर्त्तव्यं जायते ? स्थास्नुशब्दस्य सिद्ध्यर्थम्। एवं हि ते मन्यन्ते—क्स्नोः कित्त्वे सति घुमास्थागादिसूत्रेण तिष्ठतेरीत्त्वं स्यात्, ततश्च स्थास्नुरिति न सिध्येदिति। **ग्लाजिस्थश्च क्स्नुरित्यत्रेत्यादि।** गित्त्वे हि सति क्स्नोरिट्प्रतिषेधार्थमेवं व्याख्यायते, न च तस्य गित्त्वम्। किं तर्हि ? कित्त्वमेव। न च कित्त्वे सतीत्त्वं प्रसज्यते, यस्माद् 'ग्लाजिस्थश्च क्स्नुः' इत्यत्र स्था + आ इत्याकारप्रश्लेषः कृतः। तिष्ठतेः क्स्नुप्रत्ययान्तस्याकारान्तस्याकारान्ततैव यथा स्यात्, ईकारान्तता मा भूदित्येवमर्थः। आकारप्रश्लेषे हि सतीत्त्वापवादस्तिष्ठतेराकारादेशो भवति, अतस्तेन बाधितत्वादीत्त्वं न प्रवर्त्तते। तदेवं कित्त्वे सत्याकारप्रश्लेषात् स्थास्नुशब्दस्य सिद्धत्वात्। **न किञ्चिदेतत्।** एतद् व्याख्यानमसारमित्यर्थः। **तीर्णमित्यत्रापि** किं पुनः कारणमसत्युपदेशग्रहणेऽत्र न स्यात्, यावता तरतिरयमुगन्तः पठ्यते ? इत्याह—**इत्वे हीत्यादि।** 'ऋत इद्धातोः' इतीत्त्वे च कृत उगन्तता विहतेत्यसत्युपदेशग्रहणे न स्यात्, तस्मिंस्तु सति भवति। यद्यप्युत्तरकालं तरतिरुगन्तो न भवति, तथाप्युपदेश एव। **मा भूदेवमित्यादि चोदकः। कस्य पुनरित्यादीतरः। कृत इति चोदकः। यद्येवमित्यादीतरः। स्थानिवद्भावादिति** चोदकः। **अनल्विधावितीतरः।** तत्रैतत् स्यात्—अयमप्यल्विधिरिति, अत आह—

**पदमञ्जरी**

विधीयेते, किति तु विज्ञायेते। कथम् ? इत्वोत्वाभ्यां गुणवृद्धी भवतो विप्रतिषेधेन। तस्मात्प्रागेव सन्निहितं कित्त्वमाश्रित्येट्प्रतिषेधे प्रवृत्ते इत्वोत्वे भवतः। कृतयोस्तर्हि तयोः प्रतिषेधनिमित्तस्योगन्तत्वस्यापगमात्पुनरिट्प्रसङ्गः, तस्मिंश्च सति 'न क्त्वा सेट्' इति कित्त्वप्रतिषेधाद् गुणे सति तेरित्वा, पोरित्वेति प्राप्नोति ? नैतदस्ति; प्रसङ्गावस्थायामेव प्रतिषेधेन बाधितस्य भ्रष्टावसरस्य पुनः प्रवृत्त्ययोगात्। इह च तितीर्षति, मुमूर्षतीति नाकृत इटः प्रतिषेधे सनः कित्त्वमझलादित्वात्, असति च कित्त्वे गुणस्यायं विषय इति इत्वोत्वयोरप्रसङ्ग इति ? आनुपूर्व्यात्सिद्धमित्येव। यदि वा तॄ + स इति स्थिते, अनवकाशत्वादिट् सनि वेति ऋकारान्तनिमित्त इड्विकल्पः प्रवर्त्तते, तत्रेडभावपक्षे कित्त्वाद् गुणे निषिद्धे इत्वोत्वयोः कृतयोरपि विकल्पेन बाधितस्येड्लक्षणस्य भ्रष्टावसरत्वेन पुनः प्रवृत्त्ययोगात्सिद्धमिष्टम्। तस्मात्तीर्णं इत्यत्र चोपदेशाधिकारस्योपयोगः। कस्मात्पुनरसत्युपदेशाधिकारेऽत्र न स्यात् ? इत्यत आह—**इत्वे हि कृत इति।** किं पुनः कारणमित्वमेव तावद्भवति ? नित्यत्वात्। **मा भूदित्यादि** चोदकः। **कस्य पुनरीत्यादीतरः।** ऋत **इत्यादि** चोदकः। **यद्येवमित्यादीतरः। स्थानिवद्भावादिति** चोदकः। **अनल्विधावित्यादीतरः।** अल्विधित्वं पुनरुगिति प्रत्याहारग्रहणात्। ननु चेत्वोत्वयोः कृतयोः सम्प्रत्यृकाराभावेऽप्येकदेशविकृतस्यानन्यत्वात्स एव धातुर्यस्य सनि विभाषा विहितेतीट्प्रतिषेधो भविष्यति ? नैतदस्ति; **'आदितश्च'** इति योगविभागेन ज्ञापयिष्यते—यदुपाधेर्विभाषा तदुपाधेः प्रतिषेध इति, ततश्च ऋकारान्तत्वमुपाधिरिड्विकल्पे, स चेत्वे कृते नास्तीति कथं प्रतिषेधः स्यात् ? **तस्मादित्यादि।** यस्मादेवमसत्युपदेशग्रहणे **तीर्णं** इत्यत्र प्रतिषेधो न सेत्स्यति, तस्मात् 'उपदेशे' इत्यनुवर्त्तनीयम् **तथा च**

**भावबोधिनी**

ऐसा ( अर्थात् पूर्वोक्त 'उपदेशे' की अनुवृत्ति ) न हो, क्योंकि 'इट् सनि वा' ( ७।२।४१ ) इस सूत्र से विकल्प का विधान कर देने पर "यस्य विभाषा" ( ७।२।१५ ) इस सूत्र से निष्ठा प्रत्ययों में प्रतिषेध हो जायगा [ अतः ऋकारान्तों में दोषनिवृत्ति के लिए 'उपदेशे' इसकी अनुवृत्ति आवश्यक नहीं है ] ? तो फिर वह विकल्प किस का होता है ? ऋकारान्त का। यदि ऐसा है तब तो [ ऋ का ] इत्व कर देने पर यह [ तॄ ] ऋकारान्त नहीं रहता है ? स्थानिवद्भाव से [ ऋकारान्त ] हो जायगा। [ परन्तु ] अनल्विधि में ही स्थानिवद्भाव होता है, और यह [ इट्निषेध उक् प्रत्याहार मानकर होने से ] अल्विधि है [ अतः स्थानिवद्भाव से ऋकारान्तत्व अतिदिष्ट नहीं हो सकता ] ? इस कारण [ तीर्णः में इट्वारण करने के लिए ] 'उपदेशे' इसकी अनुवृत्ति करनी ही चाहिए। और ऐसा

**जागरितः, जागरितवानित्यत्रापि प्राप्नोति, तदर्थम् 'एकाचः' इत्यनुवर्त्तयितव्यम् ।**

**ऊर्णोतेस्तु—**

**वाच्य ऊर्णोर्णुवद्भावो यङ्प्रसिद्धिः प्रयोजनम् ।**
**आमश्च प्रतिषेधार्थमेकाचश्चेडुपग्रहात् ॥**

**न्यासः**

**अल्विधिश्चायमिति ।** अल्विधित्वं पुनरुगिति प्रत्याहारग्रहणात् । **तस्मादिति ।** आह—यस्मादेवमसत्युपदेशग्रहणे तीर्णं इत्यत्र प्रतिषेधो न प्राप्नोति, तस्मादुपदेश इत्यनुवर्त्तनीयम् । **तथा च सतीत्यादि ।** उपदेशेऽनुवर्त्तमाने सतीत्यर्थः । **जागरित इत्यत्रापि प्राप्नोतीति ।** जागर्त्तेरुपदेशावस्थायामुगन्तत्वात् । **तदर्थमिति ।** जागरित इत्यादाविट्प्रतिषेधप्राप्तिनिवृत्त्यर्थम्; अर्थशब्दस्य निवृत्तिवाचित्वात् । यदि तर्हि 'एकाचः' इत्यनुवर्त्तते, प्रोर्णुतः,

**पदमञ्जरी**

**सतीति ।** 'उपदेशे' इत्यनुवर्त्तमाने सतीत्यर्थः । **अत्रापि प्राप्नोतीति ।** जागर्तेरुपदेशावस्थायामुगन्तत्वात् । **तदर्थमिति ।** जागरित इत्यादिसिद्ध्यर्थम् । जागरित इत्यादाविट्प्रतिषेधनिवृत्त्यर्थमिति वा । तथा च वार्त्तिकम्—'एकाज्ग्रहणं जागर्त्यर्थम्' इति पूर्वसूत्रेऽनुपयोगादिहार्थमेकाज्ग्रहणमित्यर्थः ।

भाष्यकारस्त्वाह—"यस्य क्वचिदिड्विकल्पो दृष्टः स धातुराश्रीयते—'यस्य विभाषा' इति, न तु तद्गतं विकल्पकारणमूकारादि । भवति चेत्वात्वयोः कृतयोरयमपि स एव धातुरिति तीर्ण इत्यादौ सिद्धः प्रतिषेधः" इति । यद्येवम्, 'विभाषा गमहनविदविशाम्' इति विशिना साहचर्यात्तौदादिकस्य विदेः क्वसाविटि विकल्पिते दैवादिकस्यापि विदेर्निष्ठायां प्रतिषेधः प्राप्नोति—विदितः, विदितवानिति ? न; धातुभेदात् । कथं धातुभेदः ? अर्थभेदाद्, अनुबन्धभेदाद्, विकरणभेदाच्च । तदेवं नार्थ उपदेशाधिकारेण, नापि एकाज्ग्रहणानुवृत्त्या । किमर्थं तर्हि पूर्वसूत्रे एकाज्ग्रहणम् ? यङ्लुगन्तनिवृत्त्यर्थम् । ननु च क्रियमाणेऽप्येकाज् ग्रहणे यङ्लुगन्तस्य प्रतिषेधः प्राप्नोति, उपदेशग्रहणस्योभयविशेषणत्वात्, यथा बिभित्सतीति, तत्रैतत्स्यात्—क्रियमाणे एकाज्ग्रहणे 'यत्रैकाज्ग्रहणं किञ्चित्' इति वचनाद् यङ्लुगन्तस्य न भवतीति ? तच्च वार्त्तम्; अक्रियमाणेऽपि चैकाज्ग्रहणे वचनान्तराश्रयणेन यङ्लुगन्तेऽपि परिहारः । तदेव वचनमेवं पठ्यताम्—यत्रोपदेशग्रहणमिति । अनुदात्तोपदेशलक्षणोऽनुनासिकलोपोऽपि तर्हि यङ्लुगन्तानां तसादिषु न स्यात्, तथा इवन्तानां दिविप्रभृतीनां यङ्लुगन्तानामपि सनीड्विकल्पः प्राप्नोति । क्रियमाणे पुनरेकाज्ग्रहणे न भवति, 'एकाचः' इति तत्रानुवृत्तेः । यदि नेष्यते, एवं वक्ष्यामि—उपदेशेऽनुदात्तान्न यङ्लुक इति । अधिकारोऽयम्, यत्रैकाज्ग्रहणेन यङ्लुगन्तस्य व्यावृत्तिरिष्यते, तत्रोपतिष्ठते । एवमपि 'वावृतु वरणे' (धा० पा० ११६०) इति दिवादावनेकाजुदिदनुदात्तेत्पठ्यते । तथा च भट्टिकाव्ये प्रयोगः—'ततो वावृत्यमानाऽसौ रामशालां न्यविक्षत' ( भट्टि० ४.२८ ) इति । तस्योदितो विकल्पितेटो निष्ठायाम् 'यस्य विभाषा' इति प्रतिषेधः प्राप्नोति । एकाज्ग्रहणे तु क्रियमाणे न भवति; 'एकाचः' इति तत्रानुवृत्तेः । तथा च 'निष्ठायां सेटि' ( ६.४.५२ ) इत्यत्रापि **वृत्तिकारेणोक्तम्**—'अथ पुनरेकाच इति तत्रानुवर्त्तते' इत्यादि ।

**भावबोधिनी**

होने पर अर्थात् अनुवृत्ति मान लेने पर 'जागरितः' 'जागरितवान्' इनमें भी [ इट्प्रतिषेध ] प्राप्त होता है । [ क्योंकि 'जागृ' धातु उपदेश अवस्था में उगन्त ही है । ] इसके लिए अर्थात् इट्प्रतिषेध की प्राप्ति को रोकने के लिये **'एकाचः'** इसकी भी अनुवृत्ति करनी चाहिए । [ चूंकि 'जागृ' अनेकाच् है । अतः इट् प्रतिषेध नहीं होता है । ]

[ यदि 'एकाचः' की अनुवृत्ति है तब तो 'प्रोर्णुतः', 'प्रोर्णुतवान्' में भी इट्प्रतिषेध नहीं हो सकेगा ? इसका समाधान यह है—]

ऊर्णुञ् का तो—

**'ऊर्णुञ्'** धातु का णुवद्भाव कहना चाहिए अर्थात् ऊर्णु का विभाजन मानकर ऊर् + नु—ऐसा कहना

प्रोर्णुतः । प्रोर्णुतवान् ॥

**३२९१. सनि ग्रहगुहोश्च ॥ १२ ॥ ( २६१० )**

ग्रह, गुह—इत्येतयोरुगन्तानां च सनि प्रत्यये परत इडागमो न भवति । जिघृक्षति । जुघुक्षति । उगन्तानां च—रुरूषति । लुलूषति ।

'सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्' ( ७.२.४९ ) इति विकल्पविधानात् श्रयतिरत्र नानुकृष्यते । ग्रहेर्नित्यं प्राप्तः । गुहेरूदित्वाद् ( ७.२.४४ ) विकल्पः ॥

न्यासः

प्रोर्णुतवानित्यत्रेट्प्रतिषेधो न प्राप्नोति; ऊर्णोतेरनेकाच्त्वात् ? इत्यत आह—**वाच्य ऊर्णोर्णुवदित्यादि** । अस्याः कारिकायाः पूर्वमेवार्थो व्याख्यात इति न पुनर्व्याख्यायते ॥ ११ ॥

**सनि ग्रहगुहोश्च** ॥ ग्रहेः सनि नित्यमिटि प्राप्ते गुहेरप्यूदित्त्वात् 'स्वरति' इत्यादिसूत्रेण विकल्पे प्राप्तेऽस्यारम्भः । चकारः 'उकः' इत्यनुकर्षणार्थः । ननु च 'इको झल्' इत्युगन्तानां किदेव सन्, तत्र पूर्वेणैव प्रतिषेधः सिद्धः, किमुक इत्यनुकर्षणार्थेन चकारेण ? नैतदस्ति; न हीट्प्रतिषेधमन्तरेण सनो झलादित्वमुपपद्यते, कुतः कित्त्वम् ? अनेन त्विटि प्रतिषिद्धे झलादित्वं सनो जायते, पश्चाद् गुणप्रतिषेधार्थं कित्त्वमिति क्रमः । **जिघृक्षतीति** । 'रुदविद' इत्यादिना सनः कित्त्वे सति ग्रह्यादिसूत्रेण सम्प्रसारणम्, 'हो ढः' इति ढत्वम्, 'षढोः कः सि' इति कत्वम्, 'इण्कोः' इति षत्वम्, 'एकाचो बशो भष्' इत्यादिना भष्भावेन गकारस्य घकारः, द्विर्वचनम्, अभ्यासकार्यम् । **जुघुक्षत इति** । 'गुहू संवरणे', 'पूर्ववत्सनः' इत्यात्मनेपदम् । **रुरूषतीति** । 'अज्झनगमां सनि' इति दीर्घः । अथ चकारेण यथोगन्तमनुकृष्यते, तथा चैकयोगनिर्दिष्टः श्रयतिरप्यनुकृष्येत ? इत्यत आह—**श्रिस्वृयूर्णुभरज्ञपीत्यादि** । श्रयतेः 'सनीवन्तर्ध' इतीटो विकल्पं विधास्यतीत्यतस्तस्येहानुवृत्तिरपार्थिकेति नानुकृष्यते ॥ १२ ॥

पदमञ्जरी

अन्ये पुनर्भाष्यकारेणैकाज्ग्रहणस्य प्रत्याख्यातत्वान्नैतदिष्यत इत्याहुः । तथा च **वृत्तिकारेणापि** पाक्षिकत्वेनैवोक्तम्—'अथ पुनरेकाच इति तत्रानुवर्त्तते' इति । कृतमतिविस्तरेण ॥ ११ ॥

**सनि ग्रहगुहोश्च** ॥ चकार उगनुकर्षणार्थः । न च 'इको झल्' इति सनः कित्त्वात् उगन्तानां पूर्वेणैव सिद्धिः, किं कारणम् ? झलादौ सनः कित्त्वम्, न चान्तरेणेट्प्रतिषेधं सन् झलादिर्भवति, तेन येषु प्रकृत्याश्रयः प्रतिषेधो नास्ति, तेष्वनेनैवेटि प्रतिषिद्धे झलादित्वे सनः कित्त्वमित्येष क्रमः । **जिघृक्षतीति** । 'रुदविद' इत्यादिना सनः कित्त्वम्, ग्रहिज्यादिसूत्रेण सम्प्रसारणम्, 'हो ढः', 'षढोः कस्सि', 'एकाचो बशो भष्' । **जुघुक्षतीति** । 'गुहू संवरणे' ( धा० पा० ८९६ ) स्वरितेत्, 'हलन्ताच्च' इति सनः कित्त्वम् । अथ चकारेणोगिदिव श्रयतिरपि कस्मान्नानुकृष्यते ? अत आह—**श्रिस्वृयूर्ण्वित्यादि** ॥ १२ ॥

भावबोधिनी

चाहिए ? यङ् प्रत्यय होना प्रयोजन है । आम् का प्रतिषेध करने के लिए है तथा एकाच् मानकर इट् प्रतिषेध भी प्रयोजन है । [ इसके अनुसार 'ऊर्णुञ्' भी एकाच् ही समझना चाहिए । इस कारण इट् का प्रतिषेध होने में बाधा नहीं हैं । ] प्रोर्णुतः । प्रोर्णुतवान् । [ प्र + ऊर्णु + क्त, प्र + ऊर्णु + क्तवतु में इट् नहीं होता है । ] ॥ ११ ॥

ग्रह तथा गुह इन दोनों को तथा उगन्त धातुओं को सन् प्रत्यय परे रहते इट् आगम नहीं होता है । उदा० जिघृक्षति । जुघुक्षति । [ ग्रह + सन्, गुह् + सन् । ग्रह् के रेफ का सम्प्रसारण ऋ, अ का पूर्वरूप-गृह् + स, इट् का प्रतिषेध, ह् का ढत्व, कत्व, स का षत्व, भष्भाव से ग् का घ्; क्+ष्=क्ष् अभ्यास का इत्व करने पर—जिघृक्ष । जुघुक्ष लट् आदि करने पर रूप बनता है । ]

उगन्तों के उदा० रुरूषति । लुलूषति । [ रू तथा लू से सन् प्रत्यय, इट् का निषेध होता है । कित् हो जाने से गुणनिषेध होता है । ]

"सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्" ( ७।२।४९ ) इस सूत्र से विकल्प से विधान होने के कारण 'श्रि' का अनुकर्षण इस ( प्रस्तुत ) सूत्र में नहीं होता है । [ अतः उसके इट् सहित और इट् रहित दो रूप

## ३२८१. कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि ॥ १३ ॥ ( २२९३ )

कृ, सृ, भृ, वृ, स्तु, द्रु, स्रु, श्रु—इत्येतेषां लिटि प्रत्यय इडागमो न भवति। कृ—चकृव, चकृम। सृ—ससृव, ससृम। भृ- बभृव, बभृम। वृञ्—ववृव, ववृम। वृङ्—ववृवहे ववृमहे। स्तु—तुष्टुव, तुष्टुम। द्रु—दुद्रुव, दुद्रुम। स्रु—सुस्रुव, सुस्रुम। श्रु—शुश्रुव, शुश्रुम।

सिद्धे सत्यारम्भो नियमार्थः ( कात० प० ६२ )—क्रादय एव लिट्यनिटः, ततोऽन्ये सेट इति। बिभिदिव, बिभिदिम। लुलुविव, लुलुविम।

**न्यासः**

कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि॥ चकृव, चकृमेति। 'परस्मैपदानाम्' इत्यादिना वस्मसोर्वमादेशौ। क्रादय एवेति। नियमस्य स्वरूपं दर्शयति। 'लिट्येव क्रादयोऽनिटः' इत्येष तु विपरीतनियमो नाशङ्कनीयः; 'कृतलब्धक्रीतकुशलाः' इति 'तमधीष्टो भृतो भूतो भावी वा' इत्यादिनिर्देशात्।

केन पुनस्तेषामिट्प्रतिषेधः सिद्धः, यतः सिद्धे सत्यारम्भो नियमार्थं उच्यते? इत्यत आह—अनुदात्तोपदेशानामित्यादि। अनुदात्तोपदेशा वृङ्वृञ्भ्यामन्ये करोत्यादयः, तेषामेव 'अचः' इत्यादिना प्रकृत्याश्रयः प्रतिषेधः सिद्ध। वृङ्वृञोस्तु 'श्र्युकः किति:' इति प्रत्ययाश्रयः, न तु प्रकृत्याश्रयः; तयोरुदात्तत्वात्। तदित्यादि। यत एव तेषां यथायोगं प्रकृत्याश्रयः प्रत्ययाश्रयश्च प्रतिषेधः सिद्धः, तस्मादुभयस्यापि प्रतिषेधस्य प्रयुक्तस्यायं नियम इत्यर्थः। धात्वन्तरेभ्यो व्यवच्छिद्य करोत्यादीनां प्रतिषेधस्येह नियमो वेदितव्यः।

**पदमञ्जरी**

कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि॥ क्रादय एव लिट्यनिट इति। 'लिट्येव क्रादयोऽनिटः' इत्येष तु विपरीतोऽत्र नियमो न भवति; क्रादीनामनुदात्तोपदेशसामर्थ्यात्। 'कृतलब्धक्रीतकुशलाः', 'तमधीष्टो भृतो भूतः', 'परिवृतो रथः' 'स्तुतस्तोमयोः' इत्यादिनिर्देशाच्च।

केन पुनरेषामिट्प्रतिषेधः सिद्धः, यतो नियमार्थोऽयमारम्भः? इत्यत आह—अनुदात्तोपदेशानामित्यादि। वृङ्वृञ्भ्यामन्येऽनुदात्तोपदेशास्तेषां प्रकृत्याश्रयः 'एकाच उपदेशे' इतीट्प्रतिषेधः सिद्धः। वृङ्वृञोस्तु प्रत्ययाश्रयः 'श्र्युकः किति' इत्येषः। तस्मादुभयस्यापि = प्रकृत्याश्रयस्य, प्रत्ययाश्रयस्य च। कथं पुनरयं प्रत्ययाश्रयस्य नियमः, यावता वृग्रहणं वृञस्थलि विध्यर्थं सम्भवति, न हि तत्र प्रकृत्याश्रयः प्रतिषेधः, वृञ उदात्तत्वात्; नापि प्रत्ययाश्रयः, थलः कित्त्वाभावात्, असति प्रत्ययाश्रयस्य नियमे लुलुविथेत्यादाविण्न स्यात्? इत्यत आह—वृञो हीति। व्यवस्था = नियमः। इह तुष्टोथेत्यादौ 'ऋतो भारद्वाजस्य' इत्येतस्मान्नियमादिट् प्राप्नोति, ययिथेत्यादिवत्। यथा हि ययिथ, पपिथेत्यादौ 'आर्धधातुकस्य' इतीट् प्राप्तः 'एकाचः' इति निषिद्धः, पुनः क्रादिनियमात् प्राप्तः 'अचस्तास्वत्थलि' इति प्रतिषिद्धः, ततः 'ऋतो भारद्वाजस्य' 'थलि प्रतिषेधो नान्येभ्यः' इति नियमात्पक्षे इड् भवति, तथात्रापि स्यात्। कथं खलु क्रादिनियमस्य बाधकम् 'अचस्तास्वत्' इति प्रतिषेधं बाधमानो भारद्वाजनियमः क्रादिप्रतिषेधं न बाधते? 'कृसृभृवृ' इत्येतेषु पुनर्नायं

**भावबोधिनी**

सन् में होते हैं। ] ग्रह् धातु से नित्य इट् की प्राप्ति है। [ उसमें यह निषेध करता है। ] 'गुहू' धातु ऊदित होने से [ "स्वरतिसूति" सूत्र से ] विकल्प [ प्राप्त है। उसका निषेध करता है ]। ॥ १२ ॥

कृ, सृ, भृ, वृ, स्तु, द्रु, स्रु तथा श्रु—इनको लिट् प्रत्यय परे रहते इट् आगम नहीं होता है। उदा० चकृव, चकृम। [ कृ + लिट् = वस्, मस् = व, म द्वित्व अभ्यास आदि कार्य करने पर वलादिलक्षण इट् प्राप्त है उसका प्रतिषेध होता है। इसी प्रकार आगे के रूपों में भी समझना चाहिए। ] सृ—ससृव, ससृम। भृ—बभृव, बभृम। वृञ्—ववृव ववृम। वृङ्—ववृवहे ववृमहे। स्तु—तुष्टुव, तुष्टुम। द्रु—दुद्रुव, दुद्रुम। स्रु—सुस्रुव, सुस्रुम। श्रु—शुश्रुव, शुश्रुम।

[ किसी अन्य सूत्र से प्रतिषेध के ] सिद्ध रहते हुए सूत्र का आरम्भ नियम के लिए होता है—कृ आदि ( सूत्रोक्त धातुयें ) ही लिट् परे अनिट् हैं, इनसे भिन्न धातुएँ सेट् हैं अर्थात् सूत्र में उल्लिखित धातुओं से ही लिट् परे

**अनुदात्तोपदेशानामत्र प्रकृत्याश्रयः प्रतिषेधः, वृञ्वृङोस्तु प्रत्ययाश्रयः; तदुभयस्याप्ययं नियमः। वृञो हि थलि ववर्थेति निपातनाद् व्यवस्था।**

**स्तुद्रुस्रुश्रुवां तु 'ऋतो भारद्वाजस्य' (७.२.६३) इत्यस्मादपि नियमाद् य इट् प्राप्नोति सोऽपि**

**न्यास**

कथं पुनरेतद् वृञं प्रति थलि नियमार्थमुपपद्यते? सति हि प्रतिषेधे नियमो भवति। वृञस्थलोट्-प्रतिषेधः। तस्य हि नात्र प्रकृत्याश्रयः प्रतिषेधः सिद्धः; उदात्तत्वात्। नापि प्रत्ययाश्रयः; थलः कित्त्वाभावात्। तस्मात् वृञं प्रति थलीट्प्रतिषेधार्थतैव युक्ता, न नियमार्थता? इत्यत आह—**वृञो हीत्यादि**। व्यवस्था = नियमः। 'बभूथाततन्थजगृम्भववर्थेति निगमे' इति निपातनाद् वृञो निगम एव थलीट्प्रतिषेधेन भवितव्यम्, न भाषायाम्। यत एवं व्यवस्था तस्मान्नायं वृञस्थलीट्प्रतिषेधः; अन्यथा ववर्थेति निपातनस्य वैयर्थ्यं स्यात्। तस्मात् प्रतिषेधाभावात् वृञोऽप्येतत् सूत्रं नियमार्थमेव विज्ञायत इत्येकान्त एषः।

**स्तुद्रुस्रुश्रुवां त्वित्यादि।** अपिशब्द आर्धधातुकलक्षणोऽपि य इट् प्राप्नोति सोऽपि नेष्यत इति दर्शनार्थः। कथं पुनरिष्यमाणोऽपि लभ्यते, पुरस्तात् प्रतिषेधकाण्डस्य बलीयस्त्वात्। इह च 'न वृद्भ्यश्चतुर्भ्यः' इत्यस्यानन्तरमिदं प्रतिषेधकाण्डं कर्तुं युक्तम्। एवं द्विष्प्रतिषेधाश्रयणं न कर्त्तव्यं स्यात्। यदयं पुरस्तात् प्रतिषेधं करोति, तस्यैतत् प्रयोजनम्—इण्मात्रस्यानाश्रितविशेषविधानस्य प्रतिषेधो विज्ञायते। पुरस्तात् प्रतिषेधे क्रियमाणे सति विशेषमनाश्रित्येण्मात्रस्यायमपवादो भवति। तेन यावानिट् प्राप्तस्तस्य सर्वस्य प्रतिषेधो भवति सिद्धः। अन्यस्त्वाह—'नेटि' इत्यनुवर्त्तमाने पुनरिड्ग्रहणसामर्थ्यात्, पुनः प्रतिषेधसामर्थ्याच्च इण्मात्रस्य प्रतिषेधो विज्ञायते।

**पदमञ्जरी**

दोषस्तेषामृकारान्तत्वेन भारद्वाजपक्षेऽपीटः प्रतिषेधात्। एवं तर्हि स्तुद्रुस्रुश्रुवां ग्रहणं विध्यर्थं भविष्यति, असति हि विधेये नियमो भवति, इह चास्ति विधेयम्, किम्? थलि भारद्वाजनियमादिटः प्राप्तस्य प्रतिषेधः, इतरेषां तु क्रादीनां ग्रहणं नियमार्थं भविष्यतीति। बिभिदिव, लुलुविवेत्यादावपि न दोषः। कथं पुनस्तुष्टुम, अत्र हि क्रादिनियमादिट् प्राप्नोति? नैष दोषः; स्तुद्रुस्रुश्रुवां ग्रहणमुभयोरपि प्रतिषेधार्थम्। यश्च क्रादिनियमादिट् प्राप्तः, यश्च भारद्वाजनियमात्, तयोरुभयोरपीत्यर्थः।

यद्येवम्, येन नाप्राप्तिन्यायेन (व्या० प० ४९) क्रादिनियममेव स्तुद्रुस्रुश्रुवां प्रतिषेधो बाधेत, न तु विकल्पेन प्राप्तं भारद्वाजनियमम्, ततश्चासौ स्यादेव? इत्याशङ्क्याह—**स्तुद्रुस्रुश्रुवांत्विति।** एतच्च पुरस्तात्प्रतिषेधकाण्डकरणाल्लभ्यते। तथा हि—प्राप्तिपूर्वकत्वात्प्रतिषेधस्य पूर्वं विधिप्रकरणं पठितव्यम्,

**भावबोधिनी**

इट् का निषेध होता है। इसके फलस्वरूप अन्य धातुओं से लिट् परे इट् होता ही है। जैसे—] भिद्—बिभिदिव, बिभिदिम। लू—लुलुविव, लुलुविम। [ उ का उवङ् आदेश होता है। ]

[ प्रश्न यह है कि इस सूत्र में पठित में किन किन से कैसे कैसे इट्निषेध प्राप्त है? उत्तर है— ] इनमें अनुदात्तोपदेश धातुओं का प्रकृति को मान कर इट् प्रतिषेध [ "एकाच उपदेशेऽनुदात्तात्" सूत्र से ] है, वृञ् तथा वृङ् का तो प्रत्यय को मान कर ["श्र्युकः किति" से इट् प्रतिषेध प्राप्त] है, अतः इन दोनों के लिए ही यह नियम है। [इनमें प्राप्त होने से, अन्य में नियम करने से, निषेध नहीं होता है, इट् आगम ही होता है।] वृञ् का थल् परे रहते 'ववर्थ' ऐसे रूपनिपातन की व्यवस्था ( नियम ) है। [ भाव यह है कि "बभूथा ततन्थ-जगृम्भववर्थेति निगमे" (७।२।६४) इस सूत्र से निगम = वेद में ही थल् में इट् का प्रतिषेध होता है और वह नियम मानकर होता है अर्थात् वेद में ही 'ववर्थ' बनता है। अतः लोक में इससे थल् में इट् का प्रतिषेध नहीं होता है। प्राप्ति रहती है। तभी यह नियम करता है। ]

स्तु, द्रु, स्रु तथा श्रु—को तो 'ऋतो भारद्वाजस्य'' इस नियम से भी जो इट् प्राप्त होता है वह भी इष्ट

**नेष्यते—तुष्टोथ, दुद्रोथ, सुस्रोथ, शुश्रोथ ।**

**❀'कृञोऽसुट्कस्येति वक्तव्यम्❀ ( म० भा० ) । ससुट्कस्य इडागमो यथा स्यात् । सञ्चस्करिव । सञ्चस्करिम ।**

**'ऋतो भारद्वाजस्य' ( ७.२.६३ ) इत्येतदप्यसुट्कस्यैवेष्यते—सञ्चस्करिथ ॥**

**न्यास**

**कृञोऽसुट्कस्येति वक्तव्यमिति ।** करोतेरविद्यमानसुटः प्रतिषेधो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । किमर्थम् ? ससुट्कस्येडागमो यथा स्यात् । तत्रेदं व्याख्यानम्—'द्वन्द्वे घि' इत्यनेन स्तुप्रभृतीनामन्यतमस्य घिसंज्ञकस्य पूर्वनिपातमकृत्वैतत् सूचितम्—यथेह पूर्वनिपातलक्षणं व्यभिचरति = स्वविषये न प्रवर्त्तते, तथेदमपीति । तेन यदा करोतिः ससुट्कः, तत्र न प्रवर्त्तत इति । **सञ्चस्करिव, सञ्चस्करिमेति ।** 'सम्पर्युपेभ्यः करोतौ भूषणे' इति सुडित्यनुवर्तमाने 'अडभ्यासव्यवायेऽपि' इति सुट् क्रियते ।

**ऋतो भारद्वाजस्येत्येतदप्यसुट्कस्यैवेष्यत इति ।** 'कृञः' इति सम्बध्यते । कथं पुनरसुट्कस्यैव भवतीति लभ्यते ? यथा लभ्यते तच्च श्रूयताम्—तत्र हि 'उदितो वा' इत्यतो वेत्यनुवर्तते मण्डूकप्लुतिन्यायेन, सा च व्यवस्थितविभाषा, तेनासुट्कस्यैव भवतीति ॥ १३ ॥

**पदमञ्जरी**

'आर्धधातुकस्य' इत्यारभ्य 'ईडजनोर्ध्वे च' इत्येवमन्तम्, पश्चात्प्रतिषेधप्रकरणम्, तद्यथाऽन्यत्रापि—'कर्त्तरि कर्मव्यतिहारे', 'न गतिहिंसार्थेभ्यः' इति । तत्रायमर्थो द्विरिड्ग्रहणं न कर्त्तव्यं भवति, प्रकृतमनुवर्त्तते । नन्वेवम्, 'रुदादिभ्यः सार्वधातुके' इति सार्वधातुकग्रहणम्, 'लिङः सलोपोऽनन्त्यस्य' इत्यत्र विच्छिद्येत ? एवं तर्हि 'न वृद्भ्यश्चतुर्भ्यः' इत्यत्रैव पठितव्यम्, एवं हि विध्युत्तरकालश्च प्रतिषेधः कृतो भवति, द्विश्चेड्ग्रहणं न कर्त्तव्यं भवति, सार्वधातुकग्रहणं च सलोपे न विच्छिद्यते, अपि च द्विःप्रतिषेधो न कर्त्तव्यो भवति; सोऽयमेवं सिद्धे यत्पुरस्तात्प्रतिषेधकाण्डं करोति, तस्यैतत्प्रयोजनम्—अनाश्रितविधानविशेषमिण्मात्रमनारभ्याधीतेन प्रतिषेधेन यथा बाध्येतेति । यदि तु **भारद्वाज**नियमात्परमिदं काण्ड क्रियेत, ततो मध्येऽपवादन्यायेन **भारद्वाज**नियमः 'अचस्तास्वत्' इति प्रतिषेधमेव बाधेत, न तु क्रादिनिषेधमिति पुरस्तात्प्रतिषेधकरणे न कश्चिद्दोषः ।

अपर आह—"यत्र तत्र वा प्रतिषेधकरणमस्तु, सर्वथा तु **भारद्वाज**नियमः 'अचस्तास्वत्' इति योगद्वयेन थलि यः प्रतिषेधः प्राप्तस्तस्यैव नियामकः 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' (व्या० प० १९) इति, ततश्च स्तुद्रुस्रुश्रुवामपि **भारद्वाज**नियमेन 'अचस्तास्वत्' इति प्रतिषेध एव निवर्त्तते, न तु क्रादिप्रतिषेधः" इति । तन्मते पुरस्तात्प्रतिषेधकरणस्य प्रयोजनमुत्तरत्र दर्शयिष्यामः ।

**'कृञोऽसुट इति वक्तव्यमिति ।** कृतेऽपि सुटि करोतिर्भवत्येवेति प्रतिषेधप्रसङ्गः ॥ १३ ॥

**भावबोधिनी**

नहीं है, [ अतः थल् में इट् नहीं होता है— ] तुष्टोथ, दुद्रोथ, सुस्रोथ, शुश्रोथ । [इनमें न वलादिलक्षण इट् रहता है और न "ऋतो भारद्वाजस्य" से विधीयमान । अतः थल् में इट्रहित ही रूप होते हैं । ]

* सुट्रहित कृञ् का प्रतिषेध कहना चाहिये । * जिससे कि सुट्सहित कृञ् को इट् का आगम हो सके । उदा०—सञ्चस्करिव सञ्चस्करिम । [ सम् + कृ में द्वित्वादि के बाद "अडभ्यासव्यवायेऽपि" इस सूत्र द्वारा सुट् आगम होने पर इट् होता है । केवल कृ से इट् नहीं होता है—चकृव, चकृम । ]

"ऋतो भारद्वाजस्य" यह व्यवस्था भी सुट्रहित की ही इष्ट है । [ अतः सुट्सहित में इट् का प्रतिषेध नहीं होता है, इट् होता है— ] उदा० सञ्चस्करिथ । [ सम् + कृ + लिट् = सिप् = थल् में द्वित्व तथा अभ्यासकार्य के बाद सम् चकृ + थ में "अडभ्यासव्यवायेऽपि" सूत्र से सुट् आगम् हो जाने के बाद इट् भी होता है । गुण, रपर करने पर रूप बनता है । अकेले 'कृ' से इट् नहीं होता है—चकृथ ] ॥ १३ ॥

---

१. भाष्ये तु 'कृञोऽसुट इति वक्तव्यम्' इति दृश्यते ।

## ३२६३. श्वीदितो निष्ठायाम् ॥ १४ ॥ ( ३०३९ )

**श्वयतेरीदितश्च निष्ठायामिडागमो न भवति । शूनः, शूनवान् । ईदितः—'ओ लजी' (धा० पा० १२९१ ), लग्नः, लग्नवान् । 'ओ विजी' (धा० पा० १२९०)—उद्विग्नः, उद्विग्नवान् । 'ओदितश्च' (८.२.४५) इति निष्ठातकारस्य नकारः । 'दीपी' ( धा० पा० ११५१ )—दीप्तः, दीप्तवान् ।**

**डीङस्त्वोदितां मध्ये पाठो ज्ञापको निष्ठायामनिट्त्वस्य । स हि नत्वार्थः, नत्वं च निष्ठातोऽनन्त-**

**न्यासः**

**श्वीदितो निष्ठायाम्** ॥ **शून इति** । वच्यादिसूत्रेण सम्प्रसारणम्, 'हलः' इति दीर्घः । **लग्न इति** । नत्वस्यासिद्धत्वात् 'चोः कुः' इति कुत्वम् । **उड्डीन इति** । 'डीङ् विहायसा गतौ' ।

ननु डीङ उदात्तत्वान्निष्ठायामिट् प्राप्नोति, तस्य प्रतिषेधो वक्तव्यः; अन्यथा हि उड्डयित इत्यनिष्टं रूपं स्यादिति यो मन्येत, तं प्रत्याह—**डीङ इत्यादि** । **ओदितामिति** । स्वादीनामित्यर्थः । 'स्वादय ओदितः' इति वचनात् । स्वादयः 'षूङ् प्राणिगर्भविमोचने' इत्यादयः । कथं कृत्वा ज्ञापकः ? इत्याह—**स हीत्यादि** । स्वादीनां ह्योदितां मध्ये तस्यैवमर्थः पाठः—निष्ठातकारस्यौदित उत्तरस्य नत्वं यथा स्यात् । स्यादेतत्—इट्यपि कृते नत्वं भविष्यतीति ? इत्याह—**नत्वं चेत्यादि** । 'तस्मादित्युत्तरस्य' इत्यत्र निर्दिष्टग्रहणस्यानन्तर्यार्थस्यानुवृत्तेरोदितो धातोरनन्तरस्य निष्ठातकारस्य नत्वं विधीयते । तत्र यदि डीङः परस्या निष्ठाया इट् स्यात्, तदा सत्यप्योदित्त्वे इटा व्यवहितत्वान्नत्वेन न भवितव्यम् । नित्यौदितां मध्ये तस्य पाठोऽनर्थकत्वान्न कृतः स्यात्, स चास्ति; तस्मात् स एव पाठो ज्ञापकः—डीङ उत्तरस्या निष्ठाया इण्न भवतीति । स्वादिषु पाठसामर्थ्याद् व्यवधानेऽपि स्यात्, कथमसौ ज्ञापकः ? नैतदस्ति; एवं ह्यानन्तर्यपरिभाषा बाधिता भवति, शास्त्रश्चानिष्टं स्यात्, एतच्चायुक्तम्; न ह्यनिष्टार्था शास्त्रे प्रक्लृप्तिरस्ति । तस्माद् यथानन्तर्यपरिभाषा न बाध्यते शास्त्रञ्च नानिष्टं भवति, ओदितां मध्ये डीङः पाठश्च सफलो भवति—स प्रकारोऽभ्युपगन्तव्यः । ततश्चौदितां मध्ये डीङः पाठो ज्ञापक एव । अपरः प्रकारः—'ओदितश्च' इत्यत्रौदित इत्येतद् द्विरावर्त्तयिष्यते 'तस्मादित्युत्तरस्य' इत्यस्याः परिभाषाया द्विरुपस्थानार्थम्, तत्रास्या यद् द्वितीयमुपस्थानं तस्यैतत् प्रयोजनम्—डीङोऽप्यनन्तरस्यैव निष्ठातकारस्य नत्वं यथा स्यादिति । यदि च डीङो निष्ठायामिट् स्यात्, इटा व्यवहितत्वान्नत्वं न

**पदमञ्जरी**

**श्वीदितो निष्ठायाम्** ॥ श्विग्रहणं किमर्थम्, न सम्प्रसारणे कृते परस्य पूर्वत्वे चोगन्तत्वे सति 'श्र्युकः क्किति' इत्येव सिद्धम् ? न सिध्यति; श्वि+त इति स्थिते परत्वादिट् प्राप्नोति । अथापि पूर्वं सम्प्रसारणम् ? एवमपि 'श्र्युकः क्किति' इत्यत्र 'उपदेशे' इत्यनुवृत्तेरस्य चोपदेशे इदन्तत्वान्न सिध्यति ।

**डीङ इत्यादि** । डीङयं स्वादीनां मध्ये पठ्यते, ते च ओदितः, 'स्वादय ओदितः' इति वचनात्,

**भावबोधिनी**

श्वि तथा ईदित् धातुओं को निष्ठा प्रत्यय परे इट् आगम नहीं होता है । उदा० शूनः, शूनवान् । [ 'टु ओ श्वि' में 'टु तथा ओ' को इत्संज्ञा लोप हो जाने के बाद क्त, क्तवतु प्रत्यय करने पर "वचिस्वपियजादीनाम्" सूत्र से व् का सम्प्रसारण, इ का पूर्वरूप शु + त, शु + तवत्, "हलः" सूत्र से दीर्घ, "ओदितश्च" सूत्र से निष्ठा त का न आदेश । प्राप्त इट् का निषेध होने पर रूप बनता है । ] ईत् की इत्संज्ञावाले के उदा० 'ओ लजी'—[ में 'ओ' तथा 'ई' की इत्संज्ञालोप के बाद क्त, क्तवतु प्रत्यय करने पर लज्+त, लज् + तवत्, इट् का प्रतिषेध, त् का न, ज् का कुत्व से ग् ] लग्नः, लग्नवान् । 'ओ विजी' [ ओ तथा ई की इत्संज्ञा लोप, क्त, क्तवतु प्रत्यय, शेष प्रक्रिया पूर्ववत् उद् विज् +क्त, उद् विज् + क्तवतु = ] उद्विग्नः, उद्विग्नवान् । इनमें "ओदितश्च" सूत्र से निष्ठा 'त' का 'न' होता है । दीपी [ ई की इत्संज्ञा लोप-] दीप्तः, दीप्तवान् । [ इट् निषेध होता है । ]

ओदित् धातुओं के मध्य में डीङ् का पाठ करना निष्ठा में अनिट्त्व का ज्ञापक है । क्योंकि वह तो नत्व के लिए है और अव्यवहित निष्ठा त का नत्व किया जाता है । [ यदि इट् आगम कर दिया जायगा तो व्यवधान हो जाने से नत्व नहीं हो सकेगा । अतः 'डीङ्' के ओदित् न होने पर भी ओदित् मानकर इट् का प्रतिषेध करना चाहिए । ] उदा० उड्डीनः, उड्डीनवान् । [ उत्+डी+क्त, क्तवतु में इट् का प्रतिषेध, निष्ठा त का नत्व, उपसर्ग के 'त्' का ष्टुत्व । ]

रस्य विधीयते। उड्डीनः। उड्डीनवान्।

**'निष्ठायाम्' इत्यधिकारः 'आर्धधातुकस्येड्वलादेः' ( ७.२.३५ ) इति यावत् ॥**

**३२८४. यस्य विभाषा ॥ १५ ॥ ( ३०२५ )**

**यस्य धातोर्विभाषा क्वचिदिडुक्तस्तस्य निष्ठायां परत इडागमो न भवति। वक्ष्यति—'स्वरतिसूतिसूयतिधूञूदितो वा' ( ७.२.४४ ) विधूतः, विधूतवान्। गुहू—गूढः, गूढवान्। 'उदितो वा' ( ७.२.५६ )—वृधु-वृद्धः, वृद्धवान्।**

**'तनिपतिदरिद्राणामुपसंख्यानम्' ( काशिका ७।२।४९ ) इति पतेर्विभाषितेट्कस्यापि 'द्वितीया श्रितातीतपतित' ( २.१.२७ ) इति निपातनादिडागमः ॥**

**न्यासः**

स्यात्। न च शक्यते वक्तुम्—व्यवधानेऽपि पाठसामर्थ्याद् भविष्यतीति। एवं हि परिभाषाया द्विरुपस्थानमनर्थकं स्यात्, एतच्चायुक्तम्; तस्मादोदितां मध्ये डीङः पाठो ज्ञापक एव।

श्विग्रहणं शक्यमकर्तुम्, ओदित्करणादेव निष्ठायामिण्न भविष्यति, ओदित्त्वं हि नत्वार्थं क्रियते, नत्वं च निष्ठातोऽनन्तरस्य विधीयते; यदि च ततः परस्या निष्ठाया इट् स्यात्, ओदित्त्वमनर्थकं स्यात्? वैचित्र्यार्थं श्विग्रहणं वेदितव्यम् ॥ १४ ॥

**यस्य विभाषा ॥ विधूत इति।** 'धूञ् कम्पने'। **गूढ इति।** 'गुहू संवरणे'। ढत्वादिषु कृतेषु 'ढ्रलोपे' इत्यादिना दीर्घः।

अथेह कस्मात् प्रतिषेधो न भवति—पतित इति, भवति हि पतिर्विभाषितेट्, सनीवन्तर्ध' इत्यत्र 'तनिपतिदरिद्राणामुपसंख्यानम्', इति विकल्पेनोपसंख्यानात्? इत्यत आह—**द्वितीया श्रितेत्यादि** ॥ १५ ॥

**पदमञ्जरी**

कथमेतज्ज्ञापकम्? इत्यत आह—**स हीति। निष्ठातः**=निष्ठातकारस्य। **अनन्तरस्य विधीयत इति।** इटि सत्यानन्तर्यं विहन्येत।

एवञ्च सति श्वयतेरप्यत्र ग्रहणं शक्यमकर्त्तुम्, तथा ओलस्जीप्रभृतीनामपि; उक्तेनैव न्यायेनेडभावस्य सिद्धत्वात् ॥ १४ ॥

**यस्य विभाषा ॥** 'यस्य विभाषा' इत्यनुवादवाक्यम्। अत्र च 'इड्विहितः' इति वाक्यशेषः। यत्तदोर्नित्यसम्बन्धात्तस्य निष्ठायामिण्न भवतीति प्रतिषेधवाक्यं सम्पद्यते। **निपातनादिडागम इति।** अपर आह—अनित्योऽयं प्रतिषेधः 'कृती छेदने' ( धा० पा० १४३५ ) इत्यस्य ईदित्करणसामर्थ्यात्। यदि ह्ययं विधिर्नित्यः स्यात् 'सेऽसिचि' इत्यनेन विभाषितेट्त्वादनेनैव प्रतिषेधस्य सिद्धत्वादीदित्करणमनर्थकं स्यादिति ॥ १५ ॥

**भावबोधिनी**

'निष्ठायाम्' ( निष्ठा प्रत्यय परे )-यह अधिकार "आर्धधातुकस्येड्वलादेः" ( ७।२।३५ ) तक चलता है। [ इससे पूर्ववर्ती सूत्रों की निष्ठा प्रत्यय में प्रवृत्ति होती है। ] ॥ १४ ॥

जिस धातु को कहीं भी विकल्प से इट् कहा गया है उसको निष्ठा प्रत्यय में इट् का आगम नहीं होता है। आगे कहा जायगा—"स्वरति-सूति-सूयति-धूञूदितो वा" [ ७।२।४४। स्वरति आदि तथा ऊदित् धातु को विकल्प से इट् होता है। इससे उनमें निष्ठा में इट् का निषेध हो जाता है। ] उदा० विधूतः, विधूतवान् ] गुहू—गूढः, गूढवान्। [ ऊ की इत्संज्ञा लोप होने से ऊदित् मानकर विकल्प से इट् होता है। क्त में निषेध हो जाता है। गुह् + क्त, क्तवतु, ढत्व, धत्व, ष्टुत्व, ढलोप, दीर्घ करने पर रूप बनता है। ] "उदितो वा" [ ७।२।५६। उदित् धातु से क्त्वा को विकल्प से इट् होता है। अतः क्त, क्तवतु में निषेध होता है। ] "वृधु वर्धने" के उदा० वृद्धः, वृद्धवान्।

[ यदि ऐसा है तो 'पतितः' में इट् कैसे होगा क्योंकि "सनीवन्तर्धः" सूत्र में कुछ के अनुसार "तनि-पति-दरिद्राणामुपसंख्यानम्" ( काशिका ७।२।४९ ) इस वचन के विकल्प से इट् विहित है। अतः निष्ठा में इट् आगम नहीं होना चाहिये? ] "तनिपतिदरिद्राणामुपसंख्यानम्" इस से विकल्प से इट् प्राप्तिवाली 'पत' धातु को भी "द्वितीया

## ३२९५. आदितश्च ॥ १६ ॥ ( ३०३६ )

आदितश्च धातोर्निष्ठायामिडागमो न भवति। ञिमिदा ( धा० पा० १२४४ )—मिन्नः, मिन्नवान्। ञिक्ष्विदा ( धा० पा० १२४५ )—क्ष्विण्णः, क्ष्विण्णवान्। ञिष्विदा ( धा० पा० ७४४ )—स्विन्नः, स्विन्नवान्। चकारोऽनुक्तसमुच्चयार्थः। आश्वस्तः। वान्तः।

योगविभागकरणं किमर्थम्, 'आदितश्च विभाषा भावादिकर्मणोः' इत्येवं पठितव्यम्, अन्यत्र हि भावादिकर्मभ्यां 'यस्य विभाषा' ( ७.२.१५ ) इति प्रतिषेधो भविष्यति ? ज्ञापनार्थमेतत्। ज्ञापयति—

न्यासः

**आदितश्च** ॥ भावादिकर्मणोरनन्तरं विभाषां वक्ष्यति, ततोऽन्यत्र कर्त्तरि कर्मणि चायं प्रतिषेधो विज्ञायते। **आश्वस्त इति**। 'श्वस प्राणने'। **वान्त इति**। 'टुवम उद्गिरणे'। 'अनुनासिकस्य क्विझलोः क्ङिति' इति दीर्घः। **योगविभागकरणं किमर्थमिति**। पृष्टस्य 'आदितश्च विभाषा भावादिकर्मणोः' इति यद्येकयोगः क्रियते, ततो भावादिकर्मभ्यामन्यत्र प्रतिषेधो न स्यादिति प्रतिवचनमाशङ्क्याह—**आदितश्चेत्यादि**। 'आदितश्च विभाषा भावादिकर्मणोः' इत्येकयोगे भावादिकर्मणोर्विभाषायां विहितायां ततोऽन्यत्र कर्त्रादौ 'यस्य विभाषा' इति प्रतिषेधो भविष्यति, तस्मादपार्थकं योगविभागकरणम्। **ज्ञापनार्थमित्यादिना**ऽपार्थकत्वं परिहरति। **यदुपाधेर्विभाषा तदुपाधेरिति**। उभयत्रापि बहुव्रीहिः। उपाधिः = विशेषणम्। स चैतदर्थं उपाधिर्विज्ञेयः। यदि यदुपाधेर्विभाषा तदन्योपाधेरपि प्रतिषेधः स्यात्, तदा योगविभागं न कुर्यात्। एकयोगेनापि भावादिकर्मणोर्विहिते विकल्पे ततोऽन्यत्र 'यस्य विभाषा' इति प्रतिषेधो लभ्यते एव, कृतश्च योगविभागः, तस्मादेतेन योगविभागकरणेन सूचितम्—यदुपाधेर्विभाषा तदुपाधेर्निषेध इति। **तेनेत्यादिना** ज्ञापकस्य प्रयोजनं दर्शयति। अत्र विदेर्लाभार्थस्य विभाषेति विशिना तौदादिकेन साहचार्याल्लाभार्थस्य तौदादिकस्य ग्रहणम्। 'यस्य विभाषा' इति च तस्यैव

पदमञ्जरी

**आदितश्च** ॥ **आश्वस्तः, वान्त इति**। भाष्यवार्त्तिकयोरनुक्तमपि प्रयोगबाहुल्यादुक्तम्। **योगविभागकरणं किमिति**। योगविभाग एव तावद्दोषः। अपि च एकयोगत्वे चकारो न कर्त्तव्यो भवतीति प्रश्नः। एवं चोत्तरग्रन्थे चकारो न पठितव्यः। पठ्यमानस्तु अनुक्तसमुच्चयार्थो व्याख्येयः। कथं पुनरेकयोगत्वे भावादिकर्मभ्यामन्यत्र प्रतिषेधः सिद्धः ? तत्राह—**अन्यत्रेति**। **यदुपाधेरिति**। उपाधिरभिधेयादिर्भेदकः। यद्युपाधीनां भेदकत्वं न स्यात्, योगविभागोऽनर्थकः स्यात्। भेदकत्वे तु तेषां भावादिकर्मणोर्विकल्पविधानात्कर्तृकर्मणोः प्रतिषेधो न स्यादिति तदर्थो योगविभागः कर्त्तव्यः। किमेतस्य ज्ञापने प्रयोजनम् ? इत्यत आह—**तेनेति**। **लाभार्थस्य**

भावबोधिनी

श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः" ( २।१।२४ ) में निपातन के कारण इट् आगम होता है। [ अर्थात् पाणिनीय सूत्रनिर्देश से ही 'पतितः' में इट् निपातित करना चाहिए। ] ॥ १५ ॥

आदित् = आकार की इत्संज्ञावाली धातु से निष्ठा में इट् का आगम नहीं होता है। उदा० ञिमिदा—मिन्नः, मिन्नवान्। [ ञि तथा आ की इत्संज्ञा लोप के बाद मिद् + क्त, मिद् + क्तवत् में इट् का निषेध होने के बाद 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः" सूत्र से त् तथा द् के स्थानों पर दो नकार आदेश होते हैं। ] ञिक्ष्विदा—क्ष्विण्णः, क्ष्विण्णवान्। ञिष्विदा—स्विन्नः, स्विन्नवान्। चकार [ का उल्लेख ] अनुक्त धातुओं के समुच्चय के लिए है। अतः—आश्वस्तः। वान्तः। [ इनमें आ की इत्संज्ञा लोप न होने पर भी इट् का निषेध होता है। ]

योग-विभाग करने का क्या फल है "आदितश्च विभाषा भावादिकर्मणोः"ऐसा एक ही सूत्र पढ़ना चाहिए, कारण यह है कि भाव तथा आदिकर्म से भिन्न में 'यस्य विभाषा' इसी सूत्र से [ इट् का ] प्रतिषेध हो जायगा ? [ भाव यह है कि एक योग रहने पर भाव तथा आदिकर्म में विभाषा हो जाने पर और उससे भिन्न कर्ता आदि अर्थ में विभाषा होने से 'यस्य विभाषा' इसी से इट् का प्रतिषेध सम्भव है। अतः अलग-अलग दो सूत्र बनाना व्यर्थ है ? ] योग-विभाग ज्ञापन के लिए है। यह ज्ञापित करता है—जिस विशेषण वाले का विकल्प होता है उसी विशेषण वाले

'यदुपाधेर्विभाषा तदुपाधेः प्रतिषेधः' ( म० भा० ) इति। तेन 'विभाषा गमहनविदविशाम्' (७.२.६८) इत्यत्र विदेर्लाभार्थस्य विभाषेति ज्ञानार्थस्य प्रतिषेधो न भवति। विदितः। विदितवान्॥

**३२९९. विभाषा भावादिकर्मणोः॥ १७॥ ( ३०५४ )**

भावे आदिकर्मणि च आदितो धातोर्विभाषा निष्ठायामिडागमो न भवति। मिन्नमनेन, मेदितमनेन। प्रमिन्नः, प्रमेदितः।

सौनागाः कर्मणि निष्ठायां शकेरिटमिच्छन्ति विकल्पेन। शकितो घटः कर्तुम्। शक्तो घटः कर्तुम्।

**न्यासः**

प्रतिषेधो भवति, नान्यस्य। यदि यदुपाधेर्विभाषा तदुपाधेर्निषेध इति ज्ञाप्यते, 'जॄव्रश्चोः क्त्वः', 'उदितो वा' इति क्त्वाप्रत्यये भावविषये 'यस्य विभाषा' इति भावविषय एव निष्ठायामिट् प्रतिषेधः स्यात्, न कर्तृकर्मणोः ? नैष दोषः; आश्रीयमाणो हि धर्मो भेदको भवति। न च क्त्वाप्रत्यये निष्ठायां वा भिन्नमभिधेयं निमित्तत्वेनाश्रितम्। तस्माद् भवत्येवात्र प्रतिषेधः। अत्र लिङ्गम्—'तेन निर्वृत्तम्' इति निर्देशः॥ १६॥

**विभाषा भावादिकर्मणोः॥ भिन्नमनेनेति।** 'नपुंसके भावे क्तः'। **मेदितमिति।** 'निष्ठा शीङ्' इत्यादिना कित्त्वप्रतिषेधे गुणः। **प्रमिन्न इति।** प्रशब्द आदिकर्म द्योतयति। **आदिकर्मेति।** आदिभूतक्रियाक्षण इति। तस्मिन् भूतत्वेन विवक्षिते यः क्तः स पुनः 'आदिकर्मणि क्तः कर्तरि च' इत्यनेन कर्त्तरि कारके भवति।

**पदमञ्जरी**

**विभाषेति।** अत्र हेतुर्वक्ष्यते। यदि तद्वद्युपाधिर्भेदकः, ततः 'उदितो वा' इति क्त्वाप्रत्यये भाववाचिनि विकल्प इति निष्ठायामपि भाव एव प्रतिषेधः स्यात्, नार्थान्तरे। शब्देनाश्रीयमाणो ह्युपाधिर्भेदकः। न च 'उदितो वा' इत्यत्र भाववाचित्वं शब्देनाश्रितम्। तथा च—'तेन निर्वृत्तम्', 'निर्वृत्तेऽक्षद्यूतादिभ्यः' इत्यादेरुपपत्तिः॥१६॥

**विभाषा भावादिकर्मणोः॥ मेदितमनेनेति।** 'निष्ठा शीङ्' इति कित्त्वप्रतिषेधाद् गुणः। **प्रमिन्न इति।** 'आदिकर्मणि क्तः कर्त्तरि च' इति कर्त्तरि क्तः।

**सौनागा इति।** सुनागस्याचार्यस्य शिष्याः=सौनागाः। **शकितो घटः कर्त्तुमिति।** यद्यपि शकिः

**भावबोधिनी**

का प्रतिषेध होता है। इस कारण "विभाषा गमहनविदविशाम्" इस सूत्र में लाभ ( प्राप्त करना ) अर्थवाली 'विद' का विकल्प होता है, अतः ज्ञान अर्थवाली का [ इट् ] प्रतिषेध नहीं होता है। [ लाभ अर्थ वाली के ही इट् का प्रतिषेध होता है। ] उदा० विदितः, विदितवान्। [ये दोनों ज्ञानार्थक विद् के रूप हैं। इसका विकल्प नहीं है। अतः इट् निषेध नहीं होता है। लाभार्थक का इट् प्रतिषेध होता है। ]॥ १६॥

भाव अर्थ में तथा आदिकर्म अर्थ में आदित् ( आकार की इत्संज्ञावाली ) धातु से निष्ठा परे इट् का आगम विकल्प से नहीं होता है। उदा० भिन्नम् अनेन, मेदितम् अनेन। [ 'ञिमिदा स्नेहने' धातु के ञि तथा आ की इत्संज्ञा लोप के बाद 'नपुंसके भावे क्त' सूत्र से क्तः प्रत्यय भाव अर्थ में है। विकल्प से इट् आगम नहीं होने से दो रूप बनते है। इट् अभाव पक्ष में "रदाभ्यां" से नत्व होता है। ] आदिकर्म के उदा० प्रमिन्नः, प्रमेदितः। [ इट् आगम और आगम न होना; अतः दो रूप हैं। इट् पक्ष में कित् न होने से गुण होता है। ]

सुनाग आचार्य के शिष्य सौनाग कर्म अर्थ में निष्ठा प्रत्यय परे रहते 'शक्' धातु से भी विकल्प से इट् करना चाहते हैं; उदा० शकितो घटः कर्तुम्, शक्तो घटः कर्त्तुम्। [ इट् होने तथा न होने से दो रूप बन जाते हैं। ]

परन्तु भाव अर्थ में इट् नहीं ही होता है—शक्तम् अनेन। असु धातु से भाव अर्थ में—असितम् अनेन। किन्तु आदिकर्म में नहीं ही होता है—अस्तः काण्डः।

विमर्श—अकेला 'शक्' धातु अकर्मक है किन्तु तुमुन्नन्त की वाच्य क्रिया का विशेषण होने से सकर्मक हो जाता है। इसीलिए कर्म अर्थ में लकार तथा अन्य प्रत्यय भी देखे जाते हैं—अयं योगः शक्योऽवक्तुम्, अयम् अर्थः शक्यते वक्तुम्।

भावे न भवत्येव—शक्तमनेन। अस्यतेर्भावे—असितमनेन। आदिकर्मणि च न भवत्येव—अस्तः काण्डः॥

**३२९७. क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमःसक्ताविस्पष्टस्वरानायासभृशेषु॥ १८॥ (३०५८)**

क्षुब्ध, स्वान्त, ध्वान्त, लग्न, म्लिष्ट, विरिब्ध, फाण्ट, बाढ—इत्येते निपात्यन्ते यथासंख्यं मन्थ, मनः, तमः, सक्त, अविस्पष्ट, स्वर, अनायास, भृश—इत्येतेष्वर्थेषु। क्षुब्ध इति भवति मन्थाभिधानं चेत्। क्षुब्धो मन्थः। क्षुभितमन्यत्।

क्षुभितं मन्थेन, क्षुब्धा[1] गिरिनदी[1]—इत्येवमाद्युपमानाद्भविष्यति।

**न्यासः**

शक्तो घटः कर्तुम्, शकितो घटः कर्तुमित्यस्य सिद्धये विभाषेति योगविभागोऽत्र कर्त्तव्यः। तत्र 'आदितः' इति नानुवर्त्तनीयम्। 'भावादिकर्मणोः' इत्यत्र द्वितीये योगेऽनुवर्त्तनीयमेव॥ १७॥

**क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमःसक्ताविस्पष्टस्वरानायासभृशेषु॥** क्षुब्ध इति। 'क्षुभ सञ्चलने' इत्यस्येडभावो निपात्यते। **मन्थाभिधानं चेदिति।** समुदायेन चेन्मन्थोऽभिधीयते। मन्थ इति द्रवद्रव्यसम्पृक्ताः सक्तव उच्यन्ते। **क्षुब्धो मन्थ इति।** चलितो मन्थ इत्यर्थः। **क्षुभितं मन्थेनेति।** नात्र मन्थोऽभिधीयते, किं तर्हि? तत्साधनं चलनम्। अथ मन्थाभिधाने क्षुब्धशब्दो निपात्यते, क्षुब्धा गिरिनदी, क्षुब्धा सेना, क्षुब्धः समुद्रः—इत्यादि नोपपद्यते? इत्यत आह—**क्षुब्धा गिरिनदीत्यादि।** चलितमन्थसाधर्म्याद् गिरिनद्यादिषु तथा व्यपदेश इति दर्शयति। यथा क्षुब्धस्य मन्थस्य चलनं प्रति साधनभावः, तथा गिरिनद्यादेरर्थस्य चलनं प्रति साधनभावः क्षुब्धमन्थसाधर्म्यात् क्षुब्धशब्देन व्यपदिश्यते, यथा-गोसाधर्म्याद् गोशब्देन वाहीक उच्यते।

**पदमञ्जरी**

केवलोऽकर्मकः, तथापि तुमुनन्तवाच्यक्रियाविशेषणत्वेन सकर्मको भवति। तथा च कर्मणि लादयो दृश्यन्ते—अयं योगः शक्योऽवक्तुम्, अयमर्थः शक्यते वक्तुमिति॥ १७॥

**क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्धफाण्टबाढानि मन्थमनस्तमसक्ताविस्पष्टस्वरानायासभृशेषु॥ मन्थाभिधानं चेदिति।** समुदायेन चेन्मथोऽभिधीयत इत्यर्थः। एतेन समुदायानामभिधेयभावेन मन्थादय इहोपात्ता इति दर्शयति। यदि तु धात्वर्थोपाधित्वेनाश्रीयेरन्—मन्थादिसाधने धात्वर्थे क्षुब्धादयो निपात्यन्त इति, तदा क्षुभितं मन्थेनेत्यादावपि स्यात्। द्रवद्रव्यसम्पृक्ताः सक्तवः = मन्थः। दधिमन्थान्मधुमन्थाँश्चेति हि दृश्यते। अन्ये तु मथ्यतेऽनेनेति मन्थनदण्डः खञ्जकः = मन्थ इत्याहुः। मन्थादिषु क्षुब्धादिशब्दानां चलनादिक्रियायोगो यथासम्भवं द्रष्टव्यः। **उपमानादिति।** उपमानम् = सादृश्यम्, तच्च यथासम्भवं द्रष्टव्यम्।

**भावबोधिनी**

सौनागों का कथन है—'विभाषा' इतने योगविभाग से भी सिद्ध हो जाता है॥ १७॥

(१) क्षुब्ध, (२) स्वान्त, (३) ध्वान्त, (४) लग्न, (५) म्लिष्ट, (६) विरिब्ध, (७) फाण्ट, (८) बाढ—ये शब्दरूप क्रमशः—(१) मन्थ, (२) मन, (३) तम, (४) सक्त, (५) अविस्पष्ट, (६) स्वर, (७) अनायास, (८) भृश—इन अर्थों में निपातित होते हैं, अर्थात् निष्पन्न समुदाय द्वारा विशेष-२ अर्थों की प्रतीति होनी चाहिए। (१) यदि मन्थ अर्थ कहा जाता है तो 'क्षुब्ध' ऐसा निपातन होता है—(१) क्षुब्धो मन्थः। अन्य अर्थ में क्षुभितम्। [ सञ्चलनार्थक क्षुभ् + क्त = त, त का ध तथा भ का जश्त्व से ब करने पर रूप होता है। ]

'क्षुभितं मन्थेन' तथा 'क्षुब्धा गिरिनदी' इत्यादि प्रयोग तो उपमान मानकर हो जायेंगे। [ भाव यह है कि 'गौर्वाहीकः' आदि प्रयोग जैसे सादृश्य मानकर किए जाते हैं उसी प्रकार उक्त प्रयोगों में भी सादृश्य मान लेना चाहिए तथा निपातन करना चाहिए। द्रव = तरल द्रव्य से सम्पृक्त सत्तू 'मन्थ' कहे जाते हैं। ]

---

१-१. 'क्षुब्धो गिरि०, नदी'—इति मुद्रितः पाठः।

**स्वान्तमिति मनोऽभिधानं चेत्। स्वनितमन्यत्, स्वनितो मृदङ्गः। स्वनितं मनसा।**
**ध्वान्तमिति भवति तमोऽभिधानं चेत्। ध्वनितमन्यत्। ध्वनितो मृदङ्गः। ध्वनितं तमसा[1]।**
**लग्नमिति भवति सक्तं चेत्। लगितमन्यत्।**
**म्लिष्टमिति भवति अविस्पष्टं चेत्। म्लेच्छितमन्यत्। इत्त्वमप्येकारस्य निपातनादेव।**
**विरिब्धमिति स्वरश्चेत्। विरेभितमन्यत्। 'रेभृ शब्दे' (धा० पा० ३८५) इत्यस्यैतन्निपातनम्। अन्ये तु विरिभितमन्यदिति पठन्ति। रभिं सौत्रं धातुं पठन्ति, ते विरिभितमिति प्रत्युदाहरन्ति।**

**न्यासः**

**स्वान्तम्, ध्वान्तमिति**। 'स्वन ध्वन शब्दे'। इडभावो निपात्यते। एवमुत्तरेष्वप्युदाहरणेषु वेदितव्यम्। बाह्येषु विषयेष्वविक्षिप्तमनाकुलं मनः = स्वान्तमुच्यते। 'अनुनासिकस्य क्विझलो क्ङिति' इति दीर्घः। **स्वनितं मनसेति**। मनःकर्तृकं स्वननमुच्यते, न तु मनः। **ध्वनितं तमसेति**। अत्रापि तमःकर्तृकं ध्वननमुच्यते, न तमः।

**लग्न इति**। 'रगे लगे सङ्गे'। निष्ठानत्वं निपात्यते। **म्लिष्टमिति**। 'म्लेच्छ अव्यक्तायां वाचि', व्रश्चादिसूत्रेण षत्वम्, ष्टुत्वञ्च। **म्लेच्छितमिति**। अर्थस्याविस्पष्टत्वेऽपि स्वरूपस्य विस्पष्टत्वाद्भवति प्रत्युदाहरणम्।

**विरिब्धमिति**। अत्राप्येकारस्येत्वमपि निपात्यते। **स्वरश्चेदिति**। स्वरशब्दोऽत्र ध्वनौ वर्त्तते।

**पदमञ्जरी**

स्वान्तशब्देन विषयेष्वविक्षिप्तमनाकुलं मन उच्यते। **स्वनितं** शब्दायितमित्यर्थः। **मनसेति**। कर्त्तरि करणे वा तृतीया। एवं **ध्वनितं तमसे**त्यत्रापि।

**लग्नमिति**। 'रगे लगे ष्टगे संवरणे' (धा० पा० ७८५, ७८६, ७९०), अत्र निष्ठानत्वमपि निपात्यते।

**म्लिष्टमिति**। 'म्लेच्छ अव्यक्ते शब्दे' (धा० पा० २०५)। **म्लेच्छितमिति**। अपभाषितमित्यर्थः। अत्रार्थस्याविस्पष्टतया शब्दस्याविस्पष्टत्वम्; अपशब्दानामपि स्वरूपेणाभिव्यक्तत्वात्। उदाहरणेषु वर्णानभिव्यक्तिः = विस्पष्टत्वम्।

**भावबोधिनी**

(२) यदि 'मन' अर्थ कहना हो तो 'स्वान्तम्' यह निपातित होता है। [ इट् का अभाव होता है और 'अनुनासिकस्य क्विझलोः क्ङिति'' सूत्र से उपधादीर्घ होता है—स्वान् = त, स्वान्तम् ] अन्य अर्थ में 'स्वनित' ऐसा होता है। 'स्वनितः मृदङ्गः', स्वनितं मनसा। [ मन द्वारा स्वनन किया गया—यह अर्थ है, न कि मन। ]

(३) यदि 'तम' अर्थ है तो 'ध्वान्तम्' ऐसा होता है। [ ध्वन् + क्त, इट् का अभाव, उपधादीर्घ ] अन्य अर्थ में—'ध्वनितम्'। ध्वनितः मृदङ्गः। ध्वनितं तमसा। [ यहाँ भी तम द्वारा ध्वनन किया गया अर्थ कहा जाता है।

(४) सक्त = मिला, संयुक्त अर्थ हो तो 'लग्नम्' यह होता है। [ लग् + क्त, इट् का अभाव, त का न। ] अन्य अर्थ हो तो 'लगितम्' होता है।

(५) अविस्पष्ट अर्थ हो तो 'म्लिष्टम्' यह होता है। [ म्लेच्छ + क्त, ए का इत्व 'व्रश्चभ्रस्ज' सूत्र से च्छ् का ष्, ष्टुत्व। ] अन्य अर्थ में 'म्लेच्छितम्'। यहाँ एकार का इत्व आदेश भी निपातन से ही होता है।

(६) विरिब्धम्—यह होता है यदि स्वर अर्थ है तो। अन्य अर्थ में [ इट् होने से ]—विरेभितम्। [स्वर= ध्वनि]। 'रेभृ शब्दे' इस धातु का यह निपातन है। [ इससे ए का इत्व भी निपातित होता है। ] कुछ लोग—अन्य अर्थ में 'विरिभितम्' ऐसा पढ़ते हैं। वे लोग 'रभि' ऐसी सौत्र (सूत्र में पठित) धातु का पाठ करते हैं, वे लोग—'विरिभितम्' ऐसा (अन्य अर्थ में) प्रत्युदाहरण देते हैं।

---

१. 'मनसा' इति मुद्रितः पाठः।

**फाण्टमिति भवत्यनायासश्चेत्। फणितमन्यत्। यदश्रृतमपिष्टं च कषायमुदकसम्पर्कमात्राद् विभक्तरसमीषदुष्णं तत्फाण्टम्। तदल्पप्रयत्नसाध्यत्वादनायासेन लक्ष्यते।**

**बाढमिति भवति भृशं चेत्। बाहितमन्यत्। 'बाहृ प्रयत्ने' (धा० पा० ६४५) इत्यस्य धातोरेतन्निपातनम्। अतिशयश्च भृशमिहोच्यते॥**[1]

## ३२९८. धृषिशसी वैयात्ये॥ १९॥ (३०५९)

**वियातस्य भावो वैयात्यम्=प्रागल्भ्यम्, अविनीतता। तत्र धृष्, शस्-इत्येतयोर्निष्ठायामिडागमो**

### न्यासः

**फाण्टमिति।** 'फण गतौ'। पूर्ववद्दीर्घः, ष्टुत्वञ्च। कः पुनरयमनायासो नाम? इत्याह—**यदश्रृतमित्यादि।** **अश्रृतमित्य**पक्वम्। **अपिष्टमित्य**चूर्णितम्। **उदकसम्पर्कः**=उदकसंयोगः। मात्रशब्देन निष्पीडनादेर्व्यवच्छेदः। **विभक्तरसमिति।** पृथग्भूतरसमित्यर्थः। **ईषदुष्णं** कोष्णम्। **तदल्पप्रयत्नसाध्यत्वादनायासेन लक्ष्यत इति।** आयासः=प्रयत्नाधिक्यम्, तद् यस्मिन्न विद्यते सोऽल्पप्रयत्नसाध्योऽनायासः। तेनेह यदश्रृतत्वादिविशिष्टं वस्तु तदल्पप्रयत्नसाध्यत्वादनायासेन लक्ष्यते। तदनेनानायासोपलक्षितो यो वस्तुविशेषस्तत्र फाण्टमिति निपात्यते, न त्वनायास एव। नान्यत्रापि सर्वत्रानायासोपलक्षित इति दर्शयति। अयं चार्थो निपातनसामर्थ्याल्लभ्यते। यथैव ह्यन्यत् किञ्चिदिडभावादिकं निपातनसामर्थ्याल्लभ्यते तथार्थविशेषोऽपि।

**बाढमिति।** अत्र पूर्ववद् ढत्वादिकार्यम्॥ १८॥

**धृषिशसी वैयात्ये॥ वियातस्य भावो वैयात्यमिति।** यातम्=यातिः, प्राप्तिः। विरूपं यातं यस्यासन्मार्गविषयत्वात् स वियातः=अविनीत इत्युच्यते, तद्भावो वैयात्यम्। ब्राह्मणादित्वात् ष्यञ्। **धृष्ट इति।**

### पदमञ्जरी

**फाण्टमित्यादि।** कः पुनरत्रानायासो विवक्षितः? इत्यत आह—**यदश्रृतमित्यादि।** यस्य व्याधेर्यदौषधं जातं तस्य पञ्चधा कल्पना—रसः, कल्कः, श्रृतः, शीतः, फाण्ट इति। रसः=स्वरसः। कल्कः=पिष्टम्। श्रृतम्=क्वाथः। शीतो नाम=क्षुण्णमौषधजातमुदके प्रक्षिप्य रात्रावधिवासितमुदकं प्रातः पीयते। तदेवोष्णोदके प्रक्षिप्य सद्योऽभिषुत्य पूत्वा यत्पीयते सः=फाण्टः यथाह—**वाग्भटः**—'सद्योऽभिषुत्य पूतस्तु फाण्टः' इति। पञ्चाप्येते कषायाः। तत्रा**श्रृतमिति** क्वाथस्य व्यावृत्तिः, **अपिष्टमिति** कल्कस्य, **उदकसम्पर्केणेति** स्वरसस्य, **ईषदुष्णमिति** शीतस्य, **मात्रशब्दः** स्वभावानुवादः। **विभक्तरसम्** प्रागवस्थाया भिन्नरसम्। यदेवम्भूतं कषायं तत्फाण्टमित्यर्थः। कषायशब्द उभयलिङ्गः। कथं पुनरेतदनायासशब्देनोच्यते? लक्षणया। यदाह—**अनायासेनेति॥** १८॥

**धृषिशसी वैयात्ये॥** 'ञिधृषा प्रागल्भ्ये' (धा० पा० १२६९), 'शसु हिंसायाम्' (धा० पा० ७२७), षष्ठ्यर्थे प्रथमा। विरूपं यातम्=गगनम्, चेष्टितं यस्य स वियातः=अविनीतः।

### भावबोधिनी

(७) अनायास अर्थ हो तो 'फाण्ट' ऐसा होता है। अन्य अर्थ में 'फणितम्' ऐसा बनता है। जो अशृत (=बिना पकाया गया) और अपिष्ट (=न पीसा गया) कसैला, पानी के सम्पर्कमात्र से अलग हुए रस वाला, कुछ गरम है उसे 'फाण्ट' कहते हैं। यह अल्प प्रयास द्वारा साध्य होने के कारण अनायास शब्द द्वारा लक्षित होता हैं। [अर्थात् बिना विशेष प्रयास से बन जाने के कारण 'अनायास' कहा जाता है। फाण्ट एक औषधि का रूपविशेष है। अधिक व्याख्या पदमञ्जरी में देखें।]

(८) 'बाढ' यह होता है यदि भृश अर्थ हो तो। अन्य अर्थ में 'वाहितम्' ऐसा होता है। 'बाहृ प्रयत्ने' इस धातु का यह निपातन है। और यहाँ भृश को अतिशय कहा जाता है। [ बाह् + त, ढत्व, धत्व, ष्टुत्व, ढलोप दीर्घ करने पर रूप बनता है। ]॥ १८॥

वियात का भाव—वैयात्य = प्रगल्भता, अविनीतता (धृष्टता) है। इस अर्थ में 'धृष्' तथा 'शस्' इनको निष्ठा परे इट् का आगम नहीं होता है। उदा० धृष्टः अयम्। विशस्तः अयम्।

---

१. प्रकृतसूत्रभाष्येऽर्थनिर्धारकाणि अष्टवचनानि दृश्यन्ते॥

**न भवति । धृष्टोऽयम् । विशस्तोऽयम् ।**

**धृषेः 'आदितश्च' (७. २. १६) इति प्रतिषेधः सिद्ध एव, शसेरपि 'उदितो वा' (७. २. ५६); 'यस्य विभाषा' (७. २. १५) इति ? नियमार्थं वचनम्–धृषिशस्योर्वैयात्ये एवेड् न भवति । भावादिकर्मणोरपि वैयात्ये धृषिर्नास्ति । धृष्टः । विशस्तः ।**

**वैयात्य इति किम् ? धर्षितः । विशसितः ॥**

## ३२९९. दृढः स्थूलबलयोः ॥ २० ॥ (३०६०)

**'दृढः' इति निपात्यते, स्थूले बलवति चार्थे । दृढः स्थूलः । दृढो बलवान् ।**

**किमत्र निपात्यते ? दृंहेः क्तप्रत्यये इडाभावः, हकारनकारयोर्लोपः, परस्य ढत्वम् । अथ दृहिः प्रकृत्यन्तरमस्ति ? तत्राप्येतदेव सर्वं नलोपवर्जनम्; नकारस्याभावात् ।**

### न्यासः

'ञिधृषा प्रागल्भ्ये' । **विशस्त इति ।** 'शसु हिंसायाम्', शसेरपि 'उदितो वा' इति विकल्पविधानाद् 'यस्य विभाषा' इतीट्प्रतिषेधः सिद्ध एवेति सम्बध्यते । यदि तर्हि सिद्ध एव प्रतिषेधः, तत् किमर्थं वचनम् ? इत्याह—**नियमार्थमित्यादि ।** वैयात्य एव वर्त्तमानयोर्यथा स्यात्, अन्यत्र मा भूत् । अथ धृषेः 'विभाषा भावादिकर्मणोः' इति विकल्पे प्राप्ते नित्यार्थं वचनमिति कस्मान्न भवति ? इत्याह—**भावादिकर्मणोरपीत्यादि ।** अत्र चाभिधान-शक्तिस्वाभाव्यं हेतुः । **धर्षित इति ।** पूर्ववत् कित्त्वे प्रतिषिद्धे गुणः ॥ १९ ॥

**दृढः स्थूलबलयोः ॥** बलवतीति मतुबन्तनिर्द्देशेनाशंआदित्वात् सूत्रे मत्वर्थीयाकारान्तो बलशब्दो निर्दिष्ट इति दर्शयति । **दृंहेरिति ।** 'दृहि वृद्धौ' इत्यस्य । **अथ वा–दृहिः प्रकृत्यन्तरमस्तीति ।** 'दृह दृहि वृद्धौ' इति केश्चित् पाठात् । **नकारस्याभावादिति ।** नकारस्योपदेशाभावादनिदित्वाच्च नकारस्याभावादिति ।

### पदमञ्जरी

**शसेरपीत्यादौ** ग्रन्थे इट्प्रतिषेधः सिद्ध इत्यनुषङ्गः । अथ धृषेः 'विभाषा भावादिकर्मणोः' इति विकल्पे प्राप्ते नित्यार्थं ग्रहणं कस्मान्न भवति ? तत्राह—**भावादिकर्मणोरपीति ।** एवं चास्य आदित्त्वे प्रयोजनं चिन्त्यम् । **धर्षितः** = अभिभूतः, पूर्ववदकित्वम् । **विशसितः** = विकृतः ॥ १९ ॥

**दृढः स्थूलबलयोः ॥** स्थूलः = मांसलः, दुर्बलोऽपि । अस्थूलोऽपि बलवान् = बलः । **बलवति चेति ।** सूत्रे अर्शआद्यच्प्रत्ययान्तं बलशब्दं दर्शयति । **दृंहेरिति ।** 'दृहि वृद्धौ' इत्येतावान्पाठः—इति **वार्तिककारस्य** पक्षः, 'दृह दृहि वृद्धौ' ( धा० पा० ७३४, ३५ )—इति **भाष्यकारस्य** ।

### भावबोधिनी

'धृष' [ ञि धृषा प्रागल्भ्ये ] को 'आदितश्च' इस पूर्व सूत्र से इट् प्रतिषेध सिद्ध ही है और 'शस्' को भी 'उदितो वा' "यस्य विभाषा" सूत्र से प्रतिषेध सिद्ध है ? तो यह सूत्र नियम करने के लिए है—धृष् तथा शस् धातुओं को वैयात्य = प्रगल्भता अर्थ में ही इट् नहीं होता है । [ अन्य अर्थ में होता ही है । ] भाव तथा आदि कर्म में भी वैयात्य में धृषि [ प्रयुक्त ] नहीं है । धृष्टः । विशस्तः ।

वैयात्य में—इसका क्या फल है ? धर्षितः । विशसितः । [ धर्षित = अभिभूत, दबाया गया । विशसित= विकृत । कित् न होने से धृष् का गुण, रपर होता है । ] ॥ १९ ॥

स्थूल तथा बलवान अर्थों में 'दृढः' ऐसा निपातित होता है । उदा० दृढः स्थूलः । दृढः बलवान् ।

इसमें क्या निपातन होता है ? 'दृंह्' धातु का क्त प्रत्यय परे रहते इट् का अभाव, हकार नकार का लोप परवर्त्ती का ढत्व । [ दृंह् + क्त हकार नकार के लोप के बाद दृ + त, ढत्व करने पर दृढ । ] यदि 'दृह' यह अलग धातु है ? वहाँ भी नलोप के अतिरिक्त यह सभी कुछ करना है, क्योंकि नकार ( अनुस्वार ) नहीं हैं ।

हलोप-निपातन पूर्वत्रासिद्धत्व की निवृत्ति के लिए है । [ भाव यह है कि यदि 'ह का ढ' निपातित करके

हलोपनिपातनं पूर्वत्रासिद्धत्वनिवृत्त्यर्थम् । ढलोपे हि सति तस्य पूर्वत्रासिद्धत्वाद् द्रढिमा, द्रढीयान्, द्रढीयतीत्यत्र 'र ऋतो हलादेर्लघोः' ( ६.२.१६१ ) इति रेफो न स्यात्, इह च परिद्रढय्य गत इति 'ल्यपि लघुपूर्वात्' ( ६.४.५६ ) इति णेरयादेशो न स्यात्, इह च परिदृढस्यापत्यं पारिद्रढी कन्येति गुरूपोत्तमलक्षणः ( ४.१.७८ ) ष्यङ् च प्रसज्येत ।

स्थूलबलयोरिति किम् ? दृंहितम्, दृहितम् ॥

## ३३००. प्रभौ परिवृढः ॥ २१ ॥ ( ३०६१ )

**न्यासः**

अथ हकारलोपः किमर्थं निपात्यते ? न ढकार एव निपात्यताम्, परस्य च धत्वे ष्टुत्वे कृते, ढो ढे लोपे च कृते सिद्धं दृढ इति । अत्राप्ययमर्थः—परस्य ढत्वं निपातयितव्यं न भवति, ष्टुनैव सिद्धत्वात् ? इत्यत आह—**हलोपनिपातनमित्यादि** । यदि हकारस्य ढकारो निपात्यते तदा 'ढो ढे लोपः', तस्य 'पूर्वत्रासिद्धम्' इत्यसिद्धत्वं स्यात्, सिद्धश्चासाविष्यते । तस्मात् पूर्वत्रासिद्धत्वनिवृत्तये हलोपो निपात्यते, न ढकार इति । कः पुनरसिद्धत्वे दोषो यत्परिहाराय पूर्वत्रासिद्धत्वनिवृत्त्यर्थं हकारलोपो निपात्यते, न ढकारः ? इत्यत आह—**ढलोप इत्यादि** । यदि हि ढकारो निपात्यते, तदा 'ढो ढे लोपः' कर्त्तव्यः, तस्मिंस्तु सति लोपे द्रढिमेत्यादौ 'र ऋतो हलादेर्लघोः' इति रेफो न स्यात्, ढलोपस्यासिद्धत्वे 'संयोगे गुरु' इति गुरुसंज्ञायामुपजातायां लघुसंज्ञायां बाधितत्वात् । **द्रढिमेति** । 'वर्णदृढादिभ्यः ष्यञ्च' इतीमनिच्, 'तुरिष्ठेमेयःसु' इति टिलोपः । **द्रढीयानिति** । 'द्विवचनविभज्योपपदे तरबीयसुनौ' इतीयसुन्प्रत्ययः । **द्रढयतीति** । द्रढमाचष्ट इति 'तत्करोति तदाचष्टे' इति णिच्, 'णाविष्ठवत् कार्यं प्रातिपदिकस्य' इतीष्ठवद्भावेन रेफटिलोपौ । **परिद्रढय्य गत इति** । दृढमाचष्टे इति णिच् । रभावे कृते ण्यन्तस्य परिणा योगः, ततः क्त्वा, प्रादिसमासः, 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' इति ल्यप् । **पारिद्रढी कन्येति** । परिद्रढशब्दादिञ्, 'इतो मनुष्यजातेः' इति ङीष् । **ष्यङ् प्रसज्येतेति** । 'अणिञोरनार्षयोर्गुरूपोत्तमयोः' इत्यादिना ।

**दृंहितमिति** । दृंहेः प्रत्युदाहरणम् । **दृहितमिति** । दृहेः ॥ २० ॥

**प्रभौ परिवृढः ॥ पूर्वेण समानमिति** । निपातनस्येडभावादेस्तुल्यत्वात् । यथैव हि पूर्वस्मिन् सूत्रे

**पदमञ्जरी**

अथ किमर्थं हकारस्य लोपो निपात्यते, न ढत्वमेव निपात्यताम्, परस्य धत्वं ष्टुत्वम्, 'ढो ढे लोपः' दृढ इति सिद्धम् ? इत्यत आह—**हकारलोपनिपातनमिति । रेफो न स्यादिति** । 'रादिफः' ( वा० ३२१ ) इत्यत्र वर्णादिति नापेक्ष्यते, तेन रशब्दो न स्यादित्यर्थः । ढलोपस्यासिद्धत्वे 'संयोगे गुरु' इति गुरुसंज्ञयोपजातया लघुसंज्ञाया बाधितत्वात्तन्निबन्धनकार्याप्रसङ्ग इत्यर्थः । **इह चेति** । गुरुसंज्ञानिबन्धनकार्यप्रसङ्गश्चेत्यर्थः । **दृंहितमिति** । दृंहेः प्रत्युदाहरणम् । **दृहितमिति** दृहेः । अत्र च दीर्घादिरूपेण वृद्धमुच्यते ॥ २० ॥

**प्रभौ परिवृढः ॥ पूर्वेण समानमिति** । इडभावादेर्निपात्यस्य तुल्यत्वात् । **वृहेरिति** । 'वृहि वृद्धौ'

**भावबोधिनी**

'ढो ढे लोपः' से ढ लोप किया जाय तो इष्ट कार्य नहीं हो सकते क्योंकि 'ढो ढे लोपः' ( ८।३।१३ ) त्रिपादी है। अतः सपादसप्ताध्यायीस्थ सूत्रों की दृष्टि में असिद्ध हो जायगा। फलतः इष्ट रूप नहीं बन पायेगा। यही लिख रहे हैं— ] ढ का लोप करने पर इस लोप के 'पूर्वत्रासिद्धम्' (८।२।१) से असिद्ध हो जाने के कारण—द्रढिमा, द्रढीयान्, द्रढीयति—इनमें 'र ऋतो हलादेर्लघोः' ( ६।२।१६१ ) इससे रेफ आदेश नहीं हो सकेगा। और 'परिद्रढय्य गतः' यहाँ पर 'ल्यपि लघुपूर्वात्' ( ६।४।५४ ) इस सूत्र से णि का अय् आदेश नहीं होगा। और 'परिदृढस्य अपत्यं पारिदृढी कन्या' इस अर्थ में गुरूपोत्तम लक्षण ("अणिञोरनार्षयोर्गुरूपोत्तमयोः" ४।१।७८) ष्यङ् प्रत्यय प्रसक्त होगा।

स्थूल तथा बलवान् इन अर्थों में—इसका क्या फल है ? दृंहितम्, दृहितम्। [ दो धातुओं से रूप बनने से प्रत्युदाहरण भी दो दिये गये हैं। ] ॥ २० ॥

प्रभु = स्वामी अर्थ हो तो 'परिवृढ' ऐसा निपातित होता है। उदा० परिवृढः कुटुम्बी। यह पूर्ववर्ती के

**'परिवृढः' इति निपात्यते प्रभुश्चेद्भवति । परिवृढः कुटुम्बी । पूर्वेण तुल्यमेतत् । बृंहेर्निपातनम् ।**

**वृहिश्च यदि प्रकृत्यन्तरमस्ति, तस्यापि तदेव सर्वम् । हलोपनिपातनस्य च तदेव प्रयोजनम् । परिव्रढयति । परिव्रढय्य गतः । पारिवृढी कन्येति ।**

**परिवृढमाचष्टे इति विगृह्य वृढशब्दादेव णिजुत्पद्यते । संग्रामयतेरेव सोपसर्गाण्णिजुत्पत्तिरिष्यते नान्यस्मादिति । तथा सति परिव्रढयतीति 'तिङ्ङतिङः' (८.२.२८) इति निघातो भवति । परिव्रढय्येत्यत्र**

**न्यासः**

कप्रत्यये कृते हकारनकारयोर्लोप इडभावश्च परस्य ढत्वं निपातितम्, तथेहापि तत्सर्वं निपात्यते । **बृंहेर्निपातनमिति ।** 'बृहि वृद्धौ' इत्यस्य । **वृहिश्च यदि प्रकृत्यन्तरमस्ति ततस्तस्यापीति ।** निपातनमेतदिति प्रकृतेन सम्बन्धः । प्रकृत्यन्तरास्तित्वं तु 'वृह वृद्धौ' इति कैश्चिदुक्तम् । **तदेव प्रयोजनमिति ।** पूर्वत्रासिद्धत्वनिवृत्तिः । **परिव्रढयतीति ।** अत्र ढलोपे सति पूर्ववद्रेफो न स्यात् । **परिव्रढय्य गत इति ।** हलोपनिपातने तु न भवन्त्येते दोषाः ।

**परिव्रढमाचष्ट इत्यादि ।** कथं पुनः परिवृढशब्देन विग्रहे कृते णिचो वृढशब्दादेवोत्पत्तिर्लभ्यते ? इत्याह—**संग्रामयतेरित्यादि ।** 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च' इत्यनेनैव णिचि सिद्धे 'संग्रामे' इत्यस्य सोपसर्गस्य गणे यः पाठः स नियमार्थः—संग्रामयतेरेव सोपसर्गाण्णिजुत्पत्तिर्यथा स्यात्, अन्यत्र मा भूदिति । तदेवं संग्रामयतेरेव यस्मात् सोपसर्गाण्णिजुत्पत्तिरिष्यते, नान्यस्मात् । तस्माद् यद्यपि 'परिवृढमाचष्टे' इति विग्रहः क्रियते, तथापि वृढशब्दाण्णिजुत्पद्यते, न च परिवृढशब्दात् । किमेवं सतीष्टं सिद्धं भवति ? इत्यत आह—**तथा च सतीत्यादि ।** वृढशब्दाण्णिजुत्पत्तौ सत्यां लकारो भवन्नयं णिज् यतो विहितस्तदादेरेव भवति प्रत्ययग्रहणपरिभाषया; 'सनाद्यन्ता धातवः' इति तदादेरेव धातुसंज्ञाविधानात् । तेन परेस्तिङन्तग्रहणेनाग्रहणात् ततोऽतिङन्तात् पदात् परस्य तिङन्तस्य पदस्य परिवृढयतीत्यत्र 'तिङ्ङतिङः' इति निघातस्वरः सिद्धो भवति । यदि पुनः परिवृढशब्दाण्णिजुत्पद्यते तदा लकारोऽपि तत एव णिजन्तात् स्यात् । एवञ्च परिशब्दस्य तिङ एवान्तर्भावादतिङन्तात् पदात् परमत्र तिङन्तं न भवतीति निघातो न स्यात् । किञ्च—यदा वृढशब्दाण्णिजुत्पद्यते न परिवृढशब्दात्, तदा क्त्वाप्रत्ययोऽपि वृढशब्दाण्णिजन्ताद्भवति । तेन परिशब्दस्य क्त्वान्तेन

**पदमञ्जरी**

( धा० पा० ७३५ ) इति **वार्तिककारस्य** पक्षः । 'वृह वृहि वृद्धौ' ( धा० पा० ७३५, ३६ ) इति **भाष्यकारस्य ।**

**वृहिश्च यदि प्रकृत्यन्तरमस्तीति ।** ततस्तस्यापि निपातनमित्यर्थः । **तदेव प्रयोजनमिति ।** असिद्धत्वाभावः ।

अथ कथं परिवृढय्येत्यत्र ल्यबादेशः, यावता परिवृढमाचष्टे इति विग्रहे तत एव णिच् कर्त्तव्यः, समुदायस्य च धातुत्वात् क्त्वाप्रत्ययोऽपि तत एव कर्त्तव्यः, ततश्च परेरपि क्त्वान्तेऽन्तर्भावान्नायं समासः; इह च परिव्रढयतीति परिशब्दस्य तिङन्तेऽन्तर्भावात् 'तिङ्ङतिङः' इति निघातो न स्यात् ? इत्यत आह—**परिवृढमाचष्ट इति विगृह्येति । णिजुत्पद्यत इति ।** ण्यन्तं पठितव्यम् । अण्यन्तपाठे तु विगृह्येति क्त्वाप्रत्ययो

**भावबोधिनी**

के समान है । बृंह् का निपातन है । [ इसमें भी इट् का अभाव, हकार नकार का लोप, परवर्ती का ढत्व किया जाता है । ]

यदि 'वृहि' यह अलग दूसरी धातु है तो उसका भी वही सब निपातन होता है । हलोपनिपातन का भी वही ( पूर्वत्रासिद्धत्व की निवृत्ति ) प्रयोजन है । उदा० परिव्रढयति । परिव्रढय्य गतः । पारिवृढी कन्या ।

परिवृढम् आचष्टे—यह विग्रह करके वृढ शब्द से ही णिच् प्रत्यय होता है । 'संग्रामयति' केवल इसी उपसर्गविशिष्ट से णिच् प्रत्यय होना इष्ट है अन्य किसी भी उपसर्गविशिष्ट से णिच् नहीं होता है । ऐसा होने पर 'परिवृढयति' इसमें "तिङ्ङतिङः" ( ८।२।२८ ) इससे निघात=अनुदात्त होता है । 'परिव्रढय्य' यहाँ पर 'परि' शब्द का क्त्वा प्रत्ययान्त के साथ समास करने पर [ 'क्त्वा' का ] ल्यप् आदेश सिद्ध हो जाता है ।

परिशब्दस्य क्त्वाप्रत्ययान्तेन समासे सति ल्यबादेशः सिद्धो भवति ।

प्रभाविति किम् ? परिवृंहितम्, परिवृहितम् ॥

**३३०१. कृच्छ्रगहनयोः कषः ॥ २२ ॥ (३०६२)**

कृच्छ्र, गहन—इत्येतयोरर्थयोः कषेर्धातोर्निष्ठायामिडागमो न भवति । कष्टोऽग्निः । कष्टं व्याकरणम् । ततोऽपि कष्टतराणि सामानि । कृच्छ्रम् = दुःखम्, तत्कारणमप्यग्न्यादिकं कृच्छ्रमित्युच्यते ।

गहने—कष्टानि वनानि । कष्टाः पर्वताः ।

कृच्छ्रगहनयोरिति किम् ? कषितं सुवर्णम् ॥

**न्यासः**

समर्थेन शब्दान्तरेण 'कुगतिप्रादयः' इति समासे कृते परिव्रढय्येत्यत्र ल्यबादेशः सिद्धो भवति । परिवृढशब्दाण्णिजुत्पत्तौ क्त्वाप्रत्ययोऽपि परिवृढशब्दादेव णिजन्तादुत्पद्यते, ततः समासो न स्यात्; कुगतिप्रादयः समर्थेन शब्दान्तरेण समस्यन्ते, न चात्र परेः परं क्तान्तं शब्दान्तरमस्ति । एकमेव हीदं क्तान्तं परिणा सह शब्दरूपम्; तत्रैव परिशब्दस्यान्तर्भावात् । असति च समासे "समासेऽनञ्पूर्वे" इत्यादिना ल्यबादेशो न स्यात् । **परिवृंहितमिति** । वृंहेः प्रत्युदाहरणम् । **परिवृहितमिति** । वृहेः ॥ २१ ॥

**कृच्छ्रगहनयोः कषः** ॥ **कष्ट इति** । कषिशिषीत्यादिर्हिंसार्थधातुवर्गे कषिः पठ्यते । किं पुनः कृच्छ्रं नाम ? इत्याह—**कृच्छ्रं दुःखमिति** । यद्येवम्, दुःखे प्राणिधर्मे प्रतिषेध उच्यमानोऽग्न्यादौ न सिध्यति ? इत्याह—**तत्कारणमप्यग्न्यादिकं कृच्छ्रमुच्यत इति** । कारणे कार्योपचारात्, यथा—नड्वलोदकं पादरोग इति । चिन्त्यं पुनरेतत्, किं मुख्ये सति गौणस्य ग्रहणं युक्तम् ? उत नेति ? यदि तु कृच्छ्रशब्दाण्णिजन्तात् पचाद्यचमुत्पाद्य कृच्छ्रयतीति कृच्छ्र इत्येवं व्युत्पाद्यते, तदा कृच्छ्रशब्दोऽपि मुख्येऽग्न्यादावपीति न किञ्चिच्चिन्त्यम्; न चास्यां व्युत्पत्तौ तत्कारणमप्यग्न्यादिकं कृच्छ्रमित्युच्यत इत्येतद्विरुध्यते । यद्धि कृच्छ्रयति तन्नियोगात् एव दुःखस्य कारणं भवति ॥ २२ ॥

**पदमञ्जरी**

न स्यात्; असमानकर्तृकत्वात् । **संग्रामयतेरेव सोपसर्गादिति** । यदत्र वक्तव्यं तद् 'भृशादिभ्यो भुव्यच्वेः' इत्यत्रैवोक्तम् । **निघातो भवतीति** । अड्द्विर्वचनयोरप्युपलक्षणमेतत्—पर्यव्रढयत्, परिविव्रढयिषति । **परिवृंहितमिति** । वृंहेः प्रत्युदाहरणम् । **परिवृहितमिति** । वृहेः ॥ २१ ॥

**कृच्छ्रगहनयोः कषः** ॥ कषतिर्हिंसार्थः (धा० पा० ६८५) । **कष्टोऽग्निरिति** । चीयमानोऽग्निरत्राग्निशब्देन विवक्षितः, स कष्टो भवति; चयनप्रकारस्य दुर्ज्ञानत्वात् । व्याकरणस्य कष्टत्वमिडागमादिव्यवस्थाया दुर्ज्ञानत्वात् । साम्नां कष्टत्वं पर्वभेदस्य स्वरस्य स्तोभादीनां च दुर्ज्ञानत्वात् । **कारणमपीति** । लक्षणया, कृच्छ्रमिति व्युत्पत्त्या वा ॥ २२ ॥

**भावबोधिनी**

प्रभु अर्थ में—इसका क्या फल है ? परिवृंहितम्, परिवृहितम् । [ यहाँ इट् होता है । लोप आदि नहीं होते हैं । ] ॥ २१ ॥

कृच्छ्र तथा गहन—इन अर्थों में 'कष' धातु को निष्ठा में इट् आगम नहीं होता है । उदा० कष्टः अग्निः । कष्टं व्याकरणम् । [ कष् + क्त, इट् निषेध, ष्टुत्व । ] इससे भी कष्टतर सामवेद हैं । कृच्छ्र = दुःख, उस दुःख का कारण अग्नि आदि भी 'कृच्छ्र' ऐसा कहा जाता है, अर्थात् दुःख का जनक अग्नि भी 'कष्ट' कहा जाता है ।

गहन अर्थ में—कष्टानि वनानि । कष्टाः पर्वताः । [ यहाँ गहन अर्थ है । ]

कृच्छ्र तथा गहन अर्थों में—इसका क्या फल है ? कषितं सुवर्णम् । [ सोना कसा गया । यहाँ इट् होता है । ] ॥ २२ ॥

## ३३०२. घुषिरविशब्दने ॥ २३ ॥ (३०६३)

घुषेर्धातोरविशब्दनेऽर्थे निष्ठायामिडागमो न भवति । घुष्टा रज्जुः । घुष्टौ पादौ ।

अविशब्दन इति किम् ? अवघुषितं वाक्यमाह ।

विशब्दनम् = प्रतिज्ञानम् । 'घुषिरशब्दार्थे' ( धा० पा० ६५३ ) इति भ्वादिषु पठ्यते, 'घुषिर-विशब्दने' ( धा० पा० १७२७ ) इति चुरादिषु; तयोरिह सामान्येन ग्रहणम् । विशब्दनप्रतिषेधश्च ज्ञापकः— 'चुरादिणिज्विशब्दनार्थस्यानित्यः' इति । तेनायमपि प्रयोग उपपन्नो भवति—'महीपालवचः श्रुत्वा जुघुषुः पुष्पमाणवा.' ( म० भा० ) इति । स्वाभिप्रायं शब्देनाविष्कृतवन्त इत्यर्थः ॥

### न्यासः

घुषिरविशब्दने ॥ विशब्दनं प्रतिज्ञानमिति । स्वाभिप्रायस्य शब्देनाविष्करणमित्यर्थः । सामान्येन ग्रहणमिति । विशेषानुपादानात् । यदि 'घुषिरविशब्दने' इति चुरादौ पठ्यते, एवं सति णिचा भवितव्यम्, न च णिजन्तस्येटि सत्यसति वा कश्चिद्विशेषोऽस्ति । तथा हि—इटि सति 'निष्ठायां सेटि' इति णिलोपे कृते घोषितमिति यद्रूपं भवत्यसत्यपीटि णिलोपाभावात् तदेव । न च तदन्तादिट्प्रतिषेधस्य प्राप्तिरस्ति; 'एकाचः' इत्यधिकारात् । भौवादिकस्य घुषेर्विशब्दने वृत्तिरेव नास्ति, शब्दशक्तिस्वाभाव्यात्, तत्किं विशब्दनप्रतिषेधेन ? इत्यत आह—विशब्दनप्रतिषेध इत्यादि । यदि च नित्यो णिच् स्यात्, तदा यथोक्तया रीत्या प्रतिषेधोऽनर्थकः स्यात्, ततश्च न कर्तव्य एव स्यात्, कृतश्च, तस्मादयमेव प्रतिषेधो ज्ञापयति—चुरादिणिज्विशब्दनार्थस्यानित्य इति । जुघुषुरिति । अनित्यप्रतिज्ञाप्रयोजनम् । असति ह्यनित्यत्वे घोषयाञ्चक्रुरिति स्यात् ॥ २३ ॥

### पदमञ्जरी

घुषिरविशब्दने ॥ घुष्टा = अविशब्दिता । अवघुषितम् = विशब्दितम्, आविष्कृताभिप्रायमित्यर्थः । चौरादिकस्य चायं प्रयोगः, स एव ह्यस्मिन्नर्थे वर्तते । द्वावपीति । घुषिरिति सूत्रोपात्तं रूपं द्वयोरपि साधारणमित्यर्थः । कथं सामान्येन ग्रहणम्, यावता विशब्दने णिचा भवितव्यम्, केवलश्चेह घुषिरुपात्तः ? अत आह—विशब्दनप्रतिषेधश्चेति । विशब्दनार्थस्यानित्य इति । अन्ये तु 'अनित्यण्यन्ताश्चुरादयः' इति सामान्येन ज्ञापकमाहुः । अपर आह—

### भावबोधिनी

घुष धातु को अविशब्दन अर्थ में निष्ठा में इट् का आगम नहीं होता है । [ विशब्दन = शब्द द्वारा अपना अभिप्राय प्रकट करना । इससे विपरीत दशा में यह इट् नहीं होता है । ] उदा० घुष्टा रज्जुः । घुष्टौ पादौ । [ घुष् + क्त, इट् नहीं होता है । ष्टुत्व होता है । ]

अविशब्दन अर्थ में—इसका क्या फल है ? अवघुषितं वाक्यम् आह । [ यहाँ इट् होता है । ]

विशब्दन = प्रतिज्ञान । 'घुषिः अशब्दार्थे' यह भ्वादि में पठित है, 'घुषिः अविशब्दने' यह चुरादि में पठित है । यहाँ इन दोनों का सामान्यरूप से ग्रहण है । विशब्दन का प्रतिषेध ज्ञापक है—'चुरादि णिच् विशब्दनार्थ का अनित्य है' [ अर्थात् होता है और नहीं भी होता है । ] इससे यह प्रयोग भी उपपन्न होता है—"महीपालवचः श्रुत्वा जुघुषुः पुष्पमाणवाः ।' अपने अभिप्राय को शब्द द्वारा आविष्कृत किया—यह अर्थ है ।

विमर्श—'घुष्' धातुएं दो हैं—(१) "घुषिरशब्दार्थे" यह भ्वादिगणीय और (२) "घुषिरविशब्दने" यह चुरादिगणीय । इन दोनों का ग्रहण है । यदि चुरादिगणीय है तो णिच् भी होना चाहिए । यदि णिजन्त है तो इट् होने या न होने पर कोई अन्तर नहीं आता है । क्योंकि इट् कर देने पर भी 'निष्ठायां सेटि' सूत्र से णिलोप कर देने पर 'घोषितम्' यही होता है । यदि इट् नहीं होता है तो णिलोप भी नहीं होता है । फलतः 'घोषितम्' यही रूप बनता है । अतः प्रस्तुत सूत्र द्वारा विशब्दन का प्रतिषेध ज्ञापक बनता है कि विशब्दनार्थक का णिच् अनित्य है । अतः णिच् नहीं भी होता है । इसीलिए 'जुघुषुः' ऐसा प्रयोग बन पाता है । नित्य णिच् होने पर 'घोषयाञ्चक्रुः' ऐसा ही रूप होता ॥ २३ ॥

**३३०३. अर्दः संनिविभ्यः ॥ २४ ॥ ( ३०६४ )**

सम्, नि, वि—इत्येतेभ्य उत्तरस्यार्देर्निष्ठायामिडागमो न भवति । **समर्णः । न्यर्णः । व्यर्णः ।** अर्देरिति किम् ? समेधितः । संनिविभ्य इति किम् ? अर्दितः ॥

**३३०४. अभेश्चाविदूर्ये ॥ २५ ॥ ( ३०६५ )**

अभिशब्दादुत्तरस्यार्देराविदूर्येऽर्थे निष्ठायामिडागमो न भवति । **अभ्यर्णा सेना । अभ्यर्णा शरत् ।** आविदूर्य इति किम् ? अभ्यर्दितो वृषलः । शीतेन पीडित इत्यर्थः ।

विदूरम् = विप्रकृष्टम्, ततोऽन्यदविदूरम्, तस्य भाव आविदूर्यम् । एतस्मादेव निपातनात् 'न

**न्यासः**

**अर्दः सन्निविभ्यः ॥ अर्देरिति ।** 'अर्द गतौ याचने च' ॥ २४ ॥

**अभेश्चाविदूर्ये ॥ विदूरं विप्रकृष्टमिति ।** विशेषेणातिशयेन दूरं विदूरमिति कृत्वा, ततोऽन्यदविदूरम् । तत् पुनर्यदासन्नं यच्चादूरं न त्वतिविप्रकृष्टं तदिति वेदितव्यम् । **तस्य भाव आविदूर्यमिति ।** ब्राह्मणादित्वात्

**पदमञ्जरी**

"चिति स्मृत्यामितीदित्त्वमत्र ज्ञापकमस्य हि ।
फलं 'चिन्तित' इत्यादौ नलोपो मा स्म भूदिति ॥
नित्ये च णिचि सत्यत्र नलोपस्याप्रसङ्गतः ।
'चिन्त स्मृत्यामि'त्येव च पठितव्यं भवेदिति" ॥[1]

**अयमपीति ।** यद्यपि अवघुषितं वाक्यमाह—इत्येतदपि प्रयोजनम्, तथापि जुघुषुरित्यपि प्रयोग उपपन्न इत्यर्थः ॥ २३ ॥ २४ ॥

**अभेश्चाविदूर्ये ॥ विशेषेण दूरं विदूरं ततोऽन्यदिति ।** तत्पुनर्यदासन्नमविप्रकृष्टं वा भवति तद्वेदितव्यम् । **तस्य भाव आविदूर्यमिति ।** ब्राह्मणादेराकृतिगणत्वात् ष्यञ् । ननु च 'न नञ्पूर्वात्तत्पुरुषात्' इति

**भावबोधिनी**

सम्, नि, वि—इनसे उत्तरवर्त्ती 'अर्द' धातु को निष्ठा परे इट् आगम नहीं होता है । उदा० समर्णः । न्यर्णः । व्यर्णः । [ सम् अर्द + क्त, इट् निषेध के बाद 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' सूत्र से त और द् के न् आदेश, रेफ से परे णत्व, ष्टुत्व से द्वितीय न का ण्, पूर्व ण् का वैकल्पिक लोप । ]

अर्द् को हीं—इसका क्या फल है ? समेधितः । [ सम् + एध् + क्त, इट् होता है । ]

सम्, नि, वि—इनसे परे—इसका क्या फल है ? अर्दितः । [ अकेले धातु से इट् निषेध नहीं होता है । ] ॥ २४ ॥

अभिशब्द से उत्तरवर्त्ती अर्द् को आविदूर्य अर्थ में निष्ठा परे इट् आगम नहीं होता है । उदा० अभ्यर्णा सेना । अभ्यर्णा शरत् । [ अभि + अर्द् + क्त, पूर्ववत् सभी कार्य होते हैं । स्त्रीलिङ्ग होने से टाप् होता है । ]

आविदूर्य अर्थ में—इसका क्या फल है ? अभ्यर्दितः वृषलः । शीत द्वारा पीड़ित—यह अर्थ है । [ यहाँ इट् निषेध नहीं होता है । ]

विदूर = विप्रकृष्ट, बहुत दूर । इससे भिन्न = अविदूर । इसका भाव—आविदूर्य = दूर न होना, अर्थात् समीपवर्त्ती । इसी के कारण "नञ् पूर्वक तत्पुरुष से भाव प्रत्यय नहीं होता है" इस सूत्र द्वारा उत्तरवर्त्ती भाव प्रत्यय ( ष्यञ् ) का प्रतिषेध नहीं होता है ।

**विमर्श**—'न नञ्पूर्वात् तत्पुरुषादचतुर-संगत-लवण-वटयुध-कतरसलसेभ्यः ( ५।३।१२१ ) यह सूत्र त्व तल् के आगे वाले ष्यञ् आदि भावप्रत्ययों का निषेध नञ्तत्पुरुष से करता है । ऐसी स्थिति में अविदूरस्य भावः—आविदूर्यम्

१. श्लोकाशयज्ञानार्थं मेतत् सूत्रस्थः कैयटप्रदीपो द्रष्टव्यः ।

**नञ्पूर्वात्तत्पुरुषात्' ( ५.१.१२१ ) इत्युत्तरस्य भावप्रत्ययस्य प्रतिषेधो न भवति ॥**

**३३०५. णेरध्ययने वृत्तम् ॥ २६ ॥ ( ३०६६ )**

**ण्यन्तस्य वृत्तेर्निष्ठायामध्ययनार्थे वृत्तमितोऽभावो णिलुक्च निपात्यते । वृत्तो गुणो देवदत्तेन । वृत्तं पारायणं देवदत्तेन ।**

**अध्ययन इति किम् ? वर्त्तितमन्यत् ।**

**वृतिरयमकर्मकः, स ण्यर्थे वर्त्तमानः सकर्मको भवति । 'तेन निर्वृत्तम्' इति हि प्रकृतेरेव कर्मणि**

**न्यासः**

ष्यञ् । ननु च 'न नञ्पूर्वात् तत्पुरुषात्' इत्युत्तरस्य भावप्रत्ययस्य प्रतिषिद्धत्वात् ष्यञा न भवितव्यम् ? इत्यत आह—**एतस्मादेवेत्यादि** । उत्तरत्वं तु भावप्रत्ययस्य त्वतलापेक्षया वेदितव्यम् ॥ २५ ॥

**णेरध्ययने वृत्तम् ॥ अध्ययनमिति** । 'कृत्यल्युटो बहुलम्' इति ल्युट् । अधीयत इत्यध्ययनम्—कर्मसाधनोऽध्ययनशब्दः । भावसाधने हि वृत्तो गुणो देवदत्तेनेति न स्यात्, वृत्तं गुणस्य देवदत्तेनेति स्यात् । निष्ठाविशेषणञ्चैतत् । अध्येतव्याभिधायिन्यां निष्ठायामित्यर्थः । **णिलुक् चेति** । णिलुग्निपातनं प्रत्ययलक्षण-प्रतिषेधार्थम् । लोपे हि प्रत्ययलक्षणेन गुणः स्यात् । लुकि सति 'न लुमताङ्गस्य' इति प्रत्ययलक्षणप्रतिषेधाद् गुणो न स्यात् । **वृत्तो गुण इति** । गुणः कश्चिदेवाध्ययनविशेष इहोच्यते ।

**वृतिरयमकर्मक इति** । वृत्तं गुणस्य, वृत्तं पारायणस्येति भावे निष्ठादर्शनात् । अकर्मकाणां हि भावे निष्ठा भवति, न सकर्मकाणाम् । **स ण्यर्थे इत्यादि** । सोऽन्तर्भावितण्यर्थो यदा भवति तदा प्रकृत्यन्तो ण्यर्थे वर्त्तमानः सकर्मको भवति, यथा "वर्द्धन्तु त्वां सुष्टुतय" इत्यत्र वृधिः । कथमेतद् विज्ञायते ? इत्याह—**तेन निर्वृत्तमित्यादि** । न चैतद्वक्तव्यम्—अकर्मका इति । 'धातवः सोपसर्गाः सकर्मका भवन्ति' इति सोपसर्गत्वादिह

**पदमञ्जरी**

प्रतिषेधः प्राप्नोति ? तत्राह—**एतस्मादेवेति** । 'न नञ्पूर्वात्' इत्ययमधिकारः, तेन ततः सूत्रादुत्तरस्य भाव-प्रत्ययस्य प्रतिषेधस्तत्र क्रियत इति—**उत्तरस्येत्युक्तम्** ॥ २५ ॥

**णेरध्ययने वृत्तम्** ॥ अधीयत इत्यध्ययनमिति 'कृत्यल्युटो बहुलम्' इति कर्मणि ल्युट् । निष्ठाविशेषणं चैतत्—अध्ययनाभिधायिन्यां निष्ठायामिति । **णिलुक्चेति** । प्रत्ययलक्षणेन गुणो मा भूदिति णेर्लुग्निपातनम्, लोपनिपातने तु गुणः स्यात् । **वृत्तो गुणो देवदत्तेनेति** । गुणः = पाठः पदक्रमसंहितारूपोऽध्ययनविशेषः, स वृत्तः = सम्पादित इत्यर्थः ।

**वृतिरयमित्यादिना** सूत्रस्यानारम्भमाशङ्कते । **अकर्मक इति** । वृत्तं गुणस्य, वृत्तं पारायणस्येति भावे क्तस्य प्रयोगार्थमिदमुक्तम् । अकर्मकत्वे हि भावे निष्ठा भवति; 'तयोरेव' इत्यत्र 'भावे चाकर्मकेभ्यः' इत्यनुवृत्तेः । योऽपि 'नपुंसके भावे क्तः' सोऽपि सकर्मकेभ्यो न भवति; 'तयोरेव' इत्यत्र क्तमात्रस्य ग्रहणात् । अन्यथा सकर्मकाद्भावे क्ते विधीयमाने कर्मणि द्वितीया प्रसज्येत-ग्रामं गतम्, ओदनं भुक्तमिति । यदि तर्ह्यकर्मकः, कथं वृत्तो

**भावबोधिनी**

यहाँ ष्यञ् नहीं होना चाहिए था । अतः यही निपातन बनता है कि आगे वाले भाव प्रत्यय ष्यञ् का प्रतिषेध नहीं होता है ॥ २५ ॥

णिजन्त 'वृति' धातु से निष्ठा परे रहते अध्ययन अर्थ में 'वृत्तम्' यहाँ इट् का अभाव तथा णिलुक् निपातित होता है । उदा० वृत्तः गुणः देवदत्तेन । [ गुण = पाठ, पद क्रम, संहिता रूप अध्ययन विशेष, वृत्त = सम्पादित कर लिया गया । ] वृत्तं पारायणं देवदत्तेन । [ देवदत्त ने पारायण सम्पन्न कर लिया है । ]

अध्ययन में—इसका क्या फल है ? अन्य अर्थ में—वर्त्तितम् यह होता है ।

'वृति' ( "वृतु वर्तने" ) यह अकर्मक है । वह ण्यर्थ में वर्त्तमान होने पर सकर्मक हो जाता है । **'तेन निर्वृत्तम्'** यहाँ प्रकृति से ही कर्म अर्थ में क्त प्रत्यय देखा जाता है, इसी प्रकार ण्यर्थ में वर्तमान ही 'वृत्' का—वृत्तो

**क्तप्रत्ययो दृश्यते । तद्वदिहापि ण्यर्थवृत्तेरेव च वृतेः वृत्तो गुणो देवदत्तेनेति भविष्यतीति निपातनमनर्थकम् ? तत्क्रियते—यदापि णिचैव ण्यर्थोऽभिधीयते तदा वर्त्तितमित्यध्ययने मा भूदिति केचित् ।**

**अपरे तु—वर्त्तितो गुणो देवदत्तेन इत्यपीच्छन्ति ॥**

**३३०६. वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः ॥ २७ ॥ (३०६८)**

**न्यासः**

वृतेः सकर्मकत्वम् । न तु ण्यर्थवृत्तित्वादिति कुतो ण्यर्थावगतिः ? यदि सोपसर्गत्वादिह वृतेः सकर्मकत्वं स्यान्न ण्यर्थवृत्तित्वात्, ततो यथानुभूतः कम्बलो देवदत्तेनेत्यत्र ण्यर्थो न गम्यते, तथा तेन निर्वृत्तः इत्यत्रापि न गम्येत; गम्यते च, तस्माण्ण्यर्थवृत्तित्वादेव वृतेः सकर्मकत्वम् । यदा च ण्यर्थवृत्तिर्भवति तदा प्रयोजकव्यापारापेक्षयास्य कर्त्ता कर्मभावमापद्यत इति । तेन प्रयोज्येन कर्मणा सकर्मको भवति । **तद्वदिहापीत्यादि ।** यस्मादेवाकर्मकोऽपि स न प्रकृत्यन्त एव ण्यर्थे वर्त्तमानः सकर्मको भवति तस्माद् वृत्तो गुणो देवदत्तेनेत्यत्रापि ण्यर्थवृत्तेरेव कर्मणि क्तप्रत्ययो भविष्यति । ततश्च निपातनमनर्थकं स्यात्; विनापि तेन सिद्धत्वात् । कथमिति चेत् ? वृतेः क्त्वाप्रत्यये 'उदितो वा' इतीड्विकल्पे कृते निष्ठायाम्, 'यस्य विभाषा' इति प्रतिषेधात् । यद्येवम्, किमर्थं तदित्याह—**तत क्रियत इत्यादि ।** कदाचिण्ण्यर्थोऽन्तर्भावितण्यर्थतया प्रकृत्यैवाभिधीयते, कदाचिण्णिचा । तत्र यदा प्रकृत्यैवाभिधीयते तदा निरर्थकत्वान्निपातनं न कर्त्तव्यमेव । यदा तु णिचा ण्यर्थोऽभिधीयते, तत्र यदि निपातनं न क्रियेत, तदाध्ययनेऽपि वार्त्तितमिति स्यात् । तस्मादेतन्निवृत्त्यर्थं तदित्येके प्रतिपन्नाः । **अपरे त्वित्यादि ।** अन्ये तु वर्त्तितो गुण इत्यपीच्छन्ति । ण्यन्तस्याण्यन्तस्य च—वृत्तो गुण इति । तन्मतेन निपातनं न कर्त्तव्यमेव । क्रियमाणं वैचित्र्यार्थं वेदितव्यम् ॥ २६ ॥

**वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः ॥ दान्तः, शान्त इति ।** 'शमु दमु उपशमे' । हेतुमण्णिच्, णिलुगिट्प्रतिषेधयोः कृतयोः 'अनुनासिकस्य क्विझलोः क्ङिति', इति दीर्घः । ननु च णिलोपस्य स्थानिवद्भावाद् व्यवधाने सति न प्राप्नोति ? नैतदस्ति; न हि निपातनेन लोपे सति तस्य परनिमित्तत्वव्यपदेशो विद्यते, तत्

**पदमञ्जरी**

गुण इति कर्मणि निष्ठा ? इत्याशङ्क्याह—**स ण्यर्थे वर्तमाने इति ।** यदि वा—'अयं वृतिरकर्मकः स ण्यर्थे वर्तमानः' इत्येक एव ग्रन्थः, अकर्मका अपि धातवोऽन्तर्भावितण्यर्थाः प्रयोज्येन कर्मणा सकर्मका भवन्ति, यथा—राजयुध्वेति, दृश्यते च वृत्तेरन्तर्भावितण्यर्थस्य प्रयोग इत्याह—**तेन निर्वृत्तमिति हीति ।** न चात्रोपसर्गवशात्सकर्मकत्वम्, ण्यर्थगतेः वृत्तेर्णिचि योऽर्थः । 'निवर्त्यते यैर्नियमाभिषेकः ( रघु० ५.८ ) इत्यादौ तदवगतेरित्यर्थः । **तत्तस्मात् । वृत्तेरेवेति ।** प्रकृत्यन्तादेवेत्यर्थः । **वृत्तो गुण इति ।** 'उदितो वा' इति क्त्वायां विकल्पितेट्कत्वाद् 'यस्य विभाषा' इतीट्प्रतिषेधः सिद्धः,। तदेवं निपातनमनर्थकमित्येव मतं चोद्यम् । परिहरति—**तत्क्रियत इति ।** इष्टस्यान्यथासिद्धावप्यनिष्टनिवृत्त्यर्थं निपातनमित्यर्थः । **अपरे त्विति ।** तेषां मते नानेनार्थः सूत्रेण ॥२६॥

**वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः ॥ दान्तः, शान्त इति ।** 'दमिशमी उपशमनार्थे'

**भावबोधिनी**

गुणो देवदत्तेन' ऐसा हो जायगा, इसलिए निपातन अनर्थक है ? चूंकि यह निपातन किया गया है—'जब णिच् द्वारा ही णिजर्थ कहा जाता है तब 'वर्त्तितम्' यह प्रयोग अध्ययन अर्थ में न हो—इसके लिए हैं'--ऐसा कुछ लोग कहते हैं ।

दूसरे लोग तो--'वर्त्तितः गुणः देवदत्तेन' ऐसा भी चाहते हैं ।

**विमर्श**—इन उपर्युक्त मतभेदों से ऐसा प्रतीत होता है कि प्रस्तुत सूत्र द्वारा निपातन की आवश्यकता नहीं है । अतः इस सूत्र की विशेष उपयोगिता नहीं दिखाई देती है ॥ २६ ॥

'णेः' ( णिजन्त का )—इसकी अनुवृत्ति होती है । दम्, शम्, पूरी, दस्, स्पश्, छद्, ज्ञप्—इन णिजन्त धातुओं का विकल्प से अनिट्त्व निपातित होता है । उदा० दान्तः, दमितः । [ दम्+इ = णिच्+क्त, णिलुक् तथा

'णेः' इत्यनुवर्त्तते। दम्[1], शम्, पूरी, दस्, स्पश्, छद्, ज्ञप्—इत्येतेषां ण्यन्तानां धातूनां वा अनिट्त्वं निपात्यते[1]। दान्तः, दमितः। शान्तः, शमितः। पूर्णः, पूरितः। दस्तः, दासितः। स्पष्टः, स्पाशितः। छन्नः, छादितः। ज्ञप्तः, ज्ञपितः। इट्प्रतिषेधो णिलुक्च निपात्यते। ज्ञपेस्तु 'भरज्ञपिसनाम्' (७.२.४९) इति विकल्पविधानाद् 'यस्य विभाषा' (७.२.१५) इति नित्ये प्रतिषेधे प्राप्ते विकल्पार्थं निपातनम्॥

**न्यास**

कुतः स्थानिवद्भावः? 'न पदान्त' इत्यादिना दीर्घविधौ स्थानिवद्भावप्रतिषेधाच्च। **दमितः, शमित इति।** 'मितां ह्रस्वः' इति ह्रस्वत्वम्। **पूर्ण इति।** 'पूरी आप्यायने'। दिवादिश्चुरादिश्च। **दस्त इति।** 'तसु उत्क्षेपे' 'दसु च'। अत्रोपधाह्रस्वत्वमपि निपात्यते। **स्पष्टश्छन्न इति।** 'स्पश बाधनस्पर्शनयोः' 'छद अपवारणे'। अत्राप्युपधाह्रस्वत्वमपि निपात्यते। **ज्ञप्त इति।** 'ज्ञप मारणतोषणनिशामनेषु' इति चुरादिः, 'मारणतोषणनिशामनेषु ज्ञा मिच्च' इति घटादिश्च, ततो णिच्। **इट्प्रतिषेधो णिलुक्च इति।** चकारात् क्वचिदुपधाह्रस्वत्वमपि निपात्यते॥ २७॥

**पदमञ्जरी**

(धा० पा० १२०३, १२०१)। णिलुगिट्प्रतिषेधयोः 'अनुनासिकस्य क्विझलोः' इति दीर्घः। निपात्यमानस्य च णिलुकोऽपरनिमित्तकत्वाद्दीर्घविधिं प्रति निषेधाच्च स्थानिवद्भावो नास्ति। **पूर्ण इति।** 'पूरी आप्यायने' (धा० पा० ११५१, १८०३) दिवादिः, चुरादिश्च। **दस्त इति।** 'तसु उपक्षये' (धा० पा० १२१२) 'दसु च' (धा० पा० १२१३) अत्र ह्रस्वत्वमपि निपात्यते। **स्पष्टः। छन्न इति।** 'स्पश बाधनस्पर्शनयोः' (धा० पा० ८८७), 'छद अपवारणे' (धा० पा० १९३५)। अत्रापि ह्रस्वत्वमपि निपात्यते। **ज्ञप्त इति।** 'ज्ञप मिच्च' (धा० पा० १६२४) चुरादिः। **इट्प्रतिषेधो णिलुक्च निपात्यत इति।** चकारात्क्वचिदुपधाह्रस्वत्वं च। क्वचित्पठ्यते—**ज्ञपेर्भरज्ञपिसनामिति विकल्पविधानाद्यस्य विभाषेतीट्प्रतिषेधे प्राप्ते विकल्पार्थं निपातनमिति।** एकाज्ग्रहणम् 'यस्य विभाषा' इत्यत्र नानुवर्त्तत इति भावः।

अत्रादितश्चतुर्णां ग्रहणं शक्यमकर्त्तुम्। कथम्? अन्तर्भावितण्यर्थानां प्रकृत्यन्तानां दान्त इत्यादीनि रूपाणि, अन्यत्र ण्यन्तानां दमित इत्यादीनि॥ २७॥

**भावबोधिनी**

इट् का प्रतिषेध कर देने पर "अनुनासिकस्य क्विझलोः क्ङिति" इस सूत्र से उपधादीर्घ हो जाता है–दाम् + त, अनुस्वार, परसवर्ण–दान्तः। इट् होने पर दीर्घ नहीं होता है।] शान्तः, शमितः। [शम् + णिच् + क्त, णिलुक् ह्रस्व] पूर्णः, पूरितः। [पूरी = पूर् + णिच् + क्त, इट् निषेध, णिलुक् के बाद 'त' का न, णत्व। इट् पक्ष में पूरितः।] दस्तः, दासितः। [दस् + णिच् + क्त, इट्निषेध, उपधाह्रस्व भी निपातित होता है–दस्तः। इट् होने पर–दासितः।] स्पष्टः, स्पाशितः। [स्पश् णिच् + क्त, इट्प्रतिषेध, उपधाह्रस्वत्व निपातन–स्पश् + त, व्रश्चभ्रस्ज" सूत्र में षत्व, ष्टुत्व–स्पष्टः। इट् निषेध तथा उपधाह्रस्वत्व न होने पर—स्पाशितः] छन्नः, छादितः। [छद् + णिच् + क्त, इट् निषेध, उपधा ह्रस्वत्व, "रदाभ्यां निष्ठातो नः पूर्वस्य च दः" सूत्र से दोनों दोनों दकारों के दो नकार—छन्नः। इट् होने पर—छादितः] ज्ञप्तः, ज्ञपितः। [ज्ञप् + णिच् + क्त, इट् प्रतिषेध, णिलोप, वृद्धि का ह्रस्व—ज्ञप्तः। इट् होने पर—ज्ञपितः] इनमें इट् का प्रतिषेध और णिलुक् ये दोनों निपातित होते हैं। 'ज्ञप्' का तो "भरज्ञपिसनाम्" (२।७।१५) से विकल्प-विधान के कारण "यस्य विभाषा" सूत्र से नित्य प्रतिषेध के प्राप्त रहते विकल्प से इट् प्रतिषेध का निपातन किया गया है। [यहाँ के उदाहरणों में उपधावृद्धि होती है किन्तु मित् मानकर 'मितां ह्रस्वः' से ह्रस्व हो जाता है। जहाँ ऐसा सम्भव नहीं है वहाँ ह्रस्वत्व भी निपातित होता है।]॥ २७॥

---

१-१. 'दान्त, शान्त, पूर्ण, दस्त, स्पष्ट, छन्न, ज्ञप्त–इत्येतानि निपात्यन्ते। दम्यादीनां धातूनां ण्यन्ते वेडागमो निपात्यते'—इति क्वचित्पाठः।

## ३३०७. रुष्यमत्वरसंघुषास्वनाम् ॥ २८ ॥ (३०६९)

'वा' इति वर्तते । रुषि, अम, त्वर, सङ्घुष, आस्वन—इत्येतेषां निष्ठायां वा इडागमो न भवति । रुष्टः, रुषितः । 'तीषसहलुभरुषरिषः' (४.२.१०२) इति विकल्पविधानाद् 'यस्य विभाषा' (७.२.१५) इति प्रतिषेधे प्राप्ते विकल्पार्थं वचनम् । अम्—अभ्यान्तः, अभ्यमितः । त्वर—तूर्णः, त्वरितः । 'आदितश्च' (७.२.१६) इति प्रतिषेधे प्राप्ते वचनम् । सङ्घुष—सङ्घुष्टौ पादौ, सङ्घुषितौ पादौ । सङ्घुष्टं वाक्यमाह, सङ्घुषितं वाक्यमाह । सङ्घुष्टौ दम्यौ, सङ्घुषितौ दम्यौ । सम्पूर्वस्य घुषेरविशब्दनेऽपि परत्वादयमेव विकल्पो भवति । आस्वन्—आस्वान्तो देवदत्तः, आस्वनितो देवदत्तः । आस्वान्तं मनः, आस्वनितं मनः । आङ्पूर्वस्य स्वनेर्मनोभिधानेऽपि परत्वादयं विकल्पः 'क्षुब्धस्वान्त' ( ७.२.१८ ) इति निपातनं बाधते ॥

### न्यासः

**रुष्यमत्वरसंघुषास्वनाम्** । 'रुष रोषे', 'अम गत्यादिषु' । 'अम रोगे'—इत्येतस्य चौरादिकस्य ग्रहणं न भविष्यति; एकाच इत्यधिकारात् । 'ञित्वरा सम्भ्रमे' सम्पूर्वः । पूर्वोक्तो घुषिः । आङ्पूर्वः पूर्वोक्त एव स्वतिः । **आस्वान्त इति** । पूर्ववद् दीर्घः । **तूर्ण इति** । 'ज्वरत्वरस्रिव्यविमवामुपधायाः' इत्यूठ् । **सम्पूर्व इत्यादि** । 'घुषिर् अविशब्दने' इत्यस्यावकाशोऽसम्पूर्वत्वे सत्यविशब्दने—घुष्टा रज्जुः, घुष्टौ पादाविति, अस्य च वचनस्यावकाशः सम्पूर्वत्वे सति विशब्दने—संघुषितं वाक्यमाह, संघुष्टं वाक्यमाहेति; सम्पूर्वत्वे सत्यविशब्दन उभयप्राप्तौ परत्वादनेन विकल्पो भवति—संघुषितौ दन्ताविति । **आङ्पूर्वस्येत्यादि** । 'क्षुब्धस्वान्त' इति स्वनेरिट्प्रतिषेधस्यावकाशः, अनाङ्पूर्वत्वे सति मनोऽभिधाने स्वान्तं मन इत्यस्यावकाशः; आङ्पूर्वत्वे सत्यमनोऽभिधानम् । **आस्वान्तो देवदत्तः, आस्वनितो देवदत्त इति** । आङ्पूर्वत्वे सति मनोऽभिधाने परत्वादयमेव विकल्पो भवति—**आस्वान्तं मनः, आस्वनितं मनः** ॥ २८ ॥

### पदमञ्जरी

**रुष्यमत्वरसंघुषास्वनाम्** ॥ **अभ्यान्त इति** । 'अम गत्यादिषु' ( धा० पा० ४६५ ) पूर्ववद्दीर्घः । **तूर्ण इति** । 'ञित्वरा सम्भ्रमे' ( धा० पा० ७७५ ) 'ज्वरत्वर' इत्यादिनोठ् । **आदितश्चेतीट्प्रतिषेधे प्राप्त इति** । आदित्वे तु प्रयोजनं मृग्यम् । आत्मनेपदार्थं तावत्कश्चिदनुबन्ध आसञ्जनीयः । **कश्चिदाह**—आदित्व यङ्लुगर्थमिति, न हि तत्रायं विकल्पः, 'एकाचः' इत्यनुवृत्तेः । आदित्करणसामर्थ्याच्चानुबन्धनिबन्धनोऽपि 'आदितश्च' इतीट्प्रतिषेधो यङ्लुकि भवति । **सम्पूर्वस्य घुषेरिति** । 'घुषिरविशब्दने' इत्यस्यासम्पूर्वोऽवकाशः—घुष्टा रज्जुः, अस्य विकल्पस्यावकाशः सम्पूर्वत्वे सति विशब्दने-संघुष्टं वाक्यमाह; सम्पूर्वस्याविशब्दने विप्रतिषेधः । **आङ्पूर्वस्येत्यादि** । 'क्षुब्धस्वान्त' इति निपातनस्यावकाशोऽनाङ्पूर्वत्वे सति मनोऽभिधाने-स्वान्तं मन इति, अस्य विकल्पस्यावकाशः-आङ्पूर्वत्वे सत्यमनोऽभिधाने-आङ्पूर्वत्वे मनोऽभिधाने च सति विप्रतिषेधः ॥ २८ ॥

### भावबोधिनी

'वा' ( विकल्प )—इसकी अनुवृत्ति होती है । रुषि, अम, त्वर, सङ्घुष, आस्वन—इनको निष्ठा परे रहते विकल्प से इट् आगम नहीं होता है । उदा० रुष्टः, रुषितः । "तीष-सह-लुभ-रुष-रिषः" ( ४।२।१०२ ) इस सूत्र से विकल्प से इट् का विधान होने से "यस्य विभाषा" इस सूत्र द्वारा नित्य इट् प्रतिषेध प्राप्त रहते विकल्प करने के लिए यह सूत्र है । अम्—अभ्यान्तः अभ्यमितः । [ अभि + अम् + क्त, यहाँ इट् प्रतिषेध होने पर "अनुनासिकस्य क्विझलोः क्ङिति" सूत्र से उपधा दीर्घ, म् का अनुस्वार, परसवर्ण—अभि + आन्त, यण्—अभ्यान्तः । इट् होने पर —अभ्यमितः । ] त्वर—तूर्णः, त्वरितः । [ 'ञि त्वरा सम्भ्रमे' के आ ञि के लोप त्वर् + क्त "ज्वर् त्वर्" (६।४।२०) इस सूत्र से व् का ऊठ् आदेश —तूर् + त, तकार का न, न का णः—तूर्णः । इट् होने पर ऊठ् नहीं होता है—त्वरितः ] इसमें आ इत् होने से "आदितश्च" इससे इट् का प्रतिषेध प्राप्त रहते यह विकल्प-विधान है । सङ्घुष—सङ्घुष्टौ पादौ, सङ्घुषितौ पादौ । [सम् घुष् = क्त, ष्टुत्व, अनुस्वार, परसवर्ण । द्विवचन का रूप है । ] सङ्घुष्टं वाक्यमाह, सङ्घुषितं वाक्यमाह । सङ्घुष्टौ दम्यौ, सङ्घुषितौ दम्यौ । [ 'घुषिर् अशब्दार्थे' ऐसी भ्वादिगणीय है है और 'घुषिरविशब्दने' ऐसी चुरादिगणीय है । यहाँ भी दोनों का ग्रहण है । ] सम्पूर्वक 'घुषिर् अविशब्दने' इसमें

## ३३०८. हृषेर्लोमसु ॥ २९ ॥ (३०७०)

लोमसु वर्त्तमानस्य हृषेर्निष्ठायां वा इडागमो न भवति। हृष्टानि लोमानि, हृषितानि लोमानि। हृष्टं लोमभिः, हृषितं लोमभिः। हृष्टाः केशाः, हृषिताः केशाः। हृष्टं केशैः, हृषितं केशैः। 'हृषु अलीके' (धा० पा० ७०९) इत्युदित्वान्निष्ठायामनिट्, 'हृष तुष्टौ' (धा० पा० १२३०) इत्ययं सेट्; तयोरुभयोरिह ग्रहणमित्युभयत्रविभाषेयम्।

लोमानि मूर्धजानि, अङ्गजानि च सामान्येन गृह्यन्ते; यथा—'लोमनखं स्पृष्ट्वा शौचं कर्त्तव्यम्' इति। तद्विषये च हृषं वर्त्तमानो लोमसु वर्त्तत इत्युच्यते।

लोमस्विति किम्? हृष्टो देवदत्त इत्यलीकार्थस्य, हृषितो देवदत्त इति तुष्ट्यर्थस्य।

न्यासः

**हृषेर्लोमसु ॥ हृष्टानि लोमानीति।** गत्यर्थाकर्मकादिनाऽकर्मकत्वात् कर्त्तरि क्तः। **हृष्टं लोमभिरिति।** 'नपुंसके भावे क्तः' इति क्तः। **निष्ठायामनिडिति।** 'उदितो वा' इति क्त्वाप्रत्यय इटि विकल्पिते निष्ठायाम् 'यस्य विभाषा' इति प्रतिषेधात्। **अयं सेडिति।** उदात्तत्वादिट्प्रतिषेधाभावात्। **उभयत्रविभाषेयमिति।** प्राप्ते चाप्राप्ते च। आलीक्यार्थस्य प्रतिषेधे प्राप्ते विकल्पः, तुष्ट्यर्थस्य चाप्राप्ते; लोमशब्दस्याङ्गजातेष्वेव रूढत्वात्।

लोमस्वित्युच्यमानेऽङ्गजेष्वेव न केशेषु भवितव्यमिति कस्यचिद् भ्रान्तिः स्यात्, अतस्तां निराकर्त्तुमाह—**लोमानीत्यादि।** कथम्? इत्याह—**यथा लोमनखमित्यादि।** अत्र हि सामान्येन ग्रहणं तेषाम्। तथा हि—केशानपि स्पृष्ट्वा शौचं क्रियत इति। कथं पुनः क्रियावचनस्य धातोर्द्रव्येषु लोमसु वृत्तिरुपपद्यते? इत्याह—**तद्विषय इत्यादि।** तानि लोमानि विषयो यस्य स तथोक्तः। हृषेर्योऽर्थः स लोमसाध्यत्वाल्लोमविषयः। तत्र वर्त्तमानो हृषिरर्थद्वारेण लोमसु वर्त्तते इत्युच्यते। तदेवमर्थद्वारेण लोम्नां हृषिं प्रति विशेषणत्वं दर्शितं भवति।

पदमञ्जरी

**हृषेर्लोमसु ॥** हृष्टानि = उत्स्फुटानि, मूर्द्धजाः = केशाः। 'अङ्गान्तरजानि लोमानि' इति **निघण्टुप्रसिद्धिः। कल्पसूत्रकाराणामपि** तदनुगुणाः प्रयोगाः—'केशश्मश्रुलोमनखं वापयन्ति' इति, इह तु केशानामपि ग्रहणम्? इत्याह—**मूर्द्धजान्यङ्गजानि चेति।** अत्र विशेष्यं मृग्यम्। **सामान्येन गृह्यन्त इति।** क्व यथा?

भावबोधिनी

भी परवर्त्ती होने से यही विकल्प होता है। [ दम्य उस बछड़े को कहा जाता हैं जो अभी अच्छी तरह जोतने की शिक्षा नहीं पा सका है। ] आस्वन्—आस्वान्तः देवदत्तः, आस्वनितः देवदत्तः। आस्वान्तं मनः, आस्वनितं मनः। [ आङ्स्वन्+क्त, इट् अभाव में उपधा का दीर्घ हो जाता है। ] आङ्पूर्वक 'स्वन्' धातु के 'मन' के अभिधायक होने पर भी परवर्त्ती होने से यही विकल्प "क्षुब्धस्वान्तध्वान्त" (७।२।१८) इस निपातन का बाध कर लेता है। [इसलिए विकल्प ही होता है। ] ॥ २८ ॥

लोम अर्थ में वर्तमान 'हृष्' को निष्ठा में विकल्प से इट् आगम नहीं होता है। उदा० हृष्टानि लोमानि, हृषितानि लोमानि। हृष्टं लोमभिः, हृषितं लोमभिः। हृष्टाः केशाः, हृषिताः केशाः। हृष्टं केशैः, हृषितं केशैः। 'हृषु अलीके' यह उदित् होने के कारण [ 'उदितो वा' इससे विकल्प से सेट् होने के कारण 'यस्य विभाषा' सूत्र से ] निष्ठा में अनिट् है। 'हृष तुष्टौ' यह सेट् है [ अर्थात् पूर्ववर्त्ती का इट् रहित और उत्तरवर्त्ती का इट् सहित एक-एक ही रूप प्राप्त है। ] इन दोनों का इस सूत्र में ग्रहण है, इसलिये यह उभयत्र विभाषा है। [ दोनों के लोम अर्थों के दो-दो रूप होते हैं। ]

लोम (रोयें) मूर्धा (शिर) पर होने वाले तथा अङ्गों पर होने वाले—दोनों का सामान्य रूप से ग्रहण है' जैसा कि "लोमनखं स्पृष्ट्वा शौचं कर्त्तव्यम्" [ इसमें लोम से केशमात्र का ग्रहण होता है। उसी प्रकार यहाँ भी है। ] और उन लोमविषयक हृषं अर्थ में जो वर्तमान है वह लोमों में वर्तमानहै—ऐसा कहा जाता है।

❀ विस्मितप्रतिघातयोश्चेति वक्तव्यम् ❀। हृष्टो देवदत्तः, हृषितो देवदत्तः। विस्मित इत्यर्थः। हृष्टा दन्ताः, हृषिता दन्ताः। प्रतिहता इत्यर्थः॥

**३३०९. अपचितश्च ॥ ३० ॥ ( ३०७१)**

'अपचितः' इति वा निपात्यते। अपपूर्वस्य चायतेर्निष्ठायामनिट्त्वं चिभावश्च निपात्यते। अपचितोऽनेन गुरुः। अपचायितोऽनेन गुरुः।

❀ क्तिनि नित्यमिति वक्तव्यम् ❀ (म० भा०)। क्तिनि नित्यं चिभावो निपात्यते। अपचितिः॥

**न्यासः**

**विस्मितप्रतिघातयोश्चेति।** निपातनमिति। विस्मितप्रतिघातयोर्निष्ठायामिण् न भवत्येवमर्थंरूपं व्याख्येमित्यर्थः। तत्रेदं व्याख्यानम्—हृषेरिति योगविभागः क्रियते, ततो विस्मितप्रतिघातयोरपि भविष्यतीति। अथ वा—बहुवचननिर्देशोऽत्र क्रियते, आद्यर्थोऽयं विज्ञायते लोमादिषु लोमस्विति। तेन विस्मितप्रतिघातयोरपि भविष्यति॥ २९॥

**अपचितश्च॥ चायतेरिति।** 'चायृ पूजानिशामनयोः' इति। अयं योगो यश्चिनोतेरपपूर्वस्य पूजायां वृत्तिं न प्रतिपद्यते तं प्रत्यारभ्यते। यस्तु प्रतिपद्यते तं प्रति नारब्धव्य एव। तथा हि—चिनोतेरपचित इति भविष्यतीति, चायतेस्त्वपचायित इति।

**वक्तव्यमिति।** व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—चकारोऽत्र क्रियते। स चानुक्तसमुच्चयार्थः। तेनापचितिरित्येतदपि निपात्यत इति। एतच्च निपातयता चायतेः क्तिनि नित्यं चिभावो वक्तव्यः॥ ३०॥

**पदमञ्जरी**

इत्यत्राह—**यथेति।** ननु क्रियावचनस्य धातोः कथं द्रव्यात्मकेषु लोमसु वृत्तिः? इत्यत आह—**तद्विषये चेति।** प्रतिहताः कठिनद्रव्यखादनेन, शीतपीडया वा हता इत्यर्थः॥ २९॥

**अपचितश्च॥ अपचितोऽनेन गुरुरिति।** 'चायृ पूजानिशामनयोः' (धा० पा० ८८०)। निशामने चायं प्रयोगः। पूजायां तु 'मतिबुद्धिपूजार्थेभ्यश्च' इति वर्तमाने क्ते सति 'क्तस्य च वर्त्तमाने' इति षष्ठ्या भवितव्यम्। **क्तिनि नित्यमिति।** 'क्तिन्नाबादिभ्यः' (वा० ३०७) इति क्तिन्। अन्यथा 'गुरोश्च हलः' इत्यकारः स्यात्॥ ३०॥

**भावबोधिनी**

लोमों में—इसका क्या फल है? 'हृष्टो देवदत्तः'—यह अलीक अर्थवाले का, 'हृषितो देवदत्तः' इस तुष्टि अर्थवाले का [ ग्रहण न होने से वैकल्पिक रूप नहीं होते हैं, एक ही रूप होता है ]।

* विस्मित तथा प्रतिघात अर्थों में—ऐसा कहना चाहिए ( विस्मित तथा प्रतिघात अर्थों में निष्ठा में विकल्प से इट् नहीं होता है—ऐसी व्याख्या करनी चाहिए।) * उदा० हृष्टो देवदत्तः, हृषितो देवदत्तः। देवदत्त विस्मित है—ऐसा अर्थ है। हृष्टाः दन्ताः, हृषिताः दन्ताः। प्रतिहत = टक्कर खा गये, या टूट गये-यह अर्थ है॥ २९॥

'अपचितः' यह विकल्प से निपातित होता है। अप-पूर्वक 'चाय्' धातु का निष्ठा परे रहते अनिट्त्व और 'चि' भाव (चाय् का चि आदेश) निपातित होता है। उदा० अपचितः अनेन गुरुः। अपचायितः अनेन गुरुः। [ 'चायृ' धातु के पूजन तथा निशामन अर्थ हैं। यहाँ निशामन अर्थ में निपातन है। चाय् + क्त, इट् का अभाव और चि निपातन—अपचितः। पक्ष में दोनों नहीं होने पर अपचायितः। निशामन = दर्शन करना। पूजा अर्थ में तो षष्ठी होती है।]

* क्तिन् परे रहते नित्य चि होता है, ऐसा कहना चाहिए। * क्तिन् परे रहते चि-भाव नित्य निपातित होता है। उदा० अपचितिः ( पूजा )॥ ३०॥

**३३१०. ह्रु ह्वरेश्छन्दसि ॥ ३१ ॥ (३५७९)**

**ह्वरतेर्धातोर्निष्ठायां छन्दसि 'ह्रु' इत्ययमादेशो भवति। ह्रुतस्य चाह्रुतस्य च। अह्रुतमसि हविर्धानम् (वा० सं० १.७)।**

**छन्दसीति किम् ? ह्वृतम् ॥**

**३३११. अपरिह्वृताश्च ॥ ३२ ॥ (३५८०)**

**'अपरिह्वृताः' निपात्यते छन्दसि विषये। 'ह्रु' इत्येतस्यादेशस्याभावो निपात्यते। 'अपरिह्वृताः सनुयाम वाजम्' (ऋ० १.१००.१९) ॥**

**३३१२. सोमे ह्वरितः ॥ ३३ ॥ (३५८१)**

**'ह्वरितः' इति ह्वरतेर्निष्ठायामिडागमो गुणश्च निपात्यते छन्दसि विषये, सोमश्चेद्भवति। मा नः सोमो ह्वरितः। विह्वरितस्त्वम् ॥**

**३३१३. प्रसितस्कभितस्तभितोत्तभितचत्तविकस्ता विशस्तृशंस्तृशास्तृतरुतृतरूतृवरुतृवरूतृवरूत्रीरुज्ज्वलितिक्षरितिक्षमितिवमित्यमितीति च ॥ ३४ ॥ (३५८२)**

**न्यासः**

ह्रु ह्वरेश्छन्दसि ॥ 'ह्वृ कौटिल्ये'—इत्येतस्यानुदात्तत्वादिट्प्रतिषेधोऽस्त्येवेत्यादेशार्थं वचनम् ॥ ३१ ॥

अपरिह्वृताश्च ॥ 'ह्रु' इत्येतस्यादेशस्याभावो निपात्यत इति। पूर्वसूत्रेण प्राप्तस्य। बहुवचननिर्देशो बहुवचन एव निपातनं यथा स्यात्। तेन वचनान्तरे हि—अपरिह्रुतः, अपरिह्रुताविस्येवं भवति ॥ ३२ ॥

सोमे ह्वरितः ॥ इडागमो गुणश्च निपात्यत इति। चकाराद् 'ह्रु' इत्येतस्यादेशाभावश्च ॥ ३३ ॥

प्रसितस्कभितस्तभितोत्तभितचत्तविकस्ता विशस्तृशंस्तृशास्तृतरुतृतरूत्रवरुतृवरूतृवरूत्रीरुज्ज्वलितिक्षरितिक्षमितिवमित्यमितीति च ॥ ग्रसु स्कन्भु स्तन्भु इत्येतेषामित्यादि। 'ग्रसु ग्लसु अदने', 'स्कन्भु' 'स्तन्भु'—

**पदमञ्जरी**

ह्रु ह्वरेश्छन्दसि ॥ ह्वरेरिति। 'ह्वृ कौटिल्ये' (धा० पा० ९३१) आगन्तुकेऽकारे गुणेन निर्देशः ॥३१॥

अपरिह्वृताश्च ॥ आदेशस्याभाव इति। पूर्वसूत्रेण प्राप्तस्य। बहुवचननिर्देशश्छन्दसि तस्यैव प्रयोगदर्शनात् ॥ ३२ ॥

सोमे ह्वरितः ॥ इडागमो गुणश्चेति। चकारादादेशाभावश्च ॥ ३३ ॥

प्रसितस्कभितस्तभितोत्तभितचत्तविकस्ता विशस्तृशंस्तृशास्तृतरुतृतरूतृवरुतृवरूतृवरूत्रीरुज्ज्वलितिक्षरितिक्षमितिवमित्यमितीति च ॥

**भावबोधिनी**

ह्वर धातु का निष्ठा परे रहते वेद में 'ह्रु' यह आदेश होता है। उदा० ह्रुतस्य चाह्रुतस्य च। अपह्रुतमसि हविर्धानम्। [ ह्वृ + क्त, ह्रु आदेश, इट् का अभाव होने पर रूप बनता है। ]

वेद में—इसका क्या फल है ? ह्वृतम्। [ सामान्य लौकिक प्रयोग में आदेश नहीं होता है ॥ ३१ ॥

वेदविषय में 'अपरिह्वृता' ऐसा निपातित होता है। 'ह्रु' इस आदेश का अभाव निपातित होता है। उदा० 'अपरिह्वृताः सनुयाम वाजम्।', [ यहाँ 'ह्रु' नहीं होता है। ] ॥ ३२ ॥

'ह्वरितः' यहाँ 'ह्वृ' का निष्ठा परे इट् का आगम और गुण वेदविषय में निपातित होते हैं यदि सोम अर्थ हो तो। उदा० मा नः सोमो ह्वरितः, विह्वरितस्तत्वम् [ ह्वृ + क्त, इट् आगम ऋ का गुण, रपर ]। ॥ ३३ ॥

ग्रसित, स्कभित, स्तभित, उत्तभित, चत्त, विकस्त, विशस्तृ, शंस्तृ, शास्तृ, तरुतृ, तरूतृ, वरुतृ, वरूतृ, वरूत्रीः, उज्ज्वलिति, क्षरिति, वमिति, अमिति—इतने शब्द वेदविषय में निपातित होते हैं।

**ग्रसित, स्कभित, स्तभित, उत्तभित, चत्त, विकस्त, विशस्तृ, शंस्तृ, शास्तृ, तरुतृ, तरूतृ, वरुतृ, वरूतृ, वरूत्रीः, उज्ज्वलिति, क्षरिति, वमिति, अमिति—इत्येतानि छन्दसि निपात्यन्ते।**

तत्र ग्रसितस्कभितस्तभितोत्तभितेति—ग्रसु, स्कन्भु, स्तन्भु इत्येतेषामुदित्वान्निष्ठायामिट्प्रतिषेधे प्राप्ते इडागमो निपात्यते। 'ग्रसितं वा एतत्सोमस्य' (मै० सं० ३.४.७)। ग्रस्तमिति भाषायाम्। स्कभित—'विष्कभिते अजरे' (ऋ० ६.७०.१)। विष्कब्ध इति भाषायाम्। स्तभित—'येन स्वःस्तभितम्' (ऋ० १०.१२१.५) स्तब्धमिति भाषायाम्। उत्तभित—'सत्येनोत्तभिता भूमिः (ऋ० १०.८५.१)। उत्तब्धेति भाषायाम्। उत्तभितेति उत्पूर्वस्य निपातनसामर्थ्यादन्योपसर्गपूर्वः स्तभितशब्दो न भवति।

चत्त विकस्तेति—चतेः, कसेश्च विपूर्वस्य निष्ठायामिडभावो निपात्यते। चत्ता वर्षेण विद्युत्। चतितेति भाषायाम्। विकस्त—'उत्तानाया हृदयं यद् विकस्तम्' (मै० २.७.४)। विकसितमिति भाषायाम्। निपातनं बहुत्वापेक्षम् 'विकस्ताः' इति बहुवचनं कृतम्। अपरेषु तु निपातनेषु प्रत्येकं विभक्तिनिर्देशः।

**न्यासः**

इत्येतौ सौत्रौ धातू; 'स्तम्भुस्तुम्भुस्कम्भुस्कुम्भुस्कुञ्भ्यः श्नुश्च' इति सूत्रे पाठात्। **स्कभितम्, स्तभितमिति।** 'अनिदिताम्' इत्यनुनासिकलोपः। **स्कब्धम्, स्तब्धमिति।** 'झषस्तथोर्धोऽधः' इति धत्वम्. 'झलां जश् झशि' इति जश्त्वम्। **उत्तभितमिति।** 'उदः स्थास्तम्भोः पूर्वस्य' इति पूर्वसवर्णः। **अन्योपसर्गपूर्वः स्तभितशब्दो न भवतीति।** यदि स्यात्, उत्पूर्वस्य निपातनमनर्थकं स्यात्।

**चतेः, कसेश्चेति।** 'चते चदे याचने'; 'कस गतौ'। ननु सूत्रे विकस्तशब्दाद् बहुवचनं श्रूयते, ततश्च कथमसौ वृत्तावेकवचनान्त उदाहृतः? इत्यत आह—**निपातनं बहुत्वापेक्षम्। विकस्ता इति बहुवचनमिति।** सूत्रे ग्रसितादीनि निपातनानि कृतद्वन्द्वानि, अतस्तदपेक्षया बहुवचनं कृतम्। **वृत्तौ** त्वसमस्त एक एवायं विकस्तशब्दः। न चैतदर्थस्य बहुवचनं विवक्षितम्, अत एकवचनान्त एवोदाहृतः। **अपरेष्विति।** विशस्तृ-प्रभृतिषु। **प्रत्येकं विभक्तिनिर्देश इति।** बहुत्वाभावाद् बहुवचनं तेन तत्र न कृतमित्यभिप्रायः।

**पदमञ्जरी**

'ग्रसु अदने' ( धा० पा० ६३० ), 'स्कम्भु स्तम्भु रोधनार्थौ' ( पा० सू० ३.१.८२ ) सौत्रौ, 'चते याचने' ( धा० पा० ८६५ ), 'कस गतौ' ( धा० पा० ८६० ), 'शसु हिंसायाम्' ( धा० पा० ७२७ ), 'शंसु स्तुतौ' ( धा० पा० ७२८ ), 'शासु अनुशिष्टौ' ( धा० पा० १०७५ ), 'तॄ प्लवनतरणयोः' ( धा० पा० ९६९ ), 'वृङ् वरणे' ( धा० पा० १२५४ ), 'ज्वल दीप्तौ' ( धा० पा० ८०४ ), 'क्षर सञ्चलने' ( धा० पा० ८५१ ),

**भावबोधिनी**

इन शब्दों में ग्रसित, स्कभित, स्तभित, उत्तभित-ये ग्रसु, स्कन्भु, स्तन्भु—इन धातुओं के उदित् होने से निष्ठा में इट्निषेध प्राप्त रहते इट् आगम निपातित होता है। [उदित् होने से 'उदितो वा' से वैकल्पिक इट् होने के कारण 'यस्य विभाषा' से निष्ठा में इट् आगम का प्रतिषेध है। वहाँ इट् का आगम निपातित होता है।] उदा०—(१) ग्रसितं वा एतत् सोमस्य। [ इट् होता है। ] भाषा में 'ग्रस्तम्'। [ इट् नहीं होता है। ] (२) स्कभित—विष्कभिते अजरे। [इट् होता हैं। मूर्धन्य होता है।] विष्कब्ध—ऐसा भाषा में होता है। [ विस्कम्भ् + क्त, अनुनासिकलोप "झषस्तथोर्धोऽधः" सूत्र से त का ध, 'झलां जश् झशि' सूत्र से जश्त्व, भ् का ब्, स् का ष्—विष्कब्धम्। ] (३) स्तभित—येन स्वः स्तभितम्। [स्तन्भु + क्त, अनुनासिकलोप, इट् होता है।] भाषा में 'स्तब्धम्' ऐसा होता है। [ स्तन्भु + क्त, पूर्ववत् कार्य होते हैं। ] (४) उत्तभित—सत्येनोत्तभिता भूमिः। [ उत् स्तम्भ + क्त, इट्, "उदः स्थास्तम्भोः पूर्वस्य" सूत्र से स् का पूर्वसवर्ण 'त्' आदेश द् का चर्त्व उत्तभिता। ] 'उत्तब्ध'—ऐसा भाषा में होता है। [ इट् नहीं होता है, धत्व, भष्भाव आदि पूर्ववत् होता है। ] 'उत्तभित, यह उत् पूर्वक निपातन के सामर्थ्य से अन्य उपसर्गपूर्वक 'स्तभित' शब्द नहीं होता है। [ अन्य उपसर्ग रहने पर इट् नहीं होता है। अतः 'निस्तब्ध' आदि रूप ही होते हैं। ]

(५) चत्त, (६) विकस्त—इनमें 'चत्' तथा विपूर्वक 'कस' का निष्ठा परे रहते इट् का अभाव निपातित होता है। उदा० चत्ता वर्षेण विद्युत्। [ चत् + क्त, इट् का अभाव निपातित होता है। ] भाषा में—'चतिता' ऐसा

**विशस्तृ, शंस्तृ, शास्त्रिति–शसेर्विपूर्वस्य, शंसेः, शासेश्च तृचि इडभावो निपात्यते । विशस्तृ— 'एकस्त्वष्टु रश्वस्याविशस्ता' । विशसितेति भाषायाम् । शंस्तृ–'उत शंस्ता सुविप्रः' । शंसितेति भाषायाम् । शास्तृ–'प्रशास्ता' । प्रशासितमिति[1] भाषायाम् ।**

**तरुतृतरूतृवरुत्रवरूतृवरूत्रीरिति–तरतेः वृङ्वृञोश्च तृचि उट्, ऊट्—इत्येतावगमौ निपात्येते । तरुतारं रथानाम् (ऋ० १०।१७८।१) तरूतारम् । तरितारम्, तरीतारमिति भाषायाम् । वरुतारं रथानाम्, वरूतारं रथानाम् । वरितारम्, वरीतारमिति भाषायाम् । 'वरूत्रीष्ट्वा देवीर्विश्वदेव्यवती' (मै०२.७.६) । जसि पूर्वसवर्णोच्चारणं प्रयोगदर्शनार्थम् । अतन्त्रं चैतत् । इदमपि हि भवति—अहोरात्राणि वै वरूत्रय इति । छान्दसिकमत्र ह्रस्वत्वम् । प्रपञ्चार्थमेव च ङीबन्तस्य निपातनम् । वरूतृशब्दो हि निपातितः, तत एव ङीपि सति सिद्धो वरूत्रीशब्दः ।**

न्यासः

**शसेर्विपूर्वस्य शंसेः शासेश्चेति** । 'शसु हिंसायाम्', 'शन्सु स्तुतौ', 'शासु अनुशिष्टौ' ।

**तरीतारम्, वरीतारमिति** । 'वॄतो वा' इति दीर्घः । **वरूत्रीरिति** । 'ऋन्नेभ्यो ङीप्' इति ङीप्, तदन्ताज्जस्, 'वा छन्दसि' इति पूर्वसवर्णदीर्घः । जसि पूर्वसवर्णोच्चारणाद् यदा पूर्वसवर्णस्तत्रैवैतन्निपातनमिति कस्यचिद् भ्रान्तिः स्यात्, अतस्तां निराकर्तुमाह—**जसि पूर्वसवर्णोच्चारणमित्यादि** । ननु यणादेशे कृते वरूत्र्य इति भवितव्यम्, कथं 'वरूत्रयः' इति भवति ? इत्याह—**छान्दसमित्यादि** । छान्दसत्वेन हि ह्रस्वत्वे कृते 'जसि च' इति यणादेशापवादो गुणो विधीयते । **प्रपञ्चार्थमिति** । विस्तरेणान्वाख्यानमित्यर्थः । तथा हि 'पचिविस्तारवचने' इति तस्यैवाजन्तस्य प्रपञ्च इति भवति । प्रपञ्चस्तु विस्पष्टार्थः । विस्तरेण ह्यन्वाख्यानं स्पष्टं भवति । अथ वरूत्रीशब्दस्य सिध्यर्थं निपातनं कस्मान्न भवति ? इत्याह—**वरूतृशब्दो हीत्यादि** ।

पदमञ्जरी

'क्षमूष् सहने' ( धा० पा० ४४२ ), 'टुवम उद्गिरणे' ( धा० पा० ८४९ ), 'अम गत्यादिषु'( धा० पा० ४६५ ) । **उत्तभितेति** । 'उदः स्थास्तम्भोः पूर्वस्य' इति पूर्वसवर्णः सकारस्य तकारः । **अन्योपसर्गपूर्वः स्तभितशब्दो न भवतीति** । यदि स्यात्, उत्तभितग्रहणमनर्थकं स्यात् । **निपातनं बहुत्वापेक्षमिति** । तेन छान्दसः प्रयोगः एकवचनान्तोऽप्युदाहृत इति भावः ।

भावबोधिनी

होता है । ] विकस्त—उत्तानाया हृदयं यद् विकस्तम् । [ विकस् + क्त, इट् नहीं होता है । ] भाषा में—विकसितम् ऐसा होता है । ] सूत्र में निपातन बहुत्व की अपेक्षा मानकर है इसलिए 'विकस्ताः' यह बहुवचन है । [ भाव यह है कि 'ग्रसित ......विकस्ताः' यह बहुवचन अनेक शब्दों के कारण है न कि इस 'विकस्त' का बहुवचन निपातित है । इसीलिए उदाहरण में एकवचन है । ] अन्य उदाहरणों में तो निपातनों में प्रत्येक में विभक्ति का निर्देश है ।

विशस्तृ, शंस्तृ, शास्तृ–इन रूपों में विपूर्वक शस्, शंस् और शास् का तृच् परे इट् का अभाव निपातित होता है । (७) विशस्तृ—एकस्त्वष्टुरश्वस्याविशस्ता । [वि शस् + तृच् इट् नहीं होता है ।] विशसिता ऐसा प्रयोग भाषा में होता है । (८) शंस्तृ—उत शंस्ता सुविप्रः । [ शंस् + तृच्, इट् नहीं होता है । भाषा में 'शंसिता' ऐसा रूप बनता है । (९) शास्तृ—प्रशास्ता । भाषा में–'प्रशासितम्, यह [ इट् सहित रूप ] होता है ।

तरुतृ, तरूतृ, वरुतृ, वरूतृ, वरूत्रीः—इनमें तॄ, वृङ् और वृञ् को तृच् परे 'उट्' और 'ऊट्' ये दो आगम निपातित होते हैं । उदा० (१०) तरुतारं रथानाम्, (११) तरूतारम् । [ तॄ + तृच्, उट् गुण, रपर, । ऊट्, गुण रपर होने पर रूप बनते है । ] भाषा में—तरितारम् तरीतारम् बनते हैं । [ तॄ +तृच्, इट् गुण, रपर, ''वॄतो वा'' सूत्र से इट् का वैकल्पिक दीर्घ होने से दो रूप बनते हैं । ]

(१२) वरुतारं रथानाम्, (१३) वरूतारम् । [ वृङ् अथवा वृञ् के बाद तृच् प्रत्यय करने पर उट् तथा ऊट् दो आगम करने पर ऋ का गुण, रपर करने पर रूप बनते हैं । ] वरितारम्, वरीतारम्–ये भाषा में होते हैं । [ वृञ् अथवा वृङ् से तृच् करने पर इट् गुण, रपर, 'वॄतो वा' से विकल्प से दीर्घ ] (१४) वरूत्री त्वा देवीर्विश्व-

१–१. शास्धातोस्तृचि 'शासिता' इति भाषायां साधु प्रतीयते, तृचि 'प्रशासितमि'ति रूपस्यासाधुत्वादिति चिपाठिनः ।

**उज्ज्वलिति, क्षरिति, क्षमिति, वमिति, अमितीति च—ज्वलतेरुत्पूर्वस्य, क्षर, क्षम, वम, अम—इत्येतेषां च तिपि शप इकारादेशो निपात्यते, शपो लुग्वा, इडागमः। अग्निरुज्ज्वलिति। उज्ज्वलतीति भाषायाम्। क्षरिति—स्तोकं क्षरिति। क्षरतीति भाषायाम्। क्षमिति स्तोमं क्षमिति। क्षमतीति भाषायाम्। वमिति—यः सोमं वमिति। वमतीति भाषायाम्। अमिति—अभ्यमिति वरुणः। अभ्यमतीति भाषायाम्।**

'इतिकरणं प्रदर्शनार्थम्, तेन क्वचिदीकारो भवति—'रविमभ्यमीति वरुणः' (वा० २२.५) इत्यपि हि वेदे पठ्यते ॥

## ३३१४. आर्धधातुकस्येड्वलादेः ॥ ३५ ॥ (२१८४)

**न्यासः**

**ज्वलतेरिति।** 'ज्वल दीप्तौ', 'क्षर सञ्चलने', 'टुवम उद्गिरणे', 'अम गत्यादिषु'। **'इतिकरणं प्रदर्शनार्थमिति।** एवम्प्रकारस्यान्यस्यापि प्रदर्शनार्थमितिकरणम्। तेन किं सिद्धं भवति? इत्याह—**तेन क्वचिदित्यादि।** चकारश्छन्दसीत्यनुकर्षणार्थः। तेन चानुकृष्टत्वान्नोत्तरत्राभिसम्बध्यते। तेनोत्तरत्र विधानमविशेषेण भवति॥ ३४॥

**आर्धधातुकस्येड्वलादेः॥ आस्ते, शेते, वस्ते इति।** 'आस उपवेशने', 'शीङ् स्वप्ने', 'वस आच्छादने'। अदादित्वाच् छपो लुक्, 'शीङः सार्वधातुके गुणः' आर्धधातुकग्रहणादिह सार्वधातुकस्येण् न भवतीति। ननु च 'रुदादिभ्यः सार्वधातुके' इत्येतन्नियमार्थं विज्ञायते—'रुदादिभ्य एव सार्वधातुकस्य नान्येभ्यः' इति। 'रुदादिभ्यः सार्वधातुकस्यैव' इत्येषा तु विपरीतनियमाशङ्का न कर्त्तव्या। यदि ह्येवंविधो नियमः स्यात्, तदा रुदादेः

**पदमञ्जरी**

**'इतिकरणः प्रदर्शनार्थ इति।** तस्य प्रकारार्थत्वात्॥ ३४॥

**आर्धधातुकस्येड्वलादेः। आस्ते, वस्त इति।** ननु च 'रुदादिभ्यः सार्वधातुके' इत्येतन्नियमार्थं भविष्यति—रुदादिभ्य एव सार्वधातुक इति? तत्राह—**रुदादिभ्यः सार्वधातुक इत्येतस्मिन्निति।** नियमे

**भावबोधिनी**

देव्यावती। [ वृ + तृच्, उट् या ऊट्, गुण, रपर—'वरूतृ' स्त्रीलिङ्ग में 'ऋन्नेभ्यो ङीप्' से ङीप्, यण् होता है। ] जस् प्रत्यय में पूर्वसवर्ण का उच्चारण प्रयोग के प्रदर्शन के लिये है। और यह अतन्त्र है अर्थात् नित्य नहीं है। इसलिए यह रूप भी होता है—अहोरात्राणि वै वरूत्र्यः [ वरूत्री + जस् = अस् ] छान्दस ह्रस्व हो जाता है। [ इसलिए यण् का अपवाद गुण तथा अय् आदेश होता है। ] और प्रपञ्च ( विस्तारपूर्वक व्याख्यान ) के लिये ही ङीबन्त का रूप निपातन किया गया है। वरूतृ शब्द निपातित हुआ है इसी से ङीप् होने पर 'वरूत्री' शब्द सिद्ध होता है।

उज्ज्वलिति, क्षरिति, क्षमिति, वमिति, और अमिति—ये रूप 'उत्' पूर्वक ज्वल् का और—क्षर, क्षम, वम, अम्—इनका तिप् परे शप् [ के अ ] का इकार आदेश निपातित होता है अथवा शप् का लुक् और इट् आगम [ निपातित होता ]। (१५) अग्निरुज्ज्वलिति। [ उत् ज्वल् + शप् + तिप्, शप् = अ का इ आदेश अथवा शप् का लुक्, इट् आगम ] भाषा में 'उज्ज्वलति' ऐसा होता है। (१६) क्षरिति—'स्तोकं क्षरिति'। [ यहाँ भी पूर्ववत् शप् का इ, अथवा शप् का लुक्, इट् आगम ] भाषा में–'क्षरति' ऐसा होता है। ] (१७) क्षमिति—'स्तोकं क्षमिति'। [ यहाँ भी पूर्ववत् प्रक्रिया होती है। ] भाषा में–'क्षमति'–ऐसा प्रयोग होता है। (१८) वमिति—"यः सोमं वमिति।" भाषा में–'वमति' ऐसा है। (१९) अमिति—अभ्यमिति वरुणः।' भाषा में 'अभ्यमति' ऐसा होता है।

[ सूत्र के अन्त में ] 'इति' लगाना प्रदर्शन के लिए है अर्थात् इसी प्रकार अन्य कार्य भी वेद में निपातित होते हैं। इस कारण कहीं पर 'ईकार' हो जाता है—'रविमभ्यमीति वरुणः।' यह भी वेद में पढ़ा गया है। [ यहाँ इकार न होकर ईकार भी पठित हैं, इसी प्रकार के अन्य कार्य बताने के लिए 'इति' ऐसा उल्लेख है। ] ॥ ३४ ॥

---

१-१-१. 'इतिकरणं प्रदर्शनार्थमि'ति न्याससम्मतः पाठ उचिततरः प्रतिभाति।

**३३२५. निरः कुषः ॥ ४६ ॥ ( २५६० )**

**'निर्' इत्येवम्पूर्वात् कुष उत्तरस्य वलादेरार्धधातुकस्य वा इडागमो भवति । निष्कोष्टा, निष्कोषिता । निष्कोष्टुम्, निष्कोषितुम् । निष्कोष्टव्यम्, निष्कोषितव्यम् ।**

**निर इति किम् ? कोषिता, कोषितुम्, कोषितव्यम् ।**

**'निसः' इति वक्तव्ये 'निरः' इति निर्देशेन रेफान्तमुपसर्गान्तरमस्तीति ज्ञाप्यते । [तेन] तस्य हि निलयनमिति 'उपसर्गस्यायतौ' ( ८.२.१९ ) इति लत्वं भवति । निसो हि रुत्वस्यासिद्धत्वाल्लत्वं न स्यात् ॥**

**३३२६. इण्निष्ठायाम् ॥ ४७ ॥ ( ३०४५ )**

**निरः कुषो निष्ठायामिडागमो भवति । निष्कुषितः । निष्कुषितवान् ।**

**इड्ग्रहणं नित्यार्थम् । आरम्भो हि 'यस्य विभाषा' ( ७.२.१५ ) इत्यस्य बाधकः; अन्यथा हि**

**न्यासः**

**निरः कुषः ॥** 'कुष निष्कर्षे' । अस्योदात्तत्वान्नित्यमिटि प्राप्ते विकल्पार्थं वचनम् । **निष्कोष्टेति ।** 'शर्परे विसर्जनीयः' इत्यस्यानुवृत्तेः 'इदुदुपधस्य चाप्रत्ययस्य' इति विसर्जनीयस्य षत्वम् ।

ननु च सकारान्तोऽयमुपसर्गः, तथा प्रादिषु निसिति पठ्यते, न तु निरिति, तस्मात् 'निसः' इति वक्तुं युक्तम्, न निर इति; यथा—'निसस्तपतावनासेवने' इति, तत् किमर्थं निर इति निर्देशः ? इत्याह—**निस इति वक्तव्य इत्यादिना**—रेफान्तस्यास्तित्वज्ञापने प्रयोजनमाह—**तेनेत्यादि ।** स्यादेतत्—निस इति रुत्वे कृते लत्वं भविष्यतीत्याह—**निसो हीत्यादि । निलयनमिति ।** अयतेर्ल्युटि रूपम् ॥ ४६ ॥

**इण्निष्ठायाम् ॥** किमर्थमिडिति वर्त्तमाने पुनरिड्ग्रहणं क्रियते ? इत्याह—**इड्ग्रहणं नित्यार्थमिति ।** असतीड्ग्रहणे हि विकल्पस्य प्रकृतत्वात् पाक्षिक इड्विधिः स्यात् । तस्मान्नित्यार्थमिड्ग्रहणं कर्त्तव्यम् । ननु च सिद्धा विभाषा पूर्वसूत्रेण, आरम्भसामर्थ्यादेव नित्योऽयं विधिर्भविष्यति ? इत्याह—**आरम्भो हीत्यादि ।** पूर्वसूत्रेणेटो विकल्पितत्वान्निष्ठायाम् 'यस्य विभाषा' इति प्रतिषेधे प्राप्ते नित्योऽयमारम्भः । तत्र यदीड्ग्रहणं

**पदमञ्जरी**

**निरः कुषः ॥ निष्कोष्टेति ।** 'इदुदुपधस्य चाप्रत्ययस्य' इति षत्वम् । **निस इति वक्तव्य इति ।** प्रादिषु हि निसिति पठ्यते, तथा च 'निसस्तपतौ' इति निर्देश इति भावः । किमेतस्य ज्ञापने प्रयोजनम् ? इत्यत आह—**तस्येति ।** ननु च नित्य एव रुत्वे कृते लत्वं भविष्यति ? तत्राह—**निसो हीति** ॥ ४६ ॥

**इण्निष्ठायाम् ॥** इडिति वर्त्तमाने पुनरिड्ग्रहणं किमर्थम् ? इत्यत आह—**इड्ग्रहणं नित्यार्थमिति ।** नन्वारम्भसामर्थ्यादेव नित्यमिड् भविष्यति, विकल्पस्य पूर्वेणैव सिद्धत्वात् ? इत्यत आह—**आरम्भो हीति ।**

**भावबोधिनी**

की बलवत्ता है । इस का आशय है कि प्रतिषेध जब बलवान् होता है तो उसको मानकर बना हुआ नियम भी बलवत्तर ही होता है । इसलिए नित्य इट् ही होना चाहिए ॥ ४५ ॥

'निर्' जिसके पूर्व में है ऐसी 'कुष्' धातुके उत्तरवर्त्ती वलादि आर्धधातुक को विकल्प से इट् होता है । उदा० निष्कोष्टा, निष्कोषिता । निष्कोष्टुम् निष्कोषितुम् । निष्कोष्टव्यम्, निष्कोषितव्यम् । [ निर् के विसर्ग का षत्व "इदुदुपधस्य चाप्रत्ययस्य" इससे हो जाता है । ] 'निर्' से परवर्त्ती—इसका क्या फल है ? कोषिता कोषितुम्, कोषितव्यम् । [ 'निर्' पूर्व में नहीं है । अतः विकल्प न होकर नित्य इट् होता है । ]

'निसः' ऐसा कहना चाहिए था तब 'निरः' इस प्रकार के निर्देश द्वारा रेफान्त एक दूसरा भी उपसर्ग है—ऐसा ज्ञात होता है । इस रेफ का 'निलयनम्' आदि में "उपसर्गस्यायतौ" इस सूत्र द्वारा लत्व होता है । क्योंकि निस् का रुत्व असिद्ध हो जाता है अतः [ रेफ न होने से ] लत्व नहीं हो सकता ॥ ४६ ॥

'निर्' से परवर्त्ती 'कुष्' से निष्ठा परे रहते इट् आगम होता है उदा० निष्कुषितः, निष्कुषितवान् । [ निर् + कुष् + क्त, र् का विसर्ग, षत्व, इट् आगम । ]

विकल्पार्थं एव स्याद् । अत्रैव नित्यमिडागमः, उत्तरत्र विकल्प एवेति ॥

**३३२७. तीषसहलुभरुषरिषः ॥ ४८ ॥ ( २३४० )**

तकारादावार्धधातुके इषु, सह, लुभ, रुष, रिष—इत्येतेभ्यो वा इडागमो भवति । इषु—एष्टा, एषिता । 'इषु इच्छायाम्' ( धा० पा० १३९२ )—इत्यस्यायं विकल्प इष्यते । यस्तु 'इष गतौ' ( धा० पा० ११८८ ) इति दैवादिकः, तस्य—प्रेषिता, प्रेषितुम्, प्रेषितव्यमिति नित्यं भवति । योऽपि 'इष आभीक्ष्ण्ये' ( धा० पा० १५२६ ) इति क्र्यादौ पठ्यते, तस्याप्येवमेव । तदर्थमेव 'तीषसह' ( ७.२.४८ ) इति सूत्रे केचिदुदितमिषं पठन्ति ।

सह—सोढा, सहिता । लुभ—लोब्धा, लोभिता । रुष—रोष्टा, रोषिता । रिष—रेष्टा, रेषिता ।

तीति किम् ? एषिष्यति ॥

**न्यासः**

न क्रियेत, तदा तस्यैव प्रतिषेधस्यायमारम्भो बाधकः स्यात्, ततश्च विकल्प एव स्यात्, न नित्यो विधिः । तस्मान्नित्यार्थमिड्ग्रहणं कर्त्तव्यम् । यदि हि नित्यार्थमिड्ग्रहणं क्रियेत तदा तेन विकल्पस्य निवर्त्तितत्वादुत्तरत्रापि नित्य एव विधिः स्यादित्यत आह—'**तत्रैवेत्यादि** । न चानेनेड्ग्रहणेन विकल्पः शक्यते निवर्त्तयितुम्; तस्य स्वरितत्वादिड्ग्रहणसामर्थ्यात् । अनुवर्त्तमानेऽपि वाग्रहणे नित्योऽयं विधिर्भवति । या तु तस्यैव विकल्पस्यानुवृत्तिः, सोत्तरार्था । तेनोत्तरत्र विकल्प एव ॥ ४७ ॥

**तीषसहलुभरुषरिषः** ॥ 'इषु इच्छायाम्', 'षह मर्षणे'; लुभ गार्द्ध्ये', 'लुभ विमोहने'—द्वयोरपि ग्रहणम्; विशेषानुपादानात् । 'रुष रोषे', 'रिष रिष हिंसायाम्' । 'सर्वं एवैत उदात्ताः' इति नित्यमिटि प्राप्ते विकल्पार्थोऽयमारम्भः ।

**तदर्थमिति** । इच्छार्थस्यैव विकल्पो यथा स्यादितरयोर्मा भूदित्येवमर्थम् । ये तूदितं न पठन्ति, ते 'वा' इति प्रकृतस्य व्यवस्थितविभाषाविज्ञानात् सहिना भौवादिकेन साहचर्याद्वा इच्छार्थस्यैव विकल्पेन भविष्यति, नेतरयोरिति वर्णयन्ति । **सोढेति** । ढत्वष्टुत्वढलोपेषु कृतेषु 'सहिवहोरोदवर्णस्य' इत्योत्वम् ॥ ४८ ॥

**पदमञ्जरी**

यदि तर्हि नित्यार्थमिड्ग्रहणं क्रियते, उत्तरत्रापि नित्य एव विधिः स्यात् ? इत्यत आह—**अत्रैवेति** ॥ ४७ ॥

**तीषसहलुभरुषरिषः** ॥ **इषु इच्छायामित्यस्येति** । तौदादिकस्य । **प्रेषितेति** । 'एङि पररूपम्' । **उदितं पठन्तीति** । धातुपाठे इच्छार्थमुदितं पठित्वा इहाप्युकारोपादानेन तस्यैव ग्रहणं वर्णयन्तीत्यर्थः । इदमेव चोदित्त्वस्य प्रयोजनम्; क्त्वायामिड्विकल्पस्यानेनैव सूत्रेण सिद्धत्वात् । ये तूदितं न पठन्ति, ते सहिना साहचर्यादिच्छार्थस्य ग्रहणमाहुः । उभयोरप्यकारमात्रं विकरण इति । यथा तु वार्त्तिकं तथा क्रैयादिकस्याप्यत्र ग्रहणमिष्यते, यदाह—'इषेस्तकारे श्यन्प्रत्ययात् प्रतिषेधः' इति, तन्मते त्रयोऽपि निरनुबन्धकाः ॥ ४८ ॥

**भावबोधिनी**

इट् का दुबारा ग्रहण ( उल्लेख ) नित्यत्व के लिए है । क्योंकि इस सूत्र का बनाना 'यस्य विभाषा' इस विकल्प के बाध के लिए है, अन्यथा विकल्पार्थ ही होने लगता । इसी सूत्र में नित्य इट् आगम होता है आगे सूत्रों में विकल्प ही होता है ॥ ४७ ॥

तकारादि आर्धधातुक परे रहते इष, सह, लुभ, रुष, रिष—इनको विकल्प से इट् आगम होता है । उदा० इषु—एष्टा, एषिता । [ इष् + तृच्, वैकल्पिक इट् आगम, उपधागुण ]

'इषु इच्छायाम्' इसी का यह विकल्प इष्ट है । जो 'इषु गतौ' यह दिवादिगणीय है, उसका—प्रेषिता, प्रेषितव्यम्—इनमें नित्य इट् होता है । जो भी 'इष आभीक्ष्ण्य' यह क्र्यादि में पढ़ा गया है उसका भी इसी प्रकार ( एक ही रूप ) होता है । इसी कारण कुछ लोग 'तीष-सह' इस सूत्र में इष् को उदित् ( 'इषु' ) पढ़ते हैं ।

सह—सोढा, सहिता । [ सह + तृच्, इट् अभाव पक्ष में ढत्व, धत्व, ष्टुत्व, ढलोप के बाद 'सहिवहोरोद-

१. मूले पदमञ्जर्यां च 'अत्रैव' इति पाठः, अयमेवोचितुतरः ।

## ३३२८. सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम् ॥ ४९ ॥ ( २६१८ )

**इवन्तानाम् धातूनाम्, ऋधु, भ्रस्ज, दम्भु, श्रि, स्वृ, यू, ऊर्णु, भर, ज्ञपि, सन्–इत्येतेषां च सनि वा इडागमो भवति । इवन्तानाम्–दिदेविषति, दुद्यूषति । सिसेविषति, सुस्यूषति ।**

**ऋध्—अर्दिधिषति, ईर्त्सति ।**

**न्यासः**

**सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम् ॥ इवन्तानामिति ।** 'दिवु', 'सिवु', इत्येवमादीनाम् । 'ऋधु वृद्धौ', 'भ्रस्ज पाके', 'दन्भु दम्भे', 'श्रिञ् सेवायाम्', 'स्वृ शब्दोपतापयोः', 'यु मिश्रणे', 'ऊर्णुञ् आच्छादने', 'भृञ् भरणे', मारणतोषणनिशामनेषु ज्ञपिर्ण्यन्तः । 'षणु दाने', 'वन षण सम्भक्तौ'—द्वयोरपि ग्रहणम्; विशेषानुपादानात् । अत्र भ्रस्जेरनुदात्तत्वात्, स्वृयूर्णुभृञां चोगन्तात् 'सनि ग्रहगुहोश्च' इति प्रतिषेधे प्राप्ते, शेषाणामुदात्तत्वान्नित्यमिटि प्राप्ते विकल्पोऽयमारभ्यते । **दुद्यूषतीति** । दिवेः सन्, 'हलन्ताच्च' इति सनः कित्त्वम्, 'च्छ्वोः शूडनुनासिके' इत्यूठि यणादेशः, द्विर्वचनम्'—'द्यूष' इत्येतस्य, 'हलादिः शेषः', ह्रस्वत्वम् ।

**अर्दिधिषतीति** । इटि 'पुगन्तलघूपधस्य' गुणे कृते 'अजादेर्द्वितीयस्य' इति 'धिस' इत्येतस्य द्विर्वचनम्, 'हलादिः शेषः', रेफस्य 'न न्द्राः संयोगादयः' इति निषेधान्न द्विर्वचनम्, 'अभ्यासे चर्च' इति धकारस्य दकारः । **ईर्त्संतीति** । 'अजादेर्द्वितीयस्य' इति 'धस्' इत्यस्य द्विर्वचनम्, 'हलादिः शेषः', 'अभ्यासे चर्च' इति धकारस्य दकारः, 'सन्यतः' इतीत्त्वम्, ऋदिधस इति स्थिते 'आप्ज्ञप्यृधामीत्' इतीत्त्वम्, रपरत्वम्, 'अत्र लोपोऽभ्यासस्य' इत्यभ्यासलोपः, 'खरि च' इति चर्त्वम्—धकारस्य तकारः ।

**पदमञ्जरी**

**सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम् ॥ भ्रस्जेरेकाच[1]** इति श्रयतेरुगन्तानां च 'सनि ग्रहगुहोश्च' इति प्रतिषेधः प्राप्तः, इतरषां तु नित्यमिट् प्राप्तः, तत्रेदमारभ्यते । **अर्दिधिषतीति** । लघूपधलक्षणे गुणे 'अजादेर्द्वितीयस्य' इति धिस् इत्यस्य द्विर्वचनम्, रेफस्य तु 'न न्द्राः' इति प्रतिषेधः । **ईर्त्संतीति** । 'आप्ज्ञप्यृधामीत्' इति ऋकारस्य रपर ईकारः, धकारेण सशब्दस्य द्विर्वचनम्, 'अत्र लोपोऽभ्यासस्य' ।

**भावबोधिनी**

वर्णस्य" सूत्र से 'अ'का ओ होने पर रूप होता है । ] लुभ्-लोब्धा, लोभिता । रुष्-रोष्टा, रोषिता । रिष्—रेष्टा, रेषिता ।

तकारादि परे रहते–इसका क्या फल है—एषिष्यति । [ यहाँ तकारादि परे नहीं होने से विकल्प न होकर नित्य इट् होता है । ] ॥ ४८ ॥

इवन्त धातुओं को और ऋधु, भ्रस्ज, दम्भु, श्रि, स्वृ, यू, ऊर्णु, भर, ज्ञपि, सन्—इनको सन् परे विकल्प से इट् आगम होता है । इवन्त के उदा० दिदेविषति, दुद्यूषति । सिसेविषति, सुस्यूषति । [ दिव् + सन्, इट् न होने पर सन् को कित् मानकर "च्छ्वोः शूडनुनासिके च" सूत्र से 'व्' का ऊठ् आदेश—दि + ऊ + स् यण्–द्यूस्, द्वित्व, हलादिशेष अभ्यास आदि कार्य करने पर–दुद्यूषति । इट् होने पर दिव् + इ स, उपधागुण, द्वित्वादि कार्य करने पर रूप बनता है–दिदेविषति । इसी प्रकार सिव् + सन्, में भी इट् के अभाव में ऊठ् यणादि करने पर रूप बनता है । ]

ऋध्—अर्दिधिषति, ईर्त्सति । [ ऋध + सन्, इट्, उपधागुण, रपर, अर्धिस, "अजादेर्द्वितीयस्य" सूत्र से द्वितीय एकाच् 'धिस्' का द्वित्व, हलादिशेष, "अभ्यासे चर्च" इससे ध का द—अर्दिधिष + लट् । इट् अभाव में ऋध + स, "आप्ज्ञप्यृधामीत्" ( ७।४।५५ ) सूत्र ऋ का ई, रपर ईर्ध् स, ध् का चर्त्व ईर्त्स, 'नन्द्राः संयोगादयः' सूत्र से रेफ पर्यन्त छोड़कर 'त्स' का द्वित्व, 'अत्र लोपोऽभ्यासस्य" सूत्र से अभ्यास लोप—ईर्त्स + लट् आदि । ]

---

१. इदं काशिकायां नास्ति । कैश्चित् प्रमादेन प्रतीकरूपेण प्रकाशितम् ।

**भ्रस्ज—बिभ्रज्जिषति, बिभ्रक्षति, बिभर्ज्जिषति, बिभर्क्षति ।**
**दम्भु—दिदम्भिषति, धिप्सति, धीप्सति ।**
**श्रि—उच्छिश्रयिषति, उच्छिश्रीषति ।**
**स्वृ—सिस्वरिषति, सुस्वूर्षति ।**

**न्यासः**

**बिभ्रज्जिषतीति ।** 'झलां जश् झशि' इति सकारस्य दकारः, 'स्तोः श्चुना श्चुः' इति श्चुत्वम्—दकारस्य जकारः । **बिभर्क्षतीति ।** 'भ्रस्जो रोपधयोः रमन्यतरस्याम्' इत्यकारात् परो रगागमः 'रोपधयोः' इति षष्ठीनिर्देशाद्रेफस्योपधायाश्च सकारस्य निवर्त्तकः, 'चोः कुः' इति कुत्वम्, 'इण्कोः' इति 'आदेशप्रत्यययोः' इति षत्वम् ।

**धिप्सति, धीप्सतीति ।** 'दम्भ इच्च' इतीत्वमीत्वञ्च—'खरि च' इति चर्त्वम्—भकारस्य पकारः, पूर्ववदभ्यासलोपः, 'हलन्ताच्च' इति कित्त्वादनुनासिकलोपः ।

**उच्छिश्रीषतीति ।** 'इको झल्' इति कित्वम्, 'अज्झनगमां सनि' इति दीर्घत्वम्, द्विर्वचनमभ्यासकार्यम् । 'आदेशप्रत्यययोः' इति षत्वम्, दकारस्य चुत्वम्—चकारः, 'शश्छोऽटि' इति शकारस्य च्छकारः ।

**सिस्वरिषतीति ।** द्विर्वचनम् 'स्वृ' इत्येतस्य, 'उरत्' इत्यत्त्वम्, रपरत्वञ्च । **सुस्वूर्षतीति ।** पूर्ववद् दीर्घः, 'उदोष्ठ्यपूर्वस्य' इत्युत्त्वम्, रपरत्वम्, 'हलि च' इति दीर्घः, द्विर्वचनम्–'स्वूर्ष' इत्येतस्य, अभ्यासकार्यम्, 'आदेशप्रत्यययोः' इति षत्वम् ।

**पदमञ्जरी**

**बिभ्रज्जिषतीति ।** 'भ्रस्जो रोपधयोः रमन्यतरस्याम्' । **बिभ्रक्षतीति ।** व्रश्चादिना षत्वम्, 'षढोः कः सि' ।

**धिप्सतीति ।** दम्भ इच्च' इतीत्वमित्वं च, 'हलन्ताच्च' इति कित्त्वे नलोपः, पूर्ववदभ्यासलोपः ।

**भावबोधिनी**

भ्रस्ज—बिभ्रज्जिषति, बिभ्रक्षति, बिभर्ज्जिषति, बिभर्क्षति । [ भ्रस्ज् + सन्, इट् होने पर द्वित्व तथा अभ्यासकार्य के बाद बिभ्रस्ज् + इ स, 'झलां जश् झशि'' सूत्र से स् का द्, श्चुत्व से द् का ज्–बिभ्रज्ज् + इ स, षत्व आदि करने पर और रम् आगम न होने पर (१) बिभ्रज्जिषति । इट् और रम्—दोनों न होने पर बिभ्रस्ज् + स, ज् का कुत्व, स् लोप, स् का ष् बिभ्रक् ष । क् ष काक्ष—(२) बिभ्रक्षति । इट् आगम और 'भ्रस्जो रोपधयोः रमन्यतरस्याम्'' सूत्र से रम् आगम करने पर, द्वित्वादि के बाद (३) बिभर्ज्जिषति । इट् न होने और रम् होने पर बिभर्ज्ज् + स, षत्व, क्षत्व,—(४) बिभर्क्षति । इट् और रम् होने पर एक रूप । इट् और रम् दोनों न होने पर दूसरा रूप । इट् होने और रम् न होने तीसरा रूप । रम् होने और इट् न होने पर चौथा रूप होता है । ]

दम्भु—दिदम्भिषति, धिप्सति, धीप्सति । [ दम्भ् + स, इट् होने पर द्वित्व अभ्यासकार्य के बाद—दिदम्भिषति । इट् न होने पर ''दम्भ इच्च'' इस सूत्र से इत् होने पर—दिम्भ + स, कित्, नलोप, चर्त्व होने से भ् का प्, द्वित्व, अभ्यासलोप, कित् होने से 'म्' का लोप, भष्भाव से द् का ध्–धिप्सति । और ''दम्भ इच्च'' में चकार बल से ईत् होने पर–दीम्भ् + स, शेष पूर्ववत् करने पर–धीप्सति । ]

श्रि—उच्छिश्रयिषति, उच्छिश्रीषति । [ उत् श्रि + सन्, इट् द्वित्वादि करने पर उत् + शिश्रयिषति, 'शश्छोऽटि' से छत्व, श्चुत्व–उच्छिश्रयिषति । इट् न होने पर कित् मानकर ''अज्झनगमां सनि'' सूत्र से 'इ' का दीर्घ–उत् श्री + स, द्वित्व, अभ्यासकार्य के बाद–उच्छिश्रीषति । ]

स्वृ—सिस्वरिषति, सुस्वूर्षति । [ स्वृ + सन्, इट् होने पर 'उरत्' से ऋ का अत्व, रपरत्व आदि करने के बाद सस्वर् + इ स, अभ्यास के अ का इत्व, स का ष–सिस्वरिषति । इट् न होने पर कित् मानकर दीर्घ ''उदोष्ठ्यपूर्वस्य'' सूत्र से ऋ का उत्व, रपरत्व, दीर्घ–स्वूर् + स, षत्व, द्वित्व अभ्यासलोप ह्रस्वादि करने पर–सुस्वूर्षति । ]

यु—यियविषति, युयूषति।

ऊर्णु—प्रोर्णुनविषति, प्रोर्णुनुविषति, प्रोर्णुनूषति।

'भर' इति भृञित्येतस्य भौवादिकस्य ग्रहणम्; शपा निर्देशात्। बिभरिषति, बुभूर्षति।

ज्ञपि—जिज्ञपयिषति, ज्ञीप्सति।

सन्—सिसनिषति, सिषासति।

**न्यासः**

यियविषतीति। 'ओः पुयण्ज्यपरे' इत्यभ्यासस्येत्त्वम्। प्रोर्णुनूषतीति। 'अजादेर्द्वितीयस्य' इति वचनाद् द्वितीयस्यैकाचः 'नुस' इत्येतस्य द्विरुक्तिः, रेफस्य पूर्ववन्न द्विर्वचनम्।

प्रोर्णुनविषतीति। इट्, पक्षे 'विभाषोर्णोः' इति यदा ङित्त्वं तदोवङ्, अन्यदा तु गुणः।

भृञित्येतस्य भौवादिकस्य ग्रहणमिति। अथ डुभृञित्येतस्य जौहोत्यादिकस्य ग्रहणं कस्मान्न भवति ? इत्याह—शपा निर्देशादित्यादि। यदि जौहोत्यादिकस्य भृञो धारणपोषणार्थस्य ग्रहणमभिमतं स्यात्, तदा 'भृ' इत्येवं निर्देशं कुर्यात्, न तु 'भर' इति शपा निर्देशम्, कृतश्च शपा निर्देशः, तस्माद् भौवादिकस्य ग्रहणमिति गम्यते। बुभूर्षतीति। पूर्ववदुत्त्वदीर्घत्वे।

ज्ञीप्सतीति। 'ज्ञा' इत्येतस्माण्णिच्, 'अर्त्तिह्री' इत्यादिना पुक्, पूर्ववदीत्वाभ्यासलोपौ। सिषासतीति। 'जनसनखनां सञ्झलो' रित्यात्वम्।

**पदमञ्जरी**

यियविषतीति। 'ओः पुयण्ज्यपरे' इत्यभ्यासस्येत्वम्।

'भृञ इत्येतस्येति। दीर्घान्तोऽयम्। तथा च 'भरः' इत्यब्[२] भवति।

सिसनिषतीति। 'स्तौतिण्योरेव' इति नियमादत्र षत्वाभावः। सिषासतीति। षत्वभूते सनि नियमादत्र षत्वम्।

**भावबोधिनी**

यु—यियविषति, युयूषति। [ इट् होने पर द्वित्व, अभ्यासकार्य, "ओःपुयण्ज्यपरे" सूत्र से उ का इत्व, दूसरे 'उ' का गुण, अवादेश,। इट् न होने पर कित् मानकर दीर्घ, द्वित्वादि करने पर रूप बनता है। ]

ऊर्णुञ्—प्रोर्णुनविषति, प्रोर्णुनुविषति। प्रोर्णुनूषति। [ प्र + ऊर्णु + स, इट् होने पर "अजादेर्द्वितीयस्य" के अनुसार प्रोर् नु स के 'नुस्' का द्वित्व, अभ्यासकार्य प्र ऊर्, नु नु + इस, गुण, अवादेश, स् का ष्, णत्व, प्र + ऊर्णुनविष, गुण, लडादिकार्य। "विभाषोर्णोः" सूत्र से वैकल्पिक ङित् हो जाने से गुण न होकर 'उ' का उवङ् आदेश होता है—प्रोर्णुन् उव् इस—प्रोर्णुनुविषति। इट् न होने पर प्रोर्णुनूषति। ]

'भर' यह 'भृञ्' इस भ्वादिगणीय का ग्रहण है क्योंकि 'शप्' विकरणसहित निर्देश है। बिभरिषति, बुभूर्षति। [ भृ + स, इट् होने पर अत्व, रपर, द्वित्व, अभ्यासकार्य के बाद बिभरिषति। इट् न होने पर कित्, दीर्घ- भॄ + स, उत्व, दीर्घ, द्वित्वादि कार्य होते हैं। ]

ज्ञप्—जिज्ञपयिषति, ज्ञीप्सति। [ 'ज्ञा' इससे णिच् करने पर "अर्ति-ह्रीब्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ" सूत्र से पुक्, ज्ञाप् इ + स, इट्, मित् होने के कारण 'मितां ह्रस्वः' से ह्रस्व करके ज्ञप् + इस, द्वित्व तथा अभ्यासकार्य करने पर जिज्ञप् इ + इस, णिच् के इ का गुण, अय् आदेश स का षत्व—जिज्ञपयिषति। इट् न होने पर कित् होने से णि का गुण न होकर लोप होने पर ज्ञप् + स, "आप्ज्ञप्यृधामीत्" सूत्र से 'अ' का ईत्व–ज्ञीप् स, द्वित्वादि के बाद "अत्र लोपोऽभ्यासस्य" सूत्र से अभ्यास का लोप हो जाने पर–ज्ञीप्सति। ]

सन्—सिसनिषति, सिषासति। [ सन् + सन्, इट् होने पर द्वित्वादि के बाद–सिसनिषति। इसमें "स्तौति-ण्योरेव षण्यभ्यासात्" सूत्र नियम के कारण षत्व नहीं होता है। इट् न होने पर सन् + सन् में "जनसनखनां सञ्झलोः" सूत्र से आत्व सा + सन्, द्वित्व, ह्रस्व, अभ्यास के अ का इत्व-सि सा + स, षत्व सिषासति। ]

---

१. काशिकायां 'भृञ्' इति ह्रस्वान्तो पाठः।     २. सूत्रे तु शपा निर्देश इति बोध्यम्।

**केचिदत्र 'भरज्ञपिसनितनिपतिदरिद्राणाम्' इति पठन्ति। तितनिषति, तितंसति, तितांसति। पिपतिषति, पित्सति। दिदरिद्रिषति, दिदरिद्रासति।**

**सनीति किम्? देविता। भ्रष्टा॥**

## ३३२९. क्लिशः क्त्वानिष्ठयोः ॥ ५० ॥ ( ३०४९ )

**क्लिशः क्त्वानिष्ठयोर्वा इडागमो भवति। क्लिष्ट्वा, क्लिशित्वा। क्लिष्टः, क्लिष्टवान्। क्लिशितः, क्लिशितवान्।**

**'क्लिशू विबाधने' ( धा० पा० १५२३ )—इत्यस्य क्त्वायां विकल्पः सिद्ध एव, निष्ठायां तु 'यस्य**

### न्यासः

**केचिदत्रेत्यादि।** केचिदिति वचनात् केचिन्न पठन्तीत्युक्तं भवति। ये तु न पठन्ति तेऽत्र 'तनिपतिदरिद्राणामुपसंख्यानं' कुर्वन्ति। **तितंसति, तितांसतीति।** 'तनोतेर्विभाषा' इति पक्षे दीर्घः। **पित्सतीति।** 'सनिमीमा' इत्यादिनेसादेशः, अभ्यासलोपः, 'स्कोः' इत्यादिना सलोपः। **दिदरिद्रिषति, दिदरिद्रासतीति।** 'दरिद्रातेरार्धधातुके' इत्यादिना विकल्पेनाकारलोपः॥ ४९॥

**क्लिशः क्त्वानिष्ठयोः॥ क्लिष्ट्वेति।** व्रश्चादिसूत्रेण षत्वम्। **क्लिशित्वेति।** 'रलो व्युपधाद्धलादेः संश्च' इति कित्वम्। **क्त्वाप्रत्यये विकल्पः सिद्ध एवेति।** ऊदित्वात् 'स्वरति' इत्यादिना। यदि क्त्वाप्रत्यये विकल्पः सिद्ध एव, तत् किमर्थं क्त्वाग्रहणम्? इत्याह—**क्लिश उपताप इत्यस्य त्वित्यादि। नित्यमिडागमः**

### पदमञ्जरी

**केचिदत्रेति।** ये त्वेतन्न पठन्ति ते उपसंख्यानमारभन्ते। **तितांसतीति।** 'तनोतेर्विभाषा' इति पक्षे दीर्घत्वम्। **पित्सतीति।** 'सनि मीमाघु' इत्यादिना अच इस्, 'स्कोः संयोगाद्योः' इति सलोपः, पूर्ववदभ्यासलोपः। **दिदरिद्रासतीत्येके दिदरिद्रिषतीति[1] चेति।** इट्पक्षे दरिद्रातेराकारलोपः॥ ४९॥

**क्लिशः क्त्वानिष्ठयोः॥ क्लिशित्वेति।** 'मृडमृद' इत्यादिना कित्वम्।

### भावबोधिनी

कुछ विद्वान् इस सूत्र में 'भरज्ञपि-सनि-तनि-पति-दरिद्राणाम्' ऐसा पढ़ते हैं। [ इसलिए जो ऐसा सूत्रपाठ नहीं मानते हैं वे अलग से वचन द्वारा 'तनिपति-दरिद्रा' के वैकल्पिक इडागम की व्यवस्था मानते हैं।]—उदा० तितनिषति, [ इट् न होने पर "तनोतेर्विभाषा" सूत्र से वैकल्पिक दीर्घ होने से दो रूप होते है–] तितंसति, तितांसति। पिपतिषति पित्सति। [ पत् + सन्, इडागम न होनेपर 'सनि मीमाघु०' इत्यादि सूत्र से इस् आदेश-पिस्त् + स, 'स्कोः संयोगाद्योरन्ते च' सूत्र से संयोगादि स् का लोप—पित् + स, द्वित्व, अभ्यासलोप, पित्सति।] दिदरिद्रिषति, दिदरिद्रासति। [ दरिद्रा + सन्, वैकल्पिक इट्, प्रथम एकाच 'द' का द्वित्व, अभ्यासकार्य-दिदरिद्रा + इस, 'दरिद्रातेरार्धधातुके' इससे विकल्प से आ का लोप इट् पक्ष में होने पर प्रथम रूप। इट् न होने पर आलोप भी नहीं, द्वितीय रूप।]

सन् परे—इसका क्या फल है? देविता। भ्रष्टा। [यहाँ वैकल्पिक न होकर नित्य इट् या अभाव है।] ॥४९॥

'क्लिश' से क्त्वा और निष्ठा परे रहते विकल्प से इट् आगम होता है। उदा० क्लिष्ट्वा, क्लिशित्वा। [ क्लिश् + क्त्वा, इट् होने पर क्लिशित्वा। इट् न होने पर "व्रश्चभ्रस्ज" इत्यादि सूत्र से श् का ष्, ष्टुत्व। यही प्रक्रिया सभी में समझनी चाहिये। क्लिश् + क्त, इट् होने पर–क्लिशितः, इट् न होने पर–क्लिष्टः। क्लिश् + क्तवतु, इट् होने पर क्लिशितवान्। इट् न होने पर क्लिष्टवान्।] क्लिष्टः, क्लिशितः। क्लिष्टवान्, क्लिशितवान्।

'क्लिशू विबाधने' इसका क्त्वा में विकल्प सिद्ध ही है [ क्योंकि ऊदित् होने के कारण 'स्वरतिसूतिसूयति-

१. दिदरिद्रिषति, दिदरिद्रासति—इति पाठोमूले दृश्यते।

विभाषा' ( ७.२.१५ ) इति प्रतिषेधः प्राप्नोति । 'क्लिश उपतापे' ( धा० पा० ११६२ ) इत्यस्य तु क्त्वायाम्, निष्ठायां च नित्यमिडागमः प्राप्नोति, तदर्थं क्त्वाग्रहणं क्रियते ॥

**३३३०. पूङश्च ॥ ५१ ॥ ( ३०५० )**

पूङश्च क्त्वानिष्ठयोर्वा इडागमो भवति । पूत्वा, पवित्वा । सोमोऽतिपूतः, सोमोऽतिपवितः । पूतवान्, पवितवान् । 'श्र्युकः किति' ( ७.२.११ ) इति प्रतिषेधे प्राप्ते विकल्पो विधीयते ॥

**३३३१. वसतिक्षुधोरिट् ॥ ५२ ॥ ( ३०४६ )**

वसतेः क्षुधेश्च क्त्वानिष्ठयोरिडागमो भवति । उषित्वा । उषितः । उषितवान् । क्षुधित्वा ।

**न्यासः**

**प्राप्नोतीति** । उपतापार्थस्य क्लिशेरुदात्तत्वात् । **तदर्थमिति** । उपतापार्थो यः क्लिशिस्तदर्थम् । सोऽर्थः प्रयोजनं यस्य तत् तथोक्तम् । अथ वा–उपतापार्थस्य क्लिशेर्यो नित्यमिडागमः प्राप्नोति तदर्थम्, तन्निवृत्त्यर्थमित्यर्थः; अर्थशब्दस्य निवृत्तिवचनत्वात् ॥ ५० ॥

**पूङश्च** ॥ उगन्तत्वात् 'श्र्युकः किति' इतीट्प्रतिषेधे प्राप्ते क्त्वानिष्ठयोः पक्षे प्राप्त्यर्थं वचनम् । **पवित्वा, पवितः, पवितवानिति** । 'पूङः क्त्वा च' इति कित्त्वप्रतिषेधाद् गुणो भवत्येव । 'पूङः' इति सानुबन्धकस्य ग्रहणं पूञो निवृत्त्यर्थम् ॥ ५१ ॥

**वसतिक्षुधोरिट्** ॥ 'वस निवासे', 'क्षुध बुभुक्षायाम्'—अनयोरनुदात्तत्वादिट्प्रतिषेधे प्राप्ते क्त्वानिष्ठयोरिड्विधानार्थं वचनम् । **उषित्वेति** । क्त्वा, इट्, 'न क्त्वा सेट्' इति कित्त्वप्रतिषेधे प्राप्ते 'मृडमृद' इत्यादिना कित्त्वम्, वच्यादिसूत्रेण यजादित्वात् सम्प्रसारणम्, 'शासिवसिघसीनां च' इति षत्वम् । **क्षुधित्वेति** । अत्रापि 'रलो व्युपधाद्धलादेः संश्च' इति पक्षे कित्त्वम् ।

**वसतीति विकरणनिर्देश इत्यादि** । 'विकरणनिर्देशो धातुनिर्देशार्थ एव' इत्युक्तम् । अथ 'वस

**पदमञ्जरी**

**विकल्पः सिद्ध एवेति** । ऊदित्त्वात्स्वरत्यादिसूत्रेण । किमर्थं तर्हि क्त्वाग्रहणम् ? इत्यत आह—**क्लिश उपताप इत्यस्येति** ॥ ५० ॥ ५१ ॥

**वसतिक्षुधोरिट्** ॥ **उषित्वेति** । पूर्ववत्कित्त्वम्, यजादित्वात्सम्प्रसारणम्, 'शासिवसि' इत्यादिना

**भावबोधिनी**

धूञूदितो वा' से वैकल्पिक इट् होता है । ] किन्तु [ वैकल्पिक इट् होने से ] "यस्य विभाषा" सूत्र से [ इट् का प्रतिषेध ] निष्ठा में प्राप्त होता है। [ उसमें विकल्प से इडागम के लिये सूत्र है और ] 'क्लिश् उपतापे' इसका तो क्त्वा और निष्ठा दोनों में ही नित्य इडागम प्राप्त होता है वहाँ [ विकल्प करने ] के लिये सूत्र में 'क्त्वा' का ग्रहण किया जाता है । [ तदर्थम्—में अर्थ को निवृत्तिवाचक मानकर–नित्य की निवृत्ति के लिये अर्थात् विकल्प करने के लिए सूत्र में 'क्त्वा' का ग्रहण है । ] ॥ ५० ॥

'पूङ्' से परे क्त्वा तथा निष्ठा में विकल्प से इट् आगम होता है । उदा० पूत्वा, पवित्वा । सोमोऽतिपूतः, सोमोऽतिपवितः । पूतवान्, पवितवान् । [ इट् आगम होने पर ऊ का गुण और अवादेश होता है । "पूङः क्त्वा च" सूत्र से कित्त्व का प्रतिषेध होता है । अतः इट् पक्ष में गुण होता है । ] "श्र्युकः किति" इस सूत्र से इट् का प्रतिषेधो प्राप्त रहते यह विकल्प किया जाता है ॥ ५१ ॥

'वस' और 'क्षुध' से क्त्वा और निष्ठा परे रहते इट् आगम होता है । उदा० उषित्वा । उषितः । उषितवान् । [ वस् + क्त्वा, क्त, क्तवतु, में इट् आगम, कित् परे होने से "वचिस्वपियजादीनाम्" सूत्र से 'व' का सम्प्रसारण उ, अ का पूर्वरूप, उस् + इ त, "शासिवसिघसीनां च" सूत्र से स् का ष् होने पर 'उषितः' आदि रूप बनते हैं । ]

क्षुधितः । क्षुधितवान् ।

'वसति' इति विकरणनिर्देशः धातुनिर्देशार्थ एव । वस्तेस्तूदात्तत्वादेव भवितव्यमिटा । पुनरिड्ग्रहणं नित्यार्थम् ॥

### ३३३२. अञ्चेः पूजायाम् ॥ ५३ ॥ (३०४७)

अञ्चेः पूजायामर्थे क्त्वानिष्ठयोरिडागमो भवति । अञ्चित्वा जानु जुहोति । अञ्चिता अस्य गुरवः ।

'उदितो वा' ( ७.२.५६ ) इति क्त्वाप्रत्यये विकल्पः प्राप्तः, निष्ठायाम् 'यस्य विभाषा' ( ७.२.१५ ) इति प्रतिषेधः प्राप्तः, तदर्थमिदं प्रारब्धम् ।

पूजायामिति किम् ? उदक्तमुदकं कूपात् । उद्धृतमित्यर्थः ॥

#### न्यासः

आच्छादने' इत्यस्य निवृत्त्यर्थः कस्मान्न विज्ञायते ? इति यश्चोदयेत्, तं प्रत्याह—**वस्तेरित्यादि । अथ** वावस्तः, वावस्तवानित्यत्र यङ्लुङ्निवृत्त्यर्थः कस्मान्न विज्ञायते ? विहितविशेषणपक्षविज्ञानादपि यङ्लुङ्निवृत्तिः शक्यते कर्तुमित्यभिप्रायः । अथेडित्यनुवर्त्तमाने पुनरिड्ग्रहणं किमर्थम् ? इत्याह—**पुनरिड्ग्रहणं नित्यार्थमिति** । पूर्वकमिड्ग्रहणं विकल्पेन सम्बद्धम्, अतस्तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यात् । तस्मात् तन्निवृत्त्यर्थं पुनरिड्ग्रहणं कृतम् ॥ ५२ ॥

**अञ्चेः पूजायाम् ॥ अञ्चिता इति** । पूजिता इत्यर्थः । 'मतिबुद्धिपूजार्थेभ्यश्च' इति क्तप्रत्ययः । 'अनिदिताम्' इत्यनुनासिकलोपो न भवति; 'नाञ्चेः पूजायाम्' इति प्रतिषेधात् । **अस्येति** । 'क्तस्य च वर्त्तमाने' इति षष्ठी ॥ ५३ ॥

#### पदमञ्जरी

षत्वम् । **वस्तेस्त्विति** । 'वस आच्छादने' ( धा० पा० १०२३ ) इत्यस्य यङ्लुग्निवृत्त्यर्थोऽपि शपा निर्देशो न भवति, तत्रापि क्त्वानिष्ठयोः सामान्यलक्षणेन इड् भवत्येव—वावसितः, वावसितवान्, वावसित्वा । गणाश्रयत्वात्सम्प्रसारणाभावः ॥ ५२ ॥

**अञ्चेः पूजायाम् ॥ अञ्चिता अस्येति** । 'मतिबुद्धि' इत्यादिना वर्त्तमाने क्तः, 'नाञ्चेः पूजायाम्' इत्युपधालोपप्रतिषेधः, 'क्तस्य च वर्त्तमाने' इति कर्त्तरि षष्ठी ॥ ५३ ॥

#### भावबोधिनी

क्षुधित्वा, क्षुधितः, क्षुधितवान् । [ इट् होने पर "रलो व्युपधाद्धलादेः संश्च" सूत्र से कित् होने के कारण गुण नहीं होता हैं । ]

'वसति' यह [ शप् ] विकरण का निर्देश [ भ्वादिगणीय 'वस निवासे' इस ] धातु के निर्देश के लिए है । [ अतः अन्य गणों की 'वस' धातु में यह इट् नहीं होता है । ] 'वस आच्छादने' इसके तो उदात्त होने से ही इट् होना चाहिए । [ पूर्व सूत्र से अनुवृत्त होने वाला इट् विकल्प से सम्बद्ध है अतः ] इस सूत्र में दुबारा इट् का ग्रहण नित्य इट् आगम के लिए है ॥ ५२ ॥

'अञ्चु' धातु से पूजा अर्थ में क्त्वा और निष्ठा प्रत्ययों को इट् आगम होता है । उदा० अञ्चित्वा जानु जुहोति । अञ्चिता अस्य गुरवः ;

[ अञ्चु यह उदित् होने से ] 'उदितो वा' इस सूत्र से क्त्वा प्रत्यय में विकल्प प्राप्त होता है, निष्ठा प्रत्यय में 'यस्य विभाषा' इस सूत्र से प्रतिषेध प्राप्त है । इन [ में नित्य इट् करने ] के लिये यह सूत्र आरब्ध है ।

पूजा अर्थ में—इसका क्या फल है ? उदक्तम् उदकं कूपात् । उद्धृत = निकाला गया—यह अर्थ है । [ पूजा अर्थ नहीं है । अतः इट् नहीं होता है । ] ॥ ५३ ॥

**३३३३. लुभो विमोहने ॥ ५४ ॥ (३०४८)**

लुभो विमोहनेऽर्थे वर्त्तमानात् क्त्वानिष्ठयोरिडागमो भवति। लुभित्वा, लोभित्वा। विलुभिताः केशाः। विलुभितः सीमन्तः। विलुभितानि पदानि। विमोहनम् = आकुलीकरणम्, तत्र क्त्वायां 'तीषसहलुभ' (७.२.४८) इति विकल्पः, निष्ठायाम् 'यस्य विभाषा' (७.२.१५) इति प्रतिषेधः प्राप्तः।

विमोहन इति किम् ? लुब्धो वृषलः। शीतेन पीडित इत्यर्थः।

लुब्ध्वा, लुभित्वा, लोभित्वा। गार्ध्ये यथाप्राप्तमेव भवति॥

**३३३४. जॄव्रश्च्योः क्त्वि ॥ ५५ ॥ (३३२७)**

'जॄ' 'व्रश्चि'—इत्येतयोः क्त्वाप्रत्यये इडागमो भवति। जरित्वा, जरीत्वा। व्रश्चित्वा। "जॄ इत्येतस्य 'श्र्युकः किति' (२.७.११) इति प्रतिषेधः प्राप्तो व्रश्चेरूदित्वाद्विकल्पः।

क्त्वाग्रहणं निष्ठानिवृत्त्यर्थम्॥

**न्यासः**

लुभो विमोहने॥ लुभित्वा, लोभित्वेति। 'रलो व्युपधाद्' इत्यादिना पक्षे कित्वाद् गुणाभावो भवत्येव।

गार्ध्ये यथाप्राप्तमेवेति। क्त्वाप्रत्यये विकल्पः। निष्ठायाम् 'यस्य विभाषा' इति नित्यः प्रतिषेध इति॥ ५४॥

जॄव्रश्च्योः क्त्वि॥ जरीत्वा, जरित्वेति। 'जॄ वयोहानौ' क्रैयादिकः। 'वॄतो वा' इति पक्षे दीर्घः। यस्तु 'जॄष वयोहानौ' इति दिवादौ पठ्यते, तस्य सानुबन्धकत्वादिह ग्रहणं नास्तीति तस्य जीर्त्वेत्येवं भवति। व्रश्चित्वेति। 'ओव्रश्चू छेदने'। 'न क्त्वा सेट्' इति प्रतिषेधाद् ग्रहिज्येत्यादिसूत्रेण सम्प्रसारणं न भवति; किति तस्य विधानात्।

अथ क्त्वाग्रहणं किमर्थम्, यावता 'क्लिशः क्त्वानिष्ठयोः' इत्यत एव क्त्वाग्रहणमनुवर्त्तत एव ? इत्याह—क्त्वाग्रहणमित्यादि। तद्धि क्त्वाग्रहणं निष्ठया सह सम्बद्धम्, अतस्तदनुवृत्तौ तस्या अप्यनुवृत्तिः स्यात्। एवं च सति निष्ठायामपि स्यात्। तस्मात् निष्ठानिवृत्त्यर्थमन्यदिह क्त्वाग्रहणं क्रियते॥ ५५॥

**पदमञ्जरी**

**लुभो विमोहने॥ लुभित्वा, लोभित्वेति। 'रलो व्युपधात्' इत्यादिना कित्त्वविकल्पः॥ ५४॥ ५५-५६॥**

**भावबोधिनी**

विमोहन अर्थ में वर्तमान 'लुभ' धातु से क्त्वा और निष्ठा प्रत्ययों में इट् आगम होता है। उदा० लुभित्वा, लोभित्वा। [ लुभ् + क्त्वा, इट्, "रलो व्युपधाद्धलादेः संश्च" सूत्र से पाक्षिक कित् होने पर गुण का निषेध ] विलुभिताः केशाः। विलुभितः सीमन्तः। विलुभितानि पदानि।

विमोहन = आकुल करना। इसमें क्त्वा प्रत्यय में "तीषसहलुभ" इस पूर्वोक्त सूत्र से विकल्प प्राप्त है, निष्ठाप्रत्ययों में 'यस्य विभाषा' से इट् प्रतिषेध प्राप्त है। [ इनको बाधकर नित्य इट् के लिये यह सूत्र बनाया गया है। ]

विमोहन = व्याकुल करना—इस अर्थ में–इसका क्या फल हैं ? लुब्धो वृषलः। शीत द्वारा पीड़ित—यह अर्थ है। लुब्ध्वा, लुभित्वा, लोभिता। गार्ध्य = लालच अर्थ में यथाप्राप्त ही होता है। [ अर्थात् 'तीषसहलुभ' सूत्र से विकल्प से इट् होता है और 'रलो व्युपधात्' सूत्र से विकल्प से कित् होने से वैकल्पिक गुण होता है। दो विकल्पों के कारण तीन रूप होते हैं। ] ॥ ५४॥

'जॄ' और 'वृश्चि' इनसे क्त्वा प्रत्यय परे इट् आगम होता है। उदा० जरित्वा, जरीत्वा। [ 'जॄ वयोहानौ' इस क्र्यादिगणीय से क्त्वा, इट्, गुण, रपर जर् इत्वा। "वॄतो वा" सूत्र से विकल्प से इट् का दीर्घ—जरीत्वा, पक्ष में जरित्वा ] वृश्चित्वा। [ "ओ व्रश्चू छेदने" से क्त्वा प्रत्यय, इट् आगम। ] 'जॄ' इसका "श्र्युकः किति" सूत्र से

## ३३३५. उदितो वा ॥ ५६ ॥ (३३२८)

उदितो धातोः क्त्वाप्रत्यये परतो वा इडागमो भवति । शमु—शमित्वा, शान्त्वा । तमु—तमित्वा, तान्त्वा । दमु—दमित्वा, दान्त्वा ॥

## ३३३६. सेऽसिचि कृतचृतच्छृदतृदनृतः ॥ ५७ ॥ (३५०६)

सकारादावसिच्यार्धधातुके कृत, चृत, छृद, तृद, नृत्—इत्येतेभ्यो धातुभ्यो वा इडागमो भवति । कृत्—कर्त्स्यति । अकर्त्स्यत् । चिकृत्सति । कर्तिष्यति । अकर्तिष्यत् । चिकर्तिषति ।
चृत—चर्त्स्यति । अचर्त्स्यत् । चिचृत्सति । चर्तिष्यति । अचर्तिष्यत् । चिचर्तिषति ।

**न्यासः**

उदितो वा ॥ शान्त्वेति । 'शमु उपशमे', 'तमु काङ्क्षायाम्', 'दमु उपशमे' 'भ्रमु चलने', [1]'क्रमु पादविक्षेपे' । अनिट्पक्षे 'अनुनासिकस्य क्विझलोः क्ङिति' इति दीर्घः ।

वाग्रहणं विस्पष्टार्थम् । उदितां ह्युदात्तत्वादिट् सिद्ध एव, तत्रारम्भसामर्थ्यादेव विकल्पेन विधिर्विज्ञास्यते । उत्तरार्थं चावश्यं वाग्रहणं कर्तव्यम्, तद्विस्पष्टार्थमिहैव क्रियते ॥ ५६ ॥

सेऽसिचि कृतचृतच्छृदतृदनृतः ॥ 'कृती छेदने' इति तौदादिकः, 'कृती वेष्टने' इति रौधादिकः—विशेषानुपादानाद् द्वयोरपि ग्रहणम् । 'चृती हिंसासंग्रन्थयोः', 'उछृदिर् दीप्तिदेवनयोः', 'उतृदिर् हिंसादानयोः' । उकारौ 'उदितो वा' इति विशेषणार्थौ । इकाररेफावपि 'इरितो वा' इति विशेषणार्थावेव । 'नृती गात्रप्रक्षेपे' । सर्वेषामेषामुदात्तत्वान्नित्यमिटि प्राप्ते सिचोऽन्यत्र सकारादौ विकल्पार्थं वचनम् । 'से' इत्येतस्याकारोच्चारण-

**पदमञ्जरी**

सेऽसिचि कृतचृतच्छृदतृदनृतः ॥ 'से' इत्यकार उच्चारणार्थः; असिचीति प्रतिषेधात् । तेन स्येऽप्ययं विकल्पो भवति । 'कृती छेदने' मुचादिः ( धा० पा० १४३५ ) 'कृती छेदने'[2] ( धा० पा० १४४७ ) रुधादिः—द्वयोरपि ग्रहणम् । ईदित्त्वस्य प्रयोजनमुक्तम् । 'चृती[3] हिंसाग्रन्थनयोः' ( धा० पा० १३२४ ), [4]'ऊच्छृदि-

**भावबोधिनी**

प्रतिषेध प्राप्त है और 'व्रश्चू' के ऊदित् होने से [ "स्वरति-सूति" इत्यादि सूत्र से ] विकल्प प्राप्त है । [ इनको रोककर नित्य इट् के लिये यह सूत्र बनाया गया है । ]

क्त्वा—का ग्रहण निष्ठा प्रत्ययों की निवृत्ति के लिए है अर्थात् यह केवल क्त्वा में इट् करता हैं ॥ ५५ ॥

उदित् ( उकार की इत्संज्ञावाली ) धातु से क्त्वा प्रत्यय परे विकल्प से इट् आगम होता है । उदा० शमु—शमित्वा, शान्त्वा । तमु—तमित्वा, तान्त्वा । दमु—दमित्वा, दान्त्वा । [ शमु, तमु, दमु—इनके उकार की इत्संज्ञा होने से उदित् है । इट् न होने पर 'अनुनासिकस्य क्विझलोः क्ङिति' सूत्र से उपधादीर्घ—शाम्, ताम्, दाम् । म् का अनुस्वार, परसवर्ण होने पर उक्त रूप बनते हैं ] ॥ ५६ ॥

कृत, चृत्, छृद, तृद, नृत्—इन धातुओं से सिच्भिन्न सकारादि आर्धधातुक प्रत्यय परे रहते विकल्प से इट् आगम होता है ।

कृत्—कर्त्स्यति । अकर्त्स्यत् । चिकृत्सति । [ इनमें लृट्, लृङ्, सन् परे इट् नहीं हुआ है । इट् होने पर ] कर्तिष्यति । अकर्तिष्यत् । चिकर्तिषति ।

चृत्—चर्त्स्यति । अचर्त्स्यत् । चिचृत्सति । [ ये इट् अभाव के रूप हैं । इट् होने पर ] चर्तिष्यति । अचर्तिष्यत् । चिचर्तिषति । [ इट् होने पर सन् कित् न होने से गुण होता है । ]

---

१. अन्त्ययोर्द्वयोर्मूले उल्लेखो नास्ति । २. वेष्टने—इति धातुपाठः, न्यासपाठश्च ।
३. 'हिंसाश्रन्थनयोः' इति धातुपाठः । ४. 'उ छृदिर्' इति धातुपाठः ।

छृद्—छर्त्स्यति । अच्छर्त्स्यत् । चिच्छृत्सति । छर्दिष्यति । अच्छर्दिष्यत् । चिच्छर्दिषति ।

तृद्—तर्त्स्यति । अतर्त्स्यत् । तितृत्सति । तर्दिष्यति । अतर्दिष्यत् । तितर्दिषति ।

नृत्—नर्त्स्यति । अनर्त्स्यत् । निनृत्सति । नर्तिष्यति । अनर्तिष्यत् । निनर्तिषति ।

से इति किम् ? कर्तिता । असिचीति किम् ? अकर्तीत् ॥

## ३३३७. गमेरिट् परस्मैपदेषु ॥ ५८ ॥ (२४०१)

गमेर्धातोः सकारादेरार्धधातुकस्य परस्मैपदेष्विडागमो भवति । गमिष्यति । अगमिष्यत् । जिगमिषति ।

गमेरिति किम् ? चेष्यति ।

**न्यासः**

मतन्त्रम्; अविवक्षितत्वात् । तेन स्येऽपि विकल्पो भवति । अतन्त्रत्वं तु पुनरस्य 'असिचि' इति सिचः प्रतिषेधाद्विज्ञेयम् । यदि ह्यतन्त्रमकारोच्चारणम्, एवं सति 'स्यसिचि' इत्येवं कस्मान्नोक्तम् ? सन्देहभयात् । एवं ह्युच्यमाने 'स्ये सिचि च' इत्येषोऽप्यर्थं आशङ्क्येत । 'सेऽसिचि' इत्युच्यमाने तु सप्तमीद्वयोरुपादानात् सिज्वर्जिते सकारादावित्यभिमतोऽर्थो विज्ञायते । नन्वत्रापि सन्देहः स्यात्—एवमुच्यमाने किमयं सिचि न वेति ? यदि हि सिच्यपि स्यात् तदुपादानमनर्थकं स्यात्, सीत्येवं ब्रूयात् । **कर्त्स्यतीति** । लट् । **अकर्त्स्यदिति** । लृङ् । **चिकृत्सतीति** । सन्, 'हलन्ताच्च' इति कित्त्वाद् गुणाभावः ॥ ५७ ॥

**गमेरिट् परस्मैपदेषु** ॥ 'गम्लृ गतौ' । गमिरयमनुदात्तत्वादनिट् । योऽपि 'सनि च' इति 'इण् गतौ' इत्यस्य गमिरादेशः, यश्च 'इण्वदिक इति वक्तव्यम्' इति 'इक् स्मरणे' इत्येतस्य, यश्च 'इङश्च' इति 'इङ् अध्ययने' इत्यस्य, सोऽपि स्थानिवद्भावादनिडेव स्यात् । तेभ्यः परस्य सकारादेरार्धधातुकस्य सिज्वर्जितस्येडागमो यथा स्यादित्येवमर्थं वचनम् । **गमिष्यति, अगमिष्यदिति** । अनादेशस्य गमेरुदाहरणम् । **जिगमिषतीति** । एतत् तस्येणादेशस्य, इगादेशस्य वा ।

**पदमञ्जरी**

दीप्तिदेवनयोः' ( धा० पा० १४४५ ), 'ऊतृदिर्[1] हिंसानादरयोः' ( धा० पा० १४४६ ), 'नृती गात्रविक्षेपे' ( धा० पा० १११६ ) । ईदित्त्वं पूर्ववत् ॥ ५७ ॥

**गमेरिट् परस्मैपदेषु** ॥ **संगंस्यत इति** । 'समो गम्यृच्छि' इत्यात्मनेपदम् । **गमेरिङादेशस्येति** । तेन **सञ्जिगंसते** इत्यत्र न भवतीति भावः ।

**भावबोधिनी**

छृद्—छर्त्स्यति । अछर्त्स्यत् । चिच्छृत्सति । [ इट् करने पर ] छर्दिष्यति । अर्छर्दिष्यत् । चिच्छर्दिषति । [ इट् होने पर सन् कित् न होने से गुण होता है । ]

तृद्—तर्त्स्यति । अतर्त्स्यत । तितृत्सति । [ इट् होने पर ] तर्दिष्यति । अतर्दिष्यत् । तितर्दिषति ।

नृत्—नर्त्स्यति, अनर्त्स्यत्, निनृत्सति । [ इट् होने पर ] नर्तिष्यति । अनर्तिष्यत् । निनर्तिषति ।

सकारादि रहने पर—इसका क्या फल है ? कर्तिता । [ लुट् में तास् होता है । सकारादि न होने से विकल्प नहीं होता है नित्य होता है । ] सिच् से भिन्न परे रहते—इसका क्या फल है ? अकर्त्तीत् । [ लुङ् में सिच् होने से विकल्प न होकर नित्य इट् होता है । ] ॥ ५७ ॥

गम् धातु से परे सकारादि आर्धधातुक को परस्मैपद में इट् आगम होता है । उदा० गमिष्यति । अगमिष्यत् । जिगमिषति । [लुट्, लुङ् और सन् परे इट् आगम होता है । जिगमिषति–यह इण् या इक् के आदेश का रूप है ।]

गम् से परे—इसका क्या फल है ? चेष्यति । [ यहाँ 'चि' है । इट् नहीं होता है । ]

---

१. 'उ तृदिर्' इति धातुपाठः ।

**इड्ग्रहणं नित्यार्थम्। परस्मैपदेष्विति किम्? संगंसीष्ट। संगंस्यते। संजिगंसते, संजिगंसिष्यते। अधिजिगांसते, अधिजिगांसिष्यते। गमेरिङादेशस्य 'अज्झनगमां सनि' (६.४.१६) इति दीर्घत्वम्।**

**'से' इत्येव—गन्तास्मि, गन्तास्वः, गन्तास्मः।**

**आत्मनेपदेन समानपदस्थस्य गमेरयमिडागमो नेष्यते। अन्यत्र सर्वत्रैवेष्यते। कृत्यपि हि भवति, परस्मैपदलुकि च—सञ्जिगमिषिता, अधिजिगमिषिता व्याकरणस्य; जिगमिष त्वमिति।**

**न्यास**

अथेडिति वर्त्तमाने पुनरिड्ग्रहणं किमर्थम्? इत्याह—**इड्ग्रहणं नित्यार्थमिति**। तद्धि पूर्वकमिड्ग्रहणम्। 'उदितो वा' इति वाग्रहणेन प्रकृतमिड्ग्रहणं सम्बद्धम्, अतस्तदनुवृत्तौ तस्याप्यनुवृत्तिः स्यात्, तथा च विकल्पेनेट् प्रसज्येत। तस्मात् तन्निवृत्त्यर्थं पुनरिड्ग्रहणं क्रियते। **संगंसीष्टेति**। सम्पूर्वाद् गमेराशिषि लिङ्, सीयुट्, 'समो गम्यृच्छि' इत्यादिनात्मनेपदम्, 'सुट् तिथोः', इति सुट्, षत्वम्, ष्टुत्वम्। **सञ्जिगंसत इति**। 'पूर्ववत् सनः' इत्यात्मनेपदम्। **अधिजिगांसत इति**। गमेरिङादेशस्य प्रत्युदाहरणम्। अथ सञ्जिगंसत इत्यत्र 'अज्झनगमां सनि' इति दीर्घत्वं कस्मान्न भवति? इत्याह—**गमेरिङादेशस्येत्यादि**। तद्धि दीर्घत्वमिङादेशस्य गमेरिष्यते, नान्यस्य। तथा हि तत्रोक्तम्—गमेरिङादेशस्येति वक्तव्यमिति।

यदि परस्मैपदेष्वित्युच्यते, तदा कृति परस्मैपदलुकि च न प्राप्नोति? इत्याह—**आत्मनेपदेनेत्यादि**। **समानपदस्थस्येति**। एकपदस्थस्येत्यर्थः। **अन्यत्र सर्वत्रैवेष्यत इति**। एतच्च कृत्यपि हीत्यादिना विस्पष्टीकरोति। **सञ्जिगमिषिता, अधिजिगमिषितेति**। कृत्युदाहरणे द्वे। **जिगमिष त्वमितीति**। एतत् परस्मैपदलुकि। सन्नतत्वाद् गमेर्लोट्, सिप्, 'सेर्ह्यपिच्च' इति सेर्हिरादेशः, 'अतो हेः' इति लुक्। कथं पुनः परस्मैपदेष्वित्यु-

**पदमञ्जरी**

**आत्मनेपदेन समानपदस्थस्येति**। इह तु जिगमिषितेवाचरति जिगमिषित्रीयत इति बहिरङ्गत्वादात्मनेपदस्य प्रतिषेधाभावः। एतच्च प्रस्नवित्रीयत इत्यत्र **वार्त्तिककार**मते व्याख्यातम्। **अन्यत्र सर्वत्रैवेष्यत इति**। कथं पुनरिष्यमाणोऽपि लभ्यते? **योगविभागात्**। गमेः सकारादाविड् भवतीत्येको योगः, ततः 'परस्मैपदेषु' इति द्वितीयो नियमार्थः। तुल्यजातीयापेक्षत्वान्नियमस्यात्मनेपदविषय इण्निवर्त्तत इति केचिदाहुः। अन्य मन्यन्ते—परस्मैपदेष्विति सप्तमीनिर्देशादानन्तर्याश्रयणादयमर्थो भवति—गमेरुत्तरस्य सकारादेरार्धधातुकस्य तिङ्क्ष्वनन्तरेषु यदीड्भवति परस्मैपदेष्वेवेति, ततश्च सङ्गंस्यते इत्यत्रैव व्यावृत्तिः स्यात्, न सङ्गसीष्टेत्यत्र। नापि संजिगंसत इत्यादौ; शपा व्यवधानात्। एकादेशो नास्ति व्यवधानम्? एकादेशः पूर्वविधौ स्थानिवद्भवति' इति स्थानिवद्भावाद्व्यवधानमेव। संजिगंसिष्यत इत्यादौ च नैव स्यात्, तस्मादिष्टिरेवेयम्।

**भावबोधिनी**

[ अनुवृत्ति होने पर भी पुनः ] इट् का ग्रहण नित्य करने के लिए है। [ क्योंकि अनुवृत्त होने वाला इट् 'वा' से सम्बद्ध है। ]

परस्मैपद परे—इसका क्या फल है? संगंसीष्ट। [ सम् गम् + लिङ् "समो गम्यृच्छाभ्याम्" सूत्र से आत्मनेपद हो जाने से 'त' सीयुट्, सुट् आदि होते हैं। इट् नहीं होता है। इसी प्रकार आगे के रूपों में भी समझना चाहिए—] संगंस्यते। संजिगंसते। संजिगंसिष्यते। [ सन्नन्त के लट् और लट् के रूप हैं। ]

अधिजिगांसते, अधिजिगांसिष्यते। [ यह अधिपूर्वक 'इङ्' का रूप है। इङ् का 'गम्' आदेश होने पर ये प्रत्युदाहरण हैं। ] इङ् के आदेश 'गम्' का 'अज्झनगमां सनि' सूत्र से दीर्घ होता है।

स = सकारादि परे रहने पर ही—गन्तास्मि, गन्तास्वः, गन्तास्मः। [ 'गन्तास् मि' आदि में सकारादि परे नहीं है। ]

आत्मनेपद के साथ समानपदस्थ = एकपदस्थ 'गम्' का यह इडागम इष्ट नहीं है। अन्यत्र सभी जगह इष्ट है। क्योंकि कृत् परे भी होता है और परस्मैपद का लुक् होने पर भी होता है—सञ्जिगमिषिता, अधिजिगमिषिता

पदशेषकारस्य पुनरिदं दर्शनम्—गम्युपलक्षणार्थं परस्मैपदग्रहणम्, परस्मैपदेषु यो गमिरुपलक्षितस्त-स्मात्सकारादेरार्धधातुकस्येड् भवति। तन्मतेन संजिगंसिता, अधिजिगंसिता व्याकरणस्य—इत्येव भवितव्यम् ॥

**३३३८. न वृद्भ्यश्चतुर्भ्यः ॥ ५९ ॥ (२३४८)**

वृतादिभ्यश्चतुर्भ्य उत्तरस्य सकारादेरार्धधातुकस्य परस्मैपदेषु इडागमो न भवति। वृत—वर्त्स्यति। अवर्त्स्यत्। विवृत्सति।

वृधू—वर्त्स्यति। अवर्त्स्यत्। विवृत्सति।

**न्यासः**

च्यमाने कृति परस्मैपदलुकि च लभ्यते? एवं मन्यते—योगविभागः कर्त्तव्यः; 'गमेरिट्' इत्येको योगः, तत्र 'से' इत्यनुवर्त्तते—सकारादावार्धधातुके गमेरिडागमो भवति। ततः 'परस्मैपदेषु' इति द्वितीयो योगो नियमार्थः। स चायं नियमो यद्यविशेषेण स्यात् तदा पूर्वयोगोऽनर्थकः स्यात्। तस्मात् तुल्यजातीयापेक्षया नियमः, तुल्य-जातीयश्च तिङ्—तिङ्विषये यदि भवति तदा परस्मैपदेष्वेव, नात्मनेपदेष्विति। तेन कृति परस्मैपदलुकि च पूर्वयोगेन भवत्येव; नियमेनाव्यावर्त्तितत्वादिति।

**पदशेषकारस्य पुनरित्यादि।** पदशेषकारः पुनरेवं मन्यते—परस्मैपदेष्विति नेयं परसप्तमी, किं तर्हि? विषयसप्तमी, परस्मैपदविषये यो गमिरुपलक्षितः = उपलब्धस्तस्य सकारादावार्धधातुक इड् भवतीति। एवं च सति योगविभागमन्तरेणापि तन्मतेन परस्मैपदेषु यो गमिरुपलक्षितः, तस्मादसत्यपि परस्मैपदे सर्वत्र कृति परस्मैपदलुकि चेड् भवत्येव; परस्मैपदपरत्वेन सकारादेरार्धधातुकस्याविशेषितत्वात्। तन्मतेन सञ्जि-गंसिता, अधिजिगंसिता व्याकरणस्येति भवितव्यमिति; सम्पूर्वस्य, अधिपूर्वस्य च गमेः परस्मैपदेष्वनुपल-क्षितत्वात्। तथा हि—सम्पूर्वाद् गमेः 'समो गम्यृच्छि' इत्यादिनात्मनेपदं विहितम्। अधिपूर्वादपि स्थानि-वद्भावाद् 'अनुदात्तङितः' इत्यात्मनेपदमिति ॥ ५८ ॥

**न वृद्भ्यश्चतुर्भ्यः ॥** 'वृद्भ्यः' इति बहुवचननिर्देशादाद्यर्थो गम्यते। अत एवाह—**वृतादिभ्य इति।** 'वृतु वर्त्तने', 'वृधु वृद्धौ', 'शृधु शब्दकुत्सायाम्', 'स्यन्दू स्रवणे'—इत्येते वृतादयश्चत्वार उदात्ताः। तत्राद्यानां त्रयाणां नित्यमिटि प्राप्ते, स्यन्देस्तूदित्वात् पाक्षिके प्राप्ते प्रतिषेधोऽयमुच्यते। **वर्त्स्यतीति।** 'लृट् शेषे च' इति लृट्, 'वृद्भ्यः स्यसनोः' इति विकल्पेन परस्मैपदम्। **विवृत्सतीति।** 'हलन्ताच्च' इति सनः कित्त्वाद् गुणा-भावः। वृधिशृध्योर्धकारस्य 'खरि च' इति चर्त्वम्—तकारः।

**पदमञ्जरी**

अत एव **इष्यत** इत्युक्तम्। **पदशेषो** नाम ग्रन्थविशेषः। **तन्मतेनेत्यादि।** अनन्तरोक्तस्य दूषणम्; न पुनरयं पक्षः स्थापितः; वार्त्तिकविरोधात्। यदाह—'सिद्धं गमेरात्मनेपदेन समानपदस्थस्येट्प्रतिषेधात्' इति ॥ ५८ ॥

**न वृद्भ्यश्चतुर्भ्यः ॥** बहुवचननिर्देशाच्चतुर्ग्रहणाच्चाद्यर्थो गम्यते।

'वृत्तिर्वृधिः शृधिः स्यन्दिश्चत्वारोऽमी वृतादयः।'

**भावबोधिनी**

व्याकरणस्य। [ ये दोनों तृच् प्रत्यय के उदाहरण हैं। ] जिगमिष त्वम्। [ यहाँ लोट् में लुक् होने पर भी इडागम होता है। ]

किन्तु पदशेषकार का यह मत है—गम् के उपलक्षण के लिए परस्मैपद का ग्रहण है। परस्मैपद परे रहते जो गम् उपलक्षित = उपलब्ध होता है उससे परे सकारादि आर्धधातुक को इट् आगम होता है। इस मत से—संजिगंसिता, अधिजिगंसिता व्याकरणस्य—यही होना चाहिए। [ सम् तथा अधिपूर्वक गम् का परस्मैपद नहीं होता है। अतः तिङन्त में इट् नहीं होता है। किन्तु पूर्ववर्ती मतानुसार इट् होता ही है। यह मतभेद सकारादि को इट् मानकर है। वलादि लक्षण इट् तो उभयमत में होता है। ] ॥ ५८ ॥

'वृत्' आदि चार से उत्तरवर्त्ती सकारादि आर्धधातुक को परस्मैपद परे रहते इडागम नहीं होता है। उदा० वृत्—वर्त्स्यति, अवर्त्स्यत्, विवृत्सति। [ प्राप्त इट् का प्रतिषेध हो जाता है। ] वृधु—वर्त्स्यति। अवर्त्स्यत्। विवृत्सति।

शृधु—शर्त्स्यति । अशर्त्स्यत् । शिशृत्सति ।

स्यन्दू—स्यन्त्स्यति । अस्यन्त्स्यत् । सिस्यन्त्सति ।

'चतुर्भ्यः' इति न वक्तव्यम् । वृद्ग्रहणं हि तत्र द्युतादिपरिसमाप्त्यर्थं क्रियते—कृपू सामर्थ्ये वृदिति, तदेव यदि वृतादिसमाप्त्यर्थमपि विज्ञायते, न किञ्चिदनिष्टं प्राप्नोति ? तत्क्रियते स्यन्देरूदिल्लक्षणमन्तरङ्गमपि

**न्यासः**

**चतुर्भ्य इति न वक्तव्यमिति** । अत्र कारणमाह—**वृत्करणं हीत्यादि** । तदेव यदि वृदादिपरिसमाप्त्यर्थमपि विज्ञायत इति तन्त्रेणानेकशक्तितो वा शब्दानां न किञ्चिदनिष्टं प्राप्नोति । एवमपि विज्ञायमान इष्टस्यैव सिद्धेरित्यभिप्रायः । एवं प्रत्याख्याते चतुर्ग्रहणे, प्रयोजनमाह—**तत् क्रियत इत्यादि** । यदि चतुर्ग्रहणं न न क्रियेत, तदा स्यन्देरूदिल्लक्षणोऽन्तरङ्गत्वाद्विकल्पः स्यात् । अन्तरङ्गत्वं तु तस्य वलाद्यार्धधातुकमात्राश्रयत्वात् । अस्य तु प्रतिषेधस्यार्धधातुकविशेषाश्रयत्वाद् बहिरङ्गत्वम् । तस्मादन्तरङ्गमपि स्यन्देरूदिल्लक्षणं विकल्पमयं प्रतिषेधो यथा बाधेतेत्येवमर्थञ्च चतुर्ग्रहणं क्रियते । कथं पुनः क्रियमाणेऽपि चतुर्ग्रहणे अयमर्थो लभ्यते ? इत्यत आह—**चतुर्ग्रहण इत्यादि** । स स्यन्दिः परः प्रधानो यस्य तत् तत्परम्, तद्भावस्तात्पर्यम्, तेन

**पदमञ्जरी**

'शृधु शब्दकुत्सायाम्' ( धा० पा० ७६० ) । अन्ये प्रसिद्धाः । उदाहरणेषु 'वृद्भ्यः स्यसनोः' इति परस्मैपदम् ।

**चतुर्भ्य इति न वक्तव्यमिति** । किं कारणम् ? इत्यत आह—**वृद्ग्रहणं हीति** । यदि द्युतादिपरिसमाप्त्यर्थं तत्किमायातं वृतादिपरिसमाप्तेः ? इत्यत आह—**तदेवेति** । अगृह्यमाणविशेषत्वादिति भावः । **अन्तरङ्गमपीति** । अन्तरङ्गत्वं विकल्पस्यार्धधातुकमात्रापेक्षत्वात् । अयं तु प्रतिषेधो बहिरङ्गः; सकारादिविशेषापेक्षत्वात्, बहिर्भूतपरस्मैपदापेक्षत्वाच्च । ननु चान्येष्वपि वृतादिषु आर्धधातुकलक्षणोऽपीडन्तरङ्ग एव, अथ तस्य वचनसामर्थ्यात्प्रतिषेधः, तर्हि विकल्पस्यापि भविष्यति ? नैतदस्ति; येन नाप्राप्ते तस्य बाधनं भवति, नाप्राप्तिश्चार्धधातुकस्येडित्यस्य, न तूदिल्लक्षणस्य । यदि परम्, परत्वादूदिल्लक्षणमपीटं प्रतिषेधो बाधेत ? तदपि न; अन्तरङ्गबहिरङ्गयोर्विप्रतिषेधानुपपत्तेः । कथं तर्हि सत्यपि चतुर्ग्रहणे तस्य प्रतिषेधः ? इत्यत आह—**चतुर्ग्रहणे हीति** । सति च तस्मिन् चतुर्थ्यां प्रतिषेधेन भाव्यमिति प्रतीतिः, इतरथा संख्याशब्दा-

**भावबोधिनी**

शृधु–शर्त्स्यति । अशर्त्स्यत् । शिशृत्सति । स्यन्दू–स्यन्त्स्यति । अस्यन्त्स्यत् । सिस्यन्त्सति [ चर्त्वं से द् का त् ] ।

"चतुर्भ्यः" ऐसा नहीं कहना चाहिए । क्योंकि उसमें वृद् का ग्रहण द्युतादि धातुओं की परिसमाप्ति के लिए किया जाता है—"कृपू सामर्थ्ये, वृत् = समाप्त, यही यदि वृतादि की समाप्ति के लिए भी समझ लिया जाता है, कोई भी अनिष्ट नहीं प्राप्त होता है ? वह 'चतुर्' ग्रहण किया जाता है कि 'स्यन्दू' के ऊदित् लक्षण ( ऊदित् मान कर होने वाले ) अन्तरङ्ग भी विकल्प को प्रतिषेध जिस प्रकार से बाधित कर ले । क्योंकि 'चतुर्' का ग्रहण करने पर तात्पर्य = उसकी प्रधानता के कारण 'स्यन्दू' उपस्थापित होता है ।

**विमर्श**—भाव यह है कि पाणिनि ने धातुपाठ में 'द्युत दीप्तौ' से लेकर 'कृपू सामर्थ्ये' तक पढ़ने के बाद 'वृत्' ऐसा अन्त में लिखा है । वृत् का अर्थ समाप्त है । द्युतादि समाप्त है—ऐसा अभिप्राय है । अन्त में 'वृत्, वृधु, शृधु, स्यन्दू' के बाद 'कृपू' ये पाँच ही हैं । अन्त में पठित् 'वृत्' = समाप्त को 'वृतादि' चार के साथ संयुक्त करके उन चार को भी समाप्ति समझी जा सकती है और कोई अनिष्ट भी नहीं है । इसलिए चतुर्ग्रहण की कोई आवश्यकता नहीं है । फिर भी 'चतुर्' का ग्रहण इसलिए है कि 'ऊदित्' मानकर होनेवाला इट् विकल्प अन्तरङ्ग है इसको भी यह प्रतिषेध बाधित कर ले । चतुर्ग्रहण करने पर तात्पर्य = सः = स्यन्दू है परः = प्रधान जिसका वह—'तत्पर' है, उसका भाव = तात्पर्य है (भाव 'मे' ष्यञ् प्रत्यय है ) । इसलिए स्यन्दू का उपस्थापन होता है । विकल्प अन्तरङ्ग है तथापि इस चतुर् ग्रहण के कारण नञ् = प्रतिषेध बलवान् हो जाता है । अतः 'स्यन्दू' का भी वैकल्पिक इट् नहीं होता है । यही चतुर्ग्रहण का फल है ।

**विकल्पं प्रतिषेधो यथा बाधेतेति । चतुर्ग्रहणे हि सति तात्पर्येण स्यन्दिः सन्निधापितो भवति ।**

**'परस्मैपदेषु' इत्येव । वर्तिष्यते । वर्तिषीष्ट । अवर्तिष्यत । विवर्तिषते ।**

***अत्राप्यात्मनेपदेन समानपदस्थेभ्यो वृतादिभ्य इडागम इष्यते । *अन्यत्र सर्वत्र प्रतिषेधः । कृत्यपि हि परस्मैपदलुकि च प्रतिषेधो भवति—विवृत्सिता, विवृत्स त्वमिति**[1] ॥

**न्यासः**

तात्पर्येण तत्प्रधानतयेत्यर्थः । **सन्निधापित इति ।** उपस्थापित इत्यर्थः । तस्य चैवं सन्निधापितस्य विकल्पोऽनेन प्रतिषेधेन कथं नाम बाध्येतेत्येतदेव प्रयोजनम् । ततश्चतुर्ग्रहणादन्तरङ्गमपि विकल्पं प्रतिषेधो बाधते । **अत्रापीत्यादि ।** कथं पुनः 'परस्मैपदेषु' इत्यनुवर्त्तमानेऽन्यत्र सर्वत्र प्रतिषेधो लभ्यते ? एवं मन्यते—गमेरित्यनु-

**पदमञ्जरी**

ऽभावादेकस्य प्रतिषेधाभावेऽपि न कश्चिद्बाधः ।

**परस्मैपदेष्वित्येवेति ।** यद्येवम्, यत्र वृतादिभ्यः परस्यार्धधातुकस्य परस्मैपदमनन्तरं तत्रैव स्यात्—वर्त्स्यतीत्यादौ, विवृत्सतीत्यादौ न स्यात्; शपा व्यवधानात् । एकादेशेऽपि कृते स्थानिवद्भावाद्व्यवधानमेव,

**भावबोधिनी**

( अनु० ) परस्मैपद परे ही [ निषेध होता है ] । **वर्तिष्यते । वर्तिषीष्ट । अवर्तिष्यत । विवर्तिषते ।** [ 'वृद्भ्यः स्यसनोः' सूत्र से वैकल्पिक परस्मैपद होने पर यह प्रतिषेध है । अतः आत्मनेपद में यहाँ प्रतिषेध नहीं होता है, इट् होता है । ]

इस सूत्र में भी आत्मनेपद के साथ समानपदस्थ = एकपदस्थ वृतादि से इडागम इष्ट है । अन्यत्र सभी में प्रतिषेध होता है । कृत् प्रत्यय में भी तथा परस्मैपद के लुक् होने पर भी प्रतिषेध होता है—विवृत्सिता, विवृत्स त्वम् । [ पहला कृत् = तृच् का रूप है । दूसरा सन्नन्त लोट् मध्यम पुरुष एकवचन का रूप है । ]

**विमर्श**—"अन्यत्र सर्वत्र प्रतिषेधः । कृत्यपि हि परस्मैपदलुकि च प्रतिषेधो भवति—विवृत्सिता, विवृत्स त्वम् ।" काशिका की इन पंक्तियों का आशय स्पष्ट नहीं हो पाता है क्योंकि यदि सर्वत्र प्रतिषेध है तो 'विवृत्सिता' में इट् कैसे हुआ है ? प्रस्तुत सूत्र के महाभाष्य में कृत् प्रत्ययों के विषय में अलग से तथा तिङ् = आत्मनेपद, परस्मैपद प्रत्ययों के विषय में अलग से विचार किया गया है । किन्तु काशिकाकार ने दो अलग अलग लक्ष्यों को एक साथ उल्लिखित करके इट् का प्रतिषेध करते हुए भी 'विवृत्सिता' में इट् आगम और 'विवृत्स त्वम्' में इट् का अभाव दिखाया है । यह भ्रान्तिजनक है ।

महाभाष्य, प्रदीप, न्यास, पदमञ्जरी, उद्द्योत तथा बृहच्छब्देन्दुशेखर में भी बहुत सरल और सुस्पष्ट विवेचन नहीं किया गया है । काशिकाकार की यह सन्देहजनक शैली प्रस्तुत सूत्र के पहले वाले तथा बाद वाले अर्थात् तीनों की वृत्तियों में है । इस प्रसङ्ग में न्यास की पंक्तियाँ ध्यान देने योग्य हैं—"कथं पुनरसौ" 'परस्मैपदेषु' इत्युच्यमाने कृति परस्मैपदलुकि च लभ्यते ? एवं मन्यते—योगविभागः कर्त्तव्यः—'गमेरिट्' इत्येको योगः; तत्र [ पूर्वसूत्रात् ] 'से' इत्यनुवर्त्तते—'सकारादावार्धधातुके इडागमो भवति । ततः 'परस्मैपदेषु' इति द्वितीयो योगो नियमार्थः । स च नियमो यद्यविशेषेण स्यात् तदा पूर्वयोगोऽनर्थकः स्यात् तस्मात् तुल्यजातीयापेक्षया नियमः । तुल्यजातीयश्च तिङ्—तिङ्विषये यदि भवति तदा परस्मैपदेषु एव नात्मनेपदेषु इति । तेन कृति परस्मैपदलुकि च पूर्वयोगेन भवत्येव, नियमेनाव्यावर्तितत्वादिति" (७।२।५८) । प्रस्तुत सूत्र पर न्यासकार ने लिखा है—"गमेः सकारादौ येन प्रकारेण इट् तेनैव प्रकारेण वृदादिभ्यो नेडिति । तेन यथा गमेरात्मनेपदवर्जमन्यत्र सर्वत्रैवेड् भवति तथा वृदादिभ्यः प्रतिषेधः ।" इस न्यास का तात्पर्य यह है कि जैसे गम् धातु से सकारादि प्रत्यय परे कृत् प्रत्यय में तथा परस्मैपदलुक् में इट् नहीं होता है, वैसे ही वृत् आदि से सकारादि में इट्निषेध होता है, इट् नहीं होना चाहिए ।

---

१. 'विवृत्सितुम्, विवृत्सितव्यम्' इत्यधिकं पुस्तकान्तरे ।

## ३३३९. तासि च क्लृपः ॥ ६० ॥ (२३५२)

**कृप उत्तरस्य तासेः सकारादेश्चार्धधातुकस्य परस्मैपदेषु इडागमो न भवति । श्वः कल्प्ता । कल्प्स्यति । अकल्प्स्यत् । चिक्लृप्सति ।**

**'परस्मैपदेषु' इत्येव । कल्पितासे । कल्पिष्यते । कल्पिषीष्ट । अकल्पिष्यत । चिकल्पिषते ।**

**'क्लृपेरप्यात्मनेपदेन समानपदस्थस्य इडागम इष्यते ।' अन्यत्र प्रतिषेधः । कृत्यपि हि परस्मैपदलुकि च प्रतिषेधो भवति–चिक्लृप्सिता, चिक्लृप्स त्वमिति ॥**

**न्यासः**

वर्त्तते, तत्रैवमभिसम्बन्धः करिष्यते—गमेः सकारादौ येन प्रकारेण इट् तेनैव प्रकारेण वृदादिभ्यो नेडिति । तेन यथा गमेरात्मनेपदवर्जमन्यत्र सर्वत्रैवेड् भवति, तथा वृदादिभ्योऽपि प्रतिषेध इति ॥ ५९ ॥

**तासि च क्लृपः ॥** 'कृपू सामर्थ्ये' । तस्मादूदित्त्वाद्विकल्पेनेटि प्राप्ते प्रतिषेधोऽयमारभ्यते । **कल्प्तेति ।** लुट्, 'लुटि च क्लृपः' इति परस्मैपदं विकल्पेन, 'कृपो रो लः' इति लत्वम् । **चिक्लृप्सतीति ।** पूर्ववत् कित्त्वम् ।

**क्लृपेरपीत्यादि ।** अयमर्थो वृदादीनामनुवृत्तेर्लभ्यते, तदनुवृत्तौ सत्यामेवमभिसम्बन्धः करिष्यते—यथा वृदादीनां प्रतिषेधो भवति, तथायमपि क्लृपेरिति । यदि तर्हि वृदादीनां ग्रहणमिहानुवर्त्तते, तदा वृदादीनामपि तासौ प्रतिषेधः प्राप्नोति ? योगविभागकरणसामर्थ्यान्न भविष्यति । यदि वृदादीनामपि तासौ प्रतिषेधः स्यात् तदा 'न वृद्भ्यः पञ्चभ्यस्तासि च' इत्येकयोगं कुर्यात् ॥ ६० ॥

**पदमञ्जरी**

विवृत्सिष्यति, विवृत्सयतीत्यादौ प्रत्यक्षमेव व्यवधानम्, कृति परस्मैपदलुकि च परस्मैपदगन्धोऽपि नास्तीति तत्रापि न स्यादेव ? तत्राह—**अत्रापीति ।** इष्टिरेवेयम् । विवृत्सित्रीयत इत्यादौ चोक्त एव परिहारः ॥ ५९ ॥

**तासि च क्लृपः ।** उदाहरणेषु 'लुटि च क्लृपः' इति परस्मैपदम् । **क्लृपेरपीत्यादि । अन्यथा** कल्प्स्यतीत्यादावेव स्यात्, न तु चिक्लृप्सिता, चिक्लृप्स त्वमित्यादाविति भावः ।

इह तु 'न वृद्भ्यः पञ्चभ्यस्तासि च' इति वक्तव्यम्, क्लृपिग्रहणं तु शक्यमकर्त्तुम् । न च वृतादिभ्योऽपि तासौ प्रसङ्गः; परस्मैपदाभावात्, आत्मनेपदेन समानपदस्थत्वाच्च ॥ ६० ॥

**भावबोधिनी**

किन्तु इस व्याख्यान से भी सन्देह की निवृत्ति नहीं होती है । यहाँ उद्योत तथा बृहच्छब्देन्दुशेखर में नागेश का कथन यह है कि "गमेरिट् परस्मैपदेषु" सूत्र से प्रस्तुत सूत्र में भी 'परस्मैपदेषु' की अनुवृत्ति है । यहाँ परस्मैपद = तङ् और आन के अभाव में इट् नहीं होता है । इस स्थिति में तृच् में न्यासोक्त नियम से इट् हो जाता है—'विवृत्सिता ।' और लोट् लकार मध्यमपुरुष एकवचन परस्मैपद में 'हि' का लुक् है, परस्मैपद = तङ् आन का अभाव है, अर्थात् लुक् है, परस्मैपद परे नहीं है । इसलिए 'विवृत्स त्वम्' यहाँ इट् नहीं होता है । इस प्रकार कथञ्चित् समाधान किया जा सकता है । परन्तु इट् आगमवाले और इडागमरहित—विपरीत दो उदा० एक साथ प्रस्तुत करना निश्चित रूप से प्रमाद ही प्रतीत होता है ॥ ५९ ॥

'कृप' से उत्तरवर्ती तास् और सकारादि आर्धधातुक को परस्मैपद परे रहते इट् आगम नहीं होता है । उदा० श्वः कल्प्ता । कल्प्स्यति । अकल्प्स्यत् । चिक्लृप्सति । [ इनमें "लुटि च क्लृपः" इस सूत्र से लुट् और लृट् में परस्मैपद होने पर इट् नहीं होता है । ]

परस्मैपद परे ही [ इट् निषेध होता है—आत्मनेपद परे नहीं ]—कल्पितासे । कल्पिष्यते । कल्पिषीष्ट । अकल्पिष्यत । चिकल्पिषते । [ आत्मनेपद परे होने से इट् निषेध नहीं होता है । ] ।

'कृप' का भी आत्मनेपद से समानपदस्थ का इट् आगम इष्ट है । अन्यत्र प्रतिषेध ही है । क्योंकि कृत् प्रत्यय परे और परस्मैपद के लुक् में प्रतिषेध होता है—चिक्लृप्सिता । चिक्लृप्स त्वम् । [ तृच् और लोट् प्रथमपुरुष एकवचन के रूप हैं । तृच् में इट् होने और लोट् म० पु० एकवचन में न होने के लिए पूर्वसूत्र का 'विमर्श' देखें ] ॥ ६० ॥

## ३३४०. अचस्तास्वत्थल्यनिटो नित्यम् ॥ ६१ ॥ (२२९४)

तासौ ये नित्यानिटो धातवोऽजन्ताः, तेभ्यस्तासाविव थलीडागमो न भवति । [पाता–पपाथा] याता ययाथ । चेता–चिचेथ । नेता–निनेथ । होता–जुहोथ ।

अच इति किम् ? भेत्ता–बिभेदिथ । तास्वदिति किम् ? लूत्वा–लुलविथ । थलिति किम् ? याता–

**न्यासः**

**अचस्तास्वत्थल्यनिटो नित्यम् ॥** क्रादिनियमादिटि प्राप्तेऽजन्तानां तासौ नित्यानिटां थलि प्रतिषेधो विधीयते । **यातेत्यादि ।** लुडुपन्यासस्तासौ नित्यानिट्त्वप्रदर्शनार्थः; 'अनिट्प्रतिषेधात्[1] ।

**लूत्वा, लुलविथेति ।** तास्वदिति वचनादिह न भवति प्रतिषेधः । तस्मिंस्त्वनुच्यमान इहापि प्रतिषेधः स्यात्—भवति, लुनाति । किति नित्यमनिटः 'श्र्युकः किति' इति प्रतिषेधात् । **पपिव, पपिमेति ।** 'आतो लोप इटि च' इत्याकारलोपः । **अनिड्ग्रहणं नित्यमित्यनेनेत्यादि ।** नित्यमित्यनेनानिट्त्वं धातोः कथं नाम विशिष्येतेत्येवमर्थमनिड्ग्रहणमित्यर्थः । अथ लविता, लुलविथेति तासौ सेटस्थलीट्प्रतिषेधो भूदित्येवमर्थमनिड्ग्रहणं कस्मान्न भवति ? नार्हत्येवमर्थं भवितुम् । तथा हि—तास्वत् थलीण्न भवतीत्युच्यते, न च यस्तासौ सेट् तस्य प्रतिषेधो भवंस्तास्वदिति व्यपदेष्टुं शक्यते, यो ह्ययमिडभावस्थलि विधीयते तस्य तासाविड्भावेनैव सादृश्यं वतिराचष्टे । एवं तु वतिग्रहणादेव तासौ सेटस्थलि प्रतिषेधो न भविष्यति; अन्यथा वतिना यत् सादृश्यं समाख्यायते तन्न स्यात् । तस्माद् युक्तमुक्तमेवानिड्ग्रहणस्य प्रयोजनम् । अथाक्रियमाणेऽनिड्ग्रहणे नित्यमिति कस्य विशेषणं विज्ञायते ? प्रतिषेधस्य । ननु च नित्य एव प्रतिषेधः प्रकृतः, तत्र यदि नित्यग्रहणेन प्रतिषेधो विशिष्येत, तदा नित्यग्रहणमनर्थकं स्यात् ? नैतदस्ति; पूर्वसूत्रे प्रतिषेधस्यानित्यत्वं यथा स्यादित्येवमर्थं स्यात् । एवं च पूर्वसूत्रेण पक्ष इडागमः स्यादेव । तस्मात् पूर्वोक्तमेवानिड्ग्रहणस्य प्रयोजनम् । **तासौ विभाषितेडिति ।**

**पदमञ्जरी**

**अचस्तास्वत्थल्यनिटो नित्यम् ॥**

यस्थलि क्रादिनियमादिट् प्राप्तः स निषिध्यते ‘
पञ्चसूत्र्येत आरभ्य तास्वदित्येष डेर्वतिः ॥
उपदेशग्रहोऽप्यत्र वक्ष्यमाणोऽपकृष्यते ।
गुणे नित्ये कृतेऽप्येष ऋदन्ते प्राप्नुयात्कथम् ॥

क्व नित्यमनिट् ?—इत्यपेक्षायां तासेः सन्निधानात्तत्रैवेति विज्ञायते, यद्वा—पूर्वसूत्रात् 'तासि' इति वर्त्तते । **यातेति ।** तासावनिट्प्रदर्शनार्थमुपन्यस्तम् ।

**लूत्वेति ।** 'तास्वत्' इत्यनुच्यमाने यत्र क्वापि नित्यानिटस्थलि प्रतिषेधः स्यात् । लुनातिश्चायम् 'श्र्युकः किति' इति प्रतिषेधात्किति नित्यानिट्कः । **ययिव, ययिमेति ।** 'आतो लोप इटि च' । **अनिड्ग्रहणं नित्यमित्यनेन विशेषणार्थमिति ।** असत्यनिड्ग्रहणे नित्यमित्यनेन प्रतिषेध एव विशेष्येत—नित्यमिण्न भवतीति । यद्यप्यत्र विकल्पो न प्रकृतः, तथापीदमेव नित्यग्रहणं पूर्वस्य विधेरनित्यत्वं ज्ञापयेत् । सेड्निवृत्त्यर्थं त्वनिड्ग्रहणं न भवति, कथम् ? तास्वदित्युच्यते, यथा तासौ न भवति एवं थल्यपीति । न च यस्तासौ सेट् तस्य थलि

**भावबोधिनी**

तास् परे रहते जो नित्य अनिट् अजन्त धातुयें उनसे तास् के समान थल् परे रहते इट् आगम नहीं होता है । उदा० याता, ययाथ । चेता, चिचेथ । नेता, निनेथ । होता, जुहोथ । [ या, चि, नी, हु के लुट् तथा लिट् = सिप् थल् के रूप में इट् नहीं होता है । न्यास में 'पा' के रूप—पाता, पपिव, पपिम, पपाथा है । ]

अजन्तों का—इसका क्या फल है ? भेत्ता, बिभेदिथ । [ भिदिर् अजन्त नहीं है । तास्वत् = तास् के समान—इसका क्या फल है ? लूत्वा, लुलविथ । [ क्त्वा में इट् प्रतिषेध होने पर थल् में सेट् होता है । ]

थल् में—इसका क्या फल है ? याता, ययिव, ययिम । [ वस् = व, मस् = म में इट् होता ही है । ]

---

१. 'अनिट्त्वं ज एकाचः (७।२।१०) इत्यादिनेट्प्रतिषेधात्'—इत्येवं पाठ उचितः प्रतीयते ।

**ययिव । ययिम । अनिड्ग्रहणं नित्यमित्यनेन विशेषणार्थम् । नित्यग्रहणं किम् ? विधोता, विधविता—विदुध-विथ । तासि विभाषितेट्, थलि नित्यमिडागमो भवति ।**

**तास्वदिति वतिनिर्देशः किमर्थः ? तासौ सतस्थलि प्रतिषेधार्थः । यो हि तासावसन्, असत्त्वाच्च नित्यानिट्, तस्य थलि प्रतिषेधो न भवति—जघसिथ । उवयिथ ।**

**न्यासः**

स्वरत्यादिसूत्रेण धूञ इड् विकल्पितः । तस्य नित्यग्रहणाद् विभाषितेटस्थलि नित्यमिडागमो भवति । असति च नित्यग्रहणे प्रतिषेधः स्यादेव । पाक्षिकेणापीडभावेनानिड्व्यपदेशो भवत्येव । तथा हि—गुहेर्विभाषितेटोऽपि 'शल इगुपधादनिटः क्सः' इति क्सो भवत्येव—अघुक्षदिति ।

अथ वतिना निर्देशः किमर्थः, न तासावित्येवोच्येत इत्यत आह—**तास्वदित्यादि** । असति वतिना निर्देशे योऽपि तासावसन्, असत्त्वाच्च नित्यमनिट्, तस्यापि थलि प्रतिषेधः स्यात् । वतिना निर्देशे तु सति, वतेः सर्वसादृश्यार्थत्वाद् यथाभूतस्य तासाविड् न भवति तथाभूतस्यैव थल्यपीटा न भवितव्यमिति न भवत्येष

**पदमञ्जरी**

प्रतिषेधो भवन् तास्वत्कृतो भवति । **विधोता, विधवितेति** । स्वरत्यादिसूत्रेण तासाविड्विकल्पितः । क्रमेरपि चक्रमिथेति भाव्यम्, न हि तासौ नित्यानिट् क्रमिः, आत्मनेपदे इडभावात्परस्मैपदे सेट्त्वात् । **तासौ विभाषेटस्थलि नित्यमिडागमो भवतीति** । 'यावान्कश्चिदिड्भावः प्रतिषेधनिबन्धनो विकल्पनिबन्धनो वा स सर्वः क्रादिसूत्रेण नियम्यते' इत्यस्मिन्पक्षे इति भावः । यदा तु 'प्रतिषेधाधिकारेण क्रादीनामेवेण्न भवति' इति नियमात्प्रतिषेध एव सर्वो निवर्तते, स्वरत्यादिलक्षणस्तु विकल्पो भवत्येव इति पक्षः; तदा विदुधोथ, विदुधविथेत्युभयं भवति । यद्येवम्, नित्यमनिट इति न वक्तव्यम् ? अस्तु; तस्तासौ विकल्पितेट् तस्याप्ययं प्रतिषेधः 'ऋतो भारद्वाजस्य' इति नियमाद्विकल्प एवावस्थास्यते ? नैवं शक्यम्; स्वरतौ हि दोषः स्यात् । **भारद्वाज**पक्षेऽपि तस्य प्रतिषेधात् सस्वर्थत्येव स्यात् । यदा तु विकल्पितेटस्थलि प्रतिषेधोऽयं न भवति, तदा सस्वर्थ, सस्वरिथेत्युभयं भवति ।

**तास्वदिति वतिनिर्देश इति** । तास्वदित्यस्य निर्देश इत्यर्थः । तास्वदित्यनुच्यमाने प्रकृतस्य **तासी-**त्यस्यानुवृत्तावप्येतावदेव लभ्येत—तासौ नित्यमनिटस्थलीण् न भवतीति; ततश्च यस्तासावसन्, असत्त्वादेव नित्यानिट्, तस्यापि प्रसज्येत ।

तास्वदित्युच्यमाने तु वतेः सादृश्यगोचरात् ।
यथाभूतस्य तासौ नेट् तथाभूतस्य थल्यपि ॥
इटा न भाव्यमित्येष दोषो नैव प्रसज्यते ।
इटस्तास्यसतो धातोर्निषेधे विहिते थलि ॥
अभावः सदृशो न स्यात् थलि तास्यसतो भवेत् ।

**भावबोधिनी**

अनिट् का ग्रहण 'नित्य' इससे विशेषण करने के लिए है । [ नित्य अनिट् ऐसा समझना चाहिए । ] नित्यम्—इसका ग्रहण किस लिए है ? विधोता, विधविता, विदुधविथ । तास् में विकल्प से इट् होने से थल् परे प्रतिषेध नहीं होता है, नित्य इट् होता है ।

'तास्वत्' यह 'वति' प्रत्यय का निर्देश किस लिए हैं ? तास् में होनेवाले का थल् परे प्रतिषेध के लिए है । क्योंकि तास् में जो धातु नहीं है, और न होने के कारण नित्य अनिट् है, उसका थल् में प्रतिषेध नहीं होता है—जघसिथ । उवयिथ ।

उत्तर सूत्र में भी 'तास्वत्' इसकी अनुवृत्ति होती है । अद् का आदेश घस्लृ और वेञ् का आदेश 'वयि' तास् परे नहीं होता है । [ अतः इनमें इट्निषेध भी नहीं होता है । ]

**विमर्श**—भाव यह है कि 'तासौ' यह सप्तम्यन्त न लिखकर 'तास्वत्' यह वतिनिर्देश क्यों किया गया ? वति का निर्देश सभी प्रकार के सादृश्य का बोध कराने के लिए है । जो धातु तास् में ही अनिट् है उसी का थल्

**उत्तरसूत्रेऽपि 'तास्वत्' इति वर्त्तते। अदादेशो हि घसिः, वेञादेशश्च वयिस्तासौ नास्ति ॥**

**३३४६. उपदेशेऽत्वतः ॥ ६२ ॥ (२२९५)**

**उपदेशे यो धातुरकारवान् तासौ नित्यानिट् तस्मात्तासाविव थलीडागमो न भवति। पक्ता-पपक्थ। यष्टा-इयष्ठ। शक्ता-शशक्थ।**

**उपदेशे इति किम्? कर्ष्टा-चकर्षिथ। अत्वत इति किम्? भेत्ता-बिभेदिथ। तपरकरणं किम्? राद्धा-रराधिथ।**

**न्यासः**

दोषप्रसङ्गः। यदि हि यस्तासावसन्, असत्त्वाच्च नित्यमनिट्, तस्यापि थलि प्रतिषेधः स्यात्। एवं च सति तासावसत इडभावः, इतरत्र तु सत इति यथाभूतस्य तासाविडभावस्तथाभूतस्यापि थलि न स्यात्।

यो हि तासावसन्नसत्त्वाच्च नित्यमनिट्, तस्य थलि प्रतिषेधो न भवति—जघसिथेति—उत्तरसूत्रेणेत्यभिप्राय इत्यह आह—**उत्तरसूत्रेऽपीत्यादि**। तदेवमुत्तरार्थो वतिना निर्देशोऽयं भवति। इह तु नार्थो वतिनिर्देशेन, अनजन्तत्वादेव घसेर्वयेश्च प्रतिषेधो न भवतीति। **जघसिथेति**। 'लिट्यन्यतरस्याम्' इत्यदेर्घस्लादेशः। **उवयिथेति**। 'वेञो वयिः' इति वयिरादेशः, 'लिट्यभ्यासस्योभयेषाम्' इति सम्प्रसारणम्। कस्मात् पुनर्घसेः, वयेश्च तासावसत्त्वान्नित्यानिट्त्वम्? इत्याह—**अदादेशो हीत्यादि**। नास्तित्वं तयोः पुनस्तासावविधानाद्वेदितव्यम् ॥ ६१ ॥

**उपदेशेऽत्वतः ॥** अनजन्तार्थोऽयमारम्भः। **इयष्ठेति**। पूर्ववदभ्यासस्य सम्प्रसारणम्, व्रश्चादिसूत्रेण षत्वम्, ष्टुत्वम्। **चकर्षिथेति**। 'कृष विलेखने'। भवत्ययमकारवान्, न तूपदेशे, किं तर्हि? पश्चाद् गुणे कृते।

**पदमञ्जरी**

**जघसिथेति**। स्थानिवद्भावात् 'इडत्त्यर्तिव्ययतीनाम्' इत्येवैष सिद्ध इत्याहुः। **उत्तरसूत्रेऽपीति**। एतेनोत्तरार्थं तास्वदित्युच्यत इति दर्शयति। **अदादेशो हीति**। ननु चास्य स्थानी तासावस्ति, अस्ति चानिडिति तदादेशस्यापि स्थानिवद्भावात् सत्त्वानिट्त्वे स्याताम्? नैतदस्ति; स्थानिवद्भावः शास्त्रीयेषु प्रवर्त्तते, न च तासौ सत्त्वं नाम शास्त्रीयं कार्यम् ॥ ६१ ॥

**उपदेशेऽत्वतः ॥ अनजन्तार्थं आरम्भः। इयष्ठेति। 'लिट्यभ्यासस्योभयेषाम्' इति अभ्यासस्य सम्प्रसारणम्, व्रश्चादिषत्वम्। चकर्षिथेति। 'कृष विलेखने'।** भवत्ययं गुणे कृते सम्प्रत्यकारवान्, न तूपदेशे। **जिघृक्षति। जग्रहिथेति**। 'सनिग्रहगुहोश्च' इतीट्प्रतिषेधाद्भवत्ययं सनि नित्यानिट्, न तासौ।

**भावबोधिनी**

परे इट् निषेध कराने के लिए 'वति' किया गया है। 'अद्' का घस्ल आदेश तास् = लुट् में नहीं होता है। इसी प्रकार 'वेञ्' का 'वय' आदेश भी तास् = लुट् में नहीं होता है। अतः इनमें इस निषेध सूत्र की प्रवृत्ति नहीं होती है। इट् हो ही जाता है ॥ ६१ ॥

उपदेश काल में जो धातु अकार वाली है तास् में नित्य अनिट् है उससे तास् के समान थल् में भी इट् आगम नहीं होता है। उदा० पक्ता, पपक्थ। यष्टा, इयष्ठ। शक्ता, शशक्थ। [ यज् + लुट् = ति, तास् आदि में इट् न होने से "व्रश्चभ्रस्ज" इत्यादि सूत्र से ज् का ष् ष्टुत्व। यज् + लिट् = सिप् = थल्, द्वित्व, अभ्यास कार्य के बाद अभ्यास का सम्प्रसारण, ज् का षत्व, ष्टुत्व, इट् का निषेध-इयष्ठ। ]

उपदेश में [ अकारवाली ]—इसका क्या फल है? कर्ष्टा, चकर्षिथ। [ कृष् + लुट् आदि में ऋ के गुण, रपर करने पर अकार होता है उपदेश में नहीं है। अतः थल् में निषेध नहीं होता है। ] अकार वाली—इसका क्या फल है? भेत्ता, बिभेदिथ। [ भिदिर् यह अकार वाली नहीं हैं। अतः निषेध नहीं होता है। ] तपरकरण अर्थात् ह्रस्व अकारवाली—इसका क्या फल है? राद्धा, राधिथ [ 'राध, साध्-संसिद्धौ' में अ नहीं अपितु 'आ' है, अतः निषेध नहीं होता है। ]

तास्वदित्येव–जिघृक्षति । जग्रहिथ ।
नित्यमनिट इत्येव–अङ्क्ता, अञ्जिता–आनञ्जिथ ॥

**३३४२. ऋतो भारद्वाजस्य ॥ ६३ ॥ (२२९६)**

ऋकारान्ताद्धातोर्भारद्वाजस्याचार्यस्य मतेन तासाविव नित्यानिटस्थलि इडागमो न भवति । स्मर्त्ता–सस्मर्थ । ध्वर्त्ता–दध्वर्थ[1] ।

**न्यासः**

उपदेशग्रहणमिह शक्यमकर्त्तुम्, शक्यत एव हि 'एकाच उपदेशे' इत्यत उपदेशग्रहणमनुवर्त्तयितुम् ? तत् क्रियते विस्पष्टार्थम् । असति तस्मिन्, पूर्वसूत्रे तस्यानुपयोगान्निवृत्तिं मन्यमानः तासावत्वतः' इत्येवमपि कश्चित् प्रतिपद्येत । **रराधिथेति** । 'राध साध संसिद्धौ' । **जिघृक्षतीति** । 'सनि ग्रहगुहोश्च' इतीट्प्रतिषेधाद् भवति नित्यानिट्, न तु तासौ, किं तर्हि ? सनि ।

**आनञ्जिथेति** । 'अन्जू व्यक्तिम्रक्षणादिषु' । 'अत आदेः' इत्यभ्यासस्य दीर्घः, । तस्मान्नुड् द्विहलः' इति नुट् । भवत्ययं धातुरुपदेशेऽकारवान्, न तु तासौ नित्यानिट्; स्वरत्यादिसूत्रेण विकल्पितेट्त्वात् ॥ ६२ ॥

**ऋतो भारद्वाजस्य ॥ सस्मर्थेति** । 'स्मृ चिन्तायाम्' । **दध्वर्थेति** । 'ध्वृ हूर्छने' ।

ननु यद्यप्यकारान्तानां मध्ये वृङ्वृञावुदात्तौ तत्रापि वृङस्थलन सम्भवत्येव, आत्मनेपदित्वात्; वृञस्तु ववर्थेति निगमे निपातनाद् भाषायामिटा भवितव्यमेव, तस्मात् तयोरिट्प्रतिषेधार्थमेतन्नोपपद्यते; ये त्वन्ये ऋकारान्ताः, तेषामनुदात्तत्वात् तासौ नित्यमनिट्त्वमिति 'अचस्तास्वत् थल्यनिटो नित्यम्' इतीट्-प्रतिषेधः सिद्ध एव, परत्वाद् गुणे कृते रपरत्वे चानजन्तत्वान्न सिध्यतीत्येवमेतन्नाशङ्कनीयम्; उपदेशग्रहणस्य पुरस्तादनुकृष्टस्य 'अचः' इत्यनेनाभिसम्बन्धात्; अथ वा—'अचः' इति विहितविशेषणा पञ्चमी, तत्रैवं विज्ञास्यामः—अजन्ताद् यो विहितस्थलिति, तस्मादचस्तास्वदित्यनेनैव ऋकारान्तेभ्यः प्रतिषेधः सिद्धः, तत्

**पदमञ्जरी**

**आनञ्जिथेति** । 'अत आदेः' 'तस्मान्नुड्द्विहलः', स्वरत्यादिसूत्रेण तासौ विकल्पितेडयम् ॥ ६२ ॥

**ऋतो भारद्वाजस्य ॥ सस्मर्थेति** । 'स्मृ चिन्तायाम्' ( धा० पा० ९३३ ) । **दध्वर्थेति** । 'ध्वृ हूर्छने' ( धा० पा० ९३९ ) ।

**भावबोधिनी**

तास् के समान [ अनिट् का ] ही—जिघृक्षति । जग्रहिथ । [ 'ग्रह' धातु से तास् में इट् होता है किन्तु 'सन्' में 'सनि ग्रहगुहोश्च' से इट् नहीं होता है । अतः यह निषेध थल् में नहीं लागू होता है । इट् होता है । ]

नित्य अनिट् का ही—अङ्क्ता, अञ्जिता, आनञ्जिथ । [ 'अञ्जू' ऊदित् है । अतः तास् में विकल्प से इट् आगम होता है नित्य अनिट् नहीं है । इसलिए थल् में प्रतिषेध नहीं होता है । ] ॥ ६२ ॥

ऋकारान्त धातु से आचार्य भारद्वाज के मत से तास् के समान नित्य अनिट् धातु को थल् परे इट् आगम नहीं होता है । उदा० स्मर्ता, सस्मर्थ । ध्वर्ता, दध्वर्थ । [ स्मृ तथा ध्वृ लुट् = तास् में अनिट् हैं । अतः थल् में भी इट् नहीं होता है । ]

[ ऋकारान्तों में भी ] सिद्ध रहने पर ही इस सूत्र का बनाया जाना नियम के लिए है—ऋकारान्त से ही भारद्वाज के मत में इट् नहीं होता है, अन्य धातुओं का निषेध नहीं होता है, इट् आगम होता है । अतः—ययिथ । वविथ । पेचिथ । शेकिथ ।

इस प्रकार यह पूर्ववर्त्ती दोनों सूत्रों का विकल्प है ।

[ ऋत्–यह ] तपर करना ऋकारान्त ( दीर्घ ॠकारान्त ) की निवृत्ति के लिए है । यदि तपरकरण नहीं होता तो यह सूत्र विध्यर्थ होने लगता ।

---

१. 'कर्ता, चकर्थ' इति पुस्तकान्तरेऽधिकम् ।

**'सिद्धे सत्यारम्भो नियमार्थः'** (का० प० ६२)—**ऋत एव भारद्वाजस्य, नान्येषां धातूनाम् । ययिथ । ववथ । पेचिथ । शेकिथ । तदयमर्थात्पूर्वयोर्योगयोर्विकल्पः ।**

**न्यासः**

किमर्थोऽयमारम्भः ? इत्याह—**सिद्धे सत्यारम्भो नियमार्थ इति । नान्येभ्य इति ।** के पुनस्ते ? य ऋकारान्तादन्येऽजन्ताः, अनजन्ताश्चोपदेशेऽत्वन्तः । अथैवं कस्मान्नियमो न विज्ञायते—ऋतो भारद्वाजस्यैव, नान्येषामाचार्याणामिति ? एवं मन्यते—पूर्वसूत्रादचोऽत्वत इति चानुवर्त्तते, तदनुवृत्तेरेतदेव प्रयोजनम्—अनेन नियमेन सन्निधानात् तस्यैवाजन्तस्यानुवृत्तस्यात्वतश्च प्रकृतस्य धातोर्निवृत्तिर्यथा स्यादिति । यदि विपरीतोऽत्र नियमः स्याद्, आचार्यान्तराणां निवृत्तिः स्यात्, न प्रकृतस्य धातोः । तथा च तदनुवृत्तिरपार्थिका स्यात् । तस्मादृत एव भारद्वाजस्येत्ययमेव नियमो विज्ञायत इत्याह—**तदित्यादि ।** तदिति हेतौ । यस्मादेवंविधोऽत्र नियमः—तस्मादृत एव भारद्वाजस्य प्रतिषेधो भवति, नान्येभ्यो धातुभ्य इति । तेन यद्यपि पूर्वयोगाभ्यां नित्यमिट्प्रतिषेधः कृतः, तथा च सामर्थ्यात् पूर्वयोगयोरयं विकल्पो भवति । यद्यपि तत्र वाग्रहणम्, आचार्यग्रहणं च न क्रियते, तथाप्यर्थाल्लभ्यते ।

**पदमञ्जरी**

**सिद्धे सतीत्यादि ।** अदन्तानां वृङ्वृञावुदात्तौ । तत्रापि वृङस्थल् न सम्भवति; आत्मनेपदित्वात् । वृञस्तु ववर्थेति निपातनाद्भाषायामिटा भाव्यम् । तस्मात्तयोरिट्प्रतिषेधार्थं तावदेतन्नोपपद्यते । 'अन्येऽदन्तास्तासौ नित्यानिटः' इति 'अचस्तास्वत्' इत्यनेनैव सिद्धः प्रतिषेधः । ननु च परत्वाद् गुणे कृते रपरत्वे चानजन्तत्वान्न सिद्ध्यति, पूर्वसूत्रेणाप्यसिद्धिरेव, न ह्यकारान्ता उपदेशेऽत्वन्तः, तस्मान्नियमानुपपत्तिः ? अस्तु तर्हि दध्वर्थेत्यादौ विध्यर्थमेव । यद्येवम्, स्थायापचिप्रभृतिषु पूर्वयोगाभ्यां नित्यं थलि प्रतिषेधप्रसङ्गः, जहर्थेत्यादौ भारद्वाजस्येति वचनाद्विकल्पप्रसङ्गः ? एवं तर्हि 'अचस्तास्वत्' इत्यत्रैव भारद्वाजग्रहणं करिष्यते, तदेवानन्तरयोगेऽप्यनुवर्तिष्यते, इह तु निवर्तिष्यते ? सत्यम्; अयं तु भारद्वाजः स्वस्मान्मतात्प्रच्यावितो भवति । तस्य मतम्—ऋकारान्तादन्यत्र ययिथ, पेचिथेतीड्भवति,[1] अकारान्ते नेति । त्वदुक्ते तु न्यासे मतविपर्ययः कृतो भवति । एवं तर्ह्युपदेश-

**भावबोधिनी**

**विमर्श—**यहाँ भाव यह है कि अकारान्त धातुओं के मध्य में 'वृङ् और 'वृञ्' ये उदात्त पठित हैं । इनमें वृङ् आत्मनेपदी है अतः थल् नहीं मिलता है । वृञ् का 'ववर्थ' ऐसा वैदिक प्रयोग होने से लोक में इट् सिद्ध ही है । तब इन दोनों के इट्वारण के लिए यह सूत्र नहीं माना जा सकता । और जो भी ऋकारान्त धातुयें हैं । वे अनुदात्त होने से तास् में नित्य अनिट् हैं अतः उनमें तो 'अचस्तास्वत् थल्यनिटो नित्यम्' से ही इट् का प्रतिषेध सिद्ध है । उनके लिए भी यह सूत्र नहीं है । गुण रपर कर देने पर अनजन्त हो जाने से उनमें पूर्वसूत्र से सिद्ध नहीं, ऐसा भी नहीं कहा जा सकता क्योंकि उसमें 'उपदेश में अजन्त' ऐसा कहा गया है । अतः सर्वत्र निर्वाह सिद्ध रहने पर भी यह प्रस्तुत सूत्र बनाया जाना नियमार्थ है—भारद्वाज के मत में ऋकारान्त से ही थल् में इट् का प्रतिषेध होता है, अन्य धातुओं से नहीं होता है । अतः अन्य धातुओं को थल् में इट् होता ही है । इसीलिए—ययिथ, पेचिथ आदि होते हैं । इसलिये पहले वाले दोनों सूत्रों का यह विकल्प बन जाता है । भारद्वाज के मत में इट् होता है, अन्य के मत में नहीं होता है ।

यह सूत्र केवल ह्रस्व ऋकारान्त धातुओं के प्रतिषेध के लिए है । इसीलिये 'ऋतः' ऐसा तपरकरण है । यदि तपरकरण नहीं होता तो दीर्घ ॠकारान्तों के लिए भी प्रवृत्त हो जाने पर यह विधि सूत्र ही बन जाता क्योंकि दीर्घ ॠकारान्तों को प्राप्ति किसी से नहीं है ।

(१) 'कृ सृ भृ वृ स्तु द्रु स्रुश्रुवो लिटि' (२) अचस्तास्वत् थल्यनिटो नित्यम्' (३) उपदेशेऽत्वतः' (४) 'ऋतो भारद्वाजस्य'—इन चारों सूत्रों के बिषय का संग्रह इस कारिका में प्रदर्शित किया गया है—

"अजन्तोऽकारवान् यस्तास्यनिट् थलि वेडयम् ।
ऋदन्त ईदृङ् नित्यानिट् क्राद्यन्यो लिटि सेड् भवेत् ॥

---

१. अत्र "ऋकारान्ते नेति" इत्येव शुद्धं प्रतीयते ।

तपरकरणमृकारान्तस्य निवृत्त्यर्थम् । तथा हि सति विध्यर्थमेतत्स्यात् ॥

**३३४३. बभूथाततन्थजगृभ्मववर्थेति निगमे ॥ ६४ ॥ ( २५२७ )**

बभूथ, आततन्थ, जगृभ्म, ववर्थ—इत्येतानि निपात्यन्ते निगमविषये । निगमः = वेदः । बभूथ—'त्वं हि होता प्रथमो बभूथ' ( तै० सं० ३.१.४.४ ) । बभूविथेति भाषायाम् । आततन्थ—'येनान्तरिक्षमुर्वाततन्थ' ( ऋ० ३.२२.२ ) । आतेनिथेति भाषायाम् । जगृभ्म—'जगृभ्मा ते दक्षिणमिन्द्र हस्तम्' ( ऋ० १०.४७.१ ) । जगृहिमेति भाषायाम् । ववर्थ-'ववर्थ त्वं हि ज्योतिषा' ववरिथेति भाषायाम् ।

क्रादिसूत्राद् ( ७.२.१३ ) एवास्य प्रतिषेधे सिद्धे नियमार्थं वचनम्—निगम एव, न भाषायामिति ॥

**न्यासः**

अथ तपरकरणं किमर्थम्, न 'उर्भारद्वाजस्य' इत्येवोच्येत ? इत्याह—**तपरकरणमित्यादि** । यदि ह्युरित्येवोच्येत, तन्नोऽण् सवर्णान् गृह्णातीति ऋकारान्तानामपि ग्रहणं स्यात् । ततस्तन्निवृत्त्यर्थं तपरकरणम् । किं पुनः स्याद् यदृकारान्तानां ग्रहणं स्यात् ? इत्यत आह—**तथा हीत्यादि** । तथेत्येवमर्थे । हि शब्दो यस्मादर्थे । एवं यस्मात् तपरकरणमन्तरेणापि ऋकारान्तानां ग्रहणे सति विध्यर्थमेतत् सम्भाव्येत । असति हि विधेये नियमो भवति । ऋकारान्तानां ग्रहणे सति तेषामेव प्रतिषेधो विधेयः स्यात्, न हि तेषां पूर्वेण प्रतिषेधः सिद्धः । सर्वेषामृकारान्तानां तासौ नित्यम्; सेट्त्वात् । तपरकरणे तु सति तकारेण दीर्घनिवृत्तौ कृतायां विधेयताभावान्नियमोऽयं सम्पद्यते ॥ ६३ ॥

**बभूथाततन्थजगृभ्मववर्थेति निगमे** ॥ बभूथेत्यादौ सर्वत्र क्रादिनियमादिटः प्राप्तस्याभावो निपात्यते । **बभूथेति** । 'भवतेरः' इत्यभ्यासस्याकारस्यात्वम् । **बभूविथेति** । 'भुवो वुग्लुङ्लिटोः' इति वुक् । **आततन्थेति** । 'तनु विस्तारे', आङ्पूर्वः । **आतेनिथेति** । 'थलि च सेटि' इत्येत्वाभ्यासलोपौ । **जगृभ्मेति** । ग्रहेर्लिट्, 'परस्मैपदानाम्' इत्यादिना मसो मादेशः, 'ग्रहिज्या' इति सूत्रेण सम्प्रसारणम् । **ववर्थेति** । 'वृञ् वरणे' ॥ ६४ ॥

**पदमञ्जरी**

ग्रहणस्य 'अचस्तास्वत्' इत्यत्रापकर्षादुपदेशेऽजन्तत्वात्सिद्धः प्रतिषेध इति मन्यते । **ऋत एव भारद्वाजस्येति** । विपरीतस्तु नियमो न भवति—ऋतो भारद्वाजस्यैवेति । यदि स्यान्नियमाश्रयणमनर्थकं स्यात्, पूर्वोक्तेन प्रकारेण विध्यर्थत्वमेवाश्रयणीयं स्यात् । **पूर्वयोर्योगयोरिति** । ऋकारान्तेषु 'अनन्तरस्य विधिर्वा भवति' (न्या० प० १९) इति न्यायस्य तावदसम्भवः । यस्य तर्हि प्रसङ्गः 'अचस्तास्वत्' इति, तस्यैव नियमो युक्तः, तत्कथं पूर्वयोर्योगयोर्द्वयोरपि विकल्पः ? एवं मन्यते—'द्वयोरनन्तरमस्यारम्भात्तासौ नित्यमनिटां मध्ये ऋत एव भारद्वाजस्य नान्येषाम्'—इत्येवं सामान्याकारेण नियम आश्रयणीय इति । **तथा हि सतीति** । असति तपरकरणे ऋकारान्तानामप्यत्र ग्रहणं स्यात्, तेषां च तासौ सिद्धत्वाद् 'अचस्तास्वत्' इत्यस्याप्रसङ्गे विध्यर्थमेवेदं स्यात्, न ह्रस्वग्रहणेन नियमार्थम्; विधिनियमसम्भवे विधेरेव ज्यायस्त्वादित्यर्थः ॥ ६३ ॥ ६४ ॥

**भावबोधिनी**

जो धातु ऋदन्त से भिन्न अजन्त या ह्रस्वाकारवान् तास् परे रहते नित्य अनिट् है वह थल् परे विकल्प से इट् वाला होता है । [ यह पूर्वार्ध का आशय है । ] ईदृक् = तास् में नित्य अनिट् जो ऋदन्त तास् में नित्य अनिट् वह थल् में भी नित्य अनिट् होता है । अर्थात् 'अचस्तावत्' इस पाणिनीयमत में और 'ऋतो भारद्वाजस्य' इस भारद्वाजमत में भी वह अनिट् ही रहता है । कृ आदि ( सूत्रोक्त ) आठ धातुओं से भिन्न धातु लिट् में नित्य सेट् होता है क्योंकि कृ आदि आठ धातुओं से ही परवर्ती लिट् में इट् नहीं होता है—ऐसा नियम किया गया है ॥ ६३ ॥

बभूथ, आततन्थ, जगृभ्म, ववर्थ—ये रूप वेदविषय में निपातित होते हैं । निगम = वेद । उदा० बभूथ—त्वं हि होता प्रथमं बभूथ । [ प्राप्त इट् का निषेध निपातित होता है । ] भाषा में—बभूविथ । [ भू + लिट् = सिप् = थल्, इट् इथ, "भुवो वुग् लुङ्लिटोः" सूत्र से वुक् आगम होता है । ] आततन्थ—येनान्तरिक्षमुर्वाततन्थ । [ तन् का लिट् मध्यमपुरुष एकवचन का रूप है । इट् होने पर अभ्यासलोप, एत्व ]—आतेनिथ । जगृभ्म—"जगृभ्मा ते दक्षिणमिन्द्र हस्तम् । [ ग्रह् + लिट् = मस् = म, सम्प्रसारण, द्वित्व, अभ्यासकार्य, ह् का भ दीर्घ–जगृभ्मा । लोक

**३३४४. विभाषा सृजिदृशोः ॥ ६५ ॥ ( २४०४ )**

**सृजि, दृशि—इत्येतयोस्थलि विभाषा इडागमो न भवति । सस्रष्ठ, ससर्जिथ । दद्रष्ठ, ददर्शिथ ॥**

**३३४५. इडत्त्यर्तिव्ययतीनाम् ॥ ६६ ॥ ( २३८४ )**

**अत्ति, अर्ति, व्ययति—इत्येतेषां थलीडागमो भवति । आदिथ । आरिथ । संविव्ययिथ । व्येञः 'न व्यो लिटि' ( ६.१.४६ ) इत्यात्वप्रतिषेधः । अत्तिव्ययत्योः 'ऋतो भारद्वाजस्य' ( ७.२.६३ ) इति नियमाद्विकल्पः । अर्तेरपि नित्यं प्रतिषेधः ।**

**अत्रेड्ग्रहणं विस्पष्टार्थम् । विकल्पविधाने हि सति अत्तिव्ययतिग्रहणमनर्थकम्; प्रतिषेधविधाने**

**न्यासः**

**विभाषा सृजिदृशोः** ॥ 'सृज विसर्गे', 'दृशिर् प्रेक्षणे'—अनयोः क्रादिनियमादिटि नित्यं प्राप्ते विकल्पार्थं वचनम् । **सस्रष्ठ, दद्रष्ठेति** । व्रश्चादिना षत्वम्, सृजिदृशोर्झल्यमकिति' इत्यम् ॥ ६५ ॥

**इडत्त्यर्तिव्ययतीनाम् ॥ आदिथ, आरिथेति** । 'अद भक्षणे', 'ऋ गतौ' । 'अत आदेः' इत्यभ्यासस्य दीर्घः । **विव्ययिथेति** । 'व्येञ् संवरणे', 'लिट्यभ्यासस्योभयेषाम्' इति सम्प्रसारणम् । कस्मात् पुनरत्र व्येञः 'आदेच उपदेशे' इत्यात्वं न भवति ? इत्याह—**व्येञो न व्यो लिटीत्यादि । अर्तेरपि नित्यं प्रतिषेध इति ।** 'ऋतो भारद्वाजस्य' इत्यनेन ।

**अत्रेड्ग्रहणं विस्पष्टार्थमिति** । ननु च नित्यमिडागमो यथा स्यादित्येवमर्थमिड्ग्रहणं स्यात्, न हीड्ग्रहणमन्तरेणायं शक्यत इड्विधिर्नित्यो विज्ञातुम् ? इत्याह—**विकल्पविधाने हीत्यादि** । अनेन हि विकल्प-

**पदमञ्जरी**

**विभाषा सृजिदृशोः ॥ सस्रष्ठ, दद्रष्ठेति** । 'सृजिदृशोर्झल्यमकिति', पूर्ववत् षत्वम् ॥ ६५ ॥

**इडत्त्यर्त्तिव्ययतीनाम् ॥ अत्र इड्ग्रहणं विस्पष्टार्थमिति** । अथ विकल्पे प्राप्ते नित्यार्थं कस्मान्न भवति ? तत्राह—**विकल्पविधाने हीति** । एवमपि प्रतिषेधः प्रकृतः, तन्निवृत्त्यर्थमिड्ग्रहणं स्यात् ? इत आह—**प्रति-**

**भावबोधिनी**

में इट् होता है—] जगृह्मि ऐसा होता है । ववर्थ- ववर्थ त्वं हि ज्योतिषा । [ वृञ् + लिट् = सिप् = थल् का रूप है । लोक में इट् होता है । गुण, रपर होने पर–] ववरिथ—यह भाषा में होता है ।

"क्रसृ" इत्यादि ( पूर्वोक्त ) सूत्र से ही प्रतिषेध के सिद्ध रहते यह वचन नियम करने के लिए हैं—निगम में ही ये रूप होते हैं, भाषा में नहीं ॥ ६४ ॥

सृज् और दृश्—इनसे थल् परे विकल्प से इट् आगम नहीं होता है । उदा० सस्रष्ठ, ससर्जिथ । दद्रष्ठ, ददर्शिथ । [ 'सृज विसर्गे' और 'दृशिर् प्रेक्षणे' धातुओं के लिट् = सिप् = थल्, क्रादिनियम से इट् प्राप्त है, इससे निषेध हो जाता है । द्वित्वादि के बाद "सृजिदृशोर्झल्यमकिति" इससे अम् आगम, यण्—सस्रज् + थ, 'व्रश्चभ्रस्ज" इत्यादि सूत्र से ज् का ष्, ष्टुत्व–सस्रष्ठ । इट् होने पर गुण, रपर—ससर्जिथ । इसी प्रकार दद्रष्ठ में भी अम् आगम, यण् होता है । ] ॥ ६५ ॥

अत्ति, अर्ति, व्ययति ( = 'अद् भक्षणे', 'ऋ गन्तौ', 'व्येञ् संवरणे' )--इनको थल् परे रहते इट् आगम होता है । उदा० आदिथ, आरिथ, संविव्ययिथ । [ अद् + लिट् = सिप् = थल्, ऋ + लिट् = सिप् = थल्, द्वित्व, अभ्यासकार्य आदि के बाद प्राप्त इट् के विकल्प का नित्य इट् होता है, यह प्रतिषेध का अभाव होता । ] 'व्येञ्' के आत्व का प्रतिषेध "न व्यो लिटि" सूत्र से होता है । [ इसलिये सम्प्रसारण द्वित्वादि के बाद संविव्यि + थ, इट्, इ का गुण, अयादेश—संविव्ययिथ होता है । ] अत्ति और व्ययति का 'ऋतो भारद्वाजस्य' इस नियम से विकल्प [ प्राप्त है ] और 'ऋ' धातु का भी नित्य प्रतिषेध प्राप्त है । [ "ऋतो भारद्वाजस्य" इसी नियम से । अतः यह सूत्र नित्य इट् करता है । ]

इस सूत्र में इट् का ग्रहण विस्पष्टता के लिए है । क्योंकि विकल्प के विधान होने में अत्ति और व्ययति का ग्रहण व्यर्थ ही हो जाता । [क्योंकि इन दोनों में तो "ऋतो भारद्वाजस्य" इसी सूत्र से विकल्प सिद्ध है ।] और प्रतिषेध

चार्त्तिग्रहणमिति नित्योऽयं विधिरिड्ग्रहणमन्तरेणापि शक्यते विज्ञातुम् ॥

**३३४६. वस्वेकाजाद्घसाम् ॥ ६७ ॥ ( ३०९६ )**

कृतद्विर्वचनानां धातूनामेकाचाम् आकारान्तानाम्, घसेश्च वसाविडागमो भवति । आदिवान् । आशिवान् । पेचिवान् । शेकिवान् । धात्वभ्यासयोरेकादेशे कृते एत्वाभ्यासलोपयोश्च कृतयोः कृतद्विर्वचना एते एकाचो भवन्ति । आत्–ययिवान् । तस्थिवान् । घस्–जक्षिवान् ।

**न्यासः**

स्यानन्तस्य वा विधानं क्रियते, पूर्वप्रकृतस्य वा नित्यप्रतिषेधस्य ? शक्यते ह्यसावपि मण्डूकप्लुतिन्यायेनानुवर्त्तयितुम् । तत्र यदि पूर्वको विकल्पस्तदार्त्तिव्ययतिग्रहणमनर्थकं स्यात्; 'उपदेशेऽत्वतः' इत्यनेनैव विकल्पस्य सिद्धत्वात् । अथेतरः, एवं सत्यर्त्तिग्रहणमनर्थकं स्यात्; 'ऋतो भारद्वाजस्यैव' इत्यनेनैव प्रतिषेधस्य सिद्धत्वात् । यत एवं न विकल्पस्य विधानमुपपद्यते तेन नापि प्रतिषेधस्य । तस्मादन्तरेणापीड्ग्रहणं नित्योऽयमिड्विधिरिति शक्यते विज्ञातुम् । प्रतिपत्तिगौरवं पुनरेवं निज्ञायमाने स्यादिति विस्पष्टार्थमिड्ग्रहणं क्रियते ॥ ६६ ॥

**वस्वेकाजाद्घसाम् । कृतद्विर्वचनानां धातूनामेकाचामिति ।** कुत एतदवसितम् ? एकाज्ग्रहणसामर्थ्यात् । न हि कश्चिदकृते द्विर्वचनेऽनेकाजस्ति, यन्निवृत्त्यर्थमेकाज्ग्रहणं क्रियते । ननु च जागर्त्तिरस्ति, अतस्तन्निवृत्त्यर्थं तत् स्यात् ? नैतदस्ति; न ह्येकमुदाहरणं प्रतियोगारम्भं प्रयोजयति । यद्येतत् प्रयोजनं स्यात्, 'जाग्रो न' इत्येवं ब्रूयात् । तदाप्ययमर्थः—प्रतिपत्तिगौरवं परिहृतं भवति । ननु चोर्णोतेर्निवृत्त्यर्थमपि स्यात् ? नैतत्; उक्तं हि प्राग्—'वाच्य ऊर्णोर्णुवद्भावः' इति । तस्माद् युक्तमुक्तम्—कृतद्विर्वचनानां धातूनामेकाचामिति । **आदिवान्, आशिवानिति ।** 'अद भक्षणे', 'अश भोजने' । 'लिटः कसुश्च' इति क्वसुः, द्विर्वचनम्, अभ्यासकार्यञ्च, अत आदेः' इति दीर्घत्वम् । सवर्णदीर्घत्वम्, इट्, 'उगिदचाम्' इति नुम्, 'सान्तमहतः' इत्यादिना दीर्घः, हल्ङ्यादिसंयोगान्तलोपौ । **पेचिवान्, शेकिवानिति ।** 'अत एकहल्मध्ये' इत्यादिनैत्वाभ्यासलोपौ । **धात्वभ्यासयोरेकादेशे कृत इत्यादि ।** ननु च षाष्ठिके द्विर्वचनविधौ 'द्विष्प्रयोगो द्विर्वचनम्' इत्येष पक्षो **वृत्तिकारेणाश्रितः**, एवं चाकृते धात्वभ्यासयोरेकादेशेऽकृतयोरपि चैत्वाभ्यासलोपयोः कृतद्विर्वचना अप्येत एकाचो

**पदमञ्जरी**

षेधविधाने इति ॥ ६६ ॥

**वस्वेकाजाद्घसाम् ।।** 'वसु' इत्यविभक्तिको निर्देशः । वसोरित्यर्थः । **कृतद्विर्वचनानामिति ।**

कथं पुनरविशेषोक्तावेष विशेषो लभ्यते ? एकाज्ग्रहणसामर्थ्यात् । न हि कश्चिदकृते[1] द्विर्वचनेनैकाजस्ति यन्निवृत्त्यर्थमेकाज्ग्रहणं स्यात् । 'चिरिजिरिचकाशिभ्यः कास्यनेकाज्ग्रहणं चुलुम्पाद्यर्थम्' इत्यामा भवितव्यमिति वसोरसम्भवः । ऊर्णोतेस्तु णुवद्भावादेकाज्ग्रहणेनानिवृत्तिः । ननु च जागर्त्तिरस्ति ? 'उषविदजागृभ्योऽन्यतरस्याम्' इत्यामो विकल्पितत्वात्; वेदेऽपि—जागृवांसो अनुग्मन्निति 'द्विर्वचनप्रकरणे छन्दसि

**भावबोधिनी**

के विधान में 'अर्ति' का ग्रहण व्यर्थ है, [क्योंकि 'ऋतो भारद्वाजस्य' से नित्य प्रतिषेध प्राप्त ही है ।] इन कारणों से यह विधि नित्य है—ऐसा इट् के ग्रहण के बिना भी जाना जा सकता है । [ अतः यहाँ केवल स्पष्टता के लिए ही इट् का ग्रहण है, नित्यता आदि के लिए नहीं । ] ॥ ६६ ॥

किये गये द्वित्ववाली एकाच् आकारान्त धातुओं और 'घस' से परे 'वसु' को इट् आगम होता है । उदा० आदिवान् । आशिवान् [ 'अद् भक्षणे' और 'अश् भोजने' से लिट्, 'क्वसुश्च' से क्वसु = वसु आदेश, द्वित्व, अभ्यासकार्य, अ अद् + वस्, अ अश् + वस्, "अत आदेः" सूत्र से अभ्यास का दीर्घ, सवर्णदीर्घ—आद्+वस्, आश्+वस्, इट् आगम आदिवस्, आशिवस् । उगित् मानकर नुमागम उपधादीर्घ आदि करने पर रूप बनता है । ] पेचिवान् । शेकिवान् । [ 'डुपचष्' और 'शक्लृ' धातुओं से भी लिट् = क्वसु, द्वित्वादि अभ्यासकार्य, एत्व अभ्यासलोप के बाद इट् आगम तथा पूर्वोक्त विभक्ति सम्बन्धी कार्य होते हैं । ]

१. अत्र "न हि कश्चिदकृते द्विर्वचनेऽनेकाजस्ति" इत्येव पाठः शुद्धः, न्यासे महाभाष्ये चैवमेव दर्शनात् ।

**सिद्धे सत्यारम्भो नियमार्थः—एकाजाद्घसामेव वसाविडागमो भवति, नान्येषाम्। बिभिद्वान्। चिच्छिद्वान्। बभूवान्। शिश्रिवान्। क्रादिनियमात्, प्रतिषेधाभावाच्च य इट् प्रसक्तः स नियम्यते।**

**आद्ग्रहणमनेकाज्ग्रहणार्थम्। द्विर्वचने हि कृते इटि हि सति आतो लोपेन भवितव्यम्।**

**न्यासः**

भवन्ति। स्थाने द्विर्वचने हि शब्दान्तरमनेकाजतिदिश्यत इति स्यादेषां कृतद्विर्वचनानामनेकाच्त्वम्, न तु द्विष्प्रयोगे द्विर्वचने, तत्र हि स एव धातुर्द्विरुच्यते, न चासौ शतकृत्वोऽप्युच्चार्यमाण एकाच्त्वं जहाति, किं पुनर्द्विरुच्यमानः, तत् किमुच्यते—धात्वभ्यासयोरेकादेश एत्वाभ्यासलोपयोश्च कृतयोः कृतद्विर्वचना एत एकाचो भवन्तीति ? आवृत्तिकृतमेकाचो भेदमाश्रित्यैवमुक्तमित्यदोषः। भवति हि धर्मभेदादपि धर्मिणो भेदव्यवहारः ? तथा हि, वक्तारो वदन्ति—परुद् भवान् पटुरासीत्, पटुतरश्चैषमः, पटुतमः परारि, सोऽन्य एवासि संवृत्त इति। अथ वा—स्थाने द्विर्वचनपक्षोऽपि तत्राश्रितः, द्विष्प्रयोगश्च द्विर्वचनमिति कृत्वा। चकारात् स्थाने द्विर्वचनमपीति स्थाने द्विर्वचनपक्षस्यापि तत्र सूचनात्। ये तु तत्पक्षभाविनो दोषास्ते तत्र प्रतिविहिता एव। **तस्थिवानिति।** 'शपूर्वाः खयः' इति खयः शेषः, 'अतो लोप इटि च' इत्याकारलोपः। **जक्षिवानिति।** पूर्ववद्-देर्घस्लादेशः, इट्, 'गमहन' इत्यादिनोपधालोपः, 'कुहोश्चुः' इति चुत्वम्—घकारस्य झकारः, 'अभ्यासे चर्च्' इति झकारस्य जकारः। परस्य घकारस्य 'खरि च' इति चर्त्वम्—ककारः, 'शासिवसि' इत्यादिना षत्वम्।

ननु चात्र क्रादिनियमादिडागमः सिद्ध एव, तत् किमर्थोऽयमारम्भः ? इत्याह—**सिद्ध इत्यादि। क्रादिनियमात् प्रसक्त इत्यादिना** 'सिद्धे सत्यारम्भो नियमार्थः' इत्येतदेव विस्पष्टीकरोति। **प्रसक्त इति।** प्राप्त इत्यर्थः। **नियम्यत इति।** धात्वन्तरेभ्यो व्यावर्त्त्यैकाजादिष्वेव व्यवस्थाप्यत इत्यर्थः।

अथाद्ग्रहणं किमर्थम्, यावताऽकारान्ता अप्यातो लोपे कृते कृतद्विर्वचना एकाचो भवन्त्येव, तत्रै-काज्ग्रहणेनैव सिद्धम् ? इत्याह—**आद्ग्रहणमनेकाज्ग्रहणार्थ**मिति। कथं पुनस्तेषामनेकाच्त्वम् ? इत्यत आह—**द्विर्वचने इत्यादि।** इण्निमित्तत्वादाकारलोपस्येटि सति तेषामाकारलोपेन भवितव्यम्, नासति, अतो याव-

**पदमञ्जरी**

वेति वक्तव्यम्' इति द्विर्वचनाभावः, नैकमुदाहरणमेकाज्ग्रहणं प्रयोजयति। यद्येतावत्प्रयोजनं स्यात् 'जागर्तेर्न' इत्येव ब्रूयात्, लघीयसी हि साक्षात्प्रतिषेधप्रतिपत्तिः। यदि वा न्यायसिद्धोऽयमर्थः। तथा हि द्विर्वचनस्याव-काशः—पपाच, इटोऽवकाशः यत्र कृते द्विर्वचन एकाच्—पेचिवान्, आदिवान्; बिभिद्वानित्यादौ तूभयप्रसङ्गे नित्यत्वाद् द्विर्वचनम्।

**भावबोधिनी**

धातु तथा अभ्यास का एकादेश करने पर तथा एत्वाभ्यासलोप कर देने पर किये गये द्वित्व वाले [ आद् आश्, पेच्, शेक्—] ये एकाच् ( ही ) रहते हैं। [ अतः इट् आगम होता है। ] आकान्त के उदा० ययिवान्। तस्थिवान्। [ या + लिट् = क्वसु द्वित्वाभ्यास के बाद यया + वस्, तस्था + वस्, इट् आगम, आलोप हो जाता है। ] घस्—जक्षिवान्। [ अद् + लिट् = क्वसु, अद् का 'घस्ऌ' आदेश, द्वित्वाभ्यासकार्य—जघस् + वस्, इट् आगम, 'गमहन्' इत्यादि सूत्र से उपधालोप. 'कुहोश्चुः' सूत्र से कवर्ग 'घ्' का चवर्ग झ, 'अभ्यासे चर्च' सूत्र से 'झ' का जश्त्व जकार जघ्स् + इवस्, 'खरि च' सूत्र से घ् का चर्त्व क्, "शासिवसिघसीनां च" से स् का ष् आदेश, क् + ष् का क्ष्—जक्षिवस्। नुमागमादि करने पर रूप होता है-जक्षिवान्। ]

[ इनमें 'क्रादि' नियम से इट् आगम सिद्ध ही है, तब इसकी क्या आवश्यकता ? ] सिद्ध रहने पर सूत्र बनाना नियम के लिए है—'एकाच् और घस् को ही वसु में इट् आगम होता है, अन्यों का नहीं।' इसलिए—बिभिद्वान्। चिच्छिद्वान्। बभूवान्। शिश्रिवान्। [ इनमें ] क्रादिनियम से और प्रतिषेध के अभाव से जो इट् प्रसक्त होता है उसका नियम कर दिया जाता है। [ इस कारण उपर्युक्त उदाहरणों में इट् आगम नहीं होता है। ]

आद् ( आकारान्त ) का ग्रहण अनेकाच् धातुओं के लिए है। [ द्वित्व के बाद आ का लोप कर देने पर वे भी एकाच् हो जाती हैं अतः 'एकाच्' से ही उनका भी ग्रहण हो जायगा ? ] द्वित्व करने के बाद इट् कर लेने के बाद

**दरिद्रातेस्तु कास्यनेकाज्ग्रहणं चुलुम्पाद्यर्थमित्यामा भवितव्यम्। दरिद्राञ्चकार। अथाप्याम्न क्रियते, तथापि च दरिद्रातेरार्धधातुके 'लोपः सिद्धश्च प्रत्ययविधौ' इति प्रागेव प्रत्ययोत्पत्तेराकारे लुप्ते इडागमस्य निमित्तं विहतमिति न इडागमो भवति, ददरिद्वानिति भवितव्यम्।**

**घसेरपि यदि ग्रहणमिह न क्रियते, तदा द्विर्वचनात् परत्वाद् 'घसिभसोर्हलि च' (६.४.१००) इति उपधालोपे कृते द्विर्वचनमेव न स्यात्; अनच्कत्वाद्। इह तु घसिग्रहणात् उपधालोपमपि परत्वादिडागमो**

**न्यासः**

दिण्न क्रियते तावदाकारलोपाभावात् कृतद्विर्वचना एतेऽनेकाच इत्यसत्यादिग्रहणे तेषां ग्रहणं न स्यात्। तस्मादनेकाजर्थमाद्ग्रहणं कर्त्तव्यम्।

यद्येवम्, दरिद्रातेरपीट् प्रसज्येत? इत्यत आह—**दरिद्रातेस्त्वित्यादि**। दरिद्रातेः क्वसोः सम्भव एव नास्ति, यतः 'कास्यनेकाज्ग्रहणम्' इति वचनाद्दरिद्रातेरामा भवितव्यम्, अस्मिंश्च सति 'आमः' इति लेर्लुका भवितव्यम्, तत्कुतोऽयमिट्प्रसङ्गः! **दरिद्राञ्चकारेति**। 'कृञ्चानुप्रयुज्यते' इति लिट्परस्य कृञोऽनुप्रयोगः। अभ्युपगम्यापि दरिद्रातेरामोऽभावं परीहारान्तरमाह—**अथाप्याम्न क्रियत इत्यादि**। आकारान्तानां धातूनामिहेड्विधीयते। दरिद्रातेरार्धधातुके 'लोपः सिद्धश्च प्रत्ययविधौ' इति वचनात् प्रागेव प्रत्ययोत्पत्तेराकारो लुप्त 'इतोडागमोऽस्मान्निमित्ताभावान्न भवति'।

क्रियतां नामाद्ग्रहणम्, घसिग्रहणं न कर्त्तव्यमिति, अस्य द्विर्वचने कृते 'घसिभसोर्हलि च' इत्युपधालोपे कृते चैकाच इत्येवं सिद्ध इडागमः? इत्याह—**घसेरपीत्यादि। अनच्कत्वादिति**। द्विर्वचनाभावहेतुः।

**पदमञ्जरी**

**क्रादिनियमात्प्राप्त**[2] इति। 'नेड्वशि कृति' इति प्रत्ययाश्रयस्य प्रतिषेधस्य सर्वत्र भावात्क्रादिनियमादेव सर्वत्र वसोरिटः प्राप्तिः।

**आद्ग्रहणमनेकाजर्थमिति**। ननु द्विर्वचने आकारलोपे सति तेषामप्येकाच्त्वादेव सिद्धम्? अत आह—**द्विर्वचने हीति**। इण्निमित्त आकारलोपो नासति तस्मिन्भवति, ततश्चानेकाच्त्वमित्यर्थः।

**अथाप्याम्न क्रियत इति**। 'आत औ णलः' इत्यौकारे विधातव्ये औकारविधानेन ज्ञापितमेतत्—दरिद्रातेरनित्य आमिति। तेनायमभ्युपगमः ददरिद्रौवानिति, 'नेड्वशि कृति' इति प्रतिषेध एव तत्र भवति।

अथ घसिग्रहणं किमर्थम्, यावता द्विर्वचने कृते 'घसिभसोर्हलि च' इत्युपधालोपे सत्येकाच्त्वादेव सिद्धम्? अत आह—**घसेरपीति। परत्वादिति। नित्यत्वाच्चेत्यपि** द्रष्टव्यम्; तस्य हल्यपि विधानात्।

**भावबोधिनी**

ही आ का लोप होना चाहिये। [ अतः इट् करने के पूर्व वह आकारान्त अनेकाच् ही रहती है। इसलिए 'आद् ग्रहण' भी आवश्यक है। ]

[ यदि ऐसा है तब तो 'दरिद्रा' को भी इट् होने लगेगा? ] 'कास्यनेकाच्ग्रहणं कर्त्तव्यं चुलुम्पाद्यर्थम्' इस वचन से दरिद्रा से 'आम्' होना चाहिए। [ आम् कर देने पर 'आमः' सूत्र से लिट् का लुक् ही हो जाता है तब उसका आदेश क्वसु मिलता ही नहीं है। कोई अनुपपत्ति नहीं है। ] दरिद्राञ्चकार।

यदि कथञ्चित् आम् न भी किया जाय तब भी 'दरिद्रा' से आर्धधातुक परे रहते "लोपः सिद्धश्च प्रत्ययविधौ" इस वचन के द्वारा प्रत्यय (क्वसु आदि) की उत्पत्ति के पहले ही आकार के लुप्त हो जाने पर [ आकारान्तत्वरूप ] इडागम का निमित्त नष्ट हो जाता है इस कारण इट् आगम नहीं होता है—दरिद्वान् यही बनाना चाहिए।

यहाँ यदि घस् का भी ग्रहण न किया जाय तब भी द्विर्वचन की अपेक्षा परवर्त्ती होने से 'घसिभसोर्हलि च" इस सूत्र से उपधा का लोप कर देने पर द्विर्वचन ही नहीं हो सकता क्योंकि [ घ्स्—ऐसा ] अनच्क ( अच्‌रहित ) हो

---

१–१. 'इति नास्याविडागमस्य निमित्तमेव भवति' इति क्वचित् पाठः।

२. प्राप्त–इदं काशिकायां नास्ति।

बाधते। तत्र कृते 'गमहनजनखनघसाम्' (६.४.९८) इत्युपधालोपः। स च 'द्विर्वचनेऽचि' (१.१.५९) इति द्विर्वचने कर्तव्ये स्थानिवद्भवति। तेन जक्षिवान् इति सिद्ध्यति॥

**३३४७. विभाषा गमहनविदविशाम्॥ ६८॥ (३०९९)**

**गम, हन, विद, विश—इत्येतेषां धातूनां वसौ विभाषा इडागमो भवति। गम—जग्मिवान्, जगन्वान्। 'मो नो धातोः' (८.२.६२) इति नकारः। हन—जघ्निवान्, जघन्वान्। विद—विविदिवान्, विविद्वान्। विश—विविशिवान्, विविश्वान्।**

**विशिना साहचर्यादिह विदेस्तौदादिकस्य लाभार्थस्य ग्रहणम्। ज्ञानार्थस्य तु नित्यं विविद्वानित्येव भवति।**

**न्यासः**

एकाचो द्विर्वचनमुच्यते; 'एकाचः' इत्यधिकारात्। तस्मादुपधालोपे कृतेऽनच्कत्वान्न द्विर्वचनं स्यात्, ततश्च जक्षिवानिति न सिध्यतीत्यभिप्रायः। अथ क्रियमाणेऽपि घसिग्रहणे कस्मादेव दोषो न भवति? इत्याह—**क्रियमाण इत्यादि**। सुबोधम्॥ ६७॥

**विभाषा गमहनविदविशाम्॥** पूर्वस्मान्नियमाद् गमादीनामिड् न भवतीति विभाषेयमारभ्यते। **जग्मिवानिति**। परत्वादिट्, ततः 'गमहन' इत्यादिनोपधालोपः, ततो द्विर्वचनम्। **जघन्वानिति, जघ्निवानिति**। 'अभ्यासाच्च' इति कुत्वम्—हकारस्य घकारः। **लाभार्थस्येति**। 'विद्लृ लाभे' इत्यस्य। **न ज्ञानार्थस्येति**। 'विद ज्ञाने' इत्यस्य। 'विद सत्तायाम्', 'विद विचारणे'—इत्येतयोश्चात्मनेपदित्वादात्मनेपदेषु क्वसुर्न भवतीत्यनुपन्यासः।

**पदमञ्जरी**

**अनच्कत्वादिति**। स्थानिवद्भावोऽपि नास्ति; हलिनिमित्तत्वादुपधालोपस्य। क्रियमाणे तु घसिग्रहणे नायं दोष इत्याह—**क्रियमाणे त्विति**॥ ६७॥

**विभाषा गमहनविदविशाम्॥ जघ्निवान्, जघन्वानिति**। 'हो हन्तेर्ञ्णिन्नेषु'। 'अभ्यासाच्च' इति कुत्वम्।

[1]**विशिना तौदादिकेनेति**। यद्यप्यादादिकेन हन्तिना साहचर्यमस्ति, तथापि शब्दपरविप्रतिषेधा-

**भावबोधिनी**

जाता है। किन्तु यहाँ तो सूत्र में 'घस्' के ग्रहण के कारण उपधालोप को भी परवर्ती होने से इट् आगम बाधित कर लेता है। इट् कर लेने पर "गमहनजनघसाम्" इस सूत्र से उपधालोप होता है। और वह लोप 'द्विर्वचनेऽचि' इसके आधार पर द्विर्वचन की कर्त्तव्यता में स्थानिवत् हो जाता है। इससे 'जक्षिवान्' यह रूप बन जाता है। [ अतः 'घस्' ग्रहण भी आवश्यक है। ]॥ ६७॥

गम्, हन्, विद्, विश्—इन धातुओं से वस् परे रहते विकल्प से इट् आगम होता है। उदा० गम्—जग्मिवान् जगन्वान्। [ गम् + लिट् = क्वसु = वस्, इट्, 'गमहनजनखनघसाम्' इससे उपधा का लोप, 'द्विर्वचनेऽचि' के अनुसार द्वित्व, अभ्यासकार्य, जग्म् इवस् = जग्मिवस्, नुमागमादि होने पर—जग्मिवान्। इट् न होने पर द्वित्व अभ्यासकार्य के बाद—जगम् + वस् ] 'मो नो धातोः' से म् का न् जगन्वस्, नुमादि करने पर—जगन्वान् ]हन्—जघ्निवान्, जघन्वान्। [ हन् + लिट् = क्वसु, वैकल्पिक इट् आगम, उपधालोप, द्वित्वादि के बाद चुत्व, जश्त्व, अभ्यास से परे कुत्व = हकार का घकार—जघ्न + वस्, नुमादि करने पर रूप बनता है। इट् न होने पर जघन्वान् ] विद—विविदिवान्, विविद्वान्। विश—विविशिवान्, विविश्वान्।

विश् के साहचर्य से इस सूत्र में तुदादिगणीय लाभ अर्थ वाली 'विद्' धातु का ग्रहण होता है। ज्ञान अर्थ

---

१. 'विशिना साहचर्यात्' इति काशिकायाम्।

❀दृशेश्चेति वक्तव्यम् ❀ (म० भा०)। ददृशिवान्, ददृश्वान् (ऋ० ४.३३.६)॥

## ३३४८. सनिंससनिवांसम् ॥ ६९ ॥ (३५८३)

सनोतेः[1], सनतेर्वा धातोः 'सनिंससनिवांसम्' इति निपात्यते[1]। 'अग्निज्वाग्ने सनिंससनिवांसम्' ( आ० श्रौ० १.३.४.१६ )। इडागम एत्वाभ्यासलोपाभावश्च निपात्यते।

[2]सनिङ्पूर्वादन्यत्र सेनिवांसमित्येव भवति। छन्दसीदं[3] निपातनं विज्ञायते[3]। भाषायां सेनिवांसमिति भवति॥

## ३३४९. ऋद्धनोः स्ये ॥ ७० ॥ (२३६६)

**न्यासः**

**दृशेश्चेत्यादि।** 'दृशिर् प्रेक्षणे' इत्यस्माच्च परे क्वसोरिडागमो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—'विभाषा' इति योगविभागः क्रियते, तेन दृशेरपि भविष्यतीति। न चैवं सति 'गमहनविदविशाम्' इत्यस्यानर्थक्यम्; पूर्वयोगस्यासर्वविषयत्वसूचनात्। एवं ह्यतिप्रसङ्ग परिहृतो भवति॥ ६८॥

**सनिंससनिवांसम्॥ सनोतेरिति** 'षणु दाने' इत्यस्य सनिपूर्वस्य द्वितीयान्तस्योच्चारणेन नियतामानुपूर्वीमुपलक्षयति। यत्रैषानुपूर्वी नियता तत्रैव यथा स्यात्। इयं चानुपूर्वी छन्दस्येव नियतेति तद्विषयमेवैतान्निपातनं विज्ञायते। अत एव **वृत्तिकृता** छान्दसः प्रयोगो दर्शितः। **सेनिवांसमिति।** पूर्ववदेत्त्वाभ्यासलोपौ। 'वस्वेकाजाद्घसाम्' इतीट्॥ ६९॥

**ऋद्धनोः स्ये॥** विभाषेति निवृत्तम्। ऋकारान्तानां हन्तेश्चानुदात्तत्वात् 'एकाचः' इत्यादिना प्रतिषिद्धस्येटः स्ये विधानार्थमेतत्। अथ स्वरतेः स्वरत्यादिसूत्रेण पक्ष इट्, अथानेन नित्यमित्याह—

**पदमञ्जरी**

द्विशिसाहचर्यमेव व्यवस्थापकमिति भावः। **ज्ञानार्थस्य त्विति।** सत्ताविचारणार्थयोस्त्वात्मनेपदित्वात् क्वसावसम्भव एवेति भावः। **विविद्वानिति।** पूर्ववदिट्प्रतिषेधः॥ ६८॥

**सनिंससनिवांसम्॥** क्वसोश्छान्दसत्वात्, अनुपूर्व्याश्च विवक्षितत्वाच्छन्दस्येवैतन्निपातनम्॥ ६९॥

**ऋद्धनोः स्ये॥** स्वरत्यादिसूत्रे यदुक्तम्—स्वरतेरेतस्माद्विकल्पादित्यादि, तदेव स्मारयति— **स्वर-**

**भावबोधिनी**

वाली विद् का तो नित्य विविद्वान् यही एक रूप बनता है। ['विद सत्तायाम्' 'विद विचारणे' इनके आत्मनेपदी होने से क्वसु नहीं होता है। कानच् होता है। अतः इट् की प्राप्ति नहीं है।]

❀ दृश् का भी कहना चाहिये। ❀ उदा० ददृशिवान्, ददृश्वान्॥ ६८॥

सनोति अथवा सनति ( स्वादिगणीय 'षण' अथवा तुदादिगणीय 'षणु' ) धातु का 'सनिंससनिवांसम्' यह रूप निपातित होता है। [ यह वेद में ही समझना चाहिए। ] उदा० 'अग्निज्वाग्ने सनिंससनिवांसम्।' इट् का आगम और एत्व, अभ्यासलोपाभाव निपातित होता है।

[2]सनिङ् पूर्वक से भिन्न में 'सेनिवांसम्' यही रूप बनता है। यह निपातन वेद में समझा जाता है। भाषा में 'सेनिवांसम्' यह होता है। [ इट्, एत्व, अभ्यासलोप सभी कार्य होते हैं। ]॥ ६९॥

ऋकारान्त धातुओं को और हन् धातु को स्य परे रहते इट् आगम होता है। उदा० करिष्यति, हरिष्यति। हनिष्यति। [ कृ, हृ के लृट् – तिप, स्य, इट् आगम, ऋ का गुण, रपर कर् इ स्यति, हर् इस्य ति षत्व। हन् +

---

१–१. 'सनिपूर्वस्य सनोतेः सनतेर्वा सनिंससनिवांसमिति निपात्यते'–इत्येकस्मिन्पुस्तके पाठः।

२–२. न्यासे सिद्धान्तकौमुद्यादौ तु 'सनिम्पूर्वस्य' इत्येवं पाठः।

३–३. 'इयं चानुपूर्वी छन्दस्येव नियतेति छन्दस्येव निपातनं विज्ञायते'–इति पाठा०। वस्तुतस्तु तदिदं न्यास-व्याख्यानमेव मूले केनचित्प्रक्षिप्तम्।

ऋकारान्तानां धातूनां हन्तेश्च स्ये इडागमो भवति। करिष्यति। हनिष्यति। हरिष्यति। स्वरतेर्वेट्त्वाद्, 'ऋद्धनोः स्ये' (७.२.७०) इत्येतद्भवति विप्रतिषेधेन—स्वरिष्यति।

तपरकरणं विस्पष्टार्थम्॥

**३३५०. अञ्जेः सिचि॥ ७१॥ (२५४६)**

अञ्जेः सिचि इडागमो भवति। आञ्जीत्, आञ्जिष्टाम्, आञ्जिषुः।

सिचीति किम्? अङ्क्ता, अञ्जिता। ऊदित्वाद् विभाषा भवति॥

**३३५१. स्तुसुधूञ्भ्यः परस्मैपदेषु॥ ७२॥ (२३८५)**

स्तु, सु, धूञ्—इत्येतेभ्यः सिचि परस्मैपदे परत इडागमो भवति। अस्तावीत्। असावीत्। अधावीत्।

परस्मैपदेष्विति किम्? अस्तोष्ट। असोष्ट। अधोष्ट, अधविष्ट॥

**न्यासः**

**स्वरतेरित्यादि।** स्वरतेर्वालोर्यत् स्वरत्यादिसूत्रेण वेट्त्वं विहितं तस्मादनेन स्ये ऋकारान्तेभ्यो विधीयमानं नित्येट्त्वं भवति विप्रतिषेधेन। अयञ्चार्थः स्वरत्यादिसूत्र उक्तोऽपि विस्मरणशीलानामनुग्रहाय पुनरिहोच्यते।

अथ तपरकरणं किमर्थम्? दीर्घाणां मा भूदिति चेत्? नैतदस्ति; उदात्तत्वाद्धि तेषां भवितव्यमेवेटा। एवं तर्ह्यसति तपरकरणे यथा 'स्मिपूङ्रञ्ज्वशां सनि' इत्यत्र स्वरत्यादिसाहचर्याद् 'ऋ' इत्येतस्य धातोर्ग्रहणम्, तथेहापि हन्तिना साहचर्याद् 'ऋ' इत्येतस्य धातोर्ग्रहणं स्यात्। तपरत्वे तु सति वर्णग्रहणमेतद्विज्ञायते। वर्णनिर्देशे हि तपरत्वं प्रसिद्धम्। वर्णग्रहणे च वर्णग्रहणानि सर्वत्र तदन्तविधिं प्रयोजयन्तीति ऋकारान्तानामिट् सिद्धो भवति॥ ७०॥

**अञ्जेः सिचि॥** 'अन्जू व्यक्तिम्रक्षणकान्तिगतिषु' ऊदित्वादत्र स्वरत्यादिसूत्रेण विकल्पे प्राप्ते नित्यार्थं वचनम्। **आञ्जीदिति।** 'इतश्च' इतीकारलोपः, 'अस्तिसिचोऽपृक्ते' इतीट्, 'इट ईटि' इति सिचो लोपः, 'आडजादीनाम्' इत्याट्, 'आटश्च' इति वृद्धिः। **आञ्जिष्टामिति।** 'तस्थस्थमिपाम्' इत्यादिना तसस्थाने तामादेशः। **आञ्जिषुरिति।** 'सिजभ्यस्तविदिभ्यश्च' इति झेर्जुस्॥ ७१॥

**स्तुसुधूञ्भ्यः परस्मैपदेषु॥** 'ष्टुञ् स्तुतौ', 'षुञ् अभिषवे'—अनयोरनुदात्तत्वात् प्रतिषेधे प्राप्ते, धूञस्तु स्वरत्यादिसूत्रेण विकल्पे प्राप्ते सतीदमारभ्यते॥ ७२॥

**पदमञ्जरी**

**तेर्वेट्त्वादिति।** वा = विकल्पित इड्यस्य स वेट्, तस्य भावो वेट्त्वम्, स पुनर्विकल्पितेट्सम्बन्धः॥७०॥७१-७२॥

**भावबोधिनी**

इट्+स्य ति] 'स्वरति' धातु विकल्प से इट् वाली है इसलिये उससे विप्रतिषेध के कारण 'ऋद्धनोः स्ये' यही नित्य इट् होता है। [इस पर "स्वरति" ७।२।४४ सूत्रवृत्ति में भी लिखा जा चुका है।]

[दीर्घ ऋकारान्त धातुओं से उदात्त होने से ही इट् सिद्ध है। अतः केवल ह्रस्व ऋकारान्त से ही यह इट् होगा। अतः] तपरकरण केवल स्पष्टता के लिए है॥ ७०॥

'अञ्ज' से सिच् परे इट् आगम होता है। उदा० आञ्जीत्, आञ्जिष्टाम्, आञ्जिषुः। ['अञ्जू' धातु के ऊदित् होने से वैकल्पिक इट् प्राप्त है। यह केवल सिच् लुङ् में नित्य करता है।]

सिच् परे—इसका क्या फल है? अङ्क्ता, अञ्जिता। ऊदित् होने से ["स्वरति" आदि सूत्र से] विकल्प से इट् होता है॥ ७१॥

स्तु, सु, धूञ्—इनसे सिच् परे परस्मैपद परे रहते इट् आगम होता है। उदा० अस्तावीत्। असावीत्। अधावीत्। [स्तु + लुङ् = ति, अट् आगम, सिच् = स्, ईट्, इट्, सिच् लोप—अस्तु + इ ईत्, सवर्णदीर्घ "सिचि-वृद्धिः" इससे वृद्धि, आव् आदेश—अस्तावीत्। इसी प्रकार अन्य में भी इट् आगम होता है।]

परस्मैपद परे रहते—इसका क्या फल है? अस्तोष्ट। असोष्ट। अधोष्ट, अधविष्ट। [ष्टुञ्, षुञ् धूञ्-ञित् होने से उभयपदी हैं। अतः आत्मनेपद में इडागम नहीं होता है।]॥ ७२॥

## २३५२. यमरमनमातां सक्च ॥ ७३ ॥ (२३७७)

**यम, रम, नम—इत्येतेषामङ्गानाम्, आकारान्तानां च सगागमो भवति परस्मैपदे सिचि, इडागमश्च। यम्—अयंसीत्, अयंसिष्टाम्, अयंसिषुः। रम—व्यरंसीत्, व्यरंसिष्टाम्, व्यरंसिषुः। नम—अनंसीत्, अनंसिष्टाम्, अनंसिषुः। आकारान्तानाम्—अयासीत्, अयासिष्टाम्, अयासिषुः।**

**यमादीनां हलन्तलक्षणा ( ७.२.३ ) वृद्धिः प्राप्ता सा 'नेटि' ( ७.२.४ ) इति प्रतिषिध्यते।**

**परस्मैपदेष्वित्येव—आयंस्त, आरंस्त, अनंस्त ॥**

### न्यासः

**यमरमनमातां सक् च ॥** 'यम उपरमे', 'रमु क्रीडायाम्', 'णम प्रह्वत्वे शब्दे च'। आकारान्ता 'या प्रापणे' इत्येवमादयः। सर्वेषामनुदात्तत्वादिट्प्रतिषेधे प्राप्तेऽयमारम्भः। अत्र षष्ठीनिर्देशाद् यमादीनां सग् भवति, इट् पुनरार्धधातुकाधिकारात् सिच एव। **व्यरंसीदिति।** 'व्याङ्परिभ्यो रमः' इति परस्मैपदम्।

द्विवचनबहुवचनयोर्युक्तमुदाहरणम्, अस्ति हि तत्र सगिटोः श्रुतौ विशेषः; एकवचनस्य त्वयुक्तम्, विशेषाभावात्—इति यो देशयेत्, तं प्रति तत्रापि वृद्धिप्रतिषेधो विशेषोऽस्तीति दर्शयितुमाह—**यमादीनामित्यादि। आयंस्तेति।** 'आङो यमहनः' इत्यात्मनेपदम्। **अरंस्तेति।** अत्रापि 'अनुदात्त' इत्यादिना ॥ ७३ ॥

### पदमञ्जरी

**यमरमनमातां सक्च ॥ व्यरंसीदिति।** 'व्याङ्परिभ्यो रमः' इति परस्मैपदम्।

युक्तमत्र द्विवचनबहुवचनयोरुदाहरणम्, तत्र हि सगिटोः सतोरस्ति विशेषः; एकवचने त्वयुक्तम्, विशेषाभावात्? तत्राह—**यमादीनामिति।** 'ह्म्यन्तक्षण' इत्यत्रापीटीति वर्त्तते, अपासीदित्येतत्तु प्रक्रमाभेदायोदाहृतम्, नत्वत्र विशेषोऽस्ति। ननु चात्रापि स्वरे विशेषोऽस्ति—मा हि मासीदिति, इड्यसत्याद्युदात्तं पदं स्यात्, सति तु तस्य सिज्भक्तत्वाच्चित्स्वरेणोदात्तत्वे 'एकादेश उदात्तेनोदात्तः' इत्यन्तोदात्तं पदं भवति, तत्र 'आदिः सिचोऽन्यतरस्याम्' इति पक्षे आद्युदात्तत्वम्, पक्षेऽन्तोदात्तत्वम्? नैषोऽस्ति विशेषः; 'अनिटः सिचः पक्षे उपसंख्यानम्' ( वा० ७०२ ) इति वचनान्मा हि कार्षमित्यत्र यथा पक्षे आद्युदात्तत्वं पक्षे चान्तोदात्तत्वं च भवति, एवमत्रापि भविष्यति। **आयंस्तेति।** 'समुदाङ्भ्यो यमोऽग्रन्थे' इत्यात्मनेपदम्। **अनंस्तेत्यत्र** कर्मकर्त्तरि 'न दुहस्नुनमां यक्चिणौ' इति चिणः प्रतिषेधः ॥ ७३ ॥

### भावबोधिनी

यम, रम, नम—इनके अङ्गों को और आकारान्त धातुओं को सिच् परे परस्मैपद में सक् आगम होता है और इट् का आगम होता है अर्थात् दो आगम होते हैं। उदा० यम्—अयंसीत् अयंसिष्टाम्। अयंसिषुः। [ यम् + लुङ् = तिप्, अट्, इलोप, ईट् आगम अयम् + स् ईत्, प्रस्तुत सूत्र से इट् और सक् = स् का आगम—अयम् स् इ स् ईत्, सक् यह कित् होने से धातुके अन्त में होता है। 'इट ईटि' सूत्र से सिच् का लोप अयम् स् इ ईत्, सवर्णदीर्घ, म् का अनुस्वार—अयंसीत्। ] रम्—व्यरंसीत्, व्यरंसिष्टाम् व्यरंसिषुः। [ विपूर्वक रम् + लुङ् = तिप् अट्, सक्, इट्, सिच् इट् तिप्। पूर्व की सभी प्रक्रिया। ] नम्—अनंसीत्, अनंसिष्टाम्, अनंसिषुः।

आकारान्त के उदा० अयासीत्, अयासिष्टाम्, अयासिषुः। [ या + लुङ् = तिप् अट्, सिच्, सक् इट्, इलोप, ईट् आगम, सिच् लोप, सवर्णदीर्घ—अया स् ईत्। ]

यम् आदि धातुओं की हलन्तलक्षणा ( 'वदव्रजहलन्तस्याचः' सूत्र से ) वृद्धि प्राप्त होती है, उसका निषेध "नेटि" इस सूत्र से होता है। [ अतः धातु की वृद्धि नहीं होती है। ]

परस्मैपद परे ही—आयंस्त, अरंस्त, अनंस्त। [ यम् धातु के साथ आङ् उपसर्ग रहने पर "आङो यमहनः" से आत्मनेपद होता है। 'रम' अनुदात्तेत् होने से आत्मनेपदी है। 'अनंस्त' यह कर्मकर्ता में आत्मनेपदी होता है। अतः यह सूत्र नहीं लगता है। ] ॥ ७३ ॥

**३३५३. स्मिपूङ्रञ्ज्वशां सनि ॥ ७४ ॥ (२६२६)**

स्मिङ्, पूङ्, ऋ, अञ्जू, अशू—इत्येतेषां धातूनां सनीडागमो भवति। सिस्मयिषते। पिपविषते। अरिरिषति। अञ्जिजिषति। अशिशिषते।

ङकारग्रहणं पूञो मा भूत्। पुपूषति इत्येव तस्य भवति।

अशेरूदितो ग्रहणादश्नोतेर्नित्यमिडागमोऽस्त्येव॥

**३३५४. किरश्च पञ्चभ्यः ॥ ७५ ॥ (२६११)**

किरादिभ्यः पञ्चभ्यस्सनि इडागमो भवति। कॄ—चिकरिषति। गॄ—जिगरिषति। दृङ्—दिदरिषते। धृङ्—दिधरिषते। प्रच्छ—पिप्रच्छिषति।

### न्यासः

**स्मिपूङ्रञ्ज्वशां सनि॥** 'ष्मिङ् ईषद्धसने', 'पूङ् पवने'। अनुबन्धोच्चारणं पूञ्निवृत्त्यर्थम्। 'ऋ गतिप्रापणयोः' इति भ्वादिः, 'ऋ गतौ' इति जुहोत्यादिः—उभयोरपि ग्रहणम्; विशेषानुपादानात्। ऋकारान्तानां त्वेतद् ग्रहणं न भवति; उत्तरत्र किरत्यादीनामिटो विधानात्। 'अञ्जू व्यक्षणे', 'अशू व्याप्तौ'। 'अश भोजने' इत्यस्य ग्रहणं न भवति; उदात्तत्वादेवेट् सिद्ध इति। तत्राञ्जेरशेश्चोदित्त्वाद् विकल्पे प्राप्ते, शेषाणां तुगन्तत्वात् 'सनि ग्रहगुहोश्च' इति प्रतिषेधे प्राप्त इदमारभ्यते। **सिस्मयिषत इति**। 'पूर्ववत्सनः' इत्यात्मनेपदम्। **पिपविषत इति**। 'ओः पुयण्ज्यपरे' इत्यभ्यासस्येत्त्वम्। **अरिरिषतीति**। इटि सति गुणे कृतेऽजादेर्द्वितीयस्यैकाचो द्विर्वचनम्। **अञ्जिजिषतीति**। अञ्जेर्नकारो न द्विरुच्यते; 'न न्द्राः संयोगादयः' इति निषेधात्॥ ७४॥

**किरश्च पञ्चभ्यः॥** 'कॄ विक्षेपे', 'गॄ निगरणे', 'दृङ् अनादरे', 'धृङ् अनवस्थाने', 'प्रच्छ ज्ञीप्सायाम्' अत्रान्त्यस्यानुदात्तत्वादिट्प्रतिषेधे प्राप्ते दृङ्धृङोरुगन्तत्वात् 'सनि ग्रहगुहोश्च' इति निषेधे प्राप्ते, इतरयोस्तु।

### पदमञ्जरी

**स्मिपूङ्रञ्ज्वशां सनि॥** 'ऋ' इति धातोर्ग्रहणम्, न ऋकारान्तानाम्; उत्तरत्र किरादीनामिड्विधानात्। **पिपविषत इति**। 'ओः पुयण्ज्यपरे' इत्यभ्यासस्येत्वम्। **अञ्जिजिषतीति**। 'अजादेर्द्वितीयस्य' इति जिशब्दस्य द्विर्वचनम्, नकारस्तु न द्विरुच्यते; 'न न्द्राः' इति प्रतिषेधात्॥ ७४॥

**किरश्च पञ्चभ्यः॥** 'किरः' इति व्यत्ययेनैकवचनम्। 'पञ्चभ्यः' इति बहुवचनादाद्यर्थावगतिः। कृगृदृङ्धृङ्पृच्छतयः तुदादिषु किरादयः। **पिपृच्छिषतीति**। 'रुदविद' इत्यादिना सनः कित्त्वम्। ग्रहिज्यादिसूत्रेण सम्प्रसारणम्।

### भावबोधिनी

स्मिङ्, पूङ्, ऋ, अञ्जू, अशू—इन धातुओं को सन् परे इट् आगम होता है। उदा० सिस्मयिषते। पिपविषते। अरिरिषति। अञ्जिजिषति। अशिशिषते। इनमें स्मिङ्, पूङ्, ऋ—ये तीन उगन्त हैं अतः "सनिग्रहगुहोश्च" इससे प्रतिषेध प्राप्त रहते और 'अञ्जू' तथा 'अशू' के ऊदित् होने से विकल्प प्राप्त रहते यह इट् आगम होता है।]

ङकारग्रहण इसलिए है कि पूञ् का न हो। उसका—पुपूषति—यही होता है।

'अशू' इस ऊदित् का ग्रहण होने से 'अश्नोति' को नित्य इडागम होता ही है [ 'अश भोजने' इसमें नित्य इट् होता है।] ॥ ७४॥

'कॄ' आदि पाँच धातुओं से सन् परे इट् आगम होता है। उदा० कॄ—चिकरिषति। गॄ—जिगरिषति। [ ॠ का इत्, रपर द्वित्वादि के बाद इट् आगम होता है, षत्व—चिकरिषति, जिगरिषति, 'अचि विभाषा' सूत्र से लत्व होने पर 'जिगलिषति'। इनमें 'इट् सनि वा' से विकल्प प्राप्त है, नित्य इट् होता है।] दृङ्, दिदरिषते-दिधरिषते। धृङ् [ उगित् हैं। अतः इट् प्रतिषेध 'सनि ग्रहगुहोश्च' से प्राप्त है। इस सूत्र से इट् होता है।] प्रच्छ-

पञ्चभ्य इति किम् ? सिसृक्षति ।

किरतिगिरत्योः 'इट् सनि वा' ( ७.२.४१ ) इति विकल्पः प्राप्तः, 'वृतो वा' ( ७.२.३८ ) इति च । ॐअस्येटो दीर्घत्वं नेच्छन्ति ॥ॐ

**३३५५. रुदादिभ्यः सार्वधातुके ॥ ७६ ॥**

रुदादिभ्य उत्तरस्य वलादेः सार्वधातुकस्य इडागमो भवति । रुद्—रोदिति । स्वप्—स्वपिति । श्वस्—श्वसिति । अन्—प्राणिति । जक्ष्—जक्षिति ।

'पञ्चभ्यः' इत्येव—जागर्त्ति ।

सार्वधातुक इति किम् ? स्वप्ता ।

'वलादेः' इत्येव—रुदन्ति ॥

**न्यासः**

**वृत्तिकार**प्रदर्शितविकल्पे प्राप्ते सतीदमारभ्यते । **पिपृच्छिषतीति** । 'रुदविद' इत्यादिना सनः कित्वम्, 'ग्रहिज्या' इत्यादिना सम्प्रसारणम्, 'छे च' इति तुक् 'उरद्' इत्यभ्यासस्यात्त्वम्, पूर्ववदित्वम् । **सिसृक्षतीति** । 'सृज विसर्गे' । पञ्चग्रहणादस्येण्न भवति । सामान्यलक्षणोऽपीण्न भवत्येव; 'एकाचः' इति प्रतिषेधात् । 'हलन्ताच्च' इति कित्वम्, 'चोः कुः' इति कुत्वम्, व्रश्चादिसूत्रेण षत्वम्, 'षढोः कः सि' इति कत्वम् । **'वृतो वेत्यस्य दीर्घत्वं नेच्छन्तीति** । कथं पुनरिष्यमाणमपि न भवति ? व्यवस्थितविभाषाविज्ञानात् । **अस्येति** । एतत्सूत्रविहितस्येटः ॥ ७५ ॥

**रुदादिभ्यः सार्वधातुके** ॥ 'रुदिर् अश्रुविमोचने', 'ञिष्वप् शये', 'श्वस प्राणने', 'अन च', 'जक्ष अदने' । रुदादयोऽदादिषु पठ्यन्ते । 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्' इति 'रुदादिभ्यः' इत्येषा पञ्चमी 'सार्वधातुके' इत्यस्याः सप्तम्याः षष्ठीत्वं प्रकल्पयति । सप्तमीनिर्देशस्तूत्तरार्थः । तेन सार्वधातुकस्य वलादेरिड् विज्ञायत इत्यत आह—**रुदादिभ्यः पञ्चभ्य इत्यादि । प्राणितीति** । 'अनितेः' इति णत्वम् । **स्वप्तेति** । सार्वधातुकग्रहणादार्धधातुकस्येण्न भवति । सामान्यलक्षण इण्न भवत्येव; 'एकाचः' इति प्रतिषेधात् । अन्येभ्यस्तु रुदादिभ्य उदात्तत्वादार्धधातुकस्यापीटा भवितव्यमेवेति स्वपेरेव प्रत्युदाहरणम् ॥ ७६ ॥

**पदमञ्जरी**

**किरतिगिरत्योरिति** । शेषाणां त्वनुदात्तत्वात्प्रतिषेधः । **दीर्घत्वं नेच्छन्तीति** । इष्टिरेवेयम् ॥ ७५ ॥

**रुदादिभ्यः सार्वधातुके** ॥ रुदिस्वप्श्वसनिजक्षिरदादिषु रुदादयः । 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान् ( शाक० प० ९७ ) इति 'रुदादिभ्यः' इति पञ्चम्या 'सार्वधातुके' इति सप्तम्याः षष्ठी प्रकल्प्यते । सप्तमीनिर्देशस्तूत्तरत्रोपयोगं यास्यति । **प्राणितीति** । 'अनितेः' इति णत्वम् ।

**स्वप्तेति** । अन्येभ्यस्तु परस्यार्धधातुकस्येटा भवितव्यम् ॥ ७६ ॥

**भावबोधिनी**

पिपृच्छिषति । [ प्रच्छ + सन् कित् मानकर "ग्रहिज्या" सूत्र से 'र्' का सम्प्रसारण, अ का पूर्वरूप-पृच्छ् + स द्वित्वादि के बाद अभ्यास के ऋ का अत्व, रपर, इत्व, तुक् = श्चुत्व-पिपृच्छ, + स, इट्, षत्व—पिपृच्छिषति । ]

पाँच से ही—इसका क्या फल है ? सिसृक्षति [ सृज् सूत्रोक्त पाँच में नहीं है । ]

किरति, गिरति ( कॄ, गॄ ) इनको 'इट् सनि वा' इससे विकल्प प्राप्त है । और 'वृतो वा' इससे वैकल्पिक दीर्घ प्राप्त है । किन्तु इनका दीर्घत्व इष्ट नहीं है । [ यह वचन भाष्यकार की इष्टि है । ] ॥ ७५ ॥

रुदादि से उत्तरवर्त्ती वलादि सार्वधातुक को इट् आगम होता है । उदा० रुद्-रोदिति । स्वप्-स्वपिति । श्वस्-श्वसिति । अन्-प्राणिति । जक्ष्—जक्षिति । [ इनमें लट् = तिप्, शप् का लुक् होने पर इट् आगम होता है । ]

पाँच से ही इट् होता है—जागर्ति । [ 'जागृ' पाँच में नहीं है । इट् नहीं होता है । ]

सार्वधातुक परे—इसका क्या फल है ? स्वप्ता । [ लुट् तास् आर्धधातुक परे है । ]

वलादि का ही होता है—रुदन्ति । [ यहाँ नहीं होता है । ] ॥ ७६ ॥

**३३५६. ईशः से ॥ ७७ ॥ (२४३९)**

**ईश उत्तरस्य 'से' इत्येतस्य सार्वधातुकस्य इडागमो भवति । ईशिषे । इशिष्व ॥**

**३३५७. ईडजनोर्ध्वे च ॥ ७८ ॥ (२४४०)**

**ईड, जन—इत्येताभ्यामुत्तरस्य 'ध्वे' इत्येतस्य, 'से' इत्येतस्य च सार्वधातुकस्य इडागमो भवति । ईडिध्वे । ईडिध्वम् । ईडिषे । ईडिष्व । जनिध्वे । जनिध्वम् । जनिषे । जनिष्व । 'जनी प्रादुर्भावे' (धा० पा० ११४९)—इत्यस्य छान्दसत्वात् श्यनो लुक्, उपधालोपाभावश्च ।**

**'जन जनने' ( धा० पा० ११०५ )—इत्यस्यापि श्लुविकरणस्य ग्रहणमत्रेष्यते । तस्य कर्मव्यतिहारे-व्यतिजज्ञिषे, व्यतिजज्ञिष्व, व्यतिजज्ञिध्वे, व्यतिजज्ञिध्वम्—इति च भवति ।**

**न्यासः**

**ईशः से ॥** से इति 'सुपां सुलुक्' इति षष्ठ्या लुकं कृत्वाऽविभक्तिकोऽयं निर्देशः । **ईशिषे इति ।** 'ईश ऐश्वर्ये', लट्, अनुदात्तेत्त्वादात्मनेपदम्, 'थासः से', अदादित्वाच्छपो लुक् । **ईशिष्वेति ।** लोट्, से, 'सवाभ्यां वामौ' इति वादेशे कृत एकदेशविकृतमन्यवद्भवतीतीहापि भवति ॥ ७७ ॥

**ईडजनोर्ध्वे च ॥ ध्वे इति** पूर्ववदेवाविभक्तिकोऽयं निर्देशः । **ईडिध्वे इति ।** 'ईड स्तुतौ', पूर्ववदात्मनेपदम्, पूर्ववच्छपो लुक् । **ईडिध्वमिति ।** लोट्, 'सवाभ्यां वामौ' इत्यमादेशः । **जनिध्वमिति ।** पूर्ववदात्मनेपदम् । छान्दसत्वाच्छ्यनो लुग् 'बहुलं छन्दसि' इत्यनेन । **उपधालोपाभावश्चेति ।** 'गमहन' इत्यादिनोपधालोपः प्राप्नोति, तदभावश्छान्दसत्वादेव, 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति ।

**जन जनन इत्यस्येत्यादि ।** ननु चानुबन्धकत्वादस्यैव ग्रहणेन भवितव्यम्, न पूर्वस्य, उच्चारणार्थोऽकारः नानुबन्धः ? नैष दोषः; इह हि लघ्वक्षरत्वाज्जनशब्दस्य पूर्वनिपाते प्राप्ते परनिपातो लक्षणव्यभिचाराय । तेन निरनुबन्धकपरिभाषाया इहानुपस्थानादुभयोरपि ग्रहणं भवति । **व्यतिजज्ञिध्वमिति ।** 'कर्त्तरि कर्मव्यतीहारे' इति आत्मनेपदम् ।

**पदमञ्जरी**

**ईशः से ॥** 'ईश ऐश्वर्ये' ( धा० पा० १०२० ) आदादिकः । 'से' इत्यविभक्तिको निर्देशः । **इशिष्वेति ।** 'सवाभ्यां वामौ' । एकदेशविकृतस्यानन्यत्वात् सेशब्द एवायम् ॥ ७७ ॥

**ईडजनोर्ध्वे च ।** 'ईड स्तुतौ' ( धा० पा० १०१९ ) अदादिः । **छान्दसत्वाच्छ्यनो लुगिति ।** भाषायां तु 'जायसे'—इत्यत्र नित्यत्वात् श्यनि कृते तेन व्यवधानादिडभावः ।

**जन जनने इत्यस्यापीति ।** नन्वसौ परस्मैपदी ? तत्राह—**तस्य कर्मव्यतिहार इति ।** यदि तर्हि तस्याप्यात्मनेपदं सम्भवति, तस्यैव ग्रहणं प्राप्नोति; निरनुबन्धकत्वात् ? ईडिना साहचर्यादात्मनेपदिनोऽपि ग्रहणं भविष्यति ।

**भावबोधिनी**

'ईश्' से उत्तरवर्त्ती 'से' इस सार्वधातुक को इट् आगम होता है । उदा० ईशिषे । इशिष्व । [ ईश+लट्=थास्=से, शप् का लुक्, इट्, षत्व । लोट् में 'सवाभ्यां वामौ' से 'ए' का 'व' होता है । ] ॥ ७७ ॥

'ईड' तथा 'जन' से उत्तरवर्त्ती 'ध्वे' इसको और 'से' इस सार्वधातुक को इट् आगम होता है । उदा० ईडिध्वे, ईडिध्वम् । ईडिषे, ईडिष्व । [ ईड्+लट् = ध्वम्, टि का एत्व, इट् आगम । ईड्+लोट् = ध्वम्, इट्, एत्व, अमादेश । ईड्+लट् = थास् = से, इट्, षत्व । लोट् में 'ए' का 'व' आदेश ] जनिध्वे । जनिध्वम् । जनिषे, जनिष्व । 'जनी प्रादुर्भावे' इसके छान्दस = वैदिक होने के कारण श्यन् का लुक् हो जाता है [ और 'गमहन' इत्यादि सूत्र से ] उपधालोप का अभाव भी होता है ।

'जन जनने' इस श्लुविकरण वाली ( जुहोत्यादिगणीय ) का भी ग्रहण यहाँ इष्ट है । इसका कर्मव्यतिहार ( = क्रियाविनिमय ) में—व्यतिजज्ञिषे, व्यतिजज्ञिष्व । व्यतिजज्ञिध्वे, व्यतिजज्ञिध्वम्—ये रूप होते हैं ।

**ध्वेशब्दे ईशेरपि इडागम इष्यते। ईषिध्वे, ईषिध्वमिति। तदर्थं केचित्—'ईडिजनोः स्ध्वे च' इति सूत्रं पठन्ति। तत्र सकारादेः सेशब्दस्य सूत्र एवोपादानाच्चशब्दो भिन्नक्रम ईशेरनुकर्षणार्थो विज्ञायते।**

**'ईशीडिजनां सेध्वयोः' इत्येकमेव सूत्रं न पठितम्? विचित्रा हि सूत्रस्य कृतिः पाणिनेरिति।**

**'ध्वे' इति कृतटेरेत्वस्य ग्रहणात् लङि ध्वमि न भवितव्यमिटा। लोटि पुनरेकदेशविकृतस्यानन्यत्वाद् भवितव्यमिटा॥**

### न्यासः

**तत्रेत्यादि।** तत्रैवं सूत्रपाठे 'यस्मिन् विधिस्तदादावल्ग्रहणे' इति सकारग्रहणे सकारादेः सेशब्दस्य ग्रहणम्। स च सकारादिशब्दः सार्वधातुकसंज्ञकः सेशब्द एव सम्भवति; अन्यस्याऽसम्भावत्। ननु च स्वशब्दोऽपि सम्भवति? नैतदेवम्; एकदेशविकृतस्यानन्यत्वात् सोऽपि सेशब्द एव, अतस्तद्ग्रहणेनापि भवितव्यम्।

ये तु 'ईडजनोर्ध्वे च' इति सूत्रं पठन्ति, ते 'ईशः से' इत्यस्यैव योगस्यानुकर्षणार्थं चकारं कुर्वन्ति। तेनेशेरपि ध्वेशब्द इडागमो भवति। यदि तर्हीशेरपि ध्व इडागम इष्यते, तदा 'इशीडजनां सेध्वयोः' इत्येकमेव सूत्रं कस्मान्न पठन्ति, एवं पृथग्विभक्तिर्नोच्चारयितव्या, चकारश्च न कर्त्तव्यो भवति? इत्याह—**विचित्रा सूत्रस्येत्यादि।**

**ध्वे इति कृतटेरेत्वस्येत्यादि।** कृतटेरेत्त्वस्यैतदेव प्रयोजनम्—यत्र टेरेत्त्वं कृतं तत्रैव यथा स्यात्। न च लङि टेरेत्त्वमस्ति, अतस्तत्रेटा न भवितव्यम्। यद्येवम्, लोट्यपि न भवितव्यम्, अमादेशे कृते टेरेत्त्वस्याभावात्? इत्याह—**लोटि पुनरित्यादि॥ ७८॥**

### पदमञ्जरी

**तदर्थं केचिदिति।** ये त्वेवं न पठन्ति, ते चकारेण कृत्स्नमेव पूर्वसूत्रमनुवर्त्तयन्ति। **सकारादेरिति।** स इति सप्तम्या लुका निर्देशात्तदादिविधिः।

यदि तर्हि ईशेरपि ध्वे शब्दे इडागतो भवति, योगविभागो न कर्त्तव्यः, 'ईडीशजनां सेध्वयोः' इति वक्तव्यम्, एवं हि पृथग्विभक्तिर्नोच्चारयितव्या भवति, चकारश्च न कर्त्तव्यः? अत आह—**'ईशीड्जनां सेध्वयोरिति।** [1]**लङि ध्वमित्यस्य न भवतीति।** लोट्यपि तर्हि ध्वमित्यस्य न प्राप्नोति? तत्राह—**लोटि पुनरिति॥ ७८॥**

### भावबोधिनी

'ध्वे' शब्द परे 'ईश्' को भी इट् आगम इष्ट है। उदा० ईशिध्वे, ईशिध्वम्। इसके लिये कुछ लोग "ईडिजनोः स्ध्वे च' ऐसा सूत्र पढ़ते हैं। [ इस प्रकार के सूत्र से यह लाभ है कि ] इसमें सकारादि 'से' शब्द का सूत्र में ही उपादान होने के कारण 'च' शब्द भिन्न क्रम वाला होता हुआ 'ईश्' के अनुकर्षण के लिए समझा जाता है। [ अर्थात् 'स्ध्वे' के साथ 'च' का सम्बन्ध नहीं है अपि तु पूर्व सूत्र की 'ईश्' के लिए है। उसका समुच्चय हो जाता है। अलग सूत्र बनाने की आवश्यकता नहीं है। ]

'ईशीडिजनां सेध्वयोः' ऐसा एक ही सूत्र क्यों नहीं बनाया गया [ क्योंकि इन तीनों का दोनों प्रत्ययों में इट् आगम इष्ट है ]? आचार्य पाणिनि की रचना विचित्र है। [ अर्थात् आचार्य सूत्ररचना में स्वतन्त्र हैं। कभी लाघव की उपेक्षा भी कर देते हैं। ]

'ध्वे' इस किये गये टि के एत्व का ग्रहण होने के कारण लङ् में ध्वम् परे रहते इट् नहीं होना चाहिए। किन्तु लोट् में एकदेश के विकृत होने से अन्य नहीं हो जाता है इस न्याय से इट् होना ही चाहिए॥ ७८॥

---

१. 'ईशीडिजनां सेध्वयोः' इति काशिकायाम्। २. 'लङि ध्वनि न भवितव्यमिटा'—इति पाठः काशिकायाम्।

## ३३५८. लिङः सलोपोऽनन्त्यस्य ॥ ७९ ॥ (२२११)

'सार्वधातुके'[1] इति वर्तते[1]। सार्वधातुके यो लिङ् तस्य अनन्त्यस्य सकारस्य लोपो भवति। कः पुनरनन्त्यो लिङः सकारः? यो यासुट्-सुट्-सीयुटाम्। कुर्यात्, कुर्याताम्, कुर्युः। कुर्वीत, कुर्वीयाताम्, कुर्वीरन्।

अनन्त्यस्येति किम्? कुर्युः, कुर्याः।

'सार्वधातुके' इत्येव—क्रियास्ताम्, क्रियासुः। कृषीष्ट, कृषीयास्ताम्, कृषीरन्॥

**न्यासः**

**लिङः सलोपोऽनन्त्यस्य॥ सार्वधातुके यो लिङिति।** 'सार्वधातुके' इत्येषात्र निर्धारणे सप्तमी, जातावेकवचनम्, यथा—'कारके' इति। अथ वा—सुब्व्यत्ययेन बहुवचनस्य प्रसङ्गे एकवचनम्। परसप्तमीत्येषा न भवति—सार्वधातुके परतः; पूर्वस्य लिङोऽसम्भवात्। **कुर्यादिति।** विध्यादिसूत्रेण लिङ्, यासुट्, 'इतश्च' इतीकारलोपः, धातोर्गुणः, रपरत्वे 'अत उत् सार्वधातुके' इत्युत्त्वम्, 'ये च' इत्युकारलोपः। **कुर्यातामिति।** तसस्ताम्। **कुर्युरिति।** 'झेर्जुस्', 'उस्यपदान्तात्' इति पररूपत्वम्। **कुर्वीतेति।** उकारस्य यणादेशः। **कुर्वीरन्निति।** 'झस्य रन्'।

**कुर्युः, कुर्या इति।** अत्रानन्त्यग्रहणाज्जुसः सिपश्च न भवति।

**क्रियास्ताम्, क्रियासुरिति।** आशिषि लिङ्, 'रिङ्शयग्लिङ्क्षु' इति रिङादेशः। सार्वधातुकग्रहणादार्धधातुके न भवति। आर्धधातुकत्वं च 'लिङाशिषि' इत्यार्धधातुकसंज्ञाविधानात्। **कृषीष्ट, हृषीष्ट इति।** 'उश्च' इति कित्त्वम्, गुणाभावः॥ ७९॥

**पदमञ्जरी**

**लिङः सलोपोऽनन्त्यस्य॥ सार्वधातुके यो लिङिति।** नैषा परसप्तमी; सार्वधातुकपरस्य लिङोऽसम्भवात्। तस्मान्निर्धारणे सप्तमी। जातावेकवचनम्, सार्वधातुकेषु मध्ये यो लिङ् सार्वधातुकसंज्ञकस्येस्तत्यर्थः। **कुर्यादिति।** 'अत उत्सार्वधातुके' इत्युत्त्वम्, 'ये च' इत्युकारस्य लोपः। अत्र यासुट्सुटोः सकारस्य लोपः। **कुर्युरिति।** 'झेर्जुस्', यासुट्सकारलोपः, 'उस्यपदान्तात्' इति पररूपत्वम्। **कुर्वीतेति।** सीयुट्सुटोः सलोपः। **कुर्वीरन्निति।** 'झस्य रन्', अत्र सीयुट एव लोपः॥ ७९॥

**भावबोधिनी**

'सार्वधातुके' इसकी अनुवृत्ति होती है। सार्वधातुक परे रहते जो लिङ् उसके अनन्त्य (अन्त्य से भिन्न) सकार का लोप होता है। तो फिर लिङ् का अनन्त्य सकार कौन सा है? जो यासुट् सुट् और सीयुट् का है। उदा० कुर्यात्, कुर्याताम्, कुर्युः। [ कृ+लिङ् (विधि) = तिप्, "तनादिकृञ्भ्यः उः" से उ विकरण यासुट्, इका लोप, ऋ का गुण, रपर—कर्उयास्+त्, "अत उत् सार्वधातुके" से अ का उ, कुर् उ यास् त, "ये च" सूत्र से 'उ' का लोप, प्रस्तुत सूत्र से स् का लोप—कुर्यात्। तस् का ताम्-कुर्याताम्। झि का जुस् स् लोप, और "उस्यपदान्तात्" सूत्र से आ का पररूप—कुर्युः। ] आत्मनेपद में—कुर्वीत। कुर्वीयाताम्। कुर्वीरन्। [ कृ+लिङ् = त, सीयुट् ऋ का गुण, रपर, उ विकरण, अ का उ कुर् उ + सीय् त, सुलोप, य्लोप कुरु+ईत, यण्—कुर्वीत। आताम् में यलोप नहीं—कुर्वीयाताम्। 'झस्य रन्'—कुर्वीरन् ]

अनन्त्य का—इसका क्या फल है? कुर्युः, कुर्याः। [ अन्त्य स् का लोप न होकर विसर्ग होता है। ]

सार्वधातुक परे रहते ही—क्रियास्ताम्, क्रियासुः। [ आशीर्लिङ् में आर्धधातुक हो जाता है। ] कृषीष्ट, कृषीयास्ताम् कृषीरन्। [ आत्मनेपद आशीर्लिङ् में भी सलोप नहीं होता है ]॥ ७९॥

---

१-१. क्वचिदयं पाठो नास्ति।

**३३५९. अतो येयः ॥ ८० ॥ (२२१२)**

अकारान्तादङ्गादुत्तरस्य 'या' इत्येतस्य सार्वधातुकस्य 'इय्' इत्ययमादेशो भवति। पचेत्, पचेताम्, पचेयुरिति। अत्र 'उस्यपदान्तात्' ( ६. १. ९६ ) इति पररूपं बाधितम्।

अत इति किम् ? चिनुयात्। सुनुयात्। तपरकरणं किम् ? यायात्।

सार्वधातुक इत्येव—चिकीर्ष्यात्।

ननु चातो लोपेनात्र भवितव्यम्, पचेदित्यत्रापि हि तर्हि 'अतो दीर्घो यञि' ( ७. ३. १०१ ) इति

**न्यासः**

**अतो येयः ॥** सार्वधातुकं यत् प्रकृतं तदर्थादिह विभक्तिविपरिणामेन षष्ठ्यन्तं प्रतिपद्यते। अत एवाह—**अकारान्तादङ्गादुत्तरस्य सार्वधातुकस्येति। पचेदिति।** इयादेशे कृतेऽकारेण सह 'आद् गुणः', 'लोपो व्योर्वलि' इति यकारलोपः। **चिनुयादिति।** 'स्वादिभ्यः श्नुः'। **यायादिति।** अदादित्वाच्छपो लुक्। **चिकीर्ष्यादिति।** सनन्तादाशिषि लिङ्।

**ननु चातो लोपेनात्र भवितव्यमिति।** नार्थोऽनुवृत्तेन सार्वधातुकग्रहणेनेत्यभिप्रायः। **पचेदित्यत्रापीत्यादि।** यद्यपि पचेदितीदमस्योदाहरणमभिमतम्, तत्रापि 'अतो दीर्घो यञि' इति दीर्घत्वेन भवितव्यमिति, ततश्च सर्वविषयस्य विध्यन्तरेणावष्टब्धत्वादनवकाशोऽयमियादेशः। तस्मादवश्यमनेन विध्यन्तरं बाधितव्यम्। एवञ्च यथा दीर्घस्यायं बाधकः, तथातो लोपस्यापि स्यात्। तस्मात् सार्वधातुकग्रहणमनुवर्त्तयितव्यमिति भावः। **स्यादेतदेवमित्यादि।** यदि च दीर्घत्वम् 'तुरुस्तुशम्यमः सार्वधातुके' इत्यतः सार्वधातुकग्रहणमनुवर्त्त्य विधीयते, ततश्च स्यादेतदेवं यदुक्तवानसि; इयादेशस्यानवकाशत्वात्। अथ 'भूसुवोस्तिङि' इति तिङ्ग्रहणमनुवर्त्त्य विधीयते, तदा तिङ्मात्रभावि दीर्घत्वमिति लिङ् विधीयमान इयादेशे नाप्राप्ते तस्मिन्नयमारभ्यते, ततश्च येन

**पदमञ्जरी**

**अतो येयः ॥** 'सार्वधातुके' इति प्रकृतमर्थात् षष्ठ्यन्तं सम्पद्यते, तदाह—**अकारान्तादङ्गात्तदुरस्य सार्वधातुकस्येति।** अवयवसम्बन्धे चैषा षष्ठी, सार्वधातुकस्यावयवस्य याशब्दस्येत्यर्थः। **इय् इत्ययमिति।** सूत्रे त्वकार उच्चारणार्थः। **पचेदिति।** इयादेशे कृते शबकारेण सहाद्गुणः, वलादिषु वलि लोपः। **यकारस्य** च श्रवणम्—पचेयुः, पचेयमित्यादौ। **पचेयुरित्यत्रेत्यादि।** पररूपस्यावकाशः—चिनुयुः, सुनुयुः; इयादेशस्य तु पचेदित्यादि; पचेयुरित्यत्रोभयप्रसङ्गे परत्वादियादेशः। यदि पूर्वमेव पररूपं स्यात्, याशब्दाभावादियादेशो न स्यात्। **एवमतो लोपस्यापि बाधकः स्यादिति।** एतच्च 'मध्येऽपवादाः' ( व्या० प० १० ) इति न्याय-

**भावबोधिनी**

अकारान्त अङ्ग से उत्तरवर्ती सार्वधातुक 'या' इसका 'इय' यह आदेश होता है। उदा० पचेत्, पचेताम् पचेयुः। [ डुपचष् = पच् + लिङ् ( विधि ) = तिप्, शप् = अ, यासुट्, इलोप—पच् अ यास् त, स् लोप, 'या' का इय् आदेश पच + इय् त, गुण एकादेश, य्लोप–पचेत्। तस् का ताम्–पचेताम्। 'झेर्जुस्'–पचेयुः। ] इसमें 'उस्य-पदान्तात् ६।१।९६ से प्राप्त पररूप का बाध हो जाता है। [ क्योंकि यह 'इय्' परवर्त्ती है। ]

अकार से परे—इसका क्या फल है ? चिनुयात्। सुनुयात्। [ यहाँ 'उ' से परे है। अतः 'इय्' नहीं होता हैं। ] तपरकरण अर्थात् ह्रस्व अ से परे—इसका क्या फल है ? यायात्। [ दीर्घ से परे होने से 'इय् नहीं होता है। ]

सार्वधातुक परे ही—चिकीर्ष्यात्। [ सन्नन्त से आशीर्लिङ् आर्धधातुक यास् परे होने से 'इय्' नहीं होता है। ]

प्रश्न—यहाँ [ चिकीर्ष्यात् में ] 'अ' का लोप ( 'अतो लोपः' से ) होना चाहिए, तब तो 'पचेत्' इसमें भी 'अतो दीर्घो यञि' सूत्र से दीर्घ होना चाहिए। इस कारण प्रस्तुत सूत्र द्वारा अन्य विधि सूत्र का बाध करना चाहिए। इसलिये जिस प्रकार से यह दीर्घ ( - विधान ) का बाधक है उसी प्रकार 'अ' के लोप ( अतो लोप ) का भी बाधक हो जायगा; [ अतः 'अलोप नहीं होगा, तब यास् का इय् हो जाना चाहिए, इसको रोकने के लिए 'सार्वधातुके' की अनुवृत्ति आवश्यक है ] ? ऐसा होता यदि दीर्घ का विधान सार्वधातुक परे होता। [ किन्तु ऐसा

ऋकारान्तानां धातूनां हन्तेश्च स्ये इडागमो भवति । करिष्यति । हनिष्यति । हरिष्यति । स्वरतेर्वेट्त्वाद् 'ऋद्धनोः स्ये' (७.२.७०) इत्येतद्भवति विप्रतिषेधेन—स्वरिष्यति ।

तपरकरणं विस्पष्टार्थम् ॥

**३३५०. अञ्जेः सिचि ॥ ७१ ॥ (२५४६)**

अञ्जेः सिचि इडागमो भवति । आञ्जीत्, आञ्जिष्टाम्, आञ्जिषुः ।

सिचीति किम् ? अङ्क्ता, अञ्जिता । ऊदित्वाद् विभाषा भवति ॥

**३३५१. स्तुसुधूञ्भ्यः परस्मैपदेषु ॥ ७२ ॥ (२३८५)**

स्तु, सु, धूञ्—इत्येतेभ्यः सिचि परस्मैपदे परत इडागमो भवति । अस्तावीत् । असावीत् । अधावीत् ।

परस्मैपदेष्विति किम् ? अस्तोष्ट । असोष्ट । अधोष्ट, अधविष्ट ॥

**न्यासः**

**स्वरतेरित्यादि** । स्वरतेर्धातोर्यत् स्वरत्यादिसूत्रेण वेट्त्वं विहितं तस्मादनेन स्ये ऋकारान्तेभ्यो विधीयमानं नित्येट्त्वं भवति विप्रतिषेधेन । अयञ्चार्थः स्वरत्यादिसूत्र उक्तोऽपि विस्मरणशीलानामनुग्रहाय पुनरिहोच्यते ।

अथ तपरकरणं किमर्थम् ? दीर्घाणां मा भूदिति चेत् ? नैतदस्ति; उदात्तत्वाद्धि तेषां भवितव्यमेवेटा । एवं तर्ह्यसति तपरकरणे यथा 'स्मिपूङ्रञ्ज्वशां सनि' इत्यत्र स्वरत्यादिसाहचर्याद् 'ऋ' इत्येतस्य धातोर्ग्रहणम्, तथेहापि हन्तिना साहचर्याद् 'ऋ' इत्येतस्य धातोर्ग्रहणं स्यात् । तपरत्वे तु सति वर्णग्रहणमेतद्विज्ञायते । वर्णनिर्देशे हि तपरत्वं प्रसिद्धम् । वर्णग्रहणे च वर्णग्रहणानि सर्वत्र तदन्तविधिं प्रयोजयन्तीति ऋकारान्तानामिट् सिद्धो भवति ॥ ७० ॥

**अञ्जेः सिचि** ॥ 'अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु' ऊदित्वादत्र स्वरत्यादिसूत्रेण विकल्पे प्राप्ते नित्यार्थं वचनम् । **आञ्जीदिति** । 'इतश्च' इतीकारलोपः, 'अस्तिसिचोऽपृक्ते' इतीट्, 'इट ईटि' इति सिचो लोपः, 'आडजादीनाम्' इत्याट्, 'आटश्च' इति वृद्धिः । **आञ्जिष्टामिति** । 'तस्थस्थमिपाम्' इत्यादिना तसस्थाने तामादेशः । **आञ्जिषुरिति** । सिजभ्यस्तविदिभ्यश्च' इति झेर्जुस् ॥ ७१ ॥

**स्तुसुधूञ्भ्यः परस्मैपदेषु** ॥ 'ष्टुञ् स्तुतौ', 'षुञ् अभिषवे'—अनयोरनुदात्तत्वात् प्रतिषेधे प्राप्ते, धूञस्तु स्वरत्यादिसूत्रेण विकल्पे प्राप्ते सतीदमारभ्यते ॥ ७२ ॥

**पदमञ्जरी**

**तेर्वेट्त्वादिति** । वा = विकल्पित इड्यस्य स वेट्, तस्य भावो वेट्त्वम्, स पुनर्विकल्पितेट्सम्बन्धः ॥७०॥७१-७२॥

**भावबोधिनी**

इट् + स्य ति ] 'स्वरति' धातु विकल्प से इट् वाली है इसलिये उससे विप्रतिषेध के कारण 'ऋद्धनोः स्ये' यही नित्य इट् होता है । [ इस पर "स्वरति" ७।२।४४ सूत्रवृत्ति में भी लिखा जा चुका है । ]

[ दीर्घ ऋकारान्त धातुओं से उदात्त होने से ही इट् सिद्ध है । अतः केवल ह्रस्व ऋकारान्त से ही यह इट् होगा । अतः ] तपरकरण केवल स्पष्टता के लिए है ॥ ७० ॥

'अञ्ज' से सिच् परे इट् आगम होता है । उदा० आञ्जीत्, आञ्जिष्टाम्, आञ्जिषुः । [ 'अञ्जू' धातु के ऊदित् होने से वैकल्पिक इट् प्राप्त है । यह केवल सिच् लुङ् में नित्य करता है । ]

सिच् परे—इसका क्या फल है ? अङ्क्ता, अञ्जिता । ऊदित् होने से [ "स्वरति" आदि सूत्र से ] विकल्प से इट् होता है ॥ ७१ ॥

स्तु, सु, धूञ्—इनसे सिच् परे परस्मैपद परे रहते इट् आगम होता है । उदा० अस्तावीत् । असावीत् । अधावीत् । [ स्तु + लुङ् = ति, अट् आगम, सिच् = स्, ईट्, इट्, सिच् लोप—अस्तु + इ ईत्, सवर्णदीर्घ "सिचि-वृद्धिः" इससे वृद्धि, आव् आदेश—अस्तावीत् । इसी प्रकार अन्य में भी इट् आगम होता है । ]

परस्मैपद परे रहते—इसका क्या फल है ? अस्तोष्ट । असोष्ट । अधोष्ट, अधविष्ट । [ ष्टुञ्, षुञ् धूञ्-ञित् होने से उभयपदी हैं । अतः आत्मनेपद में इडागम नहीं होता हैं । ] ॥ ७२ ॥

## ३३५२. यमरमनमातां सक्च ॥ ७३ ॥ (२३७७)

**यम, रम, नम—इत्येतेषामङ्गानाम्, आकारान्तानां च सगागमो भवति परस्मैपदे सिचि, इडागमश्च। यम्—अयंसीत्, अयंसिष्टाम्, अयंसिषुः। रम —व्यरंसीत्, व्यरंसिष्टाम्, व्यरंसिषुः। नम—अनंसीत्, अनंसिष्टाम्, अनंसिषुः। आकारान्तानाम्—अयासीत्, अयासिष्टाम्, अयासिषुः।**

**यमादीनां हलन्तलक्षणा (७.२.३) वृद्धिः प्राप्ता सा 'नेटि' (७.२.४) इति प्रतिषिध्यते।**

**परस्मैपदेष्वित्येव—आयंस्त, आरंस्त, अनंस्त ॥**

### न्यासः

**यमरमनमातां सक् च ॥** 'यम उपरमे', 'रमु क्रीडायाम्', 'णम प्रह्वत्वे शब्दे च'। आकारान्ता 'या प्रापणे' इत्येवमादयः। सर्वेषामनुदात्तत्वादिट्प्रतिषेधे प्राप्तेऽयमारम्भः। अत्र षष्ठीनिर्देशाद् यमादीनां सग् भवति, इट् पुनरार्धधातुकाधिकारात् सिच एव। **व्यरंसीदिति।** 'व्याङ्परिभ्यो रमः' इति परस्मैपदम्।

द्विवचनबहुवचनयोर्युक्तमुदाहरणम्, अस्ति हि तत्र सगिटोः श्रुतौ विशेषः; एकवचनस्य त्वयुक्तम्, विशेषाभावात्—इति यो देशयेत्, तं प्रति तत्रापि वृद्धिप्रतिषेधो विशेषोऽस्तीति दर्शयितुमाह—**यमादीनामित्यादि। आयंस्तेति।** 'आङो यमहनः' इत्यात्मनेपदम्। **अरंस्तेति।** अत्रापि 'अनुदात्त' इत्यादिना ॥ ७३ ॥

### पदमञ्जरी

**यमरमनमातां सक्च ॥ व्यरंसीदिति।** 'व्याङ्परिभ्यो रमः' इति परस्मैपदम्।

युक्तमत्र द्विवचनबहुवचनयोरुदाहरणम्, तत्र हि सगिटोः सतोरस्ति विशेषः; एकवचने त्वयुक्तम्, विशेषाभावात्? तत्राह—**यमादीनामिति।** 'ह्म्यन्तक्षण' इत्यत्रापीटीति वर्त्तते, अयासीदित्येतत्तु प्रक्रमाभेदायोदाहृतम्, नत्वत्र विशेषोऽस्ति। ननु चात्रापि स्वरे विशेषोऽस्ति—मा हि मासीदिति, इट्यसत्याद्युदात्तं पदं स्यात्, सति तु तस्य सिज्भक्तत्वाच्चित्स्वरेणोदात्तत्वे 'एकादेश उदात्तेनोदात्तः' इत्यन्तोदात्तं पदं भवति, तत्र 'आदिः सिचोऽन्यतरस्याम्' इति पक्षे आद्युदात्तत्वम्, पक्षेऽन्तोदात्तत्वम्? नैषोऽस्ति विशेषः; 'अनिटः सिचः पक्षे उपसंख्यानम्' (वा० ७०३) इति वचनान्मा हि कार्षमित्यत्र यथा पक्षे आद्युदात्तत्वं पक्षे चान्तोदात्तत्वं च भवति, एवमत्रापि भविष्यति। **आयंस्तेति।** 'समुदाङ्भ्यो यमोऽग्रन्थे' इत्यात्मनेपदम्। **अनंस्तेत्यत्र** कर्मकर्त्तरि 'न दुहस्नुनमां यक्चिणौ' इति चिणः प्रतिषेधः ॥ ७३ ॥

### भावबोधिनी

यम, रम, नम—इनके अङ्गों को और आकारान्त धातुओं को सिच् परे परस्मैपद में सक् आगम होता है और इट् का आगम होता है अर्थात् दो आगम होते हैं। उदा० यम्—अयंसीत् अयंसिष्टाम्। अयंसिषुः। [ यम् + लुङ् = तिप्, अट्, इलोप, ईट् आगम अयम् + स् ईत्, प्रस्तुत सूत्र से इट् और सक् = स् का आगम—अयम् स् इ स् ईत्, सक् यह कित् होने से धातुके अन्त में होता है। 'इट ईटि' सूत्र से सिच् का लोप अयम् स् इ ईत्, सवर्णदीर्घ, म् का अनुस्वार—अयंसीत्। ] रम्—व्यरंसीत्, व्यरंसिष्टाम् व्यरंसिषुः। [ विपूर्वक रम् + लुङ् = तिप् अट्, सक्, इट्, सिच् इट् तिप्। पूर्व की सभी प्रक्रिया। ] नम्—अनंसीत्, अनंसिष्टाम्, अनंसिषुः।

आकारान्त के उदा० अयासीत्, अयासिष्टाम्, अयासिषुः। [ या + लुङ् = तिप् अट्, सिच्, सक् इट्, इलोप, ईट् आगम, सिच् लोप, सवर्णदीर्घ—अया स् ईत्। ]

यम् आदि धातुओं की हलन्तलक्षणा ( 'वदव्रजहलन्तस्याचः' सूत्र से ) वृद्धि प्राप्त होती है, उसका निषेध "नेटि" इस सूत्र से होता है। [ अतः धातु की वृद्धि नहीं होती है। ]

परस्मैपद परे ही—आयंस्त, अरंस्त, अनंस्त। [ यम् धातु के साथ आङ् उपसर्ग रहने पर "आङो यमहनः" से आत्मनेपद होता है। 'रम' अनुदात्तेत् होने से आत्मनेपदी है। 'अनंस्त' यह कर्मकर्ता में आत्मनेपदी होता है। अतः यह सूत्र नहीं लगता है। ] ॥ ७३ ॥

**३३५३. स्मिपूङ्रञ्ज्वशां सनि ॥ ७४ ॥ (२६२६)**

**स्मिङ्, पूङ्, ऋ, अञ्जू, अशू—इत्येतेषां धातूनां सनीडागमो भवति। सिस्मयिषते। पिपविषते। अरिरिषति। अञ्जिजिषति। अशिशिषते।**

**ङकारग्रहणं पूञो मा भूत्। पुपूषति इत्येव तस्य भवति।**

**अशेरूदितो ग्रहणादश्नोतेर्नित्यमिडागमोऽस्त्येव ॥**

**३३५४. किरश्च पञ्चभ्यः ॥ ७५ ॥ (२६११)**

**किरादिभ्यः पञ्चभ्यस्सनि इडागमो भवति। कृ—चिकरिषति। गृ—जिगरिषति। दृङ्—दिदरिषते। धृङ्—दिधरिषते। प्रच्छ—पिप्रच्छिषति।**

**न्यासः**

**स्मिपूङ्रञ्ज्वशां सनि** ॥ 'ष्मिङ् ईषद्धसने', 'पूङ् पवने'। अनुबन्धोच्चारणं पूञ्निवृत्त्यर्थम्। 'ऋ गतिप्रापणयोः' इति भ्वादिः, 'ऋ गतौ' इति जुहोत्यादिः—उभयोरपि ग्रहणम्; विशेषानुपादानात्। ऋकारान्तानां त्वेतद् ग्रहणं न भवति; उत्तरत्र किरत्यादीनामिटो विधानात्। 'अञ्जू व्यक्षणे', 'अशू व्याप्तौ'। 'अश भोजने' इत्यस्य ग्रहणं न भवति; उदात्तत्वादेवेट् सिद्ध इति। तत्राञ्जेरशेश्चोदित्वाद् विकल्पे प्राप्ते, शेषाणां तुगन्तत्वात् 'सनि ग्रहगुहोश्च' इति प्रतिषेधे प्राप्त इदमारभ्यते। **सिस्मयिषत इति**। 'पूर्ववत्सनः' इत्यात्मनेपदम्। **पिपविषत इति**। 'ओः पुयण्ज्यपरे' इत्यभ्यासस्येत्त्वम्। **अरिरिषतीति**। इटि सति गुणे कृतेऽजादेर्द्वितीयस्यैकाचो द्विर्वचनम्। **अञ्जिजिषतीति**। अञ्जेर्नकारो न द्विरुच्यते; 'न न्द्राः संयोगादयः' इति निषेधात् ॥ ७४ ॥

**किरश्च पञ्चभ्यः** ॥ 'कॄ विक्षेपे', 'गॄ निगरणे', 'दृङ् अनादरे', 'धृङ् अनवस्थाने', 'प्रच्छ ज्ञीप्सायाम्' अत्रान्त्यस्यानुदात्तत्वादिट्प्रतिषेधे प्राप्ते दृङ्धृङोरुगन्तत्वात् 'सनि ग्रहगुहोश्च' इति निषेधे प्राप्ते, इतरयोस्तु।

**पदमञ्जरी**

**स्मिपूङ्रञ्ज्वशां सनि** ॥ 'ऋ' इति धातोर्ग्रहणम्, न ऋकारान्तानाम्; उत्तरत्र किरादीनामिड्विधानात्। **पिपविषत इति**। 'ओः पुयण्ज्यपरे' इत्यभ्यासस्येत्वम्। **अञ्जिजिषतीति**। 'अजादेर्द्वितीयस्य' इति जिशब्दस्य द्विर्वचनम्, नकारस्तु न द्विरुच्यते; 'न न्द्राः' इति प्रतिषेधात् ॥ ७४ ॥

**किरश्च पञ्चभ्यः** ॥ 'किरः' इति व्यत्ययेनैकवचनम्। 'पञ्चभ्यः' इति बहुवचनादाद्यर्थावगतिः। कॄगॄदृङ्धृङ्पृच्छतयः तुदादिषु किरादयः। **पिपृच्छिषतीति**। 'रुदविद' इत्यादिना सनः कित्वम्। ग्रहिज्यादिसूत्रेण सम्प्रसारणम्।

**भावबोधिनी**

स्मिङ्, पूङ्, ऋ, अञ्जू, अशू—इन धातुओं को सन् परे इट् आगम होता है। उदा० सिस्मयिषते। पिपविषते। अरिरिषति। अञ्जिजिषति। अशिशिषते। इनमें स्मिङ्, पूङ्, ऋ—ये तीन उगन्त हैं अतः "सनिग्रहगुहोश्च" इससे प्रतिषेध प्राप्त रहते और 'अञ्जू' तथा 'अशू' के ऊदित् होने से विकल्प प्राप्त रहते यह इट् आगम होता है। ]

ङकारग्रहण इसलिए है कि पूञ् का न हो। उसका—पुपूषति—यही होता है।

'अशू' इस ऊदित् का ग्रहण होने से 'अश्नोति' को नित्य इडागम होता ही है [ 'अश भोजने' इसमें नित्य इट् होता है। ] ॥ ७४ ॥

'कॄ' आदि पाँच धातुओं से सन् परे इट् आगम होता है। उदा० कॄ—चिकरिषति। गॄ—जिगरिषति। [ ॠ का इत्, रपर द्वित्वादि के बाद इट् आगम होता है, षत्व—चिकरिषति, जिगरिषति, 'अचि विभाषा' सूत्र से लत्व होने पर 'जिगलिषति'। इनमें 'इट् सनि वा' से विकल्प प्राप्त है, नित्य इट् होता है। ] दृङ्, दिदरिषते-दिधरिषते। धृङ् [ उगित् हैं। अतः इट् प्रतिषेध 'सनि ग्रहगुहोश्च' से प्राप्त है। इस सूत्र से इट् होता है। ] प्रच्छ-

पञ्चभ्य इति किम् ? सिसृक्षति ।

किरतिगिरत्योः 'इट् सनि वा' ( ७.२.४१ ) इति विकल्पः प्राप्तः, 'वृतो वा' ( ७.२.३८ ) इति च । ❀अस्येटो दीर्घत्वं नेच्छन्ति ॥❀

**३३५५. रुदादिभ्यः सार्वधातुके ॥ ७६ ॥**

रुदादिभ्य उत्तरस्य वलादेः सार्वधातुकस्य इडागमो भवति । रुद्—रोदिति । स्वप्—स्वपिति । श्वस्—श्वसिति । अन्—प्राणिति । जक्ष्—जक्षिति ।

'पञ्चभ्यः' इत्येव—जागर्ति ।

सार्वधातुक इति किम् ? स्वप्ता ।

'वलादेः' इत्येव—रुदन्ति ॥

**न्यासः**

**वृत्तिकार**प्रदर्शितविकल्पे प्राप्ते सतोदमारभ्यते । **पिपृच्छिषतीति** । 'रुदविद' इत्यादिना सनः कित्त्वम्, 'ग्रहिज्या' इत्यादिना सम्प्रसारणम्, 'छे च' इति तुक् 'उरद्' इत्यभ्यासस्यात्वम्, पूर्ववदित्त्वम् । **सिसृक्षतीति** । 'सृज विसर्गे' । पञ्चग्रहणादस्येण्न भवति । सामान्यलक्षणोऽपीण्न भवत्येव; 'एकाचः' इति प्रतिषेधात् । 'हलन्ताच्च' इति कित्त्वम्, 'चोः कुः' इति कुत्वम्, व्रश्चादिसूत्रेण षत्वम्, 'षढोः कः सि' इति कत्वम् । **'वृतो वे'त्यस्य दीर्घत्वं नेच्छन्तीति** । कथं पुनरिष्यमाणमपि न भवति ? व्यवस्थितविभाषाविज्ञानात् । **अस्येति** । एतत्सूत्रविहितस्येटः ॥ ७५ ॥

**रुदादिभ्यः सार्वधातुके** ॥ 'रुदिर् अश्रुविमोचने', 'ञिष्वप् शये', 'श्वस प्राणने', 'अन च', 'जक्ष अदने' । रुदादयोऽदादिषु पठ्यन्ते । 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान्' इति 'रुदादिभ्यः' इत्येषा पञ्चमी 'सार्वधातुके' इत्यस्याः सप्तम्याः षष्ठीत्वं प्रकल्पयति । सप्तमीनिर्देशस्तूत्तरार्थः । तेन सार्वधातुकस्य वलादेरिड् विज्ञायत इत्यत आह—**रुदादिभ्यः पञ्चभ्य इत्यादि** । **प्राणितीति** । 'अनितेः' इति णत्वम् । **स्वप्तेति** । सार्वधातुकग्रहणादार्धधातुकस्येण्न भवति । सामान्यलक्षण इण्न भवत्येव; 'एकाचः' इति प्रतिषेधात् । अन्येभ्यस्तु रुदादिभ्य उदात्तत्वादार्धधातुकस्यापीटा भवितव्यमेवेति स्वपेरेव प्रत्युदाहरणम् ॥ ७६ ॥

**पदमञ्जरी**

**किरतिगिरत्योरिति** । शेषाणां त्वनुदात्तत्वात्प्रतिषेधः । **दीर्घत्वं नेच्छन्तीति** । इष्टिरेवेयम् ॥ ७५ ॥

**रुदादिभ्यः सार्वधातुके** ॥ रुदिस्वप्श्वसनिजक्षिरदादिषु रुदादयः । 'उभयनिर्देशे पञ्चमीनिर्देशो बलीयान् ( शाक० प० ९७ ) इति 'रुदादिभ्यः' इति पञ्चम्या 'सार्वधातुके' इति सप्तम्याः षष्ठी प्रकल्प्यते । सप्तमीनिर्देशस्तूत्तरत्रोपयोगं यास्यति । **प्राणितीति** । 'अनितेः' इति णत्वम् ।

**स्वप्तेति** । अन्येभ्यस्तु परस्यार्धधातुकस्येटा भवितव्यम् ॥ ७६ ॥

**भावबोधिनी**

पिपृच्छिषति । [ प्रच्छ, + सन् कित् मानकर "ग्रहिज्या" सूत्र से 'र्' का सम्प्रसारण, अ का पूर्वरूप-पृच्छ् + स द्वित्वादि के बाद अभ्यास के ऋ का अत्व, रपर, इत्व, तुक् = श्चुत्व-पिपृच्छ, + स, इट्, षत्व--पिपृच्छिषति । ]

पाँच से ही—इसका क्या फल है ? सिसृक्षति [ सृज् सूत्रोक्त पाँच में नहीं है । ]

किरति, गिरति ( कृ, गृ ) इनको 'इट् सनि वा' इससे विकल्प प्राप्त है। और 'वृतो वा' इससे वैकल्पिक दीर्घ प्राप्त है । किन्तु इनका दीर्घत्व इष्ट नहीं है । [ यह वचन भाष्यकार की इष्टि है । ] ॥ ७५ ॥

रुदादि से उत्तरवर्त्ती वलादि सार्वधातुक को इट् आगम होता है। उदा० रुद्-रोदिति । स्वप्-स्वपिति । श्वस्-श्वसिति । अन्-प्राणिति । जक्ष्--जक्षिति । [ इनमें लट् = तिप्, शप् का लुक् होने पर इट् आगम होता है । ]

पाँच से ही इट् होता है—जागर्ति । [ 'जागृ' पाँच में नहीं है । इट् नहीं होता है । ]

सार्वधातुक परे—इसका क्या फल है ? स्वप्ता । [ लुट्, तास् आर्धधातुक परे है । ]

वलादि का ही होता है—रुदन्ति । [ यहाँ नहीं होता है । ] ॥ ७६ ॥

**३३५६. ईशः से ॥ ७७ ॥ (२४३९)**

**ईश उत्तरस्य 'से' इत्येतस्य सार्वधातुकस्य इडागमो भवति । ईशिषे । ईशिष्व ॥**

**३३५७. ईडजनोर्ध्वे च ॥ ७८ ॥ (२४४०)**

**ईड, जन—इत्येताभ्यामुत्तरस्य 'ध्वे' इत्येतस्य, 'से' इत्येतस्य च सार्वधातुकस्य इडागमो भवति । ईडिध्वे । ईडिध्वम् । ईडिषे । ईडिष्व । जनिध्वे । जनिध्वम् । जनिषे । जनिष्व । 'जनी प्रादुर्भावे' (धा० पा० ११४९)—इत्यस्य छान्दसत्वात् श्यनो लुक्, उपधालोपाभावश्च ।**

**'जन जनने' ( धा० पा० ११०५ )—इत्यस्यापि श्लुविकरणस्य ग्रहणमत्रेष्यते । तस्य कर्मव्यतिहारे—व्यतिजज्ञिषे, व्यतिजज्ञिष्व, व्यतिजज्ञिध्वे, व्यतिजज्ञिध्वम्—इति च भवति ।**

**न्यासः**

**ईशः से** ॥ से इति 'सुपां सुलुक्' इति षष्ठ्या लुकं कृत्वाऽविभक्तिकोऽयं निर्देशः । **ईशिषे इति** । 'ईश ऐश्वर्ये', लट्, अनुदात्तेत्त्वादात्मनेपदम्, 'थासः से', अदादित्वाच्छपो लुक् । **ईशिष्वेति** । लोट्, से, 'सवाभ्यां वामौ' इति वादेशे कृत एकदेशविकृतमनन्यवद्भवतीतीहापि भवति ॥ ७७ ॥

**ईडजनोर्ध्वे च** ॥ **ध्वे इति** पूर्ववदेवाविभक्तिकोऽयं निर्देशः । **ईडिध्वे इति** । 'ईड स्तुतौ', पूर्ववदात्मनेपदम्, पूर्ववच्छपो लुक् । **ईडिध्वमिति** । लोट्, 'सवाभ्यां वामौ' इत्यमादेशः । **जनिध्वमिति** । पूर्ववदात्मनेपदम् । छान्दसत्वाच्छ्यनो लुग् 'बहुलं छन्दसि' इत्यनेन । **उपधालोपाभावश्चेति** । 'गमहन' इत्यादिनोपधालोपः प्राप्नोति, तदभावश्छान्दसत्वादेव, 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' इति ।

**जन जनन इत्यस्येत्यादि** । ननु चानुबन्धकत्वादस्यैव ग्रहणेन भवितव्यम्, न पूर्वस्य, उच्चारणार्थोऽकारः नानुबन्धः ? नैष दोषः; इह हि लघ्वक्षरत्वाज्जनशब्दस्य पूर्वनिपाते प्राप्ते परनिपातो लक्षणव्यभिचाराय । तेन निरनुबन्धकपरिभाषाया इहानुपस्थानादुभयोरपि ग्रहणं भवति । **व्यतिजज्ञिध्वमिति** । 'कर्त्तरि कर्मव्यतीहारे' इति आत्मनेपदम् ।

**पदमञ्जरी**

**ईशः से** ॥ 'ईश ऐश्वर्ये' ( धा० पा० १०२० ) आदादिकः । 'से' इत्यविभक्तिको निर्देशः । **ईशिष्वेति** । 'सवाभ्यां वामौ' । एकदेशविकृतस्यानन्यत्वात् सेशब्द एवायम् ॥ ७७ ॥

**ईडजनोर्ध्वे च** । 'ईड स्तुतौ' ( धा० पा० १०१९ ) अदादिः । **छान्दसत्वाच्छ्यनो लुगिति** । भाषायां तु 'जायसे'—इत्यत्र नित्यत्वात् श्यनि कृते तेन व्यवधानादिडभावः ।

**जन जनने इत्यस्यापीति** । नन्वसौ परस्मैपदी ? तत्राह—**तस्य कर्मव्यतिहार इति** । यदि तर्हि तस्याप्यात्मनेपदं सम्भवति, तस्यैव ग्रहणं प्राप्नोति; निरनुबन्धकत्वात् ? ईडिना साहचर्यादात्मनेपदिनोऽपि ग्रहणं भविष्यति ।

**भावबोधिनी**

'ईश्' से उत्तरवर्त्ती 'से' इस सार्वधातुक को इट् आगम होता है । उदा० ईशिषे । ईशिष्व । [ ईश + लट् = थास् = से, शप् का लुक्, इट्, षत्व । लोट् में 'सवाभ्यां वामौ' से 'ए' का 'व' होता है । ] ॥ ७७ ॥

'ईड' तथा 'जन' से उत्तरवर्त्ती 'ध्वे' इसको और 'से' इस सार्वधातुक को इट् आगम होता है । उदा० ईडिध्वे, ईडिध्वम् । ईडिषे, ईडिष्व । [ ईड् + लट् = ध्वम्, टि का एत्व, इट् आगम । ईड् + लोट् = ध्वम्, इट्, एत्व, अमादेश । ईड् + लट् = थास् = से, इट्, षत्व । लोट् में 'ए' का 'व' आदेश ] जनिध्वे । जनिध्वम् । जनिषे, जनिष्व । 'जनी प्रादुर्भावे' इसके छान्दस = वैदिक होने के कारण श्यन् का लुक् हो जाता है [ और 'गमहन' इत्यादि सूत्र से ] उपधालोप का अभाव भी होता है ।

'जन जनने' इस श्लुविकरण वाली ( जुहोत्यादिगणीय ) का भी ग्रहण यहाँ इष्ट है । इसका कर्मव्यतिहार ( = क्रियाविनिमय ) में—व्यतिजज्ञिषे, व्यतिजज्ञिष्व । व्यतिजज्ञिध्वे, व्यतिजज्ञिध्वम्—ये रूप होते हैं ।

**ध्वेशब्दे ईशेरपि इडागम इष्यते । ईषिध्वे, ईषिध्वमिति । तदर्थं केचित्—'ईडिजनोः स्ध्वे च' इति सूत्रं पठन्ति । तत्र सकारादेः सेशब्दस्य सूत्र एवोपादानाच्चशब्दो भिन्नक्रम ईशेरनुकर्षणार्थो विज्ञायते ।**

**'ईशीडिजनां सेध्वयोः' इत्येकमेव सूत्रं न पठितम् ? विचित्रा हि सूत्रस्य कृतिः पाणिनेरिति ।**

**'ध्वे' इति कृतटेरेत्वस्य ग्रहणात् लङि ध्वमि न भवितव्यमिटा । लोटि पुनरेकदेशविकृतस्यानन्यत्वाद् भवितव्यमिटा ॥**

### न्यासः

**तत्रेत्यादि ।** तत्रैवं सूत्रपाठे 'यस्मिन् विधिस्तदादावल्ग्रहणे' इति सकारग्रहणे सकारादेः सेशब्दस्य ग्रहणम् । स च सकारादिशब्दः सार्वधातुकसंज्ञकः सेशब्द एव सम्भवति; अन्यस्याऽसम्भावत् । ननु च स्वशब्दोऽपि सम्भवति ? नैतदेवम्; एकदेशविकृतस्यानन्यत्वात् सोऽपि सेशब्द एव, अतस्तद्ग्रहणेनापि भवितव्यम् ।

ये तु 'ईडजनोर्ध्वे च' इति सूत्रं पठन्ति, ते 'ईशः से' इत्यस्यैव योगस्यानुकर्षणार्थं चकारं कुर्वन्ति । तेनेशेरपि ध्वेशब्द इडागमो भवति । यदि तर्हीशेरपि ध्व इडागम इष्यते, तदा 'इशीडजनां सेध्वयोः' इत्येकमेव सूत्रं कस्मान्न पठन्ति, एवं पृथग्विभक्तिर्नोच्चारयितव्या, चकारश्च न कर्त्तव्यो भवति ? इत्याह—**विचित्रा सूत्रस्येत्यादि ।**

**ध्व इति कृतटेरेत्वस्येत्यादि ।** कृतटेरेत्वस्यैतदेव प्रयोजनम्—यत्र टेरेत्वं कृतं तत्रैव यथा स्यात् । न च लङि टेरेत्वमस्ति, अतस्तत्रेटा न भवितव्यम् । यद्येवम्, लोट्यपि न भवितव्यम्, अमादेशे कृते टेरेत्वस्याभावात् ? इत्याह—**लोटि पुनरित्यादि** ॥ ७८ ॥

### पदमञ्जरी

**तदर्थं केचिदिति ।** ये त्वेवं न पठन्ति, ते चकारेण कृत्स्नमेव पूर्वसूत्रमनुवर्त्तयन्ति । **सकारादेरिति ।** स् इति सप्तम्या लुका निर्द्दशात्तदादिविधिः ।

यदि तर्हि ईशेरपि ध्वे शब्दे इडागतो भवति, योगविभागो न कर्त्तव्यः, 'ईडीशजनां सेध्वयोः' इति वक्तव्यम्, एवं हि पृथग्विभक्तिर्नोच्चारयितव्या भवति, चकारश्च न कर्त्तव्यः ? अत आह—**'ईशीड्जनां सेध्वयोरिति । [1]लङि ध्वमित्यस्य न भवतीति ।** लोट्यपि तर्हि ध्वमित्यस्य न प्राप्नोति ? तत्राह—**लोटि पुनरिति** ॥ ७८ ॥

### भावबोधिनी

'ध्वे' शब्द परे 'ईश्' को भी इट् आगम इष्ट है । उदा० ईशिध्वे, ईशिध्वम् । इसके लिये कुछ लोग "ईडिजनोः स्ध्वे च' ऐसा सूत्र पढ़ते हैं । [ इस प्रकार के सूत्र से यह लाभ है कि ] इसमें सकारादि 'से' शब्द का सूत्र में ही उपादान होने के कारण 'च' शब्द भिन्न क्रम वाला होता हुआ 'ईश्' के अनुकर्षण के लिए समझा जाता है । [ अर्थात् 'स्ध्वे' के साथ 'च' का सम्बन्ध नहीं है अपि तु पूर्व सूत्र की 'ईश्' के लिए है । उसका समुच्चय हो जाता है । अलग सूत्र बनाने की आवश्यकता नहीं है । ]

'ईशीडिजनां सेध्वयोः' ऐसा एक ही सूत्र क्यों नहीं बनाया गया [ क्योंकि इन तीनों का दोनों प्रत्ययों में इट् आगम इष्ट है ] ? आचार्य पाणिनि की रचना विचित्र है । [ अर्थात् आचार्य सूत्ररचना में स्वतन्त्र हैं । कभी लाघव की उपेक्षा भी कर देते हैं । ]

'ध्वे' इस किये गये टि के एत्व का ग्रहण होने के कारण लङ् में ध्वम् परे रहते इट् नहीं होना चाहिए । किन्तु लोट् में एकदेश के विकृत होने से अन्य नहीं हो जाता है इस न्याय से इट् होना ही चाहिए ॥ ७८ ॥

---

१. 'ईशीडिजनां सेध्वयोः' इति काशिकायाम् । २. 'लङि ध्वनि न भवितव्यमिटा'—इति पाठः काशिकायाम् ।

## ३३५८. लिङः सलोपोऽनन्त्यस्य ॥ ७९ ॥ (२२११)

'सार्वधातुके'[1] इति वर्तते[1]। सार्वधातुके यो लिङ् तस्य अनन्त्यस्य सकारस्य लोपो भवति। कः पुनरनन्त्यो लिङः सकारः ? यो यासुट्-सुट्-सीयुटाम्। कुर्यात्, कुर्याताम्, कुर्युः। कुर्वीत, कुर्वीयाताम्, कुर्वीरन्।

अनन्त्स्येति किम् ? कुर्युः, कुर्याः।

'सार्वधातुके' इत्येव—क्रियास्ताम्, क्रियासुः। कृषीष्ट, कृषीयास्ताम्, कृषीरन् ॥

### न्यासः

**लिङः सलोपोऽनन्त्यस्य ॥ सार्वधातुके यो लिङिति।** 'सार्वधातुके' इत्येषात्र निर्धारणे सप्तमी, जातावेकवचनम्, यथा—'कारके' इति। अथ वा—सुब्व्यत्ययेन बहुवचनस्य प्रसङ्गे एकवचनम्। परसप्तमीत्येषा न भवति—सार्वधातुके परतः; पूर्वस्य लिङोऽसम्भवात्। **कुर्यादिति।** विध्यादिसूत्रेण लिङ्, यासुट्, 'इतश्च' इतीकारलोपः, धातोर्गुणः, रपरत्वे 'अत उत् सार्वधातुके' इत्युत्वम्, 'ये च' इत्युकारलोपः। **कुर्यातामिति।** तसस्ताम्। **कुर्युरिति।** 'झेर्जुस्', 'उस्यपदान्तात्' इति पररूपत्वम्। **कुर्वीतेति।** उकारस्य यणादेशः। **कुर्वीरन्निति।** 'झस्य रन्'।

**कुर्युः, कुर्या इति।** अत्रानन्त्यग्रहणाज्जुसः सिपश्च न भवति।

**क्रियास्ताम्, क्रियासुरिति।** आशिषि लिङ्, 'रिङ्शयग्लिङ्क्षु' इति रिङादेशः। सार्वधातुकग्रहणादार्धधातुके न भवति। आर्धधातुकत्वं च 'लिङाशिषि' इत्यार्धधातुकसंज्ञाविधानात्। **कृषीष्ट, हृषीष्ट इति।** 'उश्च' इति कित्त्वम्, गुणाभावः ॥ ७९ ॥

### पदमञ्जरी

**लिङः सलोपोऽनन्त्यस्य ॥ सार्वधातुके यो लिङिति।** नैषा परसप्तमी; सार्वधातुकपरस्य लिङोऽसम्भवात्। तस्मान्निर्धारणे सप्तमी। जातावेकवचनम्, सार्वधातुकेषु मध्ये यो लिङ् सार्वधातुकसंज्ञकस्येस्तत्यर्थः। **कुर्यादिति।** 'अत उत्सार्वधातुके' इत्युत्वम्, 'ये च' इत्युकारस्य लोपः। अत्र यासुट्सुटोः सकारस्य लोपः। **कुर्युरिति।** 'झेर्जुस्', यासुट्सकारलोपः, 'उस्यपदान्तात्' इति पररूपत्वम्। **कुर्वीतेति।** सीयुट्सुटोः सलोपः। **कुर्वीरन्निति।** 'झस्य रन्', अत्र सीयुट एव लोपः ॥ ७९ ॥

### भावबोधिनी

'सार्वधातुके' इसकी अनुवृत्ति होती है। सार्वधातुक परे रहते जो लिङ् उसके अनन्त्य ( अन्त्य से भिन्न ) सकार का लोप होता है। तो फिर लिङ् का अनन्त्य सकार कौन सा है ? जो यासुट् सुट् और सीयुट् का है। उदा० कुर्यात्, कुर्याताम्, कुर्युः। [ कृ+लिङ् ( विधि ) = तिप्, "तनादिकृञ्भ्यः उः" से उ विकरण यासुट्, इका लोप, ऋ का गुण, रपर—कर्उयास् + त्, "अत उत् सार्वधातुके" से अ का उ, कुर् उ यास् त, "ये च" सूत्र से 'उ' का लोप, प्रस्तुत सूत्र से स् का लोप—कुर्यात्। तस् का ताम्-कुर्याताम्। झि का जुस् स् लोप, और "उस्यपदान्तात्" सूत्र से आ का पररूप—कुर्युः। ] आत्मनेपद में—कुर्वीत। कुर्वीयाताम्। कुर्वीरन्। [ कृ + लिङ् = त, सीयुट् ऋ का गुण, रपर, उ विकरण, अ का उ कुर् उ + सीय् त, सलोप, य्लोप कुरु+ईत, यण्—कुर्वीत। आताम् में यलोप नहीं—कुर्वीयाताम्। 'झस्य रन्'—कुर्वीरन् ]

अनन्त्य का—इसका क्या फल है ? कुर्युः, कुर्याः। [ अन्त्य स् का लोप न होकर विसर्ग होता है। ]

सार्वधातुक परे रहते ही—क्रियास्ताम्, क्रियासुः। [ आशीर्लिङ् में आर्धधातुक हो जाता है। ] कृषीष्ट, कृषीयास्ताम् कृषीरन्। [ आत्मनेपद आशीर्लिङ् में भी सलोप नहीं होता है ] ॥ ७९ ॥

---

१-१. क्वचिदयं पाठो नास्ति।

## ३३५९. अतो येयः ॥ ८० ॥ (२२१२)

अकारान्तादङ्गादुत्तरस्य 'या' इत्येतस्य सार्वधातुकस्य 'इय्' इत्ययमादेशो भवति। पचेत्, पचेताम्, पचेयुरिति। अत्र 'उस्यपदान्तात्' ( ६. १. ९६ ) इति पररूपं बाधितम्।

अत इति किम्? चिनुयात्। सुनुयात्। तपरकरणं किम्? यायात्।

सार्वधातुक इत्येव—चिकीर्ष्यात्।

ननु चातो लोपेनात्र भवितव्यम्, पचेदित्यत्रापि हि तर्हि 'अतो दीर्घो यञि' ( ७. ३. १०१ ) इति

**न्यासः**

**अतो येयः ॥** सार्वधातुकं यत् प्रकृतं तदर्थादिह विभक्तिविपरिणामेन षष्ठ्यन्तं प्रतिपद्यते। अत एवाह—**अकारान्तादङ्गादुत्तरस्य सार्वधातुकस्येति। पचेदिति।** इयादेशे कृतेऽकारेण सह 'आद् गुणः', 'लोपो व्योर्वलि' इति यकारलोपः। **चिनुयादिति।** 'स्वादिभ्यः श्नुः'। **यायादिति।** अदादित्वाच्छपो लुक्। **चिकीर्ष्यादिति।** सनन्तादाशिषि लिङ्।

**ननु चातो लोपेनात्र भवितव्यमिति।** नार्थोऽनुवृत्तेन सार्वधातुकग्रहणेनेत्यभिप्रायः। **पचेदित्यत्रापीत्यादि।** यद्यपि पचेदितीदमस्योदाहरणमभिमतम्, तत्रापि 'अतो दीर्घो यञि' इति दीर्घत्वेन भवितव्यमिति, ततश्च सर्वविषयस्य विध्यन्तरेणावष्टब्धत्वादनवकाशोऽयमियादेशः। तस्मादवश्यमनेन विध्यन्तरं बाधितव्यम्। एवञ्च यथा दीर्घस्यायं बाधकः, तथातो लोपस्यापि स्यात्। तस्मात् सार्वधातुकग्रहणमनुवर्त्तयितव्यमिति भावः। **स्यादेतदेवमित्यादि।** यदि च दीर्घत्वम् 'तुरुस्तुशम्यमः सार्वधातुके' इत्यतः सार्वधातुकग्रहणमनुवर्त्त्य विधीयते, ततश्च स्यादेतदेवं यदुक्तवानसि; इयादेशस्यानवकाशत्वात्। अथ 'भूसुवोस्तिङि' इति तिङ्ग्रहणमनुवर्त्त्य विधीयते, तदा तिङ्मात्रभावि दीर्घत्वमिति लिङ् विधीयमान इयादेशे नाप्राप्ते तस्मिन्नयमारभ्यते, ततश्च येन

**पदमञ्जरी**

**अतो येयः ॥** 'सार्वधातुके' इति प्रकृतमर्थात् षष्ठ्यन्तं सम्पद्यते, तदाह—**अकारान्तादङ्गात्तदुरस्य सार्वधातुकस्येति।** अवयवसम्बन्धे चैषा षष्ठी, सार्वधातुकस्यावयवस्य याशब्दस्येत्यर्थः। **इय् इत्ययमिति।** सूत्रे त्वकार उच्चारणार्थः। **पचेदिति।** इयादेशे कृते शबकारेण सहाद्गुणः, वलादिषु वलि लोपः। यकारस्य च श्रवणम्—पचेयुः, पचेयमित्यादौ। **पचेयुरित्यत्रेत्यादि।** पररूपस्यावकाशः—चिनुयुः, सुनुयुः; इयादेशस्य तु पचेदित्यादि; पचेयुरित्यत्रोभयप्रसङ्गे परत्वादियादेशः। यदि पूर्वमेव पररूपं स्यात्, याशब्दाभावादियादेशो न स्यात्। **एवमतो लोपस्यापि बाधकः स्यादिति।** एतच्च 'मध्येऽपवादाः' ( व्या० प० १० ) इति न्याय-

**भावबोधिनी**

अकारान्त अङ्ग से उत्तरवर्त्ती सार्वधातुक 'या' इसका 'इय' यह आदेश होता है। उदा० पचेत्, पचेताम् पचेयुः। [ डुपचष् = पच + लिङ् ( विधि ) = तिप्, शप् = अ, यासुट्, इलोप—पच् अ यास् त, स् लोप, 'या' का इय् आदेश पच + इय् त, गुण एकादेश, य्लोप–पचेत्। तस् का ताम्–पचेताम्। 'झेर्जुस्'–पचेयुः। ] इसमें 'उस्यपदान्तात् ६।१।९६ से प्राप्त पररूप का बाध हो जाता है। [ क्योंकि यह 'इय्' परवर्त्ती है। ]

अकार से परे—इसका क्या फल है? चिनुयात्। सुनुयात्। [ यहाँ 'उ' से परे है। अतः 'इय्' नहीं होता हैं। ] तपरकरण अर्थात् ह्रस्व अ से परे—इसका क्या फल है? यायात्। [ दीर्घ से परे होने से 'इय् नहीं होता है। ]

सार्वधातुक परे ही—चिकीर्ष्यात्। [ सन्नन्त से आशीर्लिङ् आर्धधातुक यास् परे होने से 'इय्' नहीं होता है। ]

प्रश्न—यहाँ [ चिकीर्ष्यात् में ] 'अ' का लोप ( 'अतो लोपः' से ) होना चाहिए, तब तो 'पचेत्' इसमें भी 'अतो दीर्घो यञि' सूत्र से दीर्घ होना चाहिए। इस कारण प्रस्तुत सूत्र द्वारा अन्य विधि सूत्र का बाध करना चाहिए। इसलिये जिस प्रकार से यह दीर्घ ( – विधान ) का बाधक है उसी प्रकार 'अ' के लोप ( अतो लोप ) का भी बाधक हो जायगा; [ अतः 'अलोप नहीं होगा, तब यास् का इय् हो जाना चाहिए, इसको रोकने के लिए 'सार्वधातुके' की अनुवृत्ति आवश्यक है ]? ऐसा होता यदि दीर्घ का विधान सार्वधातुक परे होता। [ किन्तु ऐसा

**दीर्घत्वेन भवितव्यम्; तदनेनावश्यं विध्यन्तरं बाधितव्यम्, स यथैव दीर्घस्य बाधकः, एवमतो लोपस्यापि बाधकः स्यात् ? स्यादेतदेवम्, यदि दीर्घः सार्वधातुके विधीयते। अथ तु तिङि विधीयते, तदा येन नाप्राप्ति-न्यायेन दीर्घस्यैव बाधकः स्यात्, न पुनरतो लोपस्य।**

**'येयः' इत्यविभक्तिको निर्देशः। 'यः' इति वा षष्ठीनिर्देशे यलोपस्यासिद्धत्वमनाश्रित्याद्गुणः ( ६. १. ८७ ) कृतः; सौत्रत्वान्निर्देशस्येति।**

**न्यासः**

नाप्राप्तिन्यायेन तस्यैव बाधको भवति, न त्वातो लोपस्य। इयोऽतो लोपे प्राप्ते चाप्राप्तेऽयमारभ्यते। आर्धधातुके हि प्राप्ते, सार्वधातुके त्वप्राप्ते।

अथ येय इति कोऽयं निर्देशः, अत्र हि 'या' इत्येष यः स्थानी तत्र षष्ठ्यां कृतायामतो या अस् इय इति स्थिते 'आतो लोपः' इति 'आतः', 'धातोः' इति योगविभागाद्वा आकारलोपे कृते 'ससजुषोः' इति षष्ठीसकारस्य रुत्वे कृते तस्य 'भोभगोअघोअपूर्वस्य योऽसि' इति यकारः। तस्यापि 'लोपः शाकल्यस्य' इति लोपे च 'य इयः' इति निर्देशेन भवितव्यमिति, न तु येय इति। न ह्यत्राद्गुणो भवितुमुत्सहते; 'पूर्वत्रा-सिद्धम्' इति यलोपस्यासिद्धत्वात् ? इत्यत आह—**येय इत्यविभक्तिकोऽयं निर्देश इति**। येय इत्यस्मिन् स्थान्यादेशसमुदायेन 'या' इति योऽयं निर्देशः सोऽविभक्तिकः; 'सुपां सुलुक्' इति विभक्तेर्लुप्तत्वात्। अङ्गीकृत्य च सविभक्तिकत्वं निर्देशस्य परीहारान्तरमाह—**य इति। वेत्यादि**। कथं पुनर्यलोपस्यासिद्धत्वं शक्यमना-श्रयितुम् ? इत्यत्राह—**सौत्रोऽयं निर्देश इति**। इतिकरणो हेतौ। यस्मात् 'सर्वे विधयश्छन्दसि विकल्प्यन्ते'

**पदमञ्जरी**

मनाश्रित्योक्तम्। तदाश्रयणे त्वतो लोपस्यैव बाधकः स्यात्। दीर्घस्तु परत्वात्स्यादेव। **स्यादेतदेवमित्यादि**। दीर्घविधौ 'तुरुस्तुशम्यमः सार्वधातुके' इति प्रकृतम्, 'भूसुवोस्तिङि' इति च।

**येय इत्यविभक्तिको निर्देश इति**। 'येयः' इत्यस्मिन्समुदाये 'या' इत्यविभक्तिको निर्देश इत्यर्थः। **य इति वेति**। याशब्दत्षष्ठी, 'आतो धातोः' इत्याकारलोपः।

**भावबोधिनी**

नहीं है।] अब यदि दीर्घ का विधान तिङ् परे रहते होता है तब तो 'येन नाप्राप्तिन्याय' द्वारा दीर्घ का ही बाधक होगा, अलोप का नहीं।

**विमर्श**—भाव यह है कि दीर्घ का विधान तिङ् परे होता है। सार्वधातुक प्रत्यय तिङ् है। इस लिए तिङ् मात्र में होने वाला दीर्घ जहाँ है वहाँ इय् की भी प्राप्ति है। अतः इय् निरवकाश होकर दीर्घ का अपवाद बनता है। परन्तु 'अतो लोपः' के विषय में ऐसा नहीं क्योंकि अलोप की प्राप्ति और अप्राति दोनों दशाओं में 'इय्' प्राप्त होने के कारण अलोप का अपवाद नहीं होता है, अलोप हो जाता है।

परन्तु 'मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान्' इस परिभाषा के अनुसार षष्ठ अध्याय के लोप का अपवाद 'इय्' बनता है। सप्तम अध्याय चतुर्थपाद में पठित दीर्घ का अपवाद नहीं हो सकता। अतः परे होने से दीर्घ प्रसक्त होगा।

'सार्वधातुके' की अनुवृत्ति मानने पर 'चिकीर्ष्यात्' इस आर्धधातुक में प्राप्ति नहीं होती है। कोई भी अति-व्याप्ति या अव्याप्ति नहीं हैं।]

( अनु० ) 'येयः' यह अविभक्तिक निर्देश है अर्थात् 'या इयः' में 'या' में विभक्ति का उल्लेख नहीं है। अथवा 'यः इयः' इस प्रकार के षष्ठीनिर्देश में यलोप की असिद्धता का आश्रयण करने से 'आद्गुणः' से गुण किया है, क्योंकि सौत्रनिर्देश है। [ 'या' + ङस् = अस् में 'आ' का लोप करने पर 'य् अस्' में स् का रुत्व और रु का य् 'भो-भगो' सूत्र से होता है और 'लोपः शाकल्यस्य' से य् लोप होता है। यद्यपि य + इयः में गुण की कर्त्तव्यता में 'पूर्वत्रासिद्धम्' से य् लोप असिद्ध हो सकता है किन्तु यहाँ असिद्धत्व नहीं माना जाता है। गुण हो जाता है, यह भाव है।]

केचिद् अत्र—'अतो यासिय.'—इति सूत्रं पठन्ति । तेषां सकारान्तः स्थानी, षष्ठीसमासश्च ॥

**३३६०. आतो ङितः ॥ ८१ ॥ (२२३५)**

आकारस्य ङिदवयवस्य अकारान्तादङ्गादुत्तरस्य सार्वधातुकस्य 'इय्' इत्ययमादेशो भवति । पचेते, पचेथे । पचेताम्, पचेथाम् । यजेते, यजेथे । यजेताम्, यजेथाम् ।

'सार्वधातुकमपित्' ( १. २. ४ ) इत्यत्र न ङितीव ङिद्वदित्येवमङ्गीक्रियते, अपि तु ङित इव ङिद्वदिति । पूर्वसूत्रे एव उच्चुकुटिषतीति प्रसिद्धये तथाङ्गीकरणम् । यदि गाङ्कुटादिसूत्रे ( १. २. १ ) ङित

**न्यासः**

इति 'छन्दोवत् सूत्राणि भवन्ति' इति, तस्मात् सौत्रत्वादस्य निर्देशस्यासिद्धत्वमनाश्रित्य 'आद् गुणः' कृतः । इयादेशेऽकार उच्चारणार्थः ॥ ८० ॥

**आतो ङितः** ॥ 'आतः' 'ङितः' इति व्यधिकरणे षष्ठ्यौ । आत इयादेशापेक्षया स्थाने षष्ठीति । ङित इति आकारापेक्षयावयवषष्ठी; ङितो ह्यकारमात्रस्यासम्भवात् । ङित इत्येषाऽवयवयोगे षष्ठी विज्ञायते—ङिदवयवस्येति । ङकार इद् यस्य स ङित्, तस्यावयवो ङिदवयवः । **पचेते, पचेथे** इति । लट्, स्वरितेत्वादात्मनेपदम्, आतामाथाम्, 'सार्वधातुकमपित्' इति ङित्त्वम् । **पचेताम्, पचेथामिति** । लोट्, टेरेत्वे कृते 'आमेतः' इत्याम् ।

ननु च ङिदवयवोऽत्राकारो न भवति, यस्माद् गाङ्कुटादिसूत्रे ङितीव ङिद्वदित्येवमर्थोऽङ्गीक्रियते, तथा 'सार्वधातुकमपित्' इत्यत्राप्ययमर्थः; तथा ह्यस्मिन्नपि योगे तदेव ङिद्ग्रहणमनुवर्त्तते, तस्मिंश्चार्थेऽङ्गीक्रियमाणे ङिति यत् कार्यं तदपि हि सार्वधातुके परतः पूर्वस्य लभ्यते, न तु तस्यैवापित्सार्वधातुकस्य ङित्त्वम् ? इत्याह—**सार्वधातुकमपिदित्यत्रेत्यादि । पूर्वसूत्र एवेति** । गाङ्कुटादिसूत्रे यद्येवमङ्गीक्रियते—गाङ्कुटादिभ्यः परो

**पदमञ्जरी**

केचित्तु—'अतो यास्' इति सकारान्तानुकरणं पठन्ति ॥ ८० ॥

**आतो ङितः** ॥ आकारमात्रस्य ङितोऽसम्भवाद् 'आतः', 'ङितः' इति व्यधिकरणे षष्ठ्यौ । ङितोऽवयवस्यात इत्यर्थः । उदाहरणेषु स्वरितत्वादात्मनेपदम् । ननु गाङ्कुटादिसूत्रे परत्र परशब्दप्रयोगादध्याह्रियमाणो वतिः सप्तमीसमर्थादध्याहर्तव्यः—ङितीव ङिद्वदिति, अन्यथा चुकुटिषतीत्यत्र सनो ङित्वादात्मनेपदप्रसङ्गादित्युक्तम् । 'सार्वधातुकमपित्' इत्यत्रापि तदेवानुवर्त्तते, ततश्च पूर्वस्य कार्यं प्रत्येव सार्वधातुकस्य ङित्वम्, न स्वकार्यं प्रतीत्ययुक्तान्युदाहरणानि; लङ्लृङास्तु युक्तमुदाहर्तुम्—अपचेताम्, अकरिष्येतामिति; अस्ति

**भावबोधिनी**

कुछ विद्वान् यहाँ 'अतो यासियः' ऐसा सूत्र पढ़ते हैं । उनके अनुसार सकारान्त = यास् स्थानी है और षष्ठीसमास है । [ यासः इयः = षष्ठीसमास विभक्तिलोप—यास् इयः = यासियः । यास् का इय् होता है । ] ॥ ८० ॥

ङित् का अवयव आकार जो कि अकारान्त अङ्ग से उत्तरवर्त्ती सार्वधातुक है, उसका 'इय्' यह आदेश होता उदा० पचेते, पचेथे । पचेताम्, पचेथाम्, यजेते, यजेथे । यजेताम्, यजेथाम् । [ पच + लट् = आताम्, शप् = अ, पच् अ + आताम्, "आतो ङितः" सूत्र से आ का 'इय्' होता है, पच् अ + इय्ताम् 'आद्गुणः' से गुण, य्लोप, टि = आम् का एत्व—पचेते । इसी प्रकार 'आथाम्' के आ का भी इय् आदि समझना चाहिए । ]

"सार्वधातुकमपित्" ( १।२।४ ) इस सूत्र के समान ङिति इव = ङिद्वत्—अर्थात् ङित्परे के समान ङिद्वत् होता है—ऐसा नहीं माना जाता है अपितु 'ङित् के समान—ङिद्वत्' ऐसा माना जाता है । पूर्व सूत्र ( गाङ्कुटादिभ्योऽञ्णिन्ङित्" ( १।२।१ ) में ही उच्चुकुटिषति इसकी सिद्धि के लिए वैसा ( ङिति इव = ङिद्वत् ) माना जाता है । यदि 'गाङ्कुटादि' सूत्र में 'ङितः इव = ङिद्वत्' ऐसा माना जाता है तब तो 'अनुदात्तङित आत्मनेपदम्' इससे आत्मनेपद प्राप्त होता है ।

**विमर्श**—भाव यह है कि 'ङिद्वत्' में 'वति' प्रत्यय 'तत्र तस्येव' से होता है वह षष्ठ्यन्त से है अथवा सप्तम्यन्त से ? 'सार्वधातुकमपित्' ( १।२।४ ) से ङिद्वत् किया जाता है । इसमें "गाङ्कुटादिभ्योऽञ्णिन्ङित् (१।२।१)

**इव ङिद्वद्भवतीत्येवमङ्गीक्रियते, तदा 'अनुदात्तङित आत्मनेपदम्' ( १. ३. १२ ) इति आत्मनेपदं प्राप्नोतीति।**

**आत इति किम् ? पचन्ति, यजन्ति। पचन्ते, यजन्ते। ङित इति किम् ? पचावहै, पचामहै।**

**अत इत्येव—चिन्वाते, सुन्वाते।**

**तपरकरणं किम् ? मिमाते। मिमाथे॥**

**न्यास**

योऽञ्णिगप्रत्ययोऽसौ ङिद्वद्भवतीति, तदा कुटादिभ्यः परस्य सनो ङित्त्वं भवति, ङित्वे सति 'अनुदात्तङितः' इत्यादिनात्मनेपदं स्यात्, ततश्चोच्चुकुटिषतीति न सिध्येत्। तस्मादेतत्सिध्यर्थं ङितीव ङिद्वदित्यङ्गीक्रियते। 'सार्वधातुकमपित्' इत्यत्र तु तत् सार्वधातुकं ङिद् भवतीत्येषोऽर्थोऽङ्गीक्रियते। तस्माद् युक्तमेवाकारस्य ङिदवयवत्वम्। **पचन्ते, यजन्त इति।** भवत्यङिदवयवोऽन्तादेशस्याकारः, तथाप्यात इति वचनान्न भवति। **पचावहै, पचामहै इति।** लोट्, वहिमहिङो। 'आडुत्तमस्य पिच्च' इत्याट्, उत्तमश्च पिद्भवतीति। अत्र पित्वान् ङित्त्वं न भवतीति आतो ङिदवयवाकारो न भवति।

**मिमाते, मिमाथे इति।** 'माङ् माने', जुहोत्यादित्वाच्छपः श्लुः। 'श्लौ' इति द्विर्वचनम्, 'भृञामित्' इत्यभ्यासस्येत्वम्, 'श्नाभ्यस्तयोरातः' इत्याकारलोपः॥ ८१॥

**पदमञ्जरी**

ह्यत्रापि स्थानिवद्भावेन ङित्त्वम् ? अत आह—**सार्वधातुकमपिदित्यत्रेत्यादि। मिमाते, मिमाथे इति।** असति तपरकरणे 'श्नाभ्यस्तयोरातः' इति लोपात्परत्वादयमेव विधिः स्यात्॥ ८१॥

**भावबोधिनी**

से ङिद्वत भी अनुवृत्ति है। अतः जो अर्थ यहाँ है वही अनुवृत्ति में भी होगा। मूल स्थान में 'ङिति इव' अर्थात् सप्तम्यन्त से 'वति' है। यदि षष्ठ्यन्त 'ङितः इव' मानेंगे तब तो 'चुकुटिषति' इत्यादि में सन् प्रत्यय ङित् होगा और इसके फल स्वरूप सन्नन्त ङित् धातु से "अनुदात्तङित आत्मनेपदम्" से ङित् मानकर आत्मनेपद प्रसक्त होने से 'चुकुटिषति' ऐसा परस्मैपद का रूप नहीं बन सकता। अतः गाङ्कुटादि में 'ङिति इव' ऐसा मानने पर भी 'सार्वधातुकमपित्' में 'ङित इव = ङिद्वत्' ऐसा ही मानना चाहिए। अतः सार्वधातुक ङित् होता है—ऐसा अर्थ होने के कारण 'आताम्' ङित् है। इसके अवयव 'आ' का 'इय्' होने में बाधा नहीं है। 'आतः' 'ङितः' इनमें व्यधिकरण में षष्ठी हैं। अतः 'आतः' यह 'इय्' इस आदेश की अपेक्षा स्थाने षष्ठी है—'आकारस्य स्थाने इय् आदेशः।' 'ङितः' यह आकार की अपेक्षा अवयवावयवि-भाव में षष्ठी है क्योंकि केवल आकार सार्वधातुक ङित् असम्भव है। इसलिये ङित् के अवयव आकार के स्थान पर इय् आदेश होता है—ऐसा सूत्रार्थ निष्पन्न होता है। प्रकाशित पाठ—"आकारान्तादङ्गात्" यह अशुद्ध है। 'अकारान्ताद्' शुद्ध है।

( अनु० ) आतः = आ का—इसका क्या फल है ? पचन्ति, यजन्ति। पचन्ते, यजन्ते। [ इनमें 'आ' नहीं अपि 'अ' है। अतः 'इय्' नहीं होता है। ] ङित् [ के अवयव ] का—इसका क्या फल है ? पचावहै। पचामहै। [ यद्यपि 'लोटो लङ्वत्' से सामान्य लङ् के कार्य होते हैं किन्तु "आडुत्तमस्य पिच्च" सूत्र से पित् हो जाने के कारण 'आ' ङित् नहीं होता है। अतः इय् नहीं होता है। ]

अकारान्त से ही परे—इसका क्या फल है ? चिन्वाते, सुन्वाते। [ चिनु, सुनु—ये उकारान्त हैं। अतः इनसे परे 'आ' का इय् नहीं होता है। ]

तपरकरण का क्या फल है ? मिमाते, मिमाथे। [ माङ् धातु से लट्=आताम्, शप् का श्लु, द्वित्व आदि के बाद 'भृञामित्' सूत्र से अभ्यास के अ का इ, 'श्नाभ्यस्तयोरातः' से 'आ' का लोप होता है। तपरकरण न होने पर लोप की अपेक्षा परवर्ती होने से यह 'इय्' आदेश ही होने लगता। ]॥ ८१॥

## ३३६१. आने मुक् ॥ ८२ ॥ (३१०१)

**आने परतोऽङ्गस्यातो मुगागमो भवति । पचमानः, यजमानः ।**

**अकारमात्रभक्तोऽयं मुक् अदुपदेशग्रहणेन गृह्यते इति 'अदुपदेशात्' इति लसार्वधातुकानुदात्तत्वं भवति । यद्येवम्, 'आतो ङितः' ( ७. २. ८१ इत्ययमपि विधिः प्राप्नोति ? तपरनिर्देशान्न भविष्यति । मुकि**

न्यासः

**आने मुक् ॥ अङ्गस्यात इति** व्यधिकरणे षष्ठ्यौ—अङ्गस्य योऽत् तस्य मुगागमो भवतीति । तदिहाद्ग्रहणं तर्हि क्रियताम् ? न कर्त्तव्यम्; 'अतो येयः' इत्यतोऽत इत्यनुवर्त्तिष्यते । ननु च पञ्चमीनिर्दिष्टं तत्र, षष्ठीनिर्दिष्टेन चेहार्थः ? नैतदस्ति; अत इत्येषा तु पञ्चमी तत्रेयादेशे चरितार्था, 'आने' इत्येषा तु सप्तम्यकृतार्था । तस्मादान इत्येषा सप्तम्यत इत्यस्याः पञ्चम्याः षष्ठीत्वं परिकल्पयिष्यति, 'तस्मिन्निर्दिष्टे पूर्वस्य' इति नियमात् । ननु चाकारो वर्णो मकारोऽपि वर्ण एव, मुगयं त्वन्तलिङ्गः, अन्तश्चावयवः, न च वर्णो वर्णस्यावयवो युज्यते, तेनानारब्धत्वात्, तस्मादयुक्तमुक्तम्—अतो मुगागमो भवतीति ? नैष दोषः; सर्वत्रैव हि यस्यागमो विधीयते, यश्चागमो विधीयते तत्समुदायापेक्षयाऽऽदित्वमन्तत्वं वा विधीयते । तस्मादतो मुगागमो भवतीत्यस्यार्थोऽयं विवक्षितः—अकारादिरयं समुदायो मकारान्तश्च भवतीति । **पचमान इति ।** लट्, तस्य शानच् ।

आने परतोऽङ्गस्याऽतो मुगागमो भवतीत्युक्ते समानाधिकरणे एते षष्ठ्याविति मन्यमानोऽकारान्तस्य आने परतो मुगागमो भवतीतीदं सूत्रार्थं गृहीत्वा य एवं देशयेद्—यद्यकारान्तमङ्गमागमि, पचमान इत्यत्र 'अदुपदेशाल्लसार्वधातुकमनुदात्तम्' इत्यनुदात्तत्वं न स्यात्; अकारस्य मुका व्यवहितत्वात् । अकारो य उपदेश इत्येवं हि तत्र व्यवस्थितम्, न त्वकारान्तोऽयमुपदेश इति । नच शक्यते वक्तुम्—अङ्गभक्तोऽयं मुक्, अतो नास्ति व्यवधानमिति; अङ्गभक्तो ह्ययमङ्गमेव न व्यवदध्यात्, अकारं तु व्यवदधात्येव । अवयवो हि समुदायस्य व्यवधायको न भवति । अवयवान्तरस्य तु व्यवधायको भवत्येवेत्यत आह—**अकारमात्रभक्तो ह्ययमित्यादि ।** मात्रशब्दोऽयमङ्गभक्तत्वव्यवच्छेदाय । अङ्गञ्चात्राकारविशेषणम् । अकार एवागमी, नाङ्गम् ।

पदमञ्जरी

**आने मुक् ॥** अत्र 'आने' इति सप्तम्यचरितार्था पूर्वत्र कृतार्थायाः 'अतः' इति पञ्चम्याः षष्ठीं प्रकल्पयति 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति, तत्र विशेषणविशेष्यभावे कामचारादङ्गेनाद् विशेष्यते, न त्वताऽङ्गमित्यभिप्रायेणाह—**अकारमात्रभक्तोऽयमिति ।** अङ्गस्यावयवो योऽकारस्तस्य मुगित्यर्थः । किमेवं सति भवति ? इत्याह—**अदुपदेशग्रहणेनेति ।** उपदेशे अत् अदुपदेशः, यदि त्वकारान्ताङ्गभक्तः स्यात्, ततस्तदेवाङ्गं न व्यवदध्यात्, तदवयवं त्वकारं व्यवदधात्येवेति स्वरो न स्यात् । न च स्वरविधौ व्यञ्जनमविद्यमानवत्; किं कारणम् ? 'हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवदिति' परिभाषाया **भाष्यकारेण** शिक्षितत्वात् ।

भावबोधिनी

'आन' शब्द ( प्रत्यय ) परे रहते अङ्गसंज्ञक के अकार को मुक् आगम होता है । उदा० पचमानः, यजमानः । [ पच् तथा यज् से लट् का शानच् = आन, शप् = अ पच + आन, यज + आन, प्रस्तुत सूत्र से मुक् = म् आगम—पचमानः, यजमानः । ]

यह मुक् अकारमात्र का ही अङ्ग होता है इसलिए अदुपदेश के ग्रहण से गृहीत होता है, इस कारण 'अदुपदेश' मानकर "तास्यनुदात्तेन्ङिददुपदेशात्" ( ६।१।१८६ ) **सूत्र** से लकार सार्वधातुक अनुदात्त होता है । [ यदि अकारान्त अङ्ग का आगम होता तो यह अङ्ग और लसार्वधातुक का व्यवधायक भले न बनता किन्तु अवयवभूत 'अ' और लसार्वधातुक का व्यवधायक तो बन ही जाता, फलतः अनुदात्तत्व नहीं हो पाता । जब 'अ' का ही अवयव माना जाता है तो 'मुक्' व्यवधायक नहीं बनता है, अभीष्ट स्वर हो जाता है । ]

**सत्यध्यर्धमात्रो भवति । लसार्वधातुकानुदात्तत्वमपि तर्हि न प्राप्नोति ? नैष दोषः; उपदेशग्रहणं तत्र क्रियते । तेन उपदेशादूर्ध्वं सत्यपि कालभेदे भवितव्यम् । तथा च—पचावः, पचाम इत्यत्रापि भवति ॥**

**३३६२. ईदासः ॥ ८३ ॥ (३१०४)**

**न्यासः**

तस्मात् तद्भक्तत्वात् तद्ग्रहणेनैव मुग् गृह्यत इति व्यवधानाभावात् लसार्वधातुकमनुदात्तमह्न्विङोः' इत्यनुदात्तत्वेन, 'स्वरविधौ व्यञ्जनमविद्यमानवत्' इति मुकोऽविद्यमानवत्त्वाद् व्यवधानभावात् ? एवं मन्यते—नैषा परिभाषा **भाष्यकारस्य** सम्मता। तथा हि—तेनेमां परिभाषां प्रत्याख्यायेयमन्या परिभाषा गृहीता—'हलः स्वरप्राप्तौ व्यञ्जनमविद्यमानवत्' इति । न चात्र हलः स्वरप्राप्तिरस्ति, किं तर्हि ? अचः । **यद्येवमित्यादि ।** यद्यकारभक्तोऽयं मुक् तद्ग्रहणेन गृह्यत इत्येवं सत्यव्यवधायकत्वादेव तस्य पचमान इत्यत्राकारादनन्तरस्यान इति, तस्य 'आतो ङितः' इतीयादेशः प्राप्नोतीत्यत आह—**तपरकरणनिर्देशान्न भवतीति ।** अकारो ह्यत्र मात्राकालस्तपरो निर्दिष्टो मुकि सत्यध्यर्द्धमात्रो भवति। अतः कालभेदान्न भविष्यति। अधिकमर्द्धं यस्याः साध्यर्द्धा, अध्यर्द्धा मात्रा यस्य सोऽध्यर्द्धमात्रः। लसार्वधातुकमनुदात्तमपि तर्हि न प्राप्नोतीति तद्विधावपि तपरनिर्देशात् । **उपदेशग्रहणमित्यादि ।** उपदेशग्रहणं तत्र क्रियते प्रागवस्थोपलक्षणार्थम् । तेन य उपदेशावस्थायां मात्राकालस्तस्य यद्यप्युत्तरकालं मुकि कृते कालभेदोऽस्ति, तथाप्युपदेशावस्थायां मात्राकालत्वाद् भवत्येवात्रानुदात्तत्वम् । **तथा चेत्यादि ।** यतस्तत्रोपदेशादूर्ध्वं सत्यपि कालभेदेऽनुदात्तत्वेन भवितव्यम्, एवञ्च कृत्वा यत्रापि 'अतो दीर्घो यञि' इति दीर्घत्वे कृते कालभेदोऽस्ति—पचाव इत्यादौ, तत्रापि भवति ॥ ८२ ॥

**ईदासः ॥ आस इति** पञ्चम्यकृतार्था 'आने' इति पूर्वत्र कृतार्थायाः सप्तम्याः षष्ठीत्वं प्रकल्पयिष्यति;

**पदमञ्जरी**

अन्यथाऽग्निचिद्वानित्यादौ 'ह्रस्वनुड्भ्यां मतुप्' इति स्वरप्रसङ्गात् । यदि पुनरयमभक्तो मकारो विकरणवन्मध्ये क्रियेत, अभक्ते मुकि स्वरो न स्यादित्येव । यदि पुनरयं परादिः क्रियेत—आनस्य मुडिति, परादित्वे दीर्घत्वप्रसङ्गः—पचमान इति 'अतो दीर्घो यञि' इति दीर्घत्वं प्राप्नोति ? पाक्षिक एष दोषः । कतरस्मिन्पक्षे ? यदि सार्वधातुक इत्येव तत् । अथ ङोत्येव तत्तदा न दोषः । तदयं भक्तस्तत्रापि पूर्वान्तः, तत्राप्यकारस्य मुगिति स्थितम् । **यद्येवमिति ।** यद्यकारमात्रभक्तत्वात्तद्ग्रहणेन गृह्यत इत्यर्थः । **अध्यर्द्धमात्र इति ।** अर्धमधिकं यस्याः सा अध्यर्धा, अध्यर्धा मात्रा यस्यासावध्यर्धमात्रः । **लसार्वधातुकानुदात्तत्वमपि तर्हि न प्राप्नोतीति ।** यद्विधावपि तपरनिर्देशात् । तत्राह—**उपदेशग्रहणमिह क्रियत इदि । तथा चेति ।** यदा द्विमात्रत्वेऽपि भवति, तदा का शङ्काऽध्यर्धमात्रत्वे इति भावः ॥ ८२ ॥

**ईदासः ॥** 'आसः' इति पञ्चम्यचरितार्था पूर्वत्र कृतार्थायाः 'आने' इति सप्तम्याः षष्ठीं

**भावबोधिनी**

यदि ऐसा हैं, तब तो 'आतो ङितः' यह विधि भी प्राप्त होती है [ क्योंकि मुक् अकार का अवयव होने से अकार के ग्रहण से ही गृहीत हो जायगा अतः बीच में व्यवधायक नहीं बनेगा, अकारान्त अङ्ग से 'आन' के 'आ' का इय् होने लगेगा ] ? तपरनिर्देश से नहीं हो सकेगा । [ अत् एक मात्रा वाला है । ] मुक् = म् मिला देने पर डेढ़ मात्रा का हो जाता है । [ 'अत् से परे आ' नहीं है । इय् नहीं होगा । ] यदि ऐसा है तो लसार्वधातुक का अनुदात्तत्व भी नहीं प्राप्त होता है ? नहीं, यह दोष नहीं है, उस सूत्र में उपदेशग्रहण किया जाता है । [ उपदेशकाल में जो 'अत्' ऐसा लिया जाता है । ] इसलिए उपदेश के बाद कालभेद हो जाने पर भी [ स्वर ] होना ही चाहिए । [ किन्तु इय् आदेश में उपदेश का ग्रहण नहीं है । अतः 'आतो ङितः' की प्रवृत्ति नहीं होती है । ] और इसीलिए पचावः, पचामः इनमें [ 'अतो दीर्घो यञि' से बाद में दीर्घ हो जाने पर उपदेश में शप् = अ ही होने से लसार्वधातुक का अनुदात्तत्व होने में बाधा नहीं है । ] ॥ ८२ ॥

'आस्' से उत्तरवर्त्ती 'आन' शब्द के 'आ' का 'ई' होता है । उदा० आसीनो यजते । [ आस् + लट् = शानच् = आन, आ का ई—आस् ईन = आसीन। ] [ प्रस्तुत सूत्र में 'आने' में सप्तमी है । षष्ठी कैसे होती है ? ]

आस उत्तरस्यानशब्दस्य ईकारादेशो भवति। आसीनो यजते। अत्र पञ्चम्याः परस्य षष्ठी कल्प्यते ॥

**३३६३. अष्टन आ विभक्तौ ॥ ८४ ॥ (२७१)**

अष्टनो विभक्तौ परत आकारादेशो भवति। अष्टाभिः। अष्टाभ्यः। अष्टानाम्। अष्टासु।

विभक्ताविति किम्? अष्टत्वम्। अष्टता।

'आ' इति व्यक्तिनिर्देशोऽयम्, आकृतिनिर्देशे तु नकारस्थानेऽनुनासिकाकारः स्यात्। विकल्पेनाय-

**न्यासः**

'तस्मादित्युत्तरस्य' इति वचनात्। तेनानस्यैवायमादेशो विधीयते, इत्याह—**आस उत्तरस्यानशब्दस्येति। आसीन इति।** 'आस उपवेशने'। अनुदात्तत्वादात्मनेपदम्, 'आदेः परस्य' इत्याकारस्येकारः, अदादित्वाच्छपो लुक्। तपरकरणं मुखसुखार्थम् ॥ ८३ ॥

**अष्टन आ विभक्तौ ॥ आ इति व्यक्तिनिर्देशोऽयमिति।** शुद्धाया निरनुनासिकाया आकारस्य व्यक्तेरेव निर्देश इत्यर्थः। अथाकृतिनिर्देशे को दोषः स्यात्, यतस्तत्परीहारार्थो व्यक्तिनिर्देशोऽयमाश्रितः? इत्यत आह—**आकृतिनिर्देशे हीत्यादि।** जातिरिहाकृतिर्विवक्षिता, न तु संस्थानम्। जातिनिर्देशे सति शुद्धाया जातेर्निर्देष्टुमशक्यत्वात् तदाधारभूतासु व्यक्तिषु कार्यं विज्ञायते। तत्र यदीह जातिनिर्देश आश्रीयेत, तदा सर्वास्वाकारव्यक्तिषु जात्याधारत्वमुपगतासु 'अलोऽन्त्यस्य' इति नकारस्य विधीयमान आकार आन्तरतम्यादनुनासिकस्य स्थानेऽनुनासिक एव स्यात्। व्यक्तिनिर्देशे त्वेष दोषो न भवति, शुद्धाया आकारव्यक्तेरुच्चारणात् अनण्त्वादतपरत्वाच्च। यद्यष्टन आकारो विधीयते, तदाष्टभिः, अष्टभ्य इत्यादि न सिध्यति, न ह्यत्र विकल्पाभिधायि वचनमस्ति, नापि प्रकृतम्? इत्यत आह—**विकल्पेनेत्यादि।** 'अष्टनो दीर्घात्' इत्यनेनाष्टनो दीर्घाद-

**पदमञ्जरी**

प्रकल्पयति ॥ ८३ ॥

**अष्टन आ विभक्तौ ॥** सौत्रत्वान्निर्देशस्य अल्लोपो न कृतः।

**व्यक्तिनिर्देशोऽयमिति।** यथाश्रुतनिरनुनासिकाकारव्यक्तिर्निर्दिश्यत इत्यर्थः। जातिनिर्देशस्तु दुष्ट इत्याह—**आकृतिनिर्देशे त्विति।** आकृतिर्जातिः, न संस्थानम्। जातिनिर्देशे हि शुद्धाया जातेरादेष्टुमशक्यत्वात्तदाधारभूतानां व्यक्तीनां विधानम्। तत्र यद्यपि दीर्घोच्चारणसामर्थ्यान्न ह्रस्वप्लुतव्यक्तीनां प्रसङ्गः, दीर्घव्यक्तयस्तु सर्वाः प्रसक्ताः, तत्रान्तर्यतोऽनुनासिकव्यक्तिरेव स्यात्, तस्याः पूर्वेण सह सवर्णदीर्घोऽप्यनुनासिक एव स्यात्। **विकल्पेन चायमित्यादि।** यथा च दीर्घग्रहणं कृतात्वनिर्देशश्चास्मिन्नर्थे लिङ्गं तथा तत्रैव

**भावबोधिनी**

यहाँ पञ्चमी = पञ्चम्यन्त से परे [ सप्तमी = सप्तम्यन्त की ] षष्ठी कल्पित की जाती है। [ इसमें प्रमाण है "तस्मिन्निति निर्दिष्टे पूर्वस्य" यह परिभाषा सूत्र। अतः अकारान्त से परे 'आन' के अवयव आ का ई होता है। ]॥८३॥

विभक्ति परे रहते अष्टन् का आकार आदेश होता है। उदा० अष्टाभिः अष्टाभ्यः। अष्टानाम्। अष्टासु। [ अष्टन् + जस् आदि परे रहते 'न्' का 'आ' आदेश, दीर्घ होता है। ]

विभक्ति परे रहते—इसका क्या फल है? अष्टत्वम्, अष्टता। [ त्व, तल् प्रत्यय विभक्तिसंज्ञक नहीं हैं। अतः आत्व नहीं होता है, नलोप होता है। ]

'आ' यह व्यक्ति-निर्देश है, आकृति = जाति का निर्देश मानने पर तो नकार के स्थान पर अनुनासिक आकार होने लगता। [ क्योंकि अत्व जाति सभी प्रकार के अकारों में रहती है। अतः सादृश्य के अनुसार अनुनासिक होने लगता। ]

यह 'आकार' विकल्प से होता है, ऐसा 'अष्टनो दीर्घात्' ( ६।१।७२ ) इसमें दीर्घग्रहण से और 'अष्टाभ्य औश्' ( ७।१।२१ ) इसमें किये गये आत्व के निर्देश से ज्ञापित है। [ यदि सदैव = नित्य 'आ' होता तो दीर्घ ही

माकारो भवति, एतज्ज्ञापितम्—'अष्टनो दीर्घात्' (६.१.१७२) इति दीर्घग्रहणात्, 'अष्टाभ्य औश्' (७.१.२१) इति च कृतात्वस्य निर्देशात्। तेनाष्टभिः, अष्टभ्य इत्यपि भवति।

तदन्तविधिश्चात्रेष्यते—प्रिया अष्टौ येषां ते प्रियाष्टानः। प्रियाष्टौ॥

**३३६४. रायो हलि॥ ८५॥ (२८६)**

'रै' इत्येतस्य हलादौ विभक्तौ परत आकारादेशो भवति। राभ्याम्। राभिः।

हलीति किम्? रायौ, रायः। विभक्ताविति किम्? रैत्वम्, रैता।

"मृजेर्वृद्धिः" (७.२.११४) इत्यतः प्राग्विभक्त्यधिकारः॥

**३३६५. युष्मदस्मदोरनादेशे॥ ८६॥ (३९३)**

**न्यासः**

सर्वनामस्थानविभक्तेरुदात्तत्वं विधीयते। यदि च नित्यमात्वं स्याद्, दीर्घादिति विशेषणं निरर्थकं स्यात्। 'अष्टाभ्य औश्' इत्यत्र च कृतात्वस्य निर्देशोऽनर्थकः स्यात्। व्यवच्छेद्याभावादष्टन इत्येवं ब्रूयात्। तस्माद् दीर्घग्रहणेन कृतात्त्वनिर्देशेन विकल्पेनेदमात्त्वं भवतीति ज्ञापितम्। तेनाष्टभिरित्याद्यपि पक्षे भवतीति। **तदन्तविधिश्चात्रेष्यत इति**। कथं स लभ्यते? इहाङ्गस्येति प्रकृतम्, अष्टन्शब्दश्चेह स्वरूपप्रधान उपात्तः; एकवचननिर्देशात्। अन्यथा हि बह्वर्थत्वादष्टनामित्येवं ब्रूयात्। तस्मात् स्वरूपप्रधानोऽयम्। तत्राङ्गे प्रकृतेऽनेन विशेष्यमाणे तदन्तविधिर्लभ्यते। विशेषणेन हि तदन्तविधिर्भवतीत्युक्तम्। **प्रियाष्टेति**। 'सर्वनामस्थाने' इत्यादिना दीर्घः॥ ८४॥

**रायो हलि॥ ८५॥**

**युष्मदस्मदोरनादेशे॥ युष्मत्, अस्मदिति**। 'पञ्चम्या अत्' इति पञ्चमीभ्यसोऽदादेशः, 'शेषे लोपः'

**पदमञ्जरी**

व्याख्यातम्। **तदन्तविधिश्चात्रेष्यत इति**। 'अङ्गाधिकारे तस्य तदुत्तरपदस्य च' (पु० १० ८५) इति वचनात्। एकवचननिर्देशात्स्वरूपस्य ग्रहणं नार्थस्य, तेनापसर्जनेऽप्यष्टनि भवति, तत्रापि विकल्पितत्वात्प्रियाष्टा, प्रियाष्टानौ, प्रियाष्टान इत्यपि भवति। तत्रापि भसंज्ञाविषये आत्वपक्षे 'आतो धातोः' इत्यकारलोपमिच्छन्ति—प्रियाष्टः पश्येत्यादि, आत्वाभावपक्षे त्वल्लोपे ष्टुत्वम्—प्रियाष्ट्न इत्यादि भवति॥ ८४॥

**रायो हलि॥ मृजेर्वृद्धिरित्यतः प्राग्विभक्त्यधिकार इति**। पूर्वसूत्रान्ते ग्रन्थोऽयं पठितव्यः॥ ८५॥

**युष्मदस्मदोरनादेशे॥ युष्मदस्मदिति**। 'पञ्चम्या अत्' इति भ्यसोऽद्भावः।

**भावबोधिनी**

रहता, दीर्घग्रहण की आवश्यकता नहीं थी। इसी प्रकार 'अष्टाभ्यः' में आत्वनिर्देश की आवश्यकता नहीं थी। इनका उल्लेख 'आ' की विकल्पता सिद्ध करता है।]

इसमें तदन्तविधि इष्ट है—प्रिया अष्टौ येषां ते–प्रियाष्टानः, प्रियाष्टौ। [आत्व वैकल्पिक होने से दो रूप बनते हैं।]॥ ८४॥

हलादि विभक्ति परे रहते 'रै' इसका आकार आदेश होता है। उदा० राभ्याम्। राभिः। [रै + भ्याम्, रै + भिस्, ऐ का आत्व]

हलादि परे—इसका क्या फल है? रायौ, रायः। रै + औ, [रै + जस् में आत्व नहीं होता है।]

विभक्तिसंज्ञक परे रहते—इसका क्या फल है? रैत्वम्, रैता। [त्व, तल् विभक्तिसंज्ञक नहीं हैं।]

"मृजेर्वृद्धिः" (७।२।११४) इससे पहले तक 'विभक्तौ' इसका अधिकार चलता है॥ ८५॥

युष्मद् और अस्मद्—इनका अनादेश विभक्ति के परे रहते आकार आदेश होता है। उदा० युष्माभिः।

---

१. एतद्वाक्यस्य पाठः पूर्वसूत्रस्यान्ते एवोचितः, तत्रैव 'विभक्तौ' इत्यस्य दर्शनात्।

युष्मदस्मदित्येतयोरनादेशे विभक्तौ परत आकारादेशो भवति। युष्माभिः। अस्माभिः। युष्मासु। अस्मासु।

अनादेश इति किम्? युष्मत्। अस्मत्।

'हलि' इत्यधिकारादप्यत्र न स्यात्, उत्तरत्र त्वनादेशग्रहणेन प्रयोजनम्—'योऽचि' (७.२.८९) इति, तदिहैव क्रियते॥

**३३६६. द्वितीयायां च॥ ८७॥ (३९०)**

द्वितीयायां च परतो युष्मदस्मदोराकारादेशो भवति। त्वाम्, माम्। युवाम्, आवाम्। युष्मान्, अस्मान्। आदेशार्थं वचनम्॥

**न्यासः**

इत्यन्तलोपे कृते 'अतो गुणे' पररूपत्वम्।

यदि च हलीत्यधिकारादत्राप्यात्वं न स्यात्, तत् किमर्थमनादेशग्रहणम्? इत्याह—**उत्तरत्र त्वित्यादि**। उत्तरत्र 'योऽचि' इति सूत्रेऽनादेशस्य प्रयोजनमिति। यद्येवं तत्रैव कर्त्तव्यम्, इह किमर्थं क्रियते? विस्पष्टार्थमित्यभिप्रायः॥ ८६॥

**द्वितीयायां च॥ त्वाम्, मामिति।** 'त्वमावेकवचने' इति त्वमादेशौ। **युवाम्, आवामिति।** 'युवावौ द्विवचने' इति युवावादेशौ। सर्वत्र 'ङे प्रथमयोरम्' इत्यम्भावे विभक्तेः कृतेऽमि पूर्वत्वम्॥ ८७॥

**पदमञ्जरी**

**हलीत्यधिकारादप्यत्र न स्यादिति।** न चादेशो हलादिरस्ति, 'भ्यसोभ्यम्' इत्ययं तु अभ्यमादेशः। **उत्तरत्रेति।** 'योऽचि' इति यत्वमादेशे मा भूत् त्वमहमित्यादौ 'शेषे लोपः' इति शेषव्यवस्थार्थं च। **तदिहैव क्रियत इति।** लाघवे विशेषाभावात्॥ ८६॥

**द्वितीयायां च॥** उदाहरणेषु 'ङे प्रथमयोरम्' इति विभक्तेरम्भावः॥ ८७॥

**भावबोधिनी**

अस्माभिः। युष्मासु, अस्मासु। [युष्मद् + भिस्, अस्मद् + भिस्, विभक्ति = प्रत्यय का कोई आदेश नहीं होता है, अनादेश विभक्ति परे होने से 'द्' का 'आ' आदेश होता है। सुप् प्रत्यय में भी यही 'आ' होता है।]

अनादेश = जिसका कोई अन्य आदेश न हुआ हो—इसका क्या फल है? युष्मत्, अस्मत्। [युष्मद् + भ्यस्, अस्मद् + भ्यस् इनमें 'पञ्चम्या अत्' सूत्र से भ्यस् का अत् हो जाने से 'आ' आदेश नहीं होता है।]

'हलि = हलादि परे'—इसका अधिकार = अनुवृत्ति होने के कारण भी यहाँ (पूर्वोक्त में) नहीं हो सकता, आगे के सूत्र में अनादेश ग्रहण का प्रयोजन है—'योऽचि' (७।२।८९), उसको यहीं पर कर दिया गया है। [भाव यह है कि 'योऽचि' सूत्र में अनादेश अजादि की आवश्यकता है किन्तु यहीं पर कर दिया गया है। क्योंकि 'युष्मत्' 'अस्मत्' में तो हलादि विभक्ति परे मानकर भी आदेश का वारण किया जा सकता है।]॥ ८६॥

और द्वितीया विभक्ति के परे रहने पर भी युष्मद् और अस्मद् का आकार आदेश होता है। उदा० त्वाम्, माम्। युवाम् आवाम्। युष्मान्, अस्मान्। [युस्मद् + अम्, 'त्वमावेकवचने' सूत्र से 'त्व' आदेश 'द्' का 'आ' आदेश दीर्घ आदि होने पर त्वा अम्, पूर्वरूप। इसी प्रकार 'औ' तथा 'जस्' के स्थान पर 'ङेप्रथमयोरम्' सूत्र से 'अम्' आदेश होने पर प्रस्तुत सूत्र से 'आ' आदेश, 'युवावौ द्विवचने' से युव तथा आव आदेश।]

[पूर्वसूत्र अनादेशविभक्ति में 'आ' आदेश करता है तथा प्रस्तुत] सूत्र आदेशभूत विभक्ति परे रहते 'आ' करने के लिए है॥ ८७॥

**३३६७. प्रथमायाश्च द्विवचने भाषायाम् ॥ ८८ ॥ (३८७)**

प्रथमायाश्च द्विवचने परतो भाषायां विषये युष्मदस्मदोराकारादेशो भवति । युवाम्, आवाम् । प्रथमाया इति किम् ? युवयोः, आवयोः । द्विवचन इति किम् ? त्वम्, अहम्, यूयम्, वयम् । भाषायामिति किम् ? 'यु॒वं वस्त्रा॑णि पीव॒सा व॑साथे' ( ऋ० १.१५२.१ ) ॥

**३३६८. योऽचि ॥ ८९ ॥ (३९२)**

अजादौ विभक्तावनादेशे युष्मदस्मदोर्यकारादेशो भवति । त्वया, मया । त्वयि, मयि । युवयोः, आवयोः ।

अचीति किम् ? युवाभ्याम्, आवाभ्याम् ।

**न्यासः**

**प्रथमायाश्च द्विवचने भाषायाम्** ॥ इदमप्यादेशार्थं वचनम् । **युवयोः, आवयोरिति** । ननु च 'योऽचि' इति यत्वमत्र बाधकं भविष्यति ? प्रथमाद्विवचनेऽपि तर्हि शेषेलोपो बाधकः स्यात् । तत्र यथा वचनसामर्थ्याच्छेषेलोपोऽनेन बाध्यते, तथा यत्वमपि बाध्येत । पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान्' इति यत्वमपि बाध्येत । तस्मात् 'प्रथमायाः' इति वक्तव्यम् । **त्वम्, अहमिति** । 'त्वाहौ सौ' इति त्वाहावादेशौ । 'औ' इति वक्तव्ये प्रथमाया द्विवचनं वैचित्र्यार्थम् ॥ ८८ ॥

**योऽचि** ॥ **युष्मदस्मदोरनादेश इत्यत्रेत्यादि** । 'युष्मदस्मदोरनादेशे इत्यत्र यदि पूर्वसूत्राद् हल्ग्रहणमनुवर्त्तते, तदाऽविशेषेण विधीयमानं यत्वमुत्सर्गो ज्ञाप्यते । आत्वं तु विभक्तिविशेषे हलादौ विधीयमानमस्या-

**पदमञ्जरी**

**प्रथमायाश्च द्विवचने भाषायाम्** ॥ **युवयोरिति** । ननु च 'योऽचि' इति यत्वमत्र बाधकं भविष्यति ? प्रथमाद्विवचनेऽपि तर्हि शेषेलोपो बाधकः स्यात् । अथ तस्य वचनाद्बाधः ? यत्वस्यापि बाधः स्यात् । 'पुरस्तादपवादन्यायेन' ( व्या० प० ९ ) वा यत्वस्यैव बाधः स्यात् ॥ ८८ ॥

**भावबोधिनी**

और प्रथमा विभक्ति का द्विवचन परे रहते युष्मद् और अस्मद् का आकार आदेश भाषा में होता है । उदा० युवाम्, आवाम् । [ युष्मद् + औ = अम्, 'युव' आदेश 'द्' का आ आदेश । ]

प्रथमा के—इसका क्या फल है ? युवयोः आवयोः । [ षष्ठी, सप्तमी के द्विवचन 'ओस्' परे रहते 'आ' आदेश नहीं है । ]

द्विवचन परे रहते—इसका क्या फल है ? त्वम्, अहम्, यूयम्, वयम् । [ एकवचन और बहुवचन में 'आ' आदेश नहीं होता है । ]

भाषा में—इसका क्या फल है—"युवं वस्त्राणि पीवसा वसाथे ।" [ यहाँ वैदिक प्रयोग में 'आ' नहीं होता है । ] ॥ ८८ ॥

अनादेश अजादि विभक्ति परे रहते युष्मद् और अस्मद् का यकार आदेश होता है । [ 'अलोऽन्त्यस्य' के कारण अन्त्य = 'द्' का ही 'य्' होता है । ] उदा० त्वया, मया । त्वयि, मयि । युवयोः आवयोः । [ युष्मद् + टा = आ, 'त्वमावेकवचने' से मपर्यन्त का त्व अद् + आ, 'योऽचि' से द् का य आदेश । इसी प्रकार अन्यरूपों में भी 'अद्' या द् का 'य्' आदेश ]

अजादि परे—इसका क्या फल है ? युवाभ्याम्, आवाभ्याम् । [ भ्याम् अजादि नहीं है । अतः 'य्' आदेश नहीं होता है । ]

'युष्मदस्मदोरनादेशे' ( ७.२.८६ ) इत्यत्र यदि 'हलि' ( ८.२.८५ ) इत्यनुवर्त्तते, शक्यमकर्तुम् 'अचि' इत्येतत् ? तत्क्रियते विस्पष्टार्थम् ।

अनादेश इत्येव—त्वद् गच्छति । मद् गच्छति ॥

**३३६९. शेषे लोपः ॥ ९० ॥ (३८५)**

**शेषे विभक्तौ युष्मदस्मदोर्लोपो भवति । कश्च शेषः ? यत्राकारो यकारश्च न विहितः ।**

**पञ्चम्याश्च चतुर्थ्याश्च षष्ठीप्रथमयोरपि ।**
**यान्यद्विवचनान्यत्र तेषु[1] लोपो विधीयते ॥**

**न्यासः**

प्यपवादः । एवं चाप्यन्तरेणाप्यज्ग्रहणम्, यकारोऽजादावेवावतिष्ठते, तस्मादचीत्येतच्छक्यमकर्तुम् ? तत् क्रियते विस्पष्टार्थम् ।

**त्वद् गच्छति, मद् गच्छतीति** । 'एकवचनस्य च' इति ङसेरदादेशः ।। ८९ ॥

**शेषे लोपः ॥ यान्यद्विवचनानीति** । एकवचनबहुवचनानीत्यर्थः । **अत्रेति** । पञ्चम्यादिषु विभक्तिषु । **तेषु लोपो विधीयत इति** । 'तेषामेव शेषत्वात् । **तुभ्यम्, मह्यमिति** । 'तुभ्यमह्यौ ङयि' इति तुभ्यमह्यावादेशौ भवतः । **युष्मभ्यम्, अस्मभ्यमिति** । 'भ्यसो भ्यम्' इति भ्यमादेशः । **तव, ममेति** । 'तवममौ ङसि' इति तवममादेशौ । **युष्माकम्, अस्माकमिति** । 'साम आकम्' इति ।

**पदमञ्जरी**

**योऽचि ॥ शक्यमकर्तुमचीत्येतदिति** । कथम् ? अनादिष्टायां विभक्तौ विधीयमानं यत्वमुत्सर्गः, तत्रैव हलादावात्वमपवादः । **त्वत्, मदिति** । 'एकवचनस्य च' इति ङसेरदादेशः ॥ ८९ ॥

**शेषे लोपः** ॥ उपयुक्तादन्यः शेषः । तस्यैव संग्रहश्लोकः—**पञ्चम्याश्चेत्यादि** । पञ्चम्यादीनां सम्बन्धीनि यान्यद्विवचनानि—अयं तावच्छेषः, तत्र शेषे लोपो विधीयत इति । 'अद्विवचनानि' इत्येतद्भाषापेक्षं द्रष्टव्यम् । छन्दसि तु—युवं वस्त्राणीति द्विवचनमपि शेष एव ।

**भावबोधिनी**

यदि 'युष्मदस्मदोरनादेशे' इस पूर्व सूत्र में [ 'रायो हलि' सूत्र से ] 'हलि' = हलादि परे—इसकी अनुवृत्ति होती है तब [ इस सूत्र में ] 'अचि' यह करना अनावश्यक है ? यह ( 'अचि ) स्पष्टता के लिए किया गया है ।

अनादेश विभक्ति परे ही [ 'य्' आदेश होता है ]—त्वद् गच्छति, मद् गच्छति । [ इनमें पञ्चमी एकवचन ङसि का अत् आदेश परे है । अतः 'य्' नहीं होता है । ] ॥ ८९ ॥

शेष विभक्ति परे रहते [ अन्य का ] लोप होता है । शेष कौन है ? जहाँ आकार अथवा यकार नहीं किया गया है ।

पञ्चमी, चतुर्थी, षष्ठी, प्रथमा में भी यहाँ ( पञ्चमी आदि में ) जो अद्विवचन = एकवचन और बहुवचन हैं, उनमें लोप का विधान किया जाता है । [ भाव यह है कि प्रथमा, चतुर्थी, पञ्चमी और षष्ठी के एकवचन और बहुवचन के परे रहते यह लोप होता है । द्विवचन में लोप न होकर आत्व आदि होते हैं । ] उदा० त्वम्, अहम् । [ युष्मद् + सु, अस्मद् + सु, 'त्वाहौ सौ' से 'त्व' और 'अह' आदेश—'ङे प्रथमयोरम्' से 'अम्' आदेश, 'शेषे लोपः' से अन्त्यलोप—त्व अम्, अह अम् पूर्वरूपादि होते है । इसी प्रकार बहुवचन में यूय, वय आदेश के बाद लोप होता है । ] यूयम्, वयम् । तुभ्यम् मह्यम् । [ ङे का अम् आदेश "तुभ्यमह्यौ ङयि" से 'तुभ्य' तथा 'मह्य' आदेश, प्रस्तुत सूत्र से लोप ] युष्मभ्यम्, अस्मभ्यम् । [ चतुर्थी, पञ्चमी के बहुवचनों में 'भ्यस्' का अभ्यम् होने के बाद लोप होता है । ] त्वत्, मत् । युष्मत् अस्मत् । [ पञ्चमी एकवचन, बहुवचन के 'अत्' आदेश, लोप एकवचन में 'त्वमावेकवचने' से 'त्व' 'म' आदेश । ] तव, मम [ ङस् का अश् आदेश—"युष्मदस्मद्भ्यां ङसोऽश्" सूत्र से

1. 'शेषे'–इति बहुषु पुस्तकेषु पाठः ।

त्वम् अहम् । यूयम्, वयम् । तुभ्यम्, मह्यम् । युष्मभ्यम्, अस्मभ्यम् । त्वत्, मत् । युष्मत्, अस्मत् । तव, मम । युष्माकम्, अस्माकम् ।

**शेषग्रहणं विस्पष्टार्थम् । शेषे लोपे कृते स्त्रियां टाप् कस्मान्न भवति—त्वं ब्राह्मणी, अहं ब्राह्मणी ? 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' ( व्या० प० १२ ) 'अलिङ्गे वा युष्मदस्मदी' इति ।**

**केचित्तु शेषेलोपं टिलोपमिच्छन्ति । कथम् ? वक्ष्यमाणादेशापेक्षः शेषः, ते चादेशा मपर्यन्तस्य**

**न्यासः**

अथ शेषग्रहणं किमर्थम्, न 'लोपः' इत्येवोच्येत, एवमुच्यमाने सत्यविशेषेण लोपः स्यादित्येतच्च नाशङ्कनीयम्, अविशेषेण हि लोपो विधीयमान उत्सर्गो भविष्यति, तस्यानादेशे विभक्तिविशेषे यकाराकारापवादौ, एवञ्चान्तरेणापि शेषग्रहणं शेष एव लोपोऽत्रस्थाप्येत ? इत्यत आह—**शेषग्रहणं विस्पष्टार्थमिति । शेषे लोपे कृते स्त्रियां टाप् कस्मान्न भवतीति ।** अन्त्यलोपे कृते सत्यदन्तत्वाद् 'अजाद्यतष्टाप्' इति टापा भवितव्यमिति भावः । **सन्निपात इत्यादि ।** विभक्त्यानन्तर्ये हि सति युष्मदस्मदी अकारान्ते समुपजाते । तत्र यदि टापमुत्पादयेयाताम्, तदा विभक्तेरानन्तर्यं ताभ्यां विहतं स्यात् । न च यो यत्सन्निपातलक्षणः स तद्विघातस्य निमित्तं भवतीति न भवति टाप् । यद्येवम्, त्यदादिभ्योऽपि न स्यात् ? नैष दोषः; यदयम् 'न यासयोः' इति निर्देशं करोति, तज्ज्ञापयति—भवति त्यदादिभ्यष्टाबिति । अयञ्च स्त्रीलिङ्गत्वं युष्मदस्मदोरभ्युपेत्य परीहार उक्तः । इदानीं स्त्रीलिङ्गाभावादेव टाब्न भवतीति दर्शयितुमाह—**अलिङ्गे इत्यादि ।**

**केचित्तु शेषेलोपं टिलोपमिच्छन्तीति ।** त्वं ब्राह्मणी, अहं ब्राह्मणी—इत्यत्र टाब्मा भूदित्येवमर्थम् । युष्मभ्यम्, अस्मभ्यमित्यत्र भ्यमादेशे कृते 'बहुवचने झल्येत्' इत्येत्वं मा भूदित्येवमर्थञ्च । कथमिति ? एवं मन्यते—यत्र विभक्तावकारो यकारश्च न विहितः स शेषः, तत्र शेषेलोप उच्यमानष्टिलोपो न लभ्यते । 'अलोऽन्त्यस्य' इति परिभाषयाऽन्त्यस्यैव प्राप्नोतीति वक्ष्यमाणादेशापेक्षया शेष इत्यस्यार्थं **ते चेत्यादिना**

**पदमञ्जरी**

**शेषग्रहणं विस्पष्टार्थमिति ।** कथम् ? विभक्तिमात्रे लोपः, तस्यानादिष्टायां विभक्तौ यत्वमपवादः । अस्यापि हलादावात्वमपवाद इत्यसङ्करेणात्व-य-लोपाः सिध्यन्ति । अनादेशग्रहणं तु क्रियमाणेऽज्ग्रहणे यत्वलोपयोर्विषयविभागार्थं कर्त्तव्यमेव । **सन्निपातलक्षण इति ।** विभक्तिसन्निपातकृतं युष्मदस्मदोरकारान्तत्वम् । तद्यदि टापो निमित्तं स्यात्, तत्सन्निपातं विहन्यात् । एतच्च त्यदादिशब्दवत्स्त्रीलिङ्गत्वमभ्युपेत्योक्तम्, इदानीं च लिङ्गमेव नास्ति ? इत्याह—**अलिङ्गे वेति ।**

**केचित्त्विति ।** टाब्निवृत्त्यर्थमेव त एवमिच्छन्ति । **कथमिति ।** यत्राकारो यकारश्च न विहितः स शेषः, तत्र विधीयमानो लोपः 'अलोऽन्त्यस्य' इत्यन्तस्यैव युक्त इति प्रश्नः । अनन्तरोक्तं शेषग्रहणस्य वैयर्थ्यं हृदि कृत्वाऽऽह—**वक्ष्यमाणेति ।** आदेशा वक्ष्यमाणा यस्या स वक्ष्यमाणादेशः । कः पुनरसौ ? इत्याह—**ते चेति ।**

**भावबोधिनी**

होता है । 'तवममौ ङसि' से तव और मम आदेश के बाद लोप होता है । ] युष्माकम्, अस्माकम् [ युष्मद् + आम्, अस्मद् + आम्, सुट् के बाद 'साम आकम्' से 'आकम्' आदेश, युष्मद् + आकम्, लोप करने पर रूप बनते हैं । ]

'शेष' का ग्रहण स्पष्टता के लिये है । [ क्योंकि अन्य स्थलों में अन्य आदेश होते हैं । ] शेष के लोप कर देने पर ( अकारान्त मानकर ) टाप् क्यों नहीं होता है—त्वं ब्राह्मणी, अहं ब्राह्मणी ? 'सन्निपातलक्षण विधि उसके विघात का कारण नहीं बनती है । [ भाव यह है कि युष्मद् अस्मद् और विभक्तियों के अनान्तर्य=अव्यवधान को मानकर लोप होने पर अदन्तत्व बनता है । इसी अदन्तत्व को मानकर टाप् प्रसक्त है । यदि टाप् होगा तो दोनों के बीच में होगा, फलतः अनान्तर्य नष्ट हो जायगा । अतः टाप् नहीं होता है । ]

अथवा 'युष्मद् और अस्मद् का लिङ्ग नहीं होता है ।' [ इस वचन के अनुसार तीनों लिङ्गों में एक समान रूप होने से भिन्न-भिन्न लिङ्ग मानकर होने वाले प्रत्यय आदि नहीं होते हैं । ]

( ७.२.९१ ) **विधीयन्ते, तेन मपर्यन्ताद् योऽन्यः स शेष इति, तत्रायं लोप इति टिलोपो भवति ॥**

**३३७०. मपर्यन्तस्य ॥ ९१ ॥ (३८३)**

**'मपर्यन्तस्य' इत्ययमधिकारः। यदित ऊर्ध्वमनुक्रमिष्यामः 'मपर्यन्तस्य' इत्येवं तद्वेदितव्यम्।**

**न्यास**

स्पष्टीकरोति। **मपर्यन्ताद् योऽन्यः स शेष इति** । स पुनष्टिरेव। अत्रायं शेषेलोपष्टिलोपो भवतीति लोपं प्रति शेषस्याधिकरणविवक्षायां सप्तमी। किमर्थं पुनर्लोप इत्युच्यते, यावता त्यदाद्यत्वेनैव सिद्धम्? न सिध्यति; अत्यदादित्वात्। त्यदादित्वं हि 'द्विपर्यन्तास्त्यदादयः' इति। तत्र चैतदेव शेषेलोपवचनं ज्ञापकम्। तेन भवच्छब्दस्य त्यदाद्यत्वं न भवति—भवानिति ॥ ९० ॥

**मपर्यन्तस्य ॥ युवकाम्, आवकामिति।** 'अव्ययसर्वनाम्नामकच्प्राक्टेः' इत्यकच्। अत्र यदि मपर्यन्तस्येति नोच्येत, ततोऽवधेरनुपादानात् साकच्कस्यापि स्यादित्यत आह—**साकच्कस्य सर्वस्य मा भूदिति।** असति पर्यन्तग्रहणे, अवधेरनुपादानादनेकाल्त्वाच्चादेशस्य सर्वस्यैव स्यात्। कः पुनः सर्वादेशे दोषः स्यात्? इत्यत आह—**तथा चेत्यादि। अनिष्टं रूपं स्यादिति।** अकारस्य 'योऽचि' इति यकारे कृते त्व्या, म्या इति स्यात्। मपर्यन्तग्रहणे तु सति युष्मदस्मदोर्मपर्यन्तस्य स्थानित्वेनाधिकृतत्वादस्यैव वक्ष्यमाणा आदेशा भवन्तीति न कश्चिद् दोष इति।

**पदमञ्जरी**

**मपर्यन्ताद्योऽन्यः स शेष इति। स च टिरेव। तत्रायं लोप इति।** स्थानिनोऽधिकरणत्वविवक्षया सप्तमी। किमर्थं पुनर्लोप इत्युच्यते, न त्यदाद्यत्वेनैव सिद्धम्? न सिध्यति; 'द्विपर्यन्तास्त्यदादयः' इति वचनात्। यदा चोपसर्जने युष्मदस्मदी, तदा त्यदाद्यत्वं न सिध्यति। टिलोपपक्षे तु सुतरामारम्भणीयम् ॥ ९० ॥

**मपर्यन्तस्य ॥** 'मपर्यन्तस्य' इत्यवयवस्य स्थानित्वेन निर्देशाद्युष्मदस्मदोरित्यवयवषष्ठो विज्ञायते—मः पर्यन्तोऽवधिर्यस्य स मपर्यन्तः। यद्यपि द्वयोर्द्वौ मपर्यन्तौ, तथाप्यभेदविवक्षयैकवचनम्।

**मपर्यन्तस्येति किमिति।** समुदाययोरप्यादेशे आदेशानामप्यदन्तत्वाद्दोषाभाव इति प्रश्नः। **साकच्कस्य मा भूदिति।** तन्मध्यपतितस्य तद्ग्रहणेन ग्रहणात्प्रसङ्गः। **सर्वस्य मा भूदिति।** साकच्कस्य मा भूदिति तु नोक्तम्; यस्मादकज्विधावुक्तम्—'त्वया, मया, त्वयि, मयि इत्यत्र सुबन्तस्य प्राक्टेरकच्' इति। **अनिष्टं रूपं स्यादिति।** त्व्या, म्येत्यनिष्टं रूपम्।

अथ पर्यग्रहणं किमर्थम्, मान्तस्येत्येवोच्येत, युष्मदस्मदोर्यो मान्तो भागस्तस्येत्यर्थः? तत्राह—**मान्तस्येत्येव सिद्धेऽस्मिन्निति।** अस्मिन् साकच्कस्यादेशाभावे, युवकाम्, आवकामिति रूपे वा। **अवधि-**

**भावबोधिनी**

कुछ लोग 'शेषे लोपः' में लोप से टि का लोप चाहते हैं। कैसे? आगे कहे जाने वाले आदेशों की अपेक्षा शेष, और वे आदेश मपर्यन्त = अर्थात् टि के स्थान पर किये जाते हैं। इस कारण 'मपर्यन्त से भिन्न जो है वह शेष है, इस पक्ष में यह लोप टि ( अद् ) का लोप होता है ॥ ९० ॥

'मपर्यन्त का' यह अधिकार है जो इसके आगे कहेंगे वह 'मपर्यन्त का' होता है—ऐसा समझना चाहिए। आगे कहेंगे—"युवावौ द्विवचने" (७।२।९२) उदा० युवाम्, आवाम्। [ युष्मद् + औ, अस्मद् + औ, 'ङे प्रथमयोरम्' से अम् आदेश, मपर्यन्त के 'युव' 'आव' आदेश—युव अद् + अम्, आव अद् + अम्, 'प्रथमायाश्च द्विवचने भाषायाम्" सूत्र से आकार आदेश। द्वितीया द्विवचन में 'द्वितीयायाञ्च' सूत्र से 'आकार' आदेश होता है। ]

मपर्यन्त का—इसका क्या फल है? युवकाम्, आवकाम्—इन अकच्-सहितों का आदेश न हो। [ यदि मपर्यन्त का नहीं माना जाता तो अकच्सहित के स्थान पर 'युव' 'आव' होने लगते। फलतः उक्तरूप नहीं बन पाते। ] "त्वमावेकवचने" [ से मपर्यन्त के त्व, म, आदेश होते हैं ] त्वया, मया। [ 'योऽचि' से अद् का 'य्' आदेश होता है। ]

**वक्ष्यति—"युवावौ द्विवचने' (७.२.९२)। युवाम्, आवाम्। मपर्यन्तस्येति किम्? युवकामावकामिति साकच्कस्य मा भूत्"। "त्वमावेकवचने" (७.२.९७)। त्वया। मया। मपर्यन्तस्येति किम्? साकच्कस्य सर्वस्य मा भूत्। तथा च सति त्वमयोरकारस्य 'योऽचि' (७.२.८९) इति यकारे कृतेऽनिष्टं रूपं स्यात्"।**

**मान्तस्येत्येव सिद्धे, अस्मिन् यत्परिग्रहणं कृतम्, अवधिद्योतनार्थं तत्, मान्ते मा भूत् (म० भा०)।**

**न्यासः**

अथ परि-ग्रहणं किमर्थम्, न मान्तस्येत्येवोच्येत, एवमपि ह्युच्यमानेऽन्तशब्दस्य समीपवचनत्वात् तद्गुणसंविज्ञानस्य बहुव्रीहेराश्रयणात् सिद्धमिष्टम्? इत्यत आह—**मान्तस्येत्यादि**। एतस्मिन् साकच्कस्यादेशाभावे, अथवैतस्मिन् युवकामावकामित्यादिके शब्दरूपे मान्तस्येत्येव सिद्धे यत् परि-ग्रहणं कृतं तदवधिद्योतनार्थम्। युष्मदस्मदोरवयवस्य स्थानिनोऽवधिद्योतनार्थम्। तस्मात् मान्ते युष्मच्छब्दे, अस्मच्छब्दे च वक्ष्यमाणं कार्यं भूदित्येवमर्थम्। कदा? इत्याह—**यदा ण्यन्तयोरित्यादि**। तदाचष्ट इति युष्मदस्मद्भ्यां णिचि कृते 'णाविष्ठवत् कार्यं प्रातिपदिकस्य' इतीष्ठवद्भावाट्टिलोपः, ततः क्विप्, तत्र 'णेरनिटि' इति णिचो लोपे कृते यदा मान्तत्वं

**पदमञ्जरी**

**द्योतनार्थमिति**। पर्यन्तशब्देनावधिं द्योतयामीत्यर्थः। अन्यथा मान्तस्येत्युच्यमाने युष्मदष्मदोः समानाधिकरणं विशेषणं सम्भाव्येत, प्रत्येकसम्बन्धाच्चैकवचनम्, ततश्च यत्र मान्ते युष्मदस्मदो तत्रैवादेशा न स्युः। अथापि वैयधिकरण्यमाश्रीयते, तथापि यत्र मान्तेतत्र भेदाभावादादेशा न स्युः। व्यपदेशिवद्भावोऽपि प्रातिपदिकेन प्रतिषिद्धः। पर्यन्तशब्देन त्ववधिद्योतने तदुपादानसामर्थ्याद्युष्मदस्मदवयवेऽपि युष्मदस्मच्छब्दौ वर्तेते इति सर्वत्रादेशसिद्धिः। वैयधिकरण्येन वा सम्बन्धे परिग्रहणसामर्थ्याद् 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' (शाक० प० ६५) इति प्रतिषेधाप्रवृत्तौ मान्तयोरप्यादेशसिद्धिः।

अपर आह—सति शेषे पर्यन्तशब्दः, तेन सामानाधिकरण्यासम्भवाद्वैयधिकरण्येनैवान्वयः। यदा तु मान्ते युष्मदस्मदी तदा नैवादेशा भवन्ति, तदिदमुक्तम् **[1]मान्ते मा भूद्यदा तदेति**। यदा युष्मदस्मदी मान्ते तदैव मा भूत्, तदापि वा मा भूदित्यर्थः। क्व पुनर्मान्ते युष्मदस्मदी? इत्याह—**ण्यन्तयोरिति**। युष्मानाचष्टे युष्मयति, अस्मानाचष्टे अस्मयति; णिचीष्ठवद्भावे टिलोपः, 'प्रत्ययोत्तरपदयोश्च' इत्यत्रैकवचनाधिकारात्त्वमादेशाभावः। क्विपि णिलोपः। ननु च विभक्तावादेशैर्भाव्यम्, अत्र च णिलोपस्य स्थानिवद्भावाद्व्यवधानम्? अत आह—**स्थानिवत्त्वं चेति**। णेः क्वौ लुप्तत्वान्न तल्लोपस्यात्र स्थानिवत्त्वमस्तीत्यर्थः। '**क्वौ** लुप्तं न स्थानिवत्' (जै० वृ० ४७) इति वचनम्, न तु 'क्वौ विधिं प्रति न स्थानिवत्' इत्येवमिति **भाष्यकारः**।

तत्र यो मन्यते—मान्तयोरप्यादेशा भवन्तीति, तन्मतेनोदाहरणानि। कृदन्तत्वाद्विभक्तयः, एकदेशविकृतस्यानन्यत्वाद्युष्मदस्मदाश्रयविभक्त्यादेशाः प्रकृत्यादेशाश्च त्वादयः; तत्र 'त्वाहौ सौ' इत्यादिविषये ते भवन्ति। अन्यत्रादेशविभक्तौ लोपः, अजादौ यत्वम्, हलादावात्वम्—त्वम्, युषाम्, युयम्; युषाम्, युषाम्,

**भावबोधिनी**

मपर्यन्त का—इसका क्या फल है? अकच्सहित सम्पूर्ण के स्थान पर न हो। क्योंकि वैसा अर्थात् सम्पूर्ण के स्थान पर होने पर 'त्व' 'म' के अकार का 'योऽचि' सूत्र से यकार आदेश कर देने पर अनिष्ठ रूप होने लगता। [ युष्मद्+टा = आ, द् का अत्व, पररूप होने पर युष्म + आ बनने के बाद 'त्वमावेकवचने' से यदि म् का 'त्व' 'म' होता है तब—त्व अ + आ, म अ + होता है। अ का य् होता है—त्व य् आ = त्वया। यदि 'युष्म' इतने सम्पूर्ण का 'त्व' 'म' होगा, तब 'योऽचि' से 'अ' का य् करने पर 'त्व्य्+आ = त्व्या, म् य् आ = म्या' ऐसे अनिष्ट रूप होने लगते। किन्तु मपर्यन्त के आदेश करने पर त्व अ + आ, म अ + आ में 'योऽचि' से 'अ' का य् होने से त्व य् आ, म य् आ = त्वया, मया रूप बनते हैं। अतः दोनों कार्यों की सिद्धि के लिये 'मपर्यन्त' यह अधिकार आवश्यक है। ]

---

१. मान्ते मा भूत्। कदा?' अयं पाठः काशिकायाम्।

कदा ? यदा ण्यन्तयोः क्विपि मान्तत्वं विद्यते युष्मदस्मदोः । स्थानिवत्त्वं च णेरत्र क्वौ लुप्तत्वान्न विद्यते ॥

### ३३७१. युवावौ द्विवचने ॥ ९२ ॥ (३८६)

**न्यासः**

विद्यते युस्मदस्मदोस्तदा मा भूदिति । असत्यपि परिग्रहणे मान्तस्येत्यनेन युस्मदस्मदोरित्यवयवावस्थानं लभ्यते, ततश्च यत्र मान्ते युष्मदस्मदी, तत्रैव वक्ष्यमाणा आदेशा भवेयुः । परि-ग्रहणे त्ववधिद्योतनार्थे सति नियोगतो वर्ज्यमानेन भवितव्यम्, न हि तेन विनावधिः सम्भवति । तत्र समुदायावयवस्थानी निर्दिश्यते । यत्राच्छब्दो वर्जनीयोऽस्ति तत्रैव भविष्यति, न तु मान्तयोर्युष्मदस्मदोरेव । ननु च विभक्तिपरयोर्युष्मद-स्मदोरादेशा विधास्यन्ते, न च मान्तावस्थायां विभक्तिपरतास्ति; णिलोपस्य स्थानिवद्भावात्, तत् किं मान्तस्य निवृत्त्यर्थेन परि-ग्रहणेन ? इत्यत आह—**स्थानिवत्त्वं चेत्यादि** । 'क्वौ लुप्तं न स्थानिवत्' इति वचनात् स्थानिवद्भावोऽत्र नास्ति । तस्माद् विद्यत एव विभक्तिपरत्वमित्यभिप्रायः ॥ ९१ ॥

**युवावौ द्विवचने ॥ द्विवचन इति ।** यदीदं पारिभाषिकस्य द्विवचनस्य ग्रहणं स्यात्, तदा तस्मिन् परत एव तावादेशौ भवेताम् । तथा च यदा समासे द्व्यर्थे युष्मदस्मदो भवतः, समासार्थस्य त्वन्यसंख्यत्वा-

**पदमञ्जरी**

युषान्; युष्या, युषाभ्याम्, युषाभिः; तुभ्यं युषाभ्यां युषभ्यम्; युषत्, युषाभ्याम्, युषत्; तव, युष्योः, युषाकम्; युष्यि, युष्योः, युषासु । एवमस्मदोऽपि द्रष्टव्यम् । मपर्यन्तापेक्षया तु शेष आश्रीयमाणे, मात्परस्याभावाल्लो-पाभावात् युष्मभ्यम्, युष्मदित्यादि भवति ।

यदा तु त्वामाचष्टे, मामाचष्ट इति विगृह्य क्विप् क्रियते, तदा 'प्रत्ययोत्तरपदयोश्च' इति त्वमयोः कृतयोः 'प्रकृत्यैकाच्' इति प्रकृतिभावादसति टिलोपे 'अत उपधायाः' इति वृद्धिः । यदि निष्ठितमङ्गं ततो वृद्ध्यभावः । त्वदस् त्वादस्, मदस् मादस् इति स्थिते मपर्यन्ताभावात् 'त्वाहौ सौ' इत्यादेरप्रवृत्तौ वृद्धिपक्षे त्वामिति भवति । पक्षान्तरे तु त्वमिति । द्विवचने तु त्वाम्, जसि त्वम् । द्वितीयादिषु तु त्वाम्, त्वाम्, त्वान्; त्वया, त्वाभ्याम्, त्वाभिः; त्वम्, त्वाभ्याम्, त्वभ्यम्; त्वत्, त्वाभ्याम्, त्वत्; त्व, त्वयोः, त्वाकम्; त्वयि, त्वयोः, त्वासु । एवमस्मदोऽपि ।

यदा तु द्विवचनान्ताण्णिच् क्रियते, तदापि युष्मयत्यस्मयतीति णिचि भवति, विभक्त्यभावाद्यु-वावयोरभावः । एकार्थत्वाभावात् 'प्रत्ययोत्तरपदयोश्च' इत्यस्याप्यभावः । विभक्तौ तु युवावादेशौ । 'त्वाहौ सौ' इत्यादिविषये तु त एव भवन्ति । ये तु मान्तयोरादेशौ नेच्छन्ति तेषां सौ, शेषेलोपपक्षे—युषम्, असमिति भवति । पक्षान्तरे तु युष्मम्, अस्ममिति । एवमन्यत्रापि द्रष्टव्यम् । गहनोऽयं प्रक्रियातर्क इत्युपरम्यते ॥ ९१ ॥

**युवावौ द्विवचने ॥ द्विवचन इत्यर्थग्रहणमिति ।** वक्तीति वचनम्, 'कृत्यल्युटो बहुलम्' इति कर्त्तरि ल्युट्, द्वयोरर्थयोर्वचने । प्रथमाद्विवचनान्तं चैतत्, तदाह—**द्विवचने युष्मदस्मदी इति** । के पुनस्ते ? इत्याह—

**भावबोधिनी**

[ दो फल होने के कारण दो बार प्रश्न करके फल दिखाए गये हैं । ]

'मान्त का' इसी से सिद्ध रहने पर इस सूत्र में जो 'परि' का ग्रहण किया गया है वह अवधि के द्योतन के लिए है, मान्त का न होने लगे । कब ? जब णिजन्त युष्मद् अस्मद् का क्विप् परे मान्तत्व हो जाता है । ['तदा-चष्टे' इस वार्तिक से णिच् करने पर 'णाविष्ठवत् कार्यं प्रातिपदिकस्य' इस वचन से इष्ठवद्भाव करने पर टिलोप हो जाने से युष्म् + इ, अस्म् + इ । यहाँ युष्मद् अस्मद् का मान्तत्व है तब ये आदेश न होने लगें । परि का ग्रहण करने से किसी से अवधि का निर्धारण करना होता है । अतः 'अ' को छोड़कर ही मपर्यन्त होता है । वहीं आदेश होते हैं । ] यहाँ 'क्वौ लुप्तं न स्थानिवत्' इस वचन से क्विप् परे लुप्त होने से णि का स्थानिवद्भाव नहीं होता है । [ इसलिए विभक्ति परे मिलती है । आदेश की प्रसक्तिवारण के लिए 'परि'ग्रहण आवश्यक है ] ॥ ९१ ॥

'द्विवचने' यह अर्थ का ग्रहण है । द्विवचन में जो युष्मद् अस्मद् = द्वि—अर्थ के अभिधान के विषय में हैं, उनके मपर्यन्त के स्थान पर 'युव' और 'आव' आदेश होते हैं । उदा० युवाम्, आवाम् । युवाभ्याम्, आवाभ्याम् ।

'द्विवचने' इत्यर्थग्रहणम्। **द्विवचने ये युष्मदस्मदी द्व्यर्थाभिधानविषये तयोर्मपर्यन्तस्य स्थाने युव, आव—इत्येतावादेशौ भवतः। युवाम्, आवाम्। युवाभ्याम्, आवाभ्याम्। युवयोः, आवयोः।**

**यदा समासे द्व्यर्थे युष्मदस्मदी भवतः, समासार्थस्यान्यसंख्यत्वादेकवचनं बहुवचनं वा भवति, तदापि द्व्यर्थयोर्युष्मदस्मदोर्युवावौ भवतः, यदि 'त्वाहौ सौ' (७.२.९४)—इत्येवमादिना आदेशान्तरेण न बाध्येते। अतिक्रान्तं युवाम् अतियुवाम्, अत्यावाम्। अतिक्रान्तान् युवाम् अतियुवान्, अत्यावान्। अतिक्रान्तेन**

**न्यासः**

देकवचनं बहुवचनं वा समासाद् भवति, तदा न स्यातामिति; यदा युष्मदस्मदी एकत्वे वा बहुत्वे वा वर्तेते समासार्थस्य द्वित्वे सति समासाद् द्विवचनं भवति, तदा युवावौ स्यातामेव, एतच्चानिष्टम्; अर्थग्रहणे सतीष्टं सिध्यति, न चानिष्टं किञ्चिदापद्यते ? इत्यालोच्याह—**द्विवचन इत्यर्थग्रहणमिति**। द्वयोरर्थयोर्वचनम् = उक्तिः, द्विवचनम्। **द्विवचने ये युष्मदस्मदी इति**। 'द्विवचने' इति विषयसप्तमीयम्। तदेव विषयसप्तमीत्वमस्या व्यक्तीकर्तुमाह—**द्व्यर्थाभिधानविषय इति**। द्वयोरर्थयोरभिधानं द्व्यर्थाभिधानम्, तद्विषये युष्मदस्मदी ते तथोक्ते। **तयोरित्यादि**। तयोर्युष्मदस्मदोर्मपर्यन्तावयवः स्थानी, तस्य युवावौ भवतः।

**यदेत्यादिना**र्थग्रहणे सति यदिष्टं सिध्यति तद् दर्शयति। यदि तर्हि समासादेकवचनबहुवचनयोरुत्पन्नयोर्द्व्यर्थाभिधानविषयत्वाद्युष्मदस्मदोर्युवावौ भवतः, एवं सति 'त्वाहौ सौ', यूयवयौ जसि', तुभ्यमह्यौ ङयि', 'तवममौ ङसि'—इत्येषामपि विषये स्याताम् ? इत्यत आह—**यदि त्वाहौ सावित्यादि। अतियुवामत्यावामिति**। 'अत्यादयः क्रान्ताद्यर्थे' इति प्रादिसमासः। तत्र योऽसौ युष्मदस्मदर्थश्चातिक्रान्तः स एकसंख्यावच्छिन्नोऽर्थं इति तत्र यद्यप्येकवचनं भवति, तथापि द्व्यर्थाभिधानविषयत्वाद् युष्मदस्मदोयुवावौ भवत एव। अत्र हि 'द्वितीयायाञ्च' इत्यात्वम्। **अतियुवान्, अत्यावानिति**। 'शसो नः' इति नत्वम्। **अतियुवया, अत्यावयेति**। 'योऽचि' इति यत्वम्। **अतियुवाभिरत्यावाभिरिति**। 'युष्मदस्मदोरनादेशे' इत्यात्वम्। **अतियुवभ्यमत्यावभ्यमिति**। 'भ्यसोभ्यम्'। **अतियुवदत्यावदिति**। 'एकवचनस्य च' इति ङसेरदादेशः। बहुवचनस्य तु

**पदमञ्जरी**

**द्व्यर्थाभिधानविषये इति**। एतच्च वचनग्रहणाल्लभ्यते। कथम् ? 'द्वित्व इति वक्तव्यम्', विभक्तावित्येव, द्वित्वे या विभक्तिस्तस्यामित्यर्थः।

अर्थग्रहणे सति यदिष्टं सम्पद्यते, तद् दर्शयति—**यदेति**। परिभाषिकस्य द्विवचनस्य ग्रहणे तस्यास्मिन्विषयेऽभावाद्युवावादेशौ न स्यातामित्यव्याप्तिः स्यादिति भावः। **आदेशान्तरेण न बाध्येते इति**। बाधस्तु परत्वादित्यत्रैव वक्ष्यते। अतिक्रान्तं युवामिति सौ जसि चादेशान्तरेण बाधः। द्विवचनस्य तु पारिभाषिकस्य ग्रहणेऽपि सिद्धिरिति प्रथमाया अतिक्रमः। उत्तरत्रापि द्विवचनस्यातिक्रमेऽयमेव हेतुः। तत्र चानादेशे विभक्तौ हलादौ 'द्वितीयायां च' आत्वम्, अजादौ यत्वम्, शेषे लोपः, 'ङेप्रथमयोरम्' इत्यादयो विभक्त्यादेशाश्च यथायथं द्रष्टव्याः।

**भावबोधिनी**

युवयो, आवयोः। [ युष्मद् + औ, द् का अत्व, पररूप, 'औ' का अम्, युष्म + अम्, मपर्यन्त का युव आदेश युव अ + अम्, आकार आदेश —युवाम्। इसी प्रकार अस्म + अम् = आव अ + अम्, आकार आदेश—आवाम्। ] इसी प्रकार अन्यत्र भी समझना चाहिए। ]

[ द्विवचन में द्व्यर्थ मानने पर जो इष्टसिद्धि होती है वह लिख रहे हैं- ] जब समास में द्व्यर्थ में युष्मद् और अस्मद् होते हैं, समासार्थ अन्य संख्या वाला होने से एकवचन अथवा बहुवचन होते हैं तब भी द्व्यर्थ में वर्तमान युष्मद् तथा अष्मद् के युव तथा आव आदेश होते हैं, यदि 'त्वाहौ सौ' इत्यादि किसी अन्य आदेश के द्वारा इनका बाध न होता हो तो। उदा० (१) अतिक्रान्तं युवाम्—अतियुवाम्। अतिक्रान्तम् आवाम्—अत्यावाम्। (२) अतिक्रान्तान् युवाम्–अतियुवान्। अतिक्रान्तान् आवाम्–अत्यावान्। (३) अतिक्रान्तेन युवाम्–अतियुवया, अतिक्रान्तेन आवाम्–अत्यावया। (४) अतिक्रान्तैः युवाम्–अतियुवाभिः, अतिक्रान्तैः आवाम्–अत्यावाभिः। (५) अतिक्रान्तेभ्य।

**युवाम् अतियुवया, अत्यावया। अतिक्रान्तैर्युवाम् अतियुवाभिः, अत्यावाभिः। अतिक्रान्तेभ्यो युवाम् अतियुवभ्यम्, अत्यावभ्यम्। अतिक्रान्ताद् युवाम् अतियुवत्, अत्यावत्। अतिक्रान्तेभ्यो युवाम् अतियुवत्, अत्यावत्। अतिक्रान्तानां युवाम् अतियुवाकम्, अत्यावाकम्। अतिक्रान्ते युवाम् अतियुवयि, अत्यावयि। अतिक्रान्तेषु युवाम् अतियुवासु, अत्यावासु।**

**त्वहादीनां तु विषये परत्वात्त एव भवन्ति—अतिक्रान्तो युवाम् अतित्वम्, अत्यहम्। अतिक्रान्ता युवाम् अतियूयम्, अतिवयम्। अतिक्रान्ताय युवाम् अतितुभ्यम्, अतिमह्यम्। अतिक्रान्तस्य युवाम् अतितव, अतिमम।**

**यदा तु युष्मदस्मदी एकत्वबहुत्वयोर्वर्तेते, समासार्थस्तु द्वित्वे, यदा युवावौ न भवतः। अतिक्रान्तौ त्वाम् अतित्वाम्, अतिमाम्। अतिक्रान्तौ युष्मान् अतियुष्मान्, अत्यस्मान्। एवमुन्नेयम्॥**

**न्यासः**

'पञ्चम्या अत्' इत्यनेन। **अतियुवाकम्, अत्यावाकमिति।** 'साम आकम्'। **अतियुवयि, अत्यावयीति।** पूर्ववद्यत्वम्। **अतियुवासु, अत्यावास्विति।** पूर्ववदात्वम्।

**त्वाहादीनां विषय** इत्यादिना यदुक्तम्—'यदि त्वाहौ सावित्यादिना देशान्तरेण न बाध्येते' इति, तद् विस्पष्टीकरोति।

**यदा त्वित्यादिना** अर्थग्रहणे सति यदिष्टमुपपद्यते तद्दर्शति **अतित्वामतिमामिति।** अत्र यौ युष्मदस्मर्थावतिक्रान्तौ तौ द्विसंख्यौ समासार्थाविति समासाद् यद्यपि द्विवचनं भवति, तथापि युष्मदस्मदोर्द्व्यर्थता नास्तीति युवावौ न भवतः। त्वमावेव भवतः। 'प्रथमायाश्च द्विवचने भाषायाम्' इत्यात्वम्। अथ वा—द्वितीयाद्विवचनमेतद्, ततः 'द्वितोयायाञ्च' इति। **एवमुन्नेयमिति।** वचनान्तरेष्वप्यादेशाभावं दर्शयति।

**पदमञ्जरी**

**परत्वादिति।** त्वाहादीनामवकाशः यदा बह्वर्थे युष्मदस्मदी—अतिक्रान्तो युष्मानतित्वम्, अत्यहम्, युवावयोरकाशः—युवाम्, आवाम् द्व्यर्थत्वे सति; सावुभयप्रसङ्गे विप्रतिषेधः।

**यदा त्वित्यादि।** पारिभाषिकस्य ग्रहणे तत्रापि प्रसङ्ग इत्यतिव्याप्तिः स्यादिति भावः। **अतिक्रान्तौ त्वाम्, अतित्वामिति।** 'प्रथमायाश्च द्विवचने भाषायाम्' इत्यात्वम्। यदात्र पारिभाषिकस्य ग्रहणम्, तदा

**भावबोधिनी**

युवाम्—अतियुवभ्यम्, अतिक्रान्तेभ्यः आवाम्—अत्यावभ्यम्। (६) अतिक्रान्ताद् युवाम्—अतियुवत्, अतिक्रान्ताद् आवाम् अत्यावत्। (७) अतिक्रान्तेभ्यो युवाम्—अतियुवत्, अतिक्रान्तेभ्यः आवाम्—अत्यावत्। (८) अतिक्रान्तानां युवाम्—अतियुवाकम्, अतिक्रान्तानाम् आवाम्—अत्यावाकम्। (९) अतिक्रान्ते युवाम्—अतियुवयि, अतिक्रान्ते आवाम्—अत्यावयि। (१०) अतिक्रान्तेषु युवाम्—अतियुवासु, अतिक्रान्तेषु आवाम्—अत्यावसु।

[ उपर्युक्त प्रत्ययों में 'युव' तथा 'आव' आदेश होते हैं किन्तु ] त्व, अह, आदि [ अर्थात् 'त्वाहौ सौ', "यूयवयौ जसि', 'तुभ्यमह्यौ ङयि' 'तवममौ ङसि' ] के विषय में तो परवर्त्ती ( प्रस्तुत सूत्र से बाद वाले) होने के कारण वे ( 'त्व, अह, यूय, वय, तुभ्य, मह्य, तव, मम ) आदेश ही होते हैं—(१) अतिक्रान्तः युवाम्—अतित्वम्, अतिक्रान्तः आवाम्—अत्याहम्। (२) अतिक्रान्ता युवाम्—अतियूयम्, अतिक्रान्ता आवाम्—अतिवयम्। (३) अतिक्रान्ताय युवाम्—अतितुभ्यम्, अतिक्रान्ताय आवाम्—अतिमह्यम्। (४) अतिक्रान्तस्य युवाम्—अतितव, अतिक्रान्तस्य आवाम्—अतिमम।

किन्तु जब युष्मद् और अस्मद् एकत्व और बहुत्व अर्थों में रहते हैं किन्तु समासार्थ द्वित्व में रहता है तब 'युव', 'आव' नहीं होते हैं। उदा० (१) अतिक्रान्तौ त्वाम्—अतित्वाम्। अतिक्रान्तौ माम्—अतिमाम्। (२) अतिक्रान्तौ युष्मान्—अतियुष्मान्, अतिक्रान्तौ अस्मान्—अत्यस्मान्। इसी प्रकार अन्य रूप भी कल्पित कर लेना चाहिए। [ इनसे बचे रूप न्यास में देखें। ]

**३३७२. यूयवयौ जसि ।। ९३ ।। (३८८)**

**युष्मदस्मदोर्मपर्यन्तस्य जसि परतो यूय, वय—इत्येतावादेशौ भवतः । यूयम्, वयम् । परमयूयम्, परमवयम् । अतियूयम्, अतिवयम् । तदन्तविधिरत्र भवति; 'अङ्गाधिकारे तस्य**

**न्यासः**

युष्मानतिक्रान्तौ पश्य अतियुष्मान्, अत्यस्मान् । अतिक्रान्ताभ्यां त्वां कृतमतित्वाभ्याम्, अतिमाभ्याम् । अतिक्रान्ताभ्यां युष्मान् कृतमतियुष्माभ्यां कृतम्, अत्यस्माभ्यां कृतम् । त्वामतिक्रान्ताभ्यां देहि अतित्वाभ्यां देहि, अतिमाभ्यां देहि । अतिक्रान्ताभ्यां युष्मान् देहि अतियुष्मामत्यस्माभ्यां देहि । अतिक्रान्ताभ्यां त्वामागतोऽतित्वाभ्यामागतः, अतिमाभ्यामागतः, अतिक्रान्ताभ्यां युष्मानागतोऽतियुष्माभ्यामागतः, अत्यस्माभ्यामागतः । अतिक्रान्तयोस्त्वां स्वमतित्वयोः स्वम् । अतिमयोः स्वम् । युष्मानतिक्रान्तयोः स्वमतियुष्मयोः स्वम्, अत्यस्मयोः स्वम् । अतिक्रान्तयोस्त्वां निधेहि अतित्वयोर्निधेहि, अतिमयोर्निधेहि । अतिक्रान्तयोर्युष्मान्निधेहि अतियुष्मयोर्निधेहि, अत्यष्मयोर्निधेहि ।। ९२ ।।

**यूयवयौ जसि ।। परमयूयमिति । 'अङ्गाधिकारे तस्य च तदुत्तरपदस्य च' इति वचनादुत्तर-**

**पदमञ्जरी**

'त्वमावेकवचने' इत्यत्रापि पारिभाषिकस्यैकवचनस्य ग्रहणमिति मत्वेदमुदाहृतम् । अथापि तत्राप्यर्थग्रहणम्, तथापि बह्वर्थेऽतिप्रसङ्ग इत्याह—**अतिक्रान्तौ युष्मानिति । पूर्ववदात्वम् । एवं ज्ञेयमिति ।** अतियुष्माम्, अतियुष्माभ्याम्, अतियुष्मयोः । एवमस्मदः ।। ९२ ।।

**यूयवयौ जसि ।। परमयूयमिति । अत्र पारम्ययोगो यथासम्भवं द्रष्टव्यः । तदन्तविधिरत्र भवतीति ।**

**भावबोधिनी**

**विमर्श**—निष्कर्ष यह है कि युष्मद् और अस्मद् ये शब्द द्वित्वपरक हों तभी 'युव' 'आव' आदेश होते हैं । अत एव युवाम् अतिक्रान्तम्–अतियुवाम्–इसमें युष्मद् द्वित्वार्थपरक ही है, समास एकत्वार्थपरक । अतः 'युव' आदेश होता है । इसके विपरीत 'त्वाम् अतिक्रान्तौ' यहाँ युष्मद् एकत्वार्थपरक है, समास द्वित्वार्थपरक है, 'युव' आदेश नहीं होता है ।

चूँकि 'यूयवयौ जसि' 'त्वाहौ सौ' 'तुभ्यमह्यौ ङयि' 'तवममौ ङसि' (७।२।९३–९६) ये सूत्र परवर्त्ती हैं । अतः 'युव' 'आव' का अपवाद होकर बाधित कर लेते हैं । इसके विषय में भी 'युव', 'आव' नहीं होते हैं । इस सन्दर्भ में सिद्धान्तकौमुदी में उपस्थापित कारिकायें उपयोगी हैं—

समस्यमाने द्व्येकत्ववाचिनी युष्मदस्मदी ।
समासार्थोऽन्यसंख्यश्चेत् स्तो युवावौ त्वमावपि ।। १ ।।
सु-जस्-ङे-ङस्सु परत आदेशाः स्युः सदैव ते ।
त्वाहौ यूयवयौ तुभ्यमह्यौ तवममावपि ।। २ ।।
एते परत्वाद् बाधन्ते युवावौ विषये स्वके ।
त्वमावपि प्रबाधन्ते पूर्वविप्रतिषेधतः ।। ३ ।।
द्व्येकसंख्यः समासार्थो बह्वर्थे युष्मदस्मदी ।
तयोरद्व्येकतार्थत्वान्न युवावौ त्वमौ न च ।। ४ ।।

ऐसे प्रयोग अतिसीमित है । अतः अनावश्यक व्याख्यान नहीं किया गया है ।। ९२ ।।

जस् परे रहते युष्मद् और अस्मद् के मपर्यन्त भाग के स्थान पर 'यूय' और 'वय' ये आदेश हो जाते हैं । उदा० यूयम्, वयम् । [ युष्मद् + जस्, अस्मद् + जस्, "ङे प्रथमयोरम्" से जस का 'अम्' आदेश, प्रस्तुत सूत्र से 'मपर्यन्त = युष्म्, अस्म् का यूय और वय आदेश, 'शेषे लोपः' से टिलोप । ]

परमयूयम्, परमवयम् । अतियूयम् अतिवयम् । इस ( आदेश ) में तदन्तविधि होती है—'अङ्ग' इसके

च' तदुत्तरपदस्य च'' ( सीर० प० ७७ ) इति ॥

**३३७३. त्वाहौ सौ ॥ ९४ ॥ (३८४)**

**युष्मदस्मदोर्मपर्यन्तस्य सौ परे त्व, अह—इत्येतावादेशौ भवतः । त्वम्, अहम् । परमत्वम्, परमाहम् । अतित्वम्, अत्यहम् ॥**

**३३७४. तुभ्यमह्यौ ङयि ॥ ९५ ॥ (३९४)**

**युष्मदस्मदोर्मपर्यन्तस्य तुभ्य, मह्य—इत्येतावादेशौ भवतो ङयि परतः । तुभ्यम्, मह्यम् । परमतुभ्यम्, परममह्यम् । अतितुभ्यम्, अतिमह्यम् ॥**

**३३७५. तवममौ ङसि ॥ ९६ ॥ (३९८)**

**युष्मदस्मदोर्मपर्यन्तस्य तव, मम—इत्येतावादेशौ भवतो ङसि परतः । तव, मम । परमतव, परममम । अतितव, अतिमम ॥**

**न्यासः**

पदयोरपि भवतः । अथ वा—'जसि' इति परसप्तमीयम्, तेन समस्तयोरपि जसि परत इति भवतः । परमयूयमित्यादावपि युष्मदस्मद्भ्यां जसः परत्वमस्त्येव ॥ ९३ ॥

**त्वाहौ सौ ।** 'त्वमावेकवचने' इति वक्ष्यति, तस्यायमपवादः । अथ त्वग्रहणं किमर्थम्, न 'अहः सौ' इत्येवोच्येत, त्वादेशो हि 'त्वमावेकवचने' इत्येवं भविष्यति ? अशक्यमेवं वक्तुम्; असति त्वग्रहणे युष्मदोऽप्यहादेशः स्यात् । अथवा—अत्र 'अस्मदोऽहः सौ' इत्येवोच्येत ? एवमपि गौरवं स्यात् । तस्माद् यथान्यासमेवास्तु ॥ ९४ ॥

**तुभ्यमह्यौ ङयि** ॥ ९५ ॥

**तवममौ ङसि ॥** अनन्तरं वक्ष्यमाणयोस्त्वमयोः प्राप्तयोरिदं वचनम् ॥ ९६ ॥

**पदमञ्जरी**

'अङ्गाधिकारे तस्य च तदुत्तरपदस्य च' ( यु० प० ८५ ) इति वचनात् । यदापि तदन्तस्य, तदापि न सर्वस्य; युष्मदस्मदोर्मपर्यन्तस्येत्यधिकारात् ॥ ९३ ॥

**त्वाहौ सौ ॥ त्वमिति ।** यद्यप्यत्र 'त्वमावेकवचने' इति त्वादेशः सिद्धः, तथाप्यहादेशस्तावद्विधेयः ? तत्र च 'अहः सौ' इत्युच्यमाने युष्मदोऽपि प्रसङ्गः, 'अस्मदोहऽहः सौ' इत्युच्यमाने गौरवं स्यात् तस्मादत्रापि त्वादेश एव विधेयः । किञ्च-अतिक्रान्तो युवां युष्मान्वाऽतित्वमित्यत्र त्वादेशस्य शङ्कापि नास्ति ॥ ९४-९५-९६ ॥

**भावबोधिनी**

अधिकार में उसका और उसके उत्तर पद वाले का कार्य होता है । [ अतः समास में युष्मद् के उत्तरपद होने पर भी ये दोनों आदेश होते हैं । ] ॥ ९३ ॥

'सु' परे रहने पर युष्मद् और अस्मद् के मपर्यन्त के स्थान पर 'त्व' और 'अह' ये आदेश क्रमशः होते हैं । उदा० त्वम्, अहम्, परत्वम्, परमाहम् । अतित्वम्, अत्यहम् । [ युष्मद् + सु, सु का अम्, युष्म् का त्व आदेश 'शेषे लोपः' टि लोप, 'अतो गुणे' से पररूप । ] तदन्तविधि हो जाने से समास में भी ये आदेश होते हैं । ] ॥ ९४ ॥

ङे विभक्ति परे रहते युष्मद् तथा अस्मद् के मपर्यन्त भाग के स्थान पर क्रमशः 'तुभ्य' 'मह्य' ये आदेश हो जाते हैं । उदा० तुभ्यम्, मह्यम् । परमतुभ्यम्, परममह्यम् । अतितुभ्यम्, अतिमह्यम् । [ युष्मद् + ङे, 'ङे प्रथमयोरम्' सूत्र से 'ङे' का अम् आदेश, मपर्यन्त को तुभ्य, आदेश टिलोप । तदन्तविधि यहाँ भी होती है] ॥ ९५ ॥

ङस् परे रहते युष्मद्, तथा अस्मद् के मपर्यन्त भाग के स्थान पर 'तव' 'मम' ये आदेश होते हैं । उदा० तव, मम, परमतव, परममम । अतितव, अतिमम । [ युष्मद् + ङस्, ''युष्मदस्मद्भ्यां ङसोऽश्'' सूत्र से 'अश् = अ' आदेश, मपर्यन्त का 'तव' आदेश, टिलोप, पररूप—तव । तदन्तविधि होने से समास में भी ये आदेश होते हैं । ] ॥ ९६ ॥

---

१-१. 'च ग्रहणं भवति'—इति मुद्रितकाशिकापाठः ।

## ३३७६. त्वमावेकवचने ॥ ९७ ॥ (६८९)

**'एकवचने' इत्यर्थनिर्देशः । एकवचने ये युष्मदस्मदी एकार्थाभिधानविषये तयोर्मपर्यन्तस्य स्थाने त्व, म—इत्येतावादेशौ भवतः । त्वाम्, माम् । त्वया, मया । त्वत्, मत् । त्वयि, मयि ।**

**यदा समासे एकार्थे युष्मदस्मदी भवतः, समासार्थस्य त्वन्यसंख्यत्वाद् द्विवचनं बहुवचनं वा भवति, तदापि त्वमावादेशौ भवतः । आदेशान्तराणां तु 'त्वाहौ सौ' (७.२.९४)—इत्येवमादीनां विषये पूर्वविप्रतिषेधेन ते एवेष्यन्ते । अतिक्रान्तस्त्वामतित्वम्, अत्यहम् । अतिक्रान्तौ त्वाम् अतित्वाम्, अतिमाम् ।**

न्यासः

**त्वमावेकवचने ॥ एकवचन इत्यर्थनिर्देश इति ।** एतेनार्थस्येदं ग्रहणम्, न तु परिभाषिकस्यैकवचनस्येति दर्शयति । पारिभाषिकस्य तु ग्रहणे यो दोषः स 'युवावौ द्विवचने' इत्यत्र उक्त इत्यभिप्रायः । अर्थग्रहणं त्विह वचनग्रहणाल्लभ्यते । यदीह प्रत्ययग्रहणमभिमतं स्याद् 'एकत्वे' इत्येवं ब्रूयात् । विभक्ताविति वर्त्तते, तत्रैवमभिसम्बन्धः करिष्यते—एकत्वे या विभक्तिरिति । अथ वा—एतदिति न ब्रूयात्; एकवचने हि 'प्रत्ययोत्तरपदयोश्च' इत्यनेनैवादेशयोः सिद्धत्वात् । **त्वाम्, मामिति ।** 'द्वितीयायाञ्च' इत्यात्त्वम् ।

**यदा समास एकार्थे इत्यादिनार्थग्रहणे** सति यदिष्टं सिध्यति तद्दर्शयति । यदापि समासात् संख्यान्तरयुक्ताद् द्विवचनं बहुवचनं वा भवति, तदाप्येकार्थयोर्युष्मदस्मदोरेतावादेशौ भवतः । एवं सति 'त्वाहौ सौ', 'तुभ्यमह्यौ ङयि', 'तवममौ ङसि'—इत्येषामप्यादेशान्तराणां विषये स्यातामित्यत आह—**आदेशान्तराणां त्वित्यादि ।** पूर्वविप्रतिषेधस्येति वचनं परस्य विप्रतिषेधस्यासम्भवात् । असम्भवस्त्वनयोरेव परत्वात् । पूर्वविप्रतिषेधस्तु परशब्दस्येष्टवाचित्वाल्लभ्यते । तत्र 'त्वाहौ सौ' इत्यस्यावकाशो यत्रैकार्थे युष्मदस्मदी न भवतः—अतिक्रान्तो युष्मानित्यतित्वमत्यहमिति, त्वमावेकवचनस्यावकाशो यत्रैकार्थाभ्यां विभक्त्यन्तरं भवति—त्वाम्, मामिति; अतिक्रान्तस्त्वामतित्वमतिक्रान्तो मामत्यहमित्यत्रोभयप्रसङ्गे प्राप्ते त्वाहौ सौ भवतः पूर्वविप्रतिषेधेन । अनया दिशाऽऽदेशान्तरेषु प्राप्तेषु पूर्वं विप्रतिषेधो वक्तव्यः । **अतिक्रान्तौ त्वामतित्वाम् अति-**

पदमञ्जरी

**त्वमावेकवचने ॥ एकवचन इत्यर्थनिर्देश इत्यादि ।** एतच्च 'द्विवचन इत्यर्थनिर्देशः' इत्येतदनुसारेण योज्यम् ।

अर्थग्रहणे यदिष्टं सम्पद्यते तद्दर्शयति—**तदेति ।** परिभाषिकस्य त्वेकवचनस्य ग्रहणेऽत्र न स्यादित्यव्याप्तिः । **अतिक्रान्तौ त्वामिति । तदापि त्वमौ भवत** इत्यस्योदाहरणम् । **अतित्वामिति ।** पूर्ववदात्वम् । **एवमन्यदुदाहर्त्तव्यमिति ।** एतद् अतित्वम्, अत्यहमित्यनेनापि सम्बध्यते । अतियूयम्, अतितुभ्यम्, अतितव । एवमस्मदः । **अतित्वामतिमामित्यनेन तु सम्बन्धः स्पष्ट एव ।** अतित्वां पश्य अतित्वान्, अतित्वाभ्याम्, अतित्वाभिः; अतित्वभ्यम् । अतित्वत् । अतित्वयोः, अतित्वाकम् । अतित्वयि, अतित्वयोः, अतित्वासु । एवमस्मदः ।

भावबोधिनी

'एकवचने' यह अर्थ का निर्देश है । एकवचन में जो युष्मद्, अस्मद्=एक अर्थ के अभिधान के विषय में, उनके मपर्यन्त के स्थान पर 'त्व' 'म' ये आदेश होते हैं । उदा० त्वाम्, माम । त्वया, मया । त्वत्, मत् । त्वयि, मयि । [ युष्मद्+अम्, मपर्यन्त का त्व आदेश "द्वितीयायाञ्च" सूत्र से आत्व–त्वाम् । इसी प्रकार अन्य में भी ये आदेश होने चाहिए । ]

जब समास में एकत्व अर्थ में युष्मद् और अस्मद् होते हैं, समास का अर्थ अन्य संख्यावाला होने से द्विवचन और बहुवचन होता है तब भी 'त्व' 'म' आदेश होते हैं । परन्तु 'त्वाहौ सौ' आदि प्रकार के दूसरे आदेशों में तो पूर्वविप्रतिषेध से वे ( त्व, अह आदि ) आदेश इष्ट हैं । उदा० अतिक्रान्तः त्वाम् अतित्वम्, अतिक्रान्तः माम्-अत्यहम् । अतिक्रान्तौ त्वाम्–अतित्वाम्, अतिक्रान्तौ माम्–अतिमाम् । अतिक्रान्तान् त्वाम्–अतित्वान्, अति-

अतिक्रान्तान् त्वाम् अतित्वान्, अतिमान्। अतिक्रान्ताभ्यां त्वाम् अतित्वाभ्याम्, अतिमाभ्याम्। अतिक्रान्तैस्त्वाम् अतित्वाभिः, अतिमाभिरिति। एवमाद्युदाहर्तव्यम् ॥

## ३३७७. प्रत्ययोत्तरपदयोश्च ॥ ९८ ॥ (१३७३)

'एकवचने' इत्यनुवर्तते। प्रत्यये उत्तरपदे च परत एकवचने वर्तमानयोर्युष्मदस्मदोर्मपर्यन्तस्य त्व, म—इत्येतावादेशौ भवतः। तवायं त्वदीयः, मदीयः। अतिशयेन त्वं त्वत्तरः, मत्तरः। त्वामिच्छति-त्वद्यति, मद्यति। त्वमिवाचरति त्वद्यते, मद्यते।

### न्यासः

मामिति। अत्र यद्यपि समासाद् द्विवचनं भवति, तथाप्येकार्थे युष्मदस्मदी इति भवत एव त्वमादेशौ। पारिभाषिकस्य ग्रहणे त्वेकवचनस्य न स्याताम्; तस्येहाविद्यमानत्वात्। एवमाद्युदाहर्त्तव्यमिति। अतिक्रान्तौ त्वां पश्यातित्वाम्, अतिमां पश्य। अतिक्रान्तांस्त्वां पश्यातित्वानतिमान् पश्य। अतिक्रान्ताभ्यां त्वाम् अतित्वाभ्यामतिमाभ्याम्। अतिक्रान्तैस्त्वामतित्वाभिरतिमाभिः कृतम्। अतिक्रान्ताभ्यां त्वां देह्यतित्वाभ्यामतिमाभ्यां देहि। अतिक्रान्तेभ्यस्त्वां देह्यतित्वभ्यमतिमभ्यं देहि। अतिक्रान्ताभ्यां त्वामागतोऽतित्वाभ्यामतिमाभ्यामागतः। अतिक्रान्तेभ्यस्त्वामागतोऽतित्वदागतोऽतिमदागतः। अतिक्रान्तयोस्त्वां स्वमतित्वयोः स्वम्, अतिमयोः स्वम्। अतिक्रान्तानां त्वां स्वमतित्वाकं स्वम्, अतिमाकं स्वम्। अतिक्रान्तयोस्त्वां निधेह्यतित्वयोर्निधेहि, अतिमयोर्निधेहि। अतिक्रान्तेषु त्वां निधेह्यतित्वासु निधेहि, अतिमासु निधेहि ॥ ९७ ॥

**प्रत्ययोत्तरपदयोश्च ॥ एकवचने वर्त्तमानयोरिति।** एकार्थाभिधानविषययोरित्यर्थः। **त्वदीयः, मदीय इति।** 'त्यदादीनि च' इति वृद्धसंज्ञकत्वाद् 'वृद्धाच्छः' इति च्छप्रत्ययः। **त्वत्तरः, मत्तर इति।** 'द्विवचनविभज्योपपदे तरबीयसुनौ' इति तरप्। **त्वद्यति, मद्यतीति।** 'सुप आत्मनः क्यच्'। **त्वद्यते, मद्यत इति।** 'कर्तुः क्यङ् सलोपश्च' इति क्यङ्।

### पदमञ्जरी

अत्रानन्तरं यदा युष्मदस्मदी द्वित्वबहुत्वयोर्वर्त्तेते समासार्थस्यैकत्वं तदा त्वमौ न भवतः; अतिक्रान्तं युवामतियुवाम्, अत्यावाम्। अतिक्रान्तं युष्मान् अतियुष्मान्, अत्यस्मान्। **एवं नेयमिति।** पठितव्यम्; पूर्वानुसारेण गम्यमानत्वान्न पठितम् ॥ ९७ ॥

**प्रत्ययोत्तरपदयोश्च ॥ एकवचने वर्त्तमानयोरिति।** एकार्थाभिधानविषयोरित्यर्थः। वस्तुकथनं चैतत्, न तु शब्दार्थकथनम्। 'एकवचने' इत्यस्य प्रथमाद्विवचनान्तत्वात्। **त्वदीय इति।** 'त्यदादीनि च' इति च वृद्धसंज्ञा, 'वृद्धाच्छः'। **त्वत्तर इति।** पारम्यवत्प्रकर्षयोगः।

### भावबोधिनी

क्रान्तान् माम्—अतिमान्। अतिक्रान्ताभ्यां त्वाम्—अतित्वाभ्याम्, अतिक्रान्ताभ्यां माम्—अतिमाभ्याम्। अतिक्रान्तैः त्वाम्—अतित्वाभिः, अतिक्रान्तैः माम्—अतिमाभिः। इसी प्रकार अन्य रूपों को भी उदाहरण में देना चाहिये, कल्पना कर लेनी चाहिये। [ वे रूप न्यास में देखे जा सकते हैं। ] ॥ ९७ ॥

'एकवचन में' इसकी अनुवृत्ति होती है। प्रत्यय और उत्तरपद परे रहते एकवचन में वर्तमान युष्मद् तथा अस्मद् के मपर्यन्त भाग के 'त्व' 'म' ये आदेश होते हैं। उदा० तव अयं-त्वदीयः, मम अयम्—मदीयः। [ युष्मद् आदि शब्द "त्यदादीनि च" सूत्र से वृद्धसंज्ञक हो जाते हैं अतः सम्बन्ध अर्थ में 'वृद्धाच्छः' सूत्र से 'छ' प्रत्यय, ईय आदेश—युष्मद्+ईय, मपर्यन्त का त्व आदेश त्व अद् ईय, पररूप—त्वदीय। इसी प्रकार अस्मद् = म अद्+ईय, पररूप—मदीयः। ] अतिशयेन त्वम्—त्वत्तरः, अतिशयेन अहम्—मत्तरः। [ "द्विवचनविभज्योपपदे तरबीयसुनौ" सूत्र से तरप् प्रत्यय, 'त्व' आदेश, पररूप त्वद्+तर चर्त्व—त्वत्तरः। ] त्वाम् इच्छति-त्वद्यति, माम् इच्छति—मद्यति [त्वाम् आत्मन इच्छति—इस विग्रह में 'सुप आत्मनः क्यच्' सूत्र से क्यच् = य प्रत्यय, मपर्यन्त का 'त्व' आदेश, पररूप—त्वद्य। नामधातु से लडादि होने पर रूप बनता है। ] त्वम् इव आचरति—त्वद्यते, अहम्

**उत्तरपदे—तव पुत्रः त्वत्पुत्रः, मम पुत्रो मत्पुत्रः। त्वं नाथोऽस्य त्वन्नाथः, अहं नाथोऽस्य मन्नाथः।**

**एकवचन इत्येव—युष्माकमिदं युष्मदीयम्, अस्मदीयम्। युष्माकं पुत्रोऽस्माकम् पुत्रो युष्मत्पुत्रः अस्मत्पुत्रः।**

**'विभक्तौ' इत्यधिकारात् पूर्वयोगो विभक्तावेव। ततोऽन्यत्रापि प्रत्यये उत्तरपदे च यथा स्यादित्ययमारम्भः।**

**ननु चात्राप्यन्तर्वर्तिनी विभक्तिरस्ति, तस्यामेवादेशौ भविष्यतः? नैवं शक्यम्; लुका तस्या**

**न्यासः**

ननु च पूर्वेणैवादेशौ सिद्धौ, तत् किमर्थोऽयमारम्भः? इत्यत आह—**विभक्तावित्यधिकारादित्यादि।**

**ननु चेत्यादि देशकः।** प्रकृतिप्रत्यययोः पूर्वोत्तरपदयोश्च या मध्ये वर्तते सान्तर्वर्तिनी विभक्तिः। **नैवं शक्यमिति।** इतरः। **लुका तस्या भवितव्यमिति** अशक्यतायां हेतुः। 'सुपो धातुप्रातिपदिकयोः' इति प्रागेवादेशाभ्यां लुका भवितव्यमिति, ततश्च तन्निमित्तावादेशौ न स्यातामित्यभिप्रायः। **बहिरङ्गो लुगित्यादि।** देशकः। विभक्तिमात्रं ह्यादेशयोराश्रयः, लुकस्तु धातुत्वं प्रातिपदिकत्वञ्चापरम्। तदेवं धातुप्रातिपदिकत्वे यथायोगं बाह्यप्रत्ययापेक्षत्वात् समासापेक्षत्वाच्च बहिरङ्गे किं पुनस्तदपेक्षया लुको बहिरङ्गता। 'असिद्धं बहिरङ्गमन्तरङ्गे' इत्यादेशावेव प्रथमं भविष्यतः। **एतदेवेत्यादीतरो**ऽपि। 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते' इति पूर्वेणैव सिद्धत्वादादेशवचनं न कुर्यात्, कृतञ्च, तदेव ज्ञापयति—'अन्तरङ्गानपि विधीन्

**पदमञ्जरी**

**विभक्तावित्याधिकारादिति।** ननु च पूर्वसूत्रे 'विभक्तौ' इति न सम्भन्त्स्यते, कथम्? आवृद्धेरनुवर्तमानं न सम्बध्येत? एवमपि योगविभागो न कर्त्तव्यः, 'त्वमावेकवचने प्रत्ययोत्तरपदयोः' इत्येकयोग एव कर्त्तव्यः, एवं हि चकारो न कर्त्तव्यो भवति? नैवं शक्यम्; एवं ह्युच्यमाने यथासङ्ख्यं प्राप्नोति—युष्मदः प्रत्यये, अस्मद उत्तरपद इति। अथ क्रियमाणेऽपि योगविभागे, यावता निमित्तयोः साम्यं कस्मादेव यथासङ्ख्यं न स्यात्? नैष दोषः; चकारोऽत्र क्रियते, स द्वयोरपि द्वे निमित्ते समुच्चेष्यति।

**ननु चेति।** चोदकः। प्रकृतिप्रत्यययोः पूर्वोत्तरपदयोश्च मध्ये या वर्तते सान्तर्वर्त्तिनी विभक्तिः। परिहरति—**नैवं शक्यमिति।** लब्धुमिति शेषः। किं कारणम्? इत्याह—**तस्या लुका भवितव्यमिति।** लुक्तु 'सुपो धातुप्रातिपदिकयोः' इत्यनेन। **अन्तरङ्गावित्यादि।** चोदकः। विभक्तिमात्रापेक्षत्वादन्तरङ्गत्वम्, लुक्तु पश्चादु-

**भावबोधिनी**

इव आचरति–मद्यते। [ युष्मद्, अस्मद् शब्दों के सुबन्तों से 'कर्तुः क्यङ् सलोपश्च' सूत्र से क्यङ् प्रत्यय, त्व आदेश, पररूप, ङित् होने से आत्मनेपद में लट् का त आदि होता है। ]

उत्तरपद परे—तव पुत्रः–त्वत्पुत्रः। मम पुत्रः–मत्पुत्रः। [ समास विभक्तिलोप के बाद युष्मद् + पुत्र में 'त्व' आदेश, पररूप त्वद् + पुत्र, चर्त्व। इसी प्रकार मम पुत्रः में भी समास, विभक्तिलोप के बाद अस्मद् + पुत्र, मपर्यन्त का 'म' आदेश, पररूप मद् + पुत्र, चर्त्व–मत्पुत्रः। ] त्वं नाथः अस्य–त्वन्नाथः। अहं नाथः अस्य–मन्नाथः। [ बहुव्रीहि में भी समास विभक्तिलोप के बाद 'त्व' 'म' आदेश, पररूप त्वद् + नाथ, मद् + नाथ, परसवर्ण—त्वन्नाथः, मन्नाथः। ]

'एकवजन परे ही' ( होता है )—युष्माकम् इदम्—युष्मदीयम्। अस्माकम् इदम्—अस्मदीयम्। [ इनमें बहुवचन होने से 'त्व' 'म' नहीं होते हैं। ] युष्माकं पुत्रः—युष्मत्पुत्रः, अस्माकं पुत्रः—अस्मत् पुत्रः। [ यहाँ भी बहुवचन में आदेश नहीं होते हैं। ]

'विभक्तौ' यह अधिकार होने के कारण पूर्ववर्ती ( 'त्वमावेकवचने' ) सूत्र विभक्ति परे ही आदेश करता है। किन्तु विभक्ति से भिन्न भी प्रत्ययों तथा उत्तरपद के परे रहते किसी प्रकार से ये आदेश हों—इसके लिए यह सूत्र बनाया गया है।

प्रश्न—इन (उदाहरणों) में अन्तर्वर्तिनी विभक्ति रहती है, उसी के परे आदेश हो जायेंगे? नहीं, ऐसा नहीं

भवितव्यम् । बहिरङ्गो लुक्, अन्तरङ्गावादेशौ, प्रथमं तौ भविष्यतः ? एतदेव तह्यादिशवचनं ज्ञापकम्—'अन्तरङ्गानपि विधीन् बहिरङ्गोऽपि लुग्बाधते' ( व्या० प० १२८ ) इति । तेन गोमान्प्रियोऽस्य गोमत्प्रिय इत्येवमादौ नुमादि लुका बाध्यते ।

एवं च सति 'त्वाहौ सौ' ( ७.२.९४ ) इत्येवमादयोऽपि प्रत्ययोत्तरपदयोरादेशा न भवन्ति । त्वं प्रधानमेषां त्वत्प्रधानाः, मत्प्रधानाः । यूयं पुत्रा अस्य युष्मत्पुत्रः, अस्मत्पुत्रः । तुभ्यं हितं त्वद्धितम्, मद्धितम् । तव पुत्रस्त्वत्पुत्रः, मत्पुत्रः ।

अथ किमर्थमेषां त्वाहादीनां बाधनार्थमेतन्न विज्ञायते ? लक्ष्यस्थित्यपेक्षया । ज्ञापकार्थे ह्येतस्मिन् बहुतरमिष्टं संगृह्यते ॥

**न्यासः**

बहिरङ्गो लुग बाधते' इति । किमेतस्य ज्ञापकस्य प्रयोजनम् ? इत्यत आह—तेनेत्यादि । यद्ययमर्थो न ज्ञाप्यते, तदा गोमान् प्रियोऽस्येति गोमत्प्रिय इत्यन्तरङ्गत्वाल्लुकः प्राग् 'उगिदचाम्' इति नुम् स्यात्, 'अत्वसन्तस्य चाधातोः' इति दीर्घत्वम्, ततश्च संयोगान्तलोपे कृते गोमान्प्रिय इत्यनिष्टं रूपं प्रसज्येत । अस्मिन् ह्यर्थे ज्ञापिते, अन्तरङ्गमपि नुमादिकं बहिरङ्गेण लुका बाध्यत इति न भवत्येष दोषप्रसङ्गः । एकेनादिशब्देन गोमन्तमिच्छति गोमत्यति, गोमानिवाचरति गोमत्यते—इत्यादेर्ग्रहणम् । द्वितीयेन दीर्घत्वस्य हल्ङ्याब्दिलोपस्य । यद्यन्तरङ्गत्वाद् हल्ङ्यादिलोपः स्यात्, प्रत्ययलक्षणेन नुमादिकं स्यात्, ततश्च तदेवानिष्टं रूपं स्यात् । लुकि च सति 'न लुमताङ्गस्य' इति प्रत्ययलक्षणप्रतिषेधान्न भवति ।

**एवं चेत्यादि** । यत एवं बहिरङ्गोऽपि लुगन्तरङ्गानपि विधीन् बाधते, एवञ्च कृत्वा 'त्वाहौ सौ', 'यूयवयौ जसि', 'तुभ्यमह्यौ ङयि', 'तवममौ ङसि'—इत्येत आदेशाः प्रत्यय उत्तरपदे च परतो न भवन्तीति ।

**अथेत्यादि** । असति प्रयोजने ज्ञापकं भवति, अस्ति चान्यत् प्रयोजनम्—एषां त्वाहादीनामादेशान्तराणां बाधनम् । सत्येतस्मिन् प्रयोजने, एतदर्थमेवेदं युक्तं विज्ञातुम्, न तु ज्ञापनार्थमिति भावः ।

**पदमञ्जरी**

त्पन्नः प्रत्ययमुत्तरपदं चापेक्ष्य धातुत्वप्रातिपदिकत्वयोरुपजातयोः प्राप्नुवन् बहिरङ्गः । यद्यप्ययं नित्यः, तथापि नित्यान्तरङ्गयोरन्तरङ्गमेव बलीयः । यथोक्तम्—परनित्यान्तरङ्गप्रतिपदविधयो विरोधिनः सन्निपाते तेषां मिथः प्रसङ्गे परबलीयस्त्वमिति । **एतदेवेत्यादि** । परिहारः । किमेतस्य ज्ञापने प्रयोजनम् ? इत्याह—**तेनेति** । प्रथमेनादिब्देन गोमत्यतीत्यादेर्ग्रहणम्, द्वितीयेन दीर्घहल्ङ्यादिलोपयोः, हल्ङ्यादिलोपे हि प्रत्ययलक्षणेन नुमादि स्यादेव । लुकि तु 'न लुमताङ्गस्य' इति प्रत्ययलक्षणप्रतिषेधान्न भवति । ज्ञापनस्य प्रयोजनान्तरमाह—**एवं चेति** ।

पुनश्चोदयति—**अथेति** । असति हि प्रयोजने ज्ञापकं भवति, अस्ति चात्र प्रयोजनम्, किम् ? एषामेव त्वाहादीनामादेशान्तराणां बाधनम् । सत्येतस्मिन् प्रयोजने न ज्ञापनमुपपद्यत इति । परिहरति—**लक्ष्यस्थित्य-**

**भावबोधिनी**

हो सकता, क्योंकि विभक्ति का लुक् होना चाहिए। लुक् बहिरङ्ग है, ये आदेश अन्तरङ्ग हैं, अतः पहले आदेश ही होंगे ? तब तो यह आदेश-विधान ही ज्ञापक है—'अन्तरङ्ग भी विधियों को बहिरङ्ग भी लुक् बाध लेता है।' इसीलिए 'गोमान् प्रियः अस्य—गोमत्प्रियः आदि में लुक् द्वारा नुम् आदि का बाध कर लिया जाता है।

और ऐसा होने पर 'त्वाहौ सौ' इत्यादि आदेश भी प्रत्यय और उत्तरपद परे रहते नहीं होते हैं। त्वं प्रधानम् एषाम्—त्वत्प्रधानः। अहं प्रधानम् एषाम्—मत्प्रधानाः। [ यहाँ 'त्व' 'म' ही होते हैं। इसी प्रकार ] यूयं पुत्रा अस्य—युष्मत्पुत्रः, वयं पुत्रा अस्य—मत्पुत्रः। [ यहाँ 'यूय' 'वय' आदेश होते हैं। ] तुभ्यं हितम्—त्वद्धितम्। मह्यं हितम्—मद्धितम् [ यहाँ 'तुभ्यमह्यौ ङयि' से आदेश नहीं होते हैं। ] तव पुत्रः, मम पुत्रः। यहाँ 'तवममौ ङसि' से 'तव' 'मम' आदेश नहीं होते हैं। सभी में ये 'त्व' 'म' आदेश ही होते हैं। ]

प्रश्न—त्व, अह आदि इनके बाधन के लिए इसको क्यों नहीं समझ लिया जाता है ? लक्ष्य = प्रयोग,

## ३३७८. त्रिचतुरोः स्त्रियां तिसृचतसृ ॥ ९९ ॥ (२९८)

त्रि, चतुर्—इत्येतयोः स्त्रियां वर्तमानयोस्तिसृ, चतसृ—इत्येतावादेशौ भवतो विभक्तौ परतः।

न्यासः

लक्ष्यस्थित्यपेक्षयेति। लक्ष्यस्य व्युत्पाद्यस्य स्थितिः=स्थानं लक्ष्यस्थितिः, तद्विषयेऽपेक्षा=लक्ष्यस्थित्यपेक्षा, तया हेतुभूतया। नेदमादेशान्तराणां बाधनार्थं विज्ञायते। गोमत्प्रियो गोमत्यतीत्येवमादिकं लक्ष्यं लोके साधुभावेनावस्थितम्। आदेशान्तरबाधनार्थे ह्येतस्मिन् विज्ञायमाने न संगृहीतं स्यात्। ज्ञापनार्थे त्वेतदपि संगृहीतं भवतीत्येतद् दर्शयति—ज्ञापनार्थे ह्येतस्मिन्नित्यादि। कथं पुनः सत्येवं प्रयोजने सत्यामपि लक्ष्यस्थित्यपेक्षायां ज्ञापकार्थमेतत् शक्यं विज्ञातुम्? एवं मन्यते—प्रयोजनमेवैतन्न भवति; मपर्यन्तग्रहणस्य चकारेणानुकर्षणार्थत्वात्। तदनुकर्षणस्य तदेव प्रयोजनम्—मपर्यन्तयोरादेशौ यथा स्यातामिति। यदि चादेशान्तराणां बाधनार्थमेतत् स्यात्, अनुकर्षणं तस्यापार्थकं स्यात्। यद्बाधनार्थमेतत् सूत्रं प्रकल्प्यते तान्यादेशान्तराणि मपर्यन्तस्यैव प्रयुक्तानि, नान्यस्य। ततश्चान्तरेणापि मपर्यन्तग्रहणानुवृत्तिमुत्सर्गसमानदेशत्वादपवादानां मपर्यन्तस्यैव भविष्यत इति किं मपर्यन्तस्येत्यनुवर्त्तनेन! आदेशान्तराणामबाधनार्थे ह्येतस्मिन् सर्वादेशनिवृत्त्यर्थं मपर्यन्तग्रहणमनुवर्त्तयितुं युक्तम्। तस्मादेतस्मान्मपर्यन्तग्रहणानुवर्त्तनान्नादेशान्तरबाधनमस्य प्रयोजनम्। अतो ज्ञापकं विज्ञायते। ननु च किमर्थमेषां त्वाहादीनां बाधनार्थमेतन्न विज्ञायत इति परेण देशितम्। तस्यायमभिप्रायः—मपर्यन्तस्येत्येतन्निवर्त्यादेशान्तरबाधनार्थमेतत् कस्मान्न भवतीति? तत्रायमर्थः—मपर्यन्तग्रहणस्यानुकर्षणार्थश्चकारो न कर्त्तव्यो भवति। मपर्यन्तग्रहणानुवृत्तावेतदादेशान्तरबाधनार्थं नोपपद्यते, तस्मिन्निवृत्तौ तूपपद्यत एव ॥ ९८ ॥

**त्रिचतुरोः स्त्रियां तिसृचतसृ ॥ त्रय इति। 'जसि च' इति गुणः। चत्वार इति। 'चतुरनडुहोरा-**

पदमञ्जरी

पेक्षयेति। गोमत्प्रिय इत्यादिकं लक्ष्यं लोके साधुभावे स्थितम्, तदादेशान्तरबाधनार्थेऽस्मिन्विज्ञायमाने न संगृहीतं स्यात्, तच्चापेक्ष्यं प्रयोगमूलत्वाद्व्याकरणस्य। तस्मात्तदपेक्षया नैतदादेशान्तराणां बाधनार्थं युक्तं विज्ञातुमिति।

अपर आह—यद्येतदादेशान्तराणां बाधनार्थं स्यात् 'मपर्यन्तस्य' इत्यनुवृत्तिरपार्थिका स्यात्। कथम्? उत्सर्गसमानदेशत्वादपवादानां श्यनादिषु तथा दृष्टत्वादिति। नायं नियमः—'उत्सर्गसमानदेशा अपवादाः' इति; श्नमादिषु व्यभिचारात्। न हि श्नम्बहुजकचः शबादिभिः समानदेशाः। तस्माद्यद्यवश्यमुपपत्तिर्वक्तव्या, एवं वक्तव्यम्—इह त्वाहादयोऽप्यनुवर्त्तन्ते, मपर्यन्तस्येति च; तत्र त्वाहाद्यनुवृत्त्यैव तद्बाधे सिद्धे मपर्यन्तानुवृत्तिरप्राप्तप्रापणार्था सती ज्ञापकमुक्तस्यार्थस्येति।

वयं तु ब्रूमः—'मपर्यन्तस्य' इत्येवानुवर्त्यं तस्यादेशौ विधेयौ। यदि चान्तरङ्गा आदेशाः स्युः, प्रत्ययोत्तरपदयोर्मपर्यन्तस्य न क्वापि सम्भव इति तस्यादेशविधानमनुपपन्नं स्यादिति ज्ञापकमुक्तस्यार्थस्येति ॥ ९८ ॥

**त्रिचतुरोः स्त्रियां तिसृचतसृ ॥ त्रिचतुरोरेव विशेषणमिति। श्रुतत्वात्। नाङ्गस्येति। विपर्ययात्।**

भावबोधिनी

व्युत्पाद्यशब्दरूप की स्थिति = स्थान, उसकी अपेक्षा से [ यह अन्य आदेशों के बाधन के लिए नहीं माना जाता है ]। इस ज्ञापक अर्थ में बहुत इधिक इष्टों का संग्रह होता है। [ भाव यह है लोक में जिस प्रकार के लक्ष्य होते हैं उनकी उपपत्ति जैसे सम्भव हो वैसे ही ज्ञापन की कल्पना की जाती है। अतः 'त्व' 'अह' आदि के बाधनार्थं इसको ज्ञापक नहीं माना जा सकता। ] ॥ ९८ ॥

स्त्री अर्थ में वर्तमान 'त्रि' और 'चतुर्' इनके स्थान पर विभक्ति परे रहते 'तिसृ' और 'चतसृ' ये आदेश होते हैं। उदा० तिस्रः। चतस्रः। तिसृभिः। चतसृभिः। [ त्रि + जस् = अस्, तिसृ आदेश, ऋ का "अचि र ऋतः" से रेफ आदेश—तिस्र् अस्, स् का रुत्व, विसर्ग तिस्रः। ]

तिस्रः । चतस्रः । तिसृभिः । चतसृभिः ।

स्त्रियामिति किम् ? त्रयः । चत्वारः । त्रीणि । चत्वारि ।

स्त्रियामिति चैतत् त्रिचतुरोरेव विशेषणम्, नाङ्गस्य । तेन यदा त्रिचतुःशब्दौ स्त्रियाम्, अङ्गं तु लिङ्गान्तरे, तदाप्यादेशौ भवत एव—प्रियास्तिस्रो ब्राह्मण्योऽस्य ब्राह्मणस्य—प्रियतिसा ब्राह्मण इति । प्रियतिस्रौ, प्रियतिस्रः । प्रियतिसृ ब्राह्मणकुलम्, प्रियतिसृणी, प्रियतिसृणि । प्रियचतस्रा, प्रियचतस्रौ, प्रियचतस्रः । प्रियचतसृ, प्रियचतसृणी, प्रियचतसृणि । 'नद्यृतश्च' (५.४.१५३) इति समासान्तो न भवति; विभक्त्याश्रयत्वेन तिसृभावस्य बहिरङ्गलक्षणत्वात्[1] ।

न्यासः

मुदात्तः' इत्याम् ।

त्रीणीति । 'जश्शसोः शिः' इति शिभावः, 'नपुंसकस्य झलचः' इति नुम्, 'नोपधायाः', 'सर्वनामस्थाने चासम्बुद्धौ' इति ।

स्त्रियामिति चैतत्, त्रिचतुरोर्विशेषणमिति । तयोरेव श्रुतत्वात् । नाङ्गस्येति । एवकारस्य व्यवच्छेद्यं दर्शयति । तेनेति । विशेषणविशेष्यभावेन । यदि हि स्त्रियामित्यनेनाङ्गमेव विशेष्येत, ततो यदा त्रिचतुःशब्दौ पुंसि नपुंसके वा वर्त्तेते, अङ्गे तु स्त्रियाम्, तदाप्येतावादेशौ स्याताम् । 'त्रिचतुरोः स्त्रियाम्' इत्यनेन विशेष्यमाणयोर्न भवतः ।

प्रियत्रिरित्यादि । स्त्रिया अन्यपदार्थत्वादङ्गं स्त्रियां वर्तते, त्रिचतुःशब्दौ लिङ्गान्तरे । यदा त्वङ्गं पुंसि नपुंसके वा वर्त्तते, त्रिचतुःशब्दौ तु स्त्रियाम्, तदा भवत एव । प्रियास्तिस्रो ब्राह्मण्योऽस्येति प्रियतिसा, प्रियतिस्रौ, प्रियतिस्रः । प्रियाश्चतस्रो ब्राह्मण्योऽस्येति प्रियचतसा, प्रियचतस्रौ, प्रियचतस्रः । प्रियतिसृ ब्राह्मणकुलम्, प्रियतिसृणी, प्रियतिसृणि । प्रियचतसृ ब्राह्मणकुलम्, प्रियचसृणी, प्रियचतसृणि ।

पदमञ्जरी

तेन किं सिद्धं भवति ? इत्याह—तेनेति । प्रियतिसेति । 'अनङ् सौ', 'ऋदुशनस्पुरुदंसोऽनेहसाञ्च' इत्यनङ् । प्रियतिस्राविति । 'ऋतो ङिसर्वनामस्थानयोः' इति गुणं परमपि बाधित्वोत्तरसूत्रेण रादेशः । प्रियतिसृ इति । 'इकोऽचि विभक्तौ' इत्यज्ग्रहणेन ज्ञापितम्—लुमता लुप्तेऽपि क्वचित्प्रत्ययलक्षणं भवतीति । तेन 'स्वमोर्नपुंसकात्' इति नित्ये लुकि[2] कृतेऽपि तिसृभावः । प्रियतिसृणी इति । रादेशात्पूर्वविप्रतिषेधेन नुमिति क्वचित्पठ्यते । नद्यृतश्चेति कब्न भवतीति । समस्यमानदशायामृकारान्तस्य तत्र ग्रहणमिति भावः । कबभावे हेतुः—विभक्त्याश्रयत्वादित्यादि । एवं तावत् 'स्त्रियाम्' इत्यनेन त्रिचतुरोर्विशेषणादव्याप्तिपरिहारो दर्शितः ।

भावबोधिनी

स्त्री अर्थ में—इसका क्या फल है ? त्रयः । चत्वारः । त्रीणि । चत्वारि । [ पुल्लिङ्ग और नपुंसकलिङ्ग में ये आदेश नहीं होते हैं । ]

'स्त्रियाम्' यह त्रि और चतुर् का ही विशेषण है, अङ्ग का नहीं है । [ अतः अङ्गसंज्ञक शब्द का स्त्रीलिङ्ग में होना आवश्यक नहीं है । ] इसलिए जब 'त्रि' और 'चतुर्' शब्द स्त्री अर्थ में हों किन्तु अङ्ग ( निष्पन्न शब्दरूप ) किसी अन्य लिङ्ग में हो तब भी ये ( तिसृ, चतसृ ) आदेश होते ही हैं—उदा० प्रियाः तिस्रः ब्राह्मण्यः अस्य ब्राह्मणस्य सः—प्रियतिसा ब्राह्मणः । [ समास विभक्तिलोप के बाद प्रियतिसृ+सु, "ऋदुशनस्पुरुदंसोऽनेहसां च" इससे ऋ का अनङ् आदेश, दीर्घ, सुलोप, नलोप—प्रियतिसा ] प्रियतिस्रौ, प्रियतिस्रः । [ नपुंसक के उदा० ] प्रियतिसृ ब्राह्मणकुलम् [ यहाँ भी प्रियाः तिस्रः अस्य तत् ब्राह्मणकुलम् में तिसृ होता है । ] प्रियतिसृणी, प्रियतिसृणि । [ औ = शी, जस् = शि परे नुम् आदि होते हैं । ] [ प्रियाः चतस्रः अस्य ब्राह्मणस्य सः—

---

१. 'बहिरङ्गलक्षणस्यासिद्धत्वात्'—इति पाठा० ।

२. बहुत्र प्रकाशितः "लुकि कृतेति" इत्यपपाठः, अर्थासङ्गतेः प्रदीपादिविरोधाच्च ।

**यदा च त्रिचतुःशब्दौ लिङ्गान्तरे, स्त्रियामङ्गम्, तदा आदेशौ न भवतः-प्रियास्त्रयोऽस्याः, प्रियाणि त्रीणि वा अस्या ब्राह्मण्याः सा प्रियत्रिः, प्रियत्री, प्रियत्रयः। प्रियचत्वाः प्रियचत्वारौ, प्रियचत्वारः।**

**❀ तिसृभावे संज्ञायां कन्युपसंख्यानं कर्त्तव्यम् ❀ ( म० भा० वा० १ )। तिसृका नाम ग्रामः।**

**❀ चतसर्याद्युदात्तनिपातनं कर्त्तव्यम् ❀ ( म० भा० वा० २ )। चतस्रः पश्येत्यत्र 'चतुरः शसि'**

**न्यासः**

**तिसृभाव इत्यादि।** त्रिशब्दात् 'संज्ञायां कन्' इति कनि कृते विभक्त्यभावान्न प्राप्नोतीतीदमारभ्यते। उपसंख्यानशब्दस्य प्रतिपादनमर्थः। तत्रेदं प्रतिपादनम्—पूर्वसूत्रादिह चकारोऽनुवर्त्तते, स चानुक्तसमुच्चयार्थः। तेन संज्ञायां कन्यपि भविष्यति। **तिसृकेति।** ग्रामस्यैषा संज्ञा।

**चतसर्याद्युदात्तत्वनिपातनमिति।** चतस्रः पश्येत्यत्र 'चतुरः शसि' इत्यन्तोदात्तत्वं प्राप्नोति, आद्युदात्तञ्चेष्यते, तदर्थमाद्युदात्तत्वनिपातनं कर्त्तव्यम्। निपातनस्वरेण बाधितत्वादन्तोदात्तत्वं मा भूदित्येवमर्थम्। यथैवं तर्हि निपातनस्वरः शसिस्वरं बाधते, तथा 'षट्त्रिचतुर्भ्यो हलादिः' इत्यनेन यद्विभक्तेराद्युदात्तत्वं विधीयते तदपि बाधेत, ततश्चतसृणामित्यत्राम उदात्तत्वं न स्यात्? इत्यत आह—**चतसृणामित्यत्र**

**पदमञ्जरी**

अतिव्याप्तिरपि परिहृतेत्याह—**यदा चेति। तिसृकेति।** स्वार्थे कप्रत्ययः, अल्पत्वे, कुत्सितत्वे, संज्ञायां वा। तत्र विभक्तेर्लुकि कृते तत्र विधीयमानस्तिसृभावो न स्यादिति वचनम्। तत्र स्वार्थिकप्रत्ययान्तत्वाद्बहुवचनान्तस्तिसृकाशब्दः संज्ञेत्येके। ग्रामस्य कस्यचिदेषा संज्ञा रूढिरिति नास्ति बहुवचनप्रसङ्ग इत्यन्ये।

**चतसरीति।** यथा प्रियतिस्रावित्यत्र सर्वनामस्थानलक्षणं गुणं बाधित्वा रादेशो भवति, तथा ङावपि प्राप्नोति; तथा चोत्तरसूत्रे प्रियतिस्रोति ङावपि रादेशमुदाहरिष्यति, पूर्वविप्रतिषेधं च वक्ष्यति। अत्राहुः—अस्मादेव निर्देशादर्थप्रधानयोरेवादेशः। इह तु स्वरूपप्रधानत्वात्तदभावे गुण इति। **चतस्र इति।** अत्र स्थानिवद्भावात् 'चतुरः शसि' इत्यन्तोदात्तत्वे सति 'उदात्तयणो हल्पूर्वात्' इति शस उदात्तत्वप्रसङ्गः, स निपातनस्वरेण बाध्यते। यथैव तर्हि निपातनस्वरः शसिस्वरं बाधते, तथा 'षट्त्रिचतुर्भ्यो हलादिः' इत्येतं

**भावबोधिनी**

प्रियचतसा ब्राह्मणः। यहाँ भी चतसृ आदेस, ऋ का अनङ् आदि पूर्ववत् ही समझना चाहिये। ] प्रियचतसा, प्रियचतस्रौ, प्रियचतस्रः। [ प्रियाः चतस्रः अस्य तत् ब्राह्मणकुलम् ] प्रियचतसृ, प्रियचतसृणी, प्रियचतसृणि। इनमें ऋकारान्त हो जाने पर भी ] "नद्यृतश्च" सूत्र से समासान्त प्रत्यय ( कप् ) नहीं होता है क्योंकि विभक्ति को मानकर होने के कारण तिसृ आदेश बहिरङ्ग निमित्त वाला है। [ कप् अन्तरङ्ग है। अतः 'असिद्धं बहिरङ्गमन्तरङ्गे" से तिसृ, चतसृ असिद्ध हो जाते हैं। ऋदन्त न रहने से कप् नहीं हो पाता है। ]

और जब 'त्रि' तथा 'चतुर्' शब्द अन्य लिङ्ग में हों, अङ्गरूप शब्द स्त्रीलिङ्ग में हो तब [ तिसृ, चतसृ ] आदेश नहीं होते हैं—प्रियाः त्रयः अस्याः सा, अथवा प्रियाणि त्रीणि अस्याः सा—इसमें प्रियत्रिः, प्रियत्री, प्रियत्रयः रूप [ मति के समान ] ही होते हैं। इसी प्रकार प्रियाः चत्वारः यस्याः सा, अथवा प्रियाणि चत्वारि यस्याः सा–इस अर्थ में ] प्रियचत्वाः, प्रियचत्वारौ, प्रियचत्वारः। [ प्रियचतुर् सु में 'चतुरनडुहोरामुदात्त." से आम् आगम, यण्--प्रियचत्वार् सु, सुलोप, रेफ का विसर्ग। ]

❀ तिसृ आदेश करने में संज्ञा [ की प्रतीति ] में 'कन्' का उपसंख्यान करना चाहिए।❀ उदा० तिसृका नाम ग्रामः। [ त्रि का तिसृ और स्वार्थ में, अल्पता में, कुत्सितत्व में और संज्ञा में कन् होता है। यहाँ संज्ञा में कन प्रत्यय, टाप्। किसी गाँव का नाम है। ]

❀ चतसृ में आद्युदात्त का निपात करना चाहिए।❀ उदा० चतस्रः पश्य—यहाँ 'चतुरः शसि' सूत्र से [ अन्तोदात्त ] स्वर न होने लगे। [ चतुर् + शस् = अस् चतसृ आदेश—चतसृ + अस् में रेफ आदेश के बाद अन्तोदात्त का बाध करके आद्युदात्तनिपातन किया जाता है। ] किन्तु 'चतसृणाम्' यहाँ पर 'षट्त्रिचतुर्भ्यो हलादिः"

( ६. १. १३७ ) इत्येष स्वरो मा भूत्। चतसृणामित्यत्र तु 'षट्त्रिचतुर्भ्यो हलादिः' ( ६. १. १७९ ) इत्येव स्वरो भवति । हलादिग्रहणसामर्थ्यान्निपातनस्वरो बाध्यते ॥

## ३३७९. अचि र ऋतः ॥ १०० ॥ (२९९)

तिसृ, चतसृ-इत्येतयोर्ऋतः स्थाने रेफादेशो भवति अजादौ विभक्तौ परतः। तिस्रस्तिष्ठन्ति, तिस्रः पश्य। चतस्रस्तिष्ठन्ति, चतस्रः पश्य। प्रियतिस्र आनय, प्रियचतस्र आनय। प्रियतिस्रः स्वम्, प्रियचतस्रः स्वम् । प्रियतिस्रि निधेहि । प्रियचतस्रि निधेहि । पूर्वसवर्णोत्वङिसर्वनामस्थानगुणानामपवादः । परमपि हि ङिसर्वनामस्थानगुणं पूर्वविप्रतिषेधेन बाधते ।

### न्यासः

**त्वित्यादि । हलादिग्रहणसामर्थ्यादिति ।** तत्रैवायं हेतुः । हलादिग्रहणं हि तत्राजादिनिवृत्यर्थं क्रियते । चतुःशब्दश्चायं बहुवचनविषयः । सर्वाणि बहुवचनानि प्रथमाद्वितीयाषष्ठी-बहुवचनेभ्योऽन्यानि हलादीनि । तत्रामो नुमचिरतृज्वद्भावेभ्यो पूर्वविप्रतिषेधेन नुटि कृते भवितव्यमाद्युदात्तत्वेन; हलादित्वात् । जसस्तु, 'अङ्गेश्छन्दस्यसर्वनामस्थानम्' इत्यतोऽसर्वनामस्थानग्रहणानुवर्त्तमानत्वादाद्युदात्तत्वं न भवति । तस्माच्छसो माभूदित्येवमर्थं तत्र हलादिग्रहणं कृतम् । यदि च निपातनस्वरो विभक्तिस्वरं बाधेत, तदा हलादिग्रहणमनर्थकं स्यात्; निपातनस्वरेणैव बाधितत्वाद्विभक्तिस्वरो न भविष्यति । तस्मान्मा भूद् हलादिग्रहणस्य वैयर्थ्यम् । इह हलादिग्रहणसामर्थ्याद्विभक्तिस्वरेण निपातनस्वरो बाध्यत इति, तेन चतसृणामित्यत्रान्तोदात्तत्वं भवति ॥ ९९ ॥

**अचि र ऋतः ॥** किमर्थं पुनरचि रादेश उच्यते, न यणादेशेन सिद्धत्वात् ? इत्यत आह— **पूर्वसवर्ण इत्यादि ।** असति ह्येतस्मिन् सूत्रे शसि 'प्रथमयोः पूर्वसवर्णः' इति पूर्वसवर्णः स्यात्, 'ङसिङ सोश्च',

### पदमञ्जरी

विभक्तिस्वरमपि बाधेत ? तत्राह—**चतसृणामित्यत्र त्विति ।** तत्र कारणमाह—**हलादिग्रहणसामर्थ्यादिति ।** तत्र हलादिग्रहणस्य चतस्रः पश्येत्येतदेव व्यावर्त्यम्, नान्यत्किञ्चित् । एतच्च तत्रैवोपपादितम् । यदि च निपातनस्वरो विभक्तिस्वरस्यापि बाधकः स्यात्, तदान्तरेणापि हल्ग्रहणं विभक्तेः स्वरो न भविष्यति, किं हलादिग्रहणेन ? तत्क्रियमाणं ज्ञापयति—'निपातनस्वरं विभक्तिस्वरो बाधते' इति । अन्ये त्वाहुः—हलादिग्रहणादेव चतस्रः पश्येत्यत्र 'चतुरः शसि' इत्यस्याप्रवृत्तिरवसीयते । यदि स्यात्, ततः 'उदात्तयणो हल्पूर्वात्' इति स्यादेव विभक्तेरुदात्तत्वमिति तद्व्यावृत्तये हलादिग्रहणमनर्थकं स्यात् । तस्मादाद्युदात्तनिपातनमेव न कर्तव्यमिति । तत्राद्युदात्तस्य चतुश्शब्दस्यानन्तर्यंत आद्युदात्त एव चतस्रादेशे सति चतसृणामित्यत्र 'षट्त्रिचतुर्भ्यो हलादिः' इति विभक्तेरुदात्तत्वं भवति ॥ ९९ ॥

**अचि र ऋतः ॥ पूर्वसवर्णोत्वेत्यादि ।** तिस्रः पश्येत्यत्र 'प्रथमयोः पूर्वसवर्णः' इत्यस्यापवादः ।

### भावबोधिनी

सूत्र से ही [ विभक्ति का उदात्त ] स्वर होता है । क्योंकि हलादिग्रहणसामर्थ्य से निपातन स्वर का बाध होता है । [ शस् = अस् में सूत्र की प्रवृत्ति रोकने के लिए 'षट्त्रिचतुर्भ्यो हलादि' में हलादि का ग्रहण है । यदि यह निपातन स्वर विभक्तिस्वर का बाधक़ार ले तब तो हलादिग्रहण अनर्थक है क्योंकि इसी निपातन से निर्वाह हो जाने पर हलादि-ग्रहण व्यर्थ होने लगेगा, इसलिए वह इस निपातन का बाधक होता है । ] ॥ ९९ ॥

अजादि विभक्ति परे रहते तिसृ और चतसृ के 'ऋ' के स्थान पर 'रेफ' आदेश हो जाता है । उदा० तिस्रः तिष्ठन्ति । [ त्रि + जस् = अस्; तिसृ आदेश—तिसृ + अस्, रेफ आदेश, स् का रुत्व विसर्ग—तिस्रः । ] तिस्रः पश्य । [ त्रि + शस् = अस्, पूर्ववत् सभी कार्य । ] चतस्रः तिष्ठन्ति । चतस्रः पश्य । [ जस् और शस् परे रहते तिसृ, चतसृ के ऋ का रेफ हो जाता है । ] [ तदन्तविधि होती है अतः ] प्रियतिस्रः आनय । प्रियचतस्रः आनय ।

अचीति किम् ? तिसृभिः । चतसृभिः । 'ऋतः' इति किम् ? **तिसृचतस्रोः प्रतिपत्त्यर्थम्; अन्यथा हि तदपवादस्त्रिचतुरोरेवायमादेशो विज्ञायेत ॥**

**न्यासः**

'ऋत उत्' इत्युत्त्वञ्च, सर्वनामस्थाने ङौ च 'ऋतो ङिसर्वनामस्थानयोः' गुणः। तस्मादेतेषामपवादोऽयं रेफादेश आरभ्यते। ननु युक्तः पूर्वसवर्णस्योत्त्वस्य चेहायमपवादो रेफादेशः, गुणस्य त्वयुक्तः; यस्मात् 'मध्येऽपवादाः पूर्वान् विधीन् बाधन्ते नोत्तरान्' इति? अत आह—**परमपीत्यादि**। गुणस्यावकाशः—कर्तारौ, हर्तारौ, कर्तरीति; रेफस्यावकाशः—तिस्रः पश्येति, तिस्रस्तिष्ठन्तीति; प्रियतिस्रि निधेहीति—अत्रोभयप्रसङ्गे पूर्वविप्रतिषेधेन रेफो भवन् परमपि ङिसर्वनामस्थानगुणं बाधते।

**ऋत इति किमिति**। एवं मन्यते—तिसृचतसृशब्दाविहानुवर्त्तिष्यते, तौ च ऋकारान्तावेवेत्यलोऽन्त्यपरिभाषया ऋत एव भविष्यति। **तिसृचतस्रोः प्रतिपत्त्यर्थमिति**। तिसृचतसृ—इत्येतयोरच्यपि परतस्त्रिचतुरोः स्थाने प्रतिपत्तिः=प्राप्तिर्यथा स्यादित्येवमर्थम् 'ऋतः' इत्युक्तम्। **अन्यथा हीत्यादि**। यदि 'ऋतः' इति नोच्येत, तदा तयोरेव तिसृचतस्रोरयमपवादो विज्ञायेत, ततश्चाजादौ तौ न स्याताम् ॥ १०० ॥

**पदमञ्जरी**

प्रियतिस्रः स्वमित्यत्र 'ऋत उत्' इत्युत्त्वस्य। प्रियतिस्रि, प्रियतिस्रौ, प्रियतिस्रस्तिष्ठन्तीत्यत्र 'ऋतो ङिसर्वनामस्थानयोः' इति गुणस्य। ननु यत्र विध्यन्तरस्याप्राप्तिः—प्रियतिस्रा, प्रियतिस्रे, प्रियतिस्रोरिति, तत्र 'इकोयणचि' इत्येव सिद्धमिति विध्यन्तरस्य विषये इदमारभ्यते; तत्र 'मध्येऽपवादाः पूर्वान्विधीन् बाधन्ते' ( व्या० प० १० ) इति उत्त्वपूर्वसवर्णौ बाधत इति युक्तम्, गुणविषये तु परत्वात् स एव स्यात्? इत्यत आह—**परमपि हीति**।

**ऋत इति किमिति**। तिसृचतस्रोरनुवृत्तेः 'अलोऽन्त्यस्य' इत्येव सिद्धमिति प्रश्नः। **तिसृचतस्रोः प्रतिपत्त्यर्थमिति**। तिसृचतस्रोरादेशयोरजादावपि विभक्तौ प्रतिपत्तिर्यथा स्यादित्यर्थः। **अन्यथा हीति**। 'ऋतः' इत्यनुच्यमाने षष्ठीनिर्दिष्टत्वात् त्रिचतुरोरेवायमादेशः स्यात्, स च नाप्राप्तयोस्तिसृचतस्रोर्विधीयत इति तयोरपवादः स्यादित्यर्थः ॥ १०० ॥

**भावबोधिनी**

[ प्रियतिसृ + ङस् = अस् में भी रेफ आदेश होता है–] प्रियतिस्रः स्वम्। प्रियचतस्रः स्वम्। [ प्रियतिसृ + ङि = इ, प्रियचतसृ + ङि = इ में भी रेफ आदेश होता है ] प्रियतिस्रि निधेहि, प्रियचतस्रि निधेहि। [ यह रेफ आदेश शस् परे रहते 'प्रथमयोः' से प्राप्त ] पूर्वसवर्ण दीर्घ का, [ ङसि, ङस् में 'ऋत उत्' से प्राप्त ] उत्व का, [ ङि और सर्वनामस्थान = जस् परे रहते 'ऋतो ङिसर्वनामस्थानयोः' से प्राप्त ] गुण का अपवाद है। परवर्ती भी ङि तथा सर्वनामस्थान को मानकर [ 'ऋतो ङिसर्वनामस्थानयोः'' ७।३।११० से प्राप्त ] गुण को यह ( रेफादेश ) पूर्वविप्रतिषेध से बाधित कर लेता है। [ अतः रेफादेश ही होता है। यण् के अपवाद पूर्वसवर्ण दीर्घादि हैं। किन्तु रेफादेश सभी का अपवाद है। ]

अजादि परे रहते—इसका क्या फल है? तिसृभिः। चतसृभिः। [ अजादि परे नहीं हैं। ] ऋत् = ह्रस्व ऋ का—इसका क्या फल है? तिसृ और चतसृ का ज्ञान कराने के लिये 'ऋत्' का उल्लेख है। अन्यथा उन 'त्रि' और 'चतुर्' का ही यह ( रेफ ) आदेश ज्ञात होने लगता।

**विमर्श**—भाव यह है कि 'ऋतः' ऐसा स्थानी का उल्लेख न होने पर 'त्रि' और 'चतुर्' का ही रेफ आदेश अजादि विभक्ति परे रहते होने लगता। तिसृ चतसृ आदेश का नहीं हो पाता। स्थानी का उल्लेख हो जाने से अजादि विभक्ति परे रहते भी तिसृ तथा चतसृ आदेशों का ज्ञान होता है और उनके ऋकार का रेफ आदेश ज्ञात होता है ॥ १०० ॥

## ३३८०. जराया जरसन्यतरस्याम् ॥ १०१ ॥ (२२७)

'जरा'–इत्येतस्य 'जरस्'–इत्ययमादेशो भवति अन्यतरस्यामजादौ विभक्तौ परतः। जरसा दन्ताः शीर्यन्ते, जरया दन्ताः शीर्यन्ते। जरसे त्वा परिदद्युः, जरायै त्वा परिदद्युः।

'अचि' इत्येव–जराभ्याम्, जराभिः। नुमो विधानात् जरसादेशो विप्रतिषेधेन। अतिजरांसि ब्राह्मणकुलानि।

इहातिजरसं ब्राह्मणकुलं पश्येति लुग्न भवति; आनुपूर्व्या सिद्धत्वात्। अतिजर + अमिति स्थिते

**न्यासः**

जराया जरसन्यतरस्याम्॥ नुमो विधानाज्जरसादेशो भवति विप्रतिषेधेनेति। नुमोऽवकाशः—त्रपूणि, जतूनि, जरसादेशस्यावकाशः—जरसौ; अतिजरांसि ब्राह्मणकुलानीत्यत्रोभयप्रसङ्गे विप्रतिषेधेन परो जरसादेशो भवति। यदि हि पूर्वं नुम् स्यात्, नुमा व्यवहितत्वाज्जरसादेशो न लभ्यते, तथापि विहितविशेषणपक्षाश्रयणेन लभ्यते। एवमपि 'निर्दिश्यमानस्यादेशा भवन्ति' इति जराशब्दस्यादेशे कृते सकारात् परो नुम् श्रूयते। अथापि सनुम्कस्यादेशः स्यात्? एवमपि कृतकार्यत्वान्नुम्शास्त्रस्य पुनरप्रवृत्तेरादेशे कृते पुनर्नुम्न स्यात्, तथानिष्टं रूपं प्रसज्येत।

अथेहातिजरसं ब्राह्मणकुलं पश्येति जरसादेशे कृते 'स्वमोर्नपुंसकात्' इति लुक्कस्मान्न भवति? इत्यत आह—इहेत्यादि। जरामतिक्रान्तमिति प्रादिसमासः, 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति ह्रस्वः, द्वितीयैकवचनयम् इति स्थित एकदेशविकृतस्यानन्यत्वात् कृतेऽपि ह्रस्वत्वे लुक्, अम्भावः, जरस्भावः—इत्येतानि त्रीणि कार्याणि युगपत् प्राप्नुवन्ति, तत्र लुगपवादत्वाद् 'अतोऽम्' इत्यम्भावेन बाध्यते, अम्भावोऽपि

**पदमञ्जरी**

जराया जरसन्यतरस्याम्। अतिजरांसीति। अतिजर + इ इति स्थिते यदि पूर्वं नुमागमः स्यात्, सोऽङ्गभक्तोऽङ्गमेव न व्यवदध्यात्। तदवयवं तु जराशब्दं व्यवदधात्येवेति सत्यपि तदन्तविधौ 'निर्दिश्यमानस्यादेशा भवन्ति' ( व्या० प० १०६ ) इति जराशब्दान्तस्याङ्गस्यावयवो यो जराशब्दः तस्य विभक्त्यानन्तर्ये विधीयमानो जरसादेशो न प्राप्नोति। अथापि स्यात्, तथापि सकारात्परस्य नुमः श्रवणं स्यात्। तस्मात्परत्वात्पूर्वं जरसादेश एष्टव्यः। तत्र कृते झलन्तलक्षणो नुम्। अतिजरसं पश्येत्यत्र अतिजर + अम् इति स्थिते एकदेशविकृतस्यानन्यत्वाज्जराशब्दस्य जरसादेशे कृते 'स्वमोर्नपुंसकात्' इति लुक् प्राप्नोति। न च तदीनीमम्भावस्य प्रसङ्गः; अनदन्तत्वात्। ननु चातिजरशब्दस्यादन्तत्वात्तस्यामवस्थायामम्भावेन

**भावबोधिनी**

'जरा' इसके स्थान पर 'जरस्' यह आदेश अजादि विभक्ति परे रहते विकल्प से होता है। उदा० जरसा दन्ताः शीर्यन्ते। जरया दन्ताः शीर्यन्ते। [ जरा + टा = आ, वैकल्पिक जरस् आदेश। ] जरसे त्वा परिदद्युः, जरायै त्वा परिदद्युः। [ जरा + ङे = ए, वैकल्पिक जरस् आदेश ]

अजादि विभक्ति परे ही [ होता है अतः हलादि परे नहीं होता है–] जराभ्याम्। जराभिः। नुम् विधान की अपेक्षा जरस् आदेश विप्रतिषेध से होता है। [ बाद में नुम् होता है अतः ] अतिजरांसि कुलानि। [ पहले जरस् करके नुम् होता है। ]

'अतिजरसं ब्राह्मणकुलम्' यहाँ [ 'स्वमोर्नपुंसकात्' से ] अम् का लुक् नहीं होता है क्योंकि आनुपूर्वी से सिद्ध है। [ जराम् अतिक्रान्तम्—इस अर्थ में प्रादिसमास, विभक्ति-लोपादि के बाद द्वितीया एकवचन अम् परे 'ह्रस्वो नपुंसके प्रातिपदिकस्य' से ह्रस्व करने पर–] अतिजर + अम् इस प्रकार का होने पर [ एकदेश के विकृत होने पर भी अन्य न होने के कारण ] (१) लुक्, (२) अम् आदेश, (३) जरस् आदेश—ये तीनों कार्य एक साथ प्राप्त होते हैं। इनमें पहले अपवाद होने से अम् आदेश द्वारा लुक् बाधित किया जाता है और परवर्त्ती होने के कारण जरस् आदेश द्वारा अम् आदेश का भी बाध कर लिया जाता है। [ अतः पहले जरस् ही होता है। ] जरसादेश

लुक्, अम्भावः, जरस्भावः—इति त्रीणि कार्याणि युगपत्प्राप्नुवन्ति; तत्र लुक् तावदपवादत्वाद् अम्भावेन बाध्यते, अम्भावोऽपि परत्वाज्जरसादेशेन। न च पुनर्लुक्शास्त्रं प्रवर्त्तते; भ्रष्टावसरत्वादिति एवमेव भवति—अतिजरसं ब्राह्मणकुलं पश्येति। प्रथमैकवचने तृतीयाबहुवचने च अतिजरं ब्राह्मणकुलं तिष्ठति, अतिजरैरिति च भवितव्यमिति 'गोनर्दीयमतेन (म० भा०)। किं कारणम्? 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' (व्या० प० १२) इति।

**न्यासः**

परत्वाज्जरसादेशेन। अथ कृते जरसादेशे लुक् पुनः कस्मान्न भवति? इत्यत आह—**पुनर्लुक्शास्त्रमित्यादि।** न च लुक्शास्त्रं पुनः प्रवर्तते; भ्रष्टावसरत्वात्, अन्यत्र कृतकार्यत्वाच्च। तेन लुगभावादतिजरसमित्येवं भवति। अथ प्रथमैकवचने किमतिजरं ब्राह्मणकुलम्, तृतीयाबहुवचने किमतिजरैर्ब्राह्मणकुलैरित्येवं भवितव्यम्; आहोस्विदतिजरसम्, अतिजरसैरित्येवम्? इत्यत आह—**अतिजरमित्यादि। गोनर्दीयमतेनेति।** तथा हि भाष्ये उक्तम्—'गोनर्दीय आह—'इष्टमेवैतत् संगृहीतं भवतीति—अतिजरमतिजरैरिति भवितव्यम्'—इति। का पुनरस्य युक्तिः? इत्यत आह—**सन्निपातलक्षणेत्यादि।** यद्यम्भावः, ऐस्भावश्च जरसादेशस्य निमित्तमात्रं स्यात्, अकारान्तताऽङ्गस्य ताभ्यां विहता स्यात्। एतच्चायुक्तम्; तत्सन्निपातेन हि तावभिनिर्वृत्तौ नोत्सहेते तां विहन्तुम्।

**पदमञ्जरी**

बाधितस्य लुकः पुनः प्रसङ्गो न युक्तः, भ्रष्टावसरत्वात्? नैतदस्ति; नात्राम्भावः प्रवृत्तः परत्वान्नित्यत्वाच्च जरसादेशेन बाध्यते, तत्र कृते लुक्प्रसङ्गः। एवं तर्हि सन्निपातपरिभाषया (व्या० प० १२) लुग्न भविष्यति। अजादिसन्निपातेन जरसादेशो निष्पन्नो नोत्सहते तस्य लुको निमित्ततां प्रतिपत्तुम्। यद्येवम्, अतिजरसं ब्राह्मणकुलं तिष्ठति अतिजरसैरिति न सिद्ध्यति; कथम्? सोर्भिसश्चाकारान्तसन्निपातेनाजादिरादेशः कृतोऽकारन्तत्वविघातिनो जरसादेशस्य निमित्तं न स्यात्। इष्टमेवैतत्सङ्गृहीतम्। अतिजरमतिजरैरिति भवितव्यम्, एष **गोनर्दीयस्य** पक्षः, तदिदमुच्यते—**इहेत्यादि।** इहेति वाक्योपन्यासे। भवितव्यमित्यन्तं **गोनर्दीय-मतम्। न पुनर्लुक्शास्त्रं प्रवर्त्तत इति** यदुक्तम्, यच्चोक्तम्—**अतिजरं ब्राह्मणकुलमित्यादि,** तत्रोभयत्रापि हेतुः—**सन्निपातलक्षण इति।** 'न पुनर्लुक्शास्त्रम्' इत्यत्र पुनःशब्दस्यायमर्थः—पूर्वं या लुक्प्राप्तिः, साम्भावेन बाधिता; या तु जरशादेशे कृते पुनः प्राप्तिः, सापि सन्निपातपरिभाषया (व्या० प० १२) न भवतीति।

**भावबोधिनी**

करने पर पुनः लुक् क्यों नहीं होता है?] लुक् शास्त्र पुनः नहीं प्रवृत्त होता है क्योंकि भ्रष्ट अवसर वाला हो चुका है। [एक बार रोका जा चुका है। साथ ही अन्य लक्ष्य में चरितार्थ भी है। अतः लुक् नहीं होता है।] इस कारण ऐसा ही रूप बनता है—'अतिजरसं ब्राह्मणकुलं पश्य।']

प्रथमा के एकवचन में और तृतीया के बहुवचन में क्रमशः—अतिजरं ब्राह्मणकुलं तिष्ठति और अतिजरैः [ब्राह्मणकुलैः स्थीयते] ऐसे ही रूप गोनर्दीय मत से होने चाहिए। [अर्थात् इनमें जरस् आदेश नहीं होना चाहिए।] क्या कारण है? सन्निपातलक्षण विधि सन्निपातविघात की कारण नहीं बनती है। [अर्थात् अकारान्त और विभक्ति के सन्निपात (अव्यवहित संहिता) को मानकर अम् और ऐस् आदेश होते हैं। ये जरस् आदेश करके अकारान्तत्व का विघात नहीं करा सकते और न ही जरस् करने पर इन (अम्, ऐस्) के अभाव में निमित्त ही बन सकते हैं।]

---

१. यद्येवम् अतिजरसम् अतिजरसैरित्यत्र प्राप्नोति, अतिजरम्, अतिजरैरिति भवितव्यम्। गोनर्दीय आह—इष्टमेवैतत् संगृहीतं भवति। अतिजरम् अतिजरैरिति भवितव्यम्। सत्यामेतस्यां परिभाषायां 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य।'' म० भा० ७।२।१०१।

अन्ये तु—अनित्यत्वादस्याः परिभाषाया अतिजरसं ब्राह्मणकुलं तिष्ठति, अतिजरसैरित्येवं भवितव्यमिति मन्यन्ते ॥

**३३८१. त्यदादीनामः ॥ १०२ ॥ (२६५)**

'त्यत्' इत्येवमादिनामकारादेशो भवति विभक्तौ परतः। त्यद्—स्यः, त्यौ, त्ये। तद्—सः, तौ, ते। यद्—यः, यौ, ये। एतद्—एषः, एतौ, एते। इदम्—अयम्, इमौ, इमे। अदस्—असौ, अमू, अमी। द्वि—द्वौ, द्वाभ्याम्।

❀ द्विपर्यन्तानां त्यदादीनामत्वमिष्यते ❀ (म० भा०)। इह न भवति—भवत्—भवान्।

**न्यासः**

**अन्य इति**। सूत्रकारमतानुसारिणः। कस्मात् पुनस्त एवं मन्यन्ते ? इत्यत आह—**अनित्यत्वादस्या इत्यादि**। अनित्यत्वं पुनरस्याः—'अतो भिस ऐस्' इत्यत्र प्रतिपादितम् ॥ १०१ ॥

**त्यदादीनामः ॥ स्य इति**। 'तदोः सः सावनन्त्ययोः' इति तकारस्य सकारः। **त्य इति**। 'जसः शी' इति शीभावः, 'आद् गुणः'। **इमाविति**। 'दश्च' इति मत्वम्। **असाविति**। 'अदस औ सुलोपश्च'। **अमू इति**। 'अदसोऽसेर्दादु दो मः' इति मत्वोत्वे, 'प्रथमयोः पूर्वसवर्णः' इति दीर्घः। **अमी इति**। 'एत ईद् बहुवचने' इतीत्वम्।

अथेह कस्मान्न भवति—भवानिति ? अत आह—**द्विपर्यन्तानामित्यादि**। एतच्च 'शेषे लोपः' इत्यत्र प्रागेव ज्ञापितम्। **भवानिति**। 'उगिदचाम्' इति नुम्, 'अत्वसन्तस्य चाधातोः' इति दीर्घः।

**पदमञ्जरी**

**अन्ये त्वित्यादि**। एतच्च 'टाङसिङसामिनात्स्याः', 'अतो भिस ऐस्' इत्यत्र व्याख्यातम् ॥ १०१ ॥

**त्यदादीनामः ॥ द्विपर्यन्ता[1] इत्यादि**। इष्टिरेवेयम्। यत्तूच्यते—शेषेलोपवचनं ज्ञापकमिति, तदयुक्तम्; उपसर्जनार्थत्वादतियूयमतिवयमिति। यदा तु शेषेलोपष्टिलोपस्तदा तु सुतरामज्ञापकम्।

**भावबोधिनी**

अन्य ( = सूत्रकार के अनुयायी ) तो—इस सन्निपात परिभाषा की अनित्यता के कारण 'अतिजरसं ब्राह्मणकुलम्' तथा 'अतिजरसैः' ( ब्राह्मणकुलैः स्थीयते )—इसी प्रकार के [ जरस् आदेश वाले ) ही रूप होने चाहिए—ऐसा मानते हैं। [ इसके फलस्वरूप दोनों प्रकार के शब्दरूप प्रयोगार्ह सिद्ध होते हैं। ] ॥ १०१ ॥

त्यद्—आदि प्रकार [ के शब्दों ] का अकार आदेश विभक्ति परे रहते होता है। उदा० त्यद्–स्यः, त्यौ, ते। तद्–सः, तौ, ते। [ त्यद् + सु, तद् + सु में 'अलोऽन्त्यस्य' के अनुसार 'द्' का अकार आदेश, 'अतो गुणे' सूत्र से पररूप—त्य + सु, त + सु, "तदोः सः सावनन्त्ययोः" सूत्र से तकार का सकार स्य + सु, स + सु, रुत्व विसर्ग करने पर–स्यः, सः रूप बनते हैं। ] यद्–यः, यौ, ये। एतद्–एषः, एतौ, एते। [ एतद्+सु, द् का अत्व पररूप एत + सु, त का स, षत्व एष + सु, रुत्वविसर्ग। ] इदम्–अयम्, इमौ, इमे। [ इदम् + सु, म् का अत्व, नहीं होता है क्योंकि 'इदमो मः' ( ७।२।१०८ ) इसे अग्रिम सूत्र से इदम् के 'म्' का म् ही रहता है सु परे। 'इदोऽय् पुंसि' ( ७।२।१११ ) से इद् का अय् होने पर अय् अम् = अयम् + सु, हल्ङ्यादि से सुलोप—अयम्। इमौ–इदम् + औ, यहाँ म् का अत्व, पररूप–इद + औ, वृद्धि—इदौ "दश्च" ( ७।२।९ ) सूत्र से 'द्' का म्–इमौ। इसी प्रकार 'इमे' में भी समझना चाहिए ] अदस्—असौ, अमू, अमी। [ अदस् + सु, यहाँ भी अकार नहीं होता है अपि तु "अदस औ सुलोपश्च" सूत्र से स् का औ आदेश और सुप्रत्यय का लुक् होता है–अद औ, वृद्धि–अदौ। 'तदोः सः सावनन्त्ययोः" सूत्र से द् का 'स्' होने पर 'असौ' बनता है। अदस् + औ यहाँ स् का अत्व, पररूप अद + औ में

१. मूले तु 'द्विपर्यन्तनां त्यदादीनामत्वमिष्यते' इति पाठः।

**संज्ञोपसर्जनीभूतास्त्यदादयः पाठादेव पर्युदस्ता इतीह न भवति—त्यद्, त्यदौ, त्यदः। अतित्यद्, अतित्यदौ, अतित्यदः।**

**त्यदादिप्रधाने तु शब्दे भवत्येव—परमसः, परमतौ, परमते॥**

**३३८२. किमः कः॥ १०३॥ (३४२)**

**'किम्'—इत्येतस्य 'क'—इत्ययमादेशो भवति विभक्तौ परतः। कः, कौ, के।**

**साकचकस्याप्ययमादेशो भवति, तेनाकार एव किमो न विधीयते 'किमोऽत्' (५.३.१२) इति॥**

**न्यासः**

अथेह संज्ञोपसर्जनीभूतानामपि कस्मान्न भवति त्यदादौ—त्यद्, अतित्यद्, अतित्यदः? इत्यत आह—**संज्ञोपसर्जनीभूता इत्यादि।** सर्वाद्यन्तःपातिनस्त्यदादयः। सर्वादयश्चासंज्ञीभूता अनुपसर्जनीभूताश्च पठ्यन्ते। तथा हि—तेषां 'सर्वनामानि' इति महत्याः संज्ञायाः कारणस्यैतत् प्रयोजनम्—सर्वेषां नामभूतानां संज्ञा यथा स्यात्। ये तु कस्यचिदेव संज्ञाभूता उपसर्जनीभूताश्च, तेषां मा भूदिति। तस्मात् संज्ञोपसर्जनीभूतास्त्यदादयः पाठादेव पर्युदस्ताः, त्यदादिभ्यो बहिष्कृता इत्यर्थः। तस्मादत्यदादित्वात् तेषां न भवति त्यदादिकार्यम्। **त्यदादिप्रधाने शब्दे तु भवत्येवेति।** त्यदादयः प्रधाना यस्मिन् शब्दे स त्यदादिप्रधानः, तत्र भवत्येवात्वम्; तस्य पाठादपर्युदस्तत्वात्। अपर्युदस्तत्वं तु सर्वनामसंज्ञायास्तदन्तविधेः सर्वादेरभ्युपगमात्॥ १०२॥

**किमः कः॥** अथाकार एव किमः कस्मान्न विधीयते, एवं हि लघु सूत्रम्भवति, अकारो हि प्रकृतोऽनुवर्तत इति, तत्रैवं सूत्रं कर्त्तव्यम्—'किमोऽत्' इति? अत आह—**साकचकस्यादेशो भवतीति।**

**पदमञ्जरी**

**पाठादेव पर्युदस्ता इति।** तथा च सर्वादिसूत्रे वार्त्तिकम् 'संज्ञोपसर्जनानां प्रतिषेधः पाठात्पर्युदासः' **इति।** तेन पाठोपजीवनेन प्रवर्तमानमिदमपि संज्ञोपसर्जनीभूतानां न भवति। **त्यदादौति।** त्यदादीनामर्थः प्रधानं यत्र समासे तत्रेत्यर्थः। न हि ते पाठात्पर्युदस्ताः॥ १०२॥

**किमः कः॥ तेनाकार एव किमो न विधीयत इति।** कथं पुनरकारविधाने 'कः' इत्यादिरूपसिद्धिः, यावतान्त्यस्य प्राप्नोति, न चान्त्यस्य पूर्वेण सिद्धः, 'द्विपर्यन्तास्त्यदादयः' इत्युक्तत्वात्? अपरे पुनरेत-

**भावबोधिनी**

'अदसोऽसेर्दादु दो मः' सूत्र से द् का मत्व, अ का उत्व-अमु+औ, 'प्रथमयोः पूर्वसवर्णः' से पूर्व सवर्णदीर्घ–अमू। अदस्+जस्, स् का अत्व, पररूप, जस् का शी = ई, गुण, अदे। "एत ईद् बहुवचने" (८।२।८१) से ए का ई और द् का म् होने से—अम् ई = अमी ] द्वि-द्वौ, द्वाभ्याम्। [ द्वि + औ, इ का अत्व, पररूप, वृद्धि—द्वौ। द्विभ्याम्, इ का अत्व, 'सुपि च' से दीर्घ–द्वाभ्याम्। ]

* द्वि तक ही त्यदादि का अत्व इष्ट है। * अतः [आगे के शब्दों में] यहाँ अत्व नहीं होता है, भवन्–भवान्।

संज्ञा शब्दभूत और उपसर्जनीभूत त्यदादि शब्द [ सर्वादिगण में ] पाठ के द्वारा ही पर्युदस्त = वर्जित हो गये, अतः इसमें नहीं होता है—त्यद्, त्यदौ, त्यदः। अतित्यद्, अतित्यदौ, अतित्यदः। [ त्यद् यहाँ पर किसी की संज्ञा = नाम के रूप में और अतित्यद् उपसर्जन रूप में प्रयुक्त है। अतः अत्वादि कोई भी कार्य नहीं होता है। ]

किन्तु त्यदादि अर्थ के प्रधान रहने पर तो शब्द में अत्वादि होते ही हैं—परमसः, परमतौ, परमते। [ कर्मधारयतत्पुरुष में तद् का अर्थ प्रधान होने से यह सर्वनाम ही है। अतः अत्व, सत्व आदि सभी कार्य होते हैं। ]॥१०२॥

'किम्' इसके स्थान पर 'क' यह आदेश विभक्ति परे रहते होता है। उदा० कः, कौ, के। [ किम् + सु, 'क' आदेश, स् का रुत्व, विसर्ग ]

अकच् सहित का भी यह 'क' आदेश होता है इसलिए 'किम्' का अकार नहीं किया जाता है "किमोऽत्"।

## ३३८३. कु तिहोः ॥ १०४ ॥ (१९५४)

**तकारादौ हकारादौ च विभक्तौ परतः किमित्येतस्य 'कु' इत्ययमादेशो भवति । कुतः । कुत्र । कुह । 'तिहोः' इतीकार उच्चारणार्थः ॥**

### न्यास

**तेनाकारः किमो न विधीयत इति ।** अयं ह्यादेशस्तन्मध्यपतितस्तद्ग्रहणेन गृह्यते, अकचश्च किम्ग्रहणेन ग्रहणात् साकच्कस्यापि भवति, तेनाकार एव किमः स्थाने न विधीयते । यदि हि विधीयेत, तदाऽनकचक-स्यादेशे कृते पश्चादकचि कक इत्यनिष्टं रूपं स्यादित्यभिप्रायः । कथं पुनः किमोऽत्वे कृते क इति भवति, यावता मकारस्यात्त्वे कृते सतीकारस्य यणादेशे कृते क्य इति स्यात् ? नैष दोषः; इकारस्यापि ह्यत्त्वं विधीयते, यदिह पूर्वसूत्रात् 'अतः' इत्यनुवर्त्तते । नालोऽन्त्यस्यात्वं भवति यत् पुनरिहाकारग्रहणं क्रियते । तेन 'अनन्त्यविकारऽन्त्यसदेशस्य' इतीकारस्य तत्र द्वयोरकारयोः परपूर्वत्वे क इति सिद्धम् ।

**क्वचित् पाठ इम इति ।** तत्रायं पूर्वपक्षः—अथाकार एवेमः कस्मान्न विधीयते ? लघु ह्येवं सूत्रं भवति; प्रकृतस्याकारस्येहानुवृत्तेः, तत्रैवं तावत् सूत्रं कर्त्तव्यम्—'इमः' इति । न चैवं सति 'तिम ष्टिम आर्द्रीभावे' इत्यस्य क्विबन्तस्य तोन्, तिमौ, तिम इत्यत्रापि प्रसज्येत, त्यदादिभिरिमो विशेषणात्—त्यदादीनां य इमिति ? न; 'दश्च' इति मत्व कृत इदम इमौ, इम इत्यत्रापि प्रसज्येत । लक्षणप्रतिपदोक्तपरिभाषया नापाम इत्युच्यमाने 'अलोऽन्त्यस्य' इति प्रसज्येतेत्याशङ्कनीयम्, यस्मान्नानर्थकेऽलोऽन्त्यविधिः ? इत्यत आह—**साकच्कस्यापीत्यादि ।** पूर्व एव पाठः साधुतरः । इतरत्र तु पाठ उत्तरसूत्रेण क्वादेश इमः कृते द्वयोः ककारयोश्च संयुक्तयोः श्रवणं प्रसज्येत, तच्चानिष्टम् ॥ १०३ ॥

**कु तिहोः ॥** पूर्वस्यायमपवादः । तिशब्दस्य विभक्तेरभावादिकार उच्चारणार्थः । तकारस्यैव प्रयोजनम् । तत्र 'यस्मिन् विधिस्तदादावल्ग्रहणे' तकारादेशो विभक्तौ कार्यं विधीयते । अत आह—**तकारादा-वित्यादि । कुत इति ।** 'पञ्चम्यास्तसिल्' । **कुत्रेति ।** 'किमोऽत्' इत्यत्र परसूत्राद्वाग्रहणं पुरस्तादपकृष्यते । तेन पक्षे 'सप्तम्यास्त्रल्' इति त्रलपि भवति । **कुह इति ।** 'वा ह च च्छन्दसि' इति हः । एषाञ्च तसिलादीनां 'प्राग्दिशो विभक्तिः' इति विभक्तिसंज्ञा ॥ १०४ ॥

### पदमञ्जरी

चचोद्यभयादेव पठन्ति—**तेनाकार एव इमो न विधीयत इति ।** अयमर्थः—'इमः' इत्येतावत्सूत्रमस्तु, 'त्यदादी-नामः' इत्येव त्यदादीनां सम्बन्धिन इमोऽकारो भवति, तत्र 'नानर्थकेऽलोन्त्यविधिः' ( व्या० प० ६२ ) इति सर्वस्यैवमोऽकारो भवति । तेषामेवं पठतामुत्तरत्र किमो ग्रहणं कर्त्तव्यम् ? न कर्त्तव्यम्; 'उति होः' इति वक्ष्यामि 'इमः' इत्येव, ततो 'वाति', 'इमः' इत्येव, इमो वकारादेशो भवति । तस्मात्साकच्कार्थमेव कादेशो विहितः ॥ १०३ ॥

**कु तिहोः ॥** तिशब्दस्य विभक्तिसंज्ञकस्याभावात्तकारे इकार उच्चारणार्थः । **कुहेति ।** 'वा ह च छन्दसि' इति हप्रत्ययः ॥ १०४ ॥

### भावबोधिनी

[ भाव यह है कि किमोऽत् ऐसा सूत्र बनाकर 'इ' का अ कर दिया जाय और 'त्यदादीनामः' से म् का अत्व पररूप करने पर 'क' आदि बन सकते हैं किन्तु ऐसा करने पर 'अकच्' का श्रवण होने लगेगा और 'ककः' ऐसा अनिष्ट रूप प्रसक्त होगा । जब पूरे 'किम्' का 'क' आदेश किया जाता है तब अकच्विशिष्ट अर्थात् 'ककिम्' के स्थान पर 'क' आदेश होगा, यही इष्ट है । ] ॥ १०३ ॥

तकारादि और हकारादि विभक्ति परे रहते 'किम्' इसका 'कु' यह आदेश होता है । उदा० कुतः । कुत्र । कुह । [ कस्मात्—इस अर्थ में 'पञ्चम्यास्तसिल्' से तसिल् = तस् प्रत्यय करने पर प्रस्तुत सूत्र से 'कु' आदेश । इसी प्रकार 'सप्तम्यास्त्रल्' से त्रल् करने पर भी तकारादि परे है । 'कु' आदेश होता है । "वा ह च च्छन्दसि" सूत्र से 'ह' प्रत्यय होने पर भी 'कु' आदेश होता है । ये सभी प्रत्यय 'विभक्तिसंज्ञक हैं । ] 'तिहोः' में 'इ' कार उच्चारण [ की सुविधा ] के लिए है ॥ १०४ ॥

**३३८४. क्वाति ॥ १०५ ॥ (१९६०)**

**'अति' इत्येतस्यां विभक्तौ परतः किमित्येतस्य 'क्व'—इत्ययमादेशो भवति । क्व गमिष्यसि ? क्व भोक्ष्यते ?**

**आदेशान्तरवचनमोर्गुणनिवृत्त्यर्थम् । 'किमो ड्वत्' इति प्रत्ययान्तरं न विधीयते, साकच्कार्थम् ॥**

**न्यासः**

**क्वाति ॥** कादेशस्यायमपवादः । **क्वेति ।** 'किमोऽत्' इत्यत् ।

अथ किमर्थमादेशान्तरं विधीयते, न प्रकृतः कु एव विधीयताम्, तत्रापि यणादेशे क्वेति सिद्ध्यत्येव; योगविभागश्च न कर्त्तव्यो भवति, 'कुतिहात्सु' इत्येको योगः करिष्यते ? इत्यत आह—**आदेशान्तरवचनमित्यादि ।** कुशब्दे ह्यादेशे सति यणादेशं बाधित्वा 'ओर्गुणः' इति गुणः स्यात् । तस्मात् तन्निवृत्त्यर्थं क्वादेश इत्युच्यते ।

एवमपि प्रत्ययविधावेव 'किमो ड्वत्' इति ड्वत्प्रत्ययो विधेयः, तत्रापि टिलोपे कृते क्वेति रूपं सिध्यत्येव । पदसंज्ञायां सत्याम् 'झलां जशोऽन्ते' इति ककारस्य गकारः प्राप्नोतीत्यतो न सिध्यतीति चेत् ? नैतदस्ति; 'असिद्धं बहिरङ्गमन्तरङ्गे' इति टिलोपस्यासिद्धत्वाज्जश्त्वं न भवति । टिलोपो हि डिति विधीयते, तेन डितमपेक्षमाणो बहिरङ्गो भवति । जश्त्वं तु पदान्ते विधीयमानं नापरनिमित्तमपेक्षत इत्यन्तरङ्गमित्यत आह—**किमो ड्वदिति प्रत्ययान्तरमित्यादि ।** यदि ड्वदिति प्रत्ययान्तरं विधीयेत, साकच्कस्य क्वेति रूपं न सिध्यति । अकचि हि कृते ककिमिति स्थिते ड्वत्प्रत्यये परतष्टिलोपो सति कक्वेत्यनिष्टं रूपं स्यात् । अत्प्रत्यये तु क्वादेशो विधीयमानोऽनेकाल्त्वात् साकच्कस्य सर्वादेश एव भवतीति न भवत्यनिष्टरूपप्रसङ्गः । तस्मात् साकच्कार्थं ड्वदिति न प्रत्ययान्तरं विधीयते । साकच्कोऽर्थः प्रयोजनं यस्य तत् साकच्कार्थम् ॥ १०५ ॥

**पदमञ्जरी**

**क्वाति ॥ क्वेति ।** 'किमोऽत्' इत्यत्प्रत्ययः ॥

अथादेशान्तरकरणं किमर्थम्, न प्रकृतः कुशब्द एव विधीयते, एवं च कृत्वा योगविभागोऽपि न कर्तव्यः, 'कुतिहात्सु' इत्येवास्तु; का रूपसिद्धिः ? यणादेशे कृते क्वेति सिद्धम्, ओर्गुणस्तु 'अङ्गवृत्ते पुनर्वृत्तौ' (व्या० प० ३८) इति वचनान्न भविष्यति, यणादेशस्त्वनाङ्गत्वाद्भवत्येव ? तत्राह—**आदेशान्तरकरणमोर्गुणनिवृत्त्यर्थमिति ।** निष्ठिततत्त्वं दुर्ज्ञानमिति भावः । एवं तर्हि 'किमोऽत्' इत्येतत् 'किमो ड्वत्' इति वक्तव्यम्, टिलोपे कृते क्वेति सिद्धम् ? अत आह—**किमो ड्वदिति[1] चेति ।** कथं पुनः प्रत्ययान्तरे रूपसिद्धिः, यावता ककारस्य जश्त्वं प्राप्नोति ? टिलोपस्यासिद्धत्वान्न भविष्यति । कथमसिद्धत्वम् ? 'असिद्धं बहिरङ्गमन्तरङ्गे' (व्या० प० ४२) । टिलोपो हि डित्प्रत्ययापेक्षत्वाद्बहिरङ्गः, जश्त्वं तु तदनपेक्षत्वादन्तरङ्गम् । **साकच्कार्थमिति ।** साकच्के हि प्रत्ययान्तरे विहिते कक्वेति स्यात् । यथान्यासे तु तत्रापि क्वेत्येव भवति ॥ १०५ ॥

**भावबोधिनी**

'अत्' ऐसा विभक्तिसंज्ञक परे रहते 'किम्' इसका 'क्व' यह आदेश होता है । उदा० क्व गमिष्यसि ? क्व मोक्ष्यसे ? [ किम् से सप्तम्यर्थ में 'किमोऽत्' से 'अत्' प्रत्यय करने पर इस सूत्र से 'क्व' आदेश ]

[ यह अलग आदेश करने की क्या आवश्यकता थी क्योंकि 'अत्' प्रत्यय परे रहते पूर्वसूत्र से 'कु' आदेश और यण् करने पर 'क्व' बन सकता है ? ] 'ओर्गुणः' से गुण रोकने के लिए यह दूसरा आदेश-विधान [ किया गया ] है । क्योंकि यण् की अपेक्षा गुण बलवान् है । ] 'किमो ड्वत्' ऐसा दूसरा ( ड्वत् ) प्रत्यय नहीं किया जाता है [ ऐसा करने पर भी डित् मानकर 'उ' लोप हो जाने पर 'क्व' आदेश करने के लिये यह दूसरा आदेश किया गया है । ] अकच्सहित के लिए यह है । [ अकच् करने पर ककिम् + ड्वत् = व, टि = इम् का लोप करने पर 'कक्व' ऐसा अनिष्ट रूप प्रसक्त होने लगता । अतः यह दूसरा आदेश सम्पूर्ण = अकच् सहित का हो—इसके लिए सूत्र है । ] ॥ १०५ ॥

---

१. मूले 'च' शब्दो नास्ति ।

**३३८५. तदोः सः सावनन्त्ययोः ॥ १०६ ॥ (३८१)**

त्यदादीनां तकारदकारयोरनन्त्ययोः सकारादेशो भवति सौ परतः। त्यद्—स्यः। तद्—सः। एतद्—एषः। अदस्—असौ।

अनन्त्ययोरिति किम्? हे स। सा॥

**न्यासः**

**तदोः सः सावनन्त्ययोः ॥ साविति।** किमिदं प्रथमैकवचनस्य ग्रहणम्? उत सप्तमीबहुवचनस्य? आहोस्विदुभयोरपि? तत्र प्रथमैकवचनस्य ग्रहणम्। तथा हि—द्वयोरपि सामान्येन ग्रहणं न भवति। यदि स्यात्, सौत्येवं ब्रूयात्। एवं हि सकारादौ कार्यं विधीयमानं तयोर्द्वयोरपि भविष्यति। तस्मादन्यतरस्य ग्रहणम्। तथा हि—'स्यश्छन्दसि बहुलम्' सोऽचि लोपे चेत्' इत्येवमादेर्निर्देशात् ग्रहणं युक्तम्।

**हे स, सेति।** हेशब्दो निपातसमुदायोऽवधारणार्थे वर्तते। ननु च त्यदाद्यत्वमत्र बाधकं भविष्यति? नैतदस्ति; अनवकाशा हि विधयो बाधका भवन्ति। सावकाशश्चात्वम्। कोऽवकाशः? द्विशब्दः—द्वाविति। सत्यपि तस्मिन्नवकाशे यद्यपि सकारस्याप्यनन्त्योऽवकाशः, तथाप्यन्तस्य परत्वात् सत्वं स्यात्। ततश्च हे स इत्यत्र 'एङ् ह्रस्वात् सम्बुद्धेः' इति सोर्लोपो न स्यात्। तत्र हल्ङ्यादिलोपे कृते रुत्वविसर्जनीययोः कृतयोरनिष्टं रूपं स्यात्। सेत्यत्र तु 'अजाद्यतष्टाप्' इत्यत्र स्त्रियां टाब्न स्यात्। तस्मात् 'अनन्त्ययोः' इति वक्तव्यम्॥ १०६॥

**पदमञ्जरी**

**तदोः सः सावनन्त्ययोः ॥** 'सौ' इति प्रथमैकवचनस्य ग्रहणम्, न सप्तमीबहुवचनस्य, 'स्यश्छन्दसि', 'सोऽचि लोपे चेत्' इत्यादिनिर्देशात्। नाप्युभयोः, तथाहि सति 'सि' इत्येव ब्रूयात्, सकारादौ विभक्ताविति।

**अनन्त्ययोरिति किमिति।** विशेषणविशेष्यभावे कामचारात्त्यदादिषु तकारान्तस्यासम्भवाच्च त्यदादिभिस्तदोर्विशेषणादनन्त्ययोस्तत्वसिद्धम्, अन्त्यस्य तु त्यदाद्यत्वं भविष्यतीति प्रश्नः। अत्वस्य सोरन्यत्र सावकाशत्वात्सौ परत्वादिदमेव स्यादित्युत्तरम्। तत्र केवले सौ पुंल्लिङ्गे विशेषाभावात् सम्बुद्धौ, स्त्रियां च प्रत्युदाहृतम्। किमर्थं पुनः 'तदोः' इत्युच्यते, तवर्गग्रहणमेव क्रियेत—'तोः सः सावनन्त्यस्य' इति? नकारस्यापि तर्हि प्राप्नोति 'तस्मान्नुडचि'—अनेषः, अनयम्, अनसाविति। नुडयं परादिस्तद्ग्रहणेन गृह्यते॥१०६॥

**भावबोधिनी**

त्यद् आदि अनन्त्य (अन्त्य से भिन्न) तकार और दकार का सकार आदेश 'सु' परे रहते होता है। उदा० त्यद्—स्यः। तद्—सः। एतद्—एषः। अदस्—असौ। [इनकी प्रक्रिया पूर्व में 'त्यदादीनामः' (७।२।१०२) में की प्रस्तुत की जा चुकी है।]

अनन्त्य = अन्त्यभिन्न—इसका क्या फल है? हे स। सा।

**विमर्श—**'अनन्त्ययोः' का फल यह है—हे तद् + सु यहाँ परवर्त्ती होने से यह आदेश त्यदाद्यत्व का बाध करके पहले हो जायगा अतः 'त' और 'द्' दोनों के स्थान पर स् आदेश होने पर 'हे सस्' + सुं ऐसा होगा, अब हल्ङ्यादिलोप करने पर 'हे सस्' इसका रुत्व विसर्ग होकर 'हे सः' ऐसा अनिष्ट रूप होने लगेगा। और स्त्रीलिङ्ग में भी अत्व न होने 'सस्' इससे अजन्त न होने से टाप् की प्राप्ति नहीं है। जब 'अनन्त्य त् और द् का स्' मानते हैं तब दोष नहीं है क्योंकि 'तद्' के 'त्' का ही स् होगा, द् का त्यदाद्यत्व ही होगा। वास्तव में तो अन्त्य का स् कर देने पर भी "पुनः प्रसङ्गविज्ञानात् सिद्धम्" के अनुसार 'स्' का ही अत्व और पररूप कर देने से इष्ट रूप बन सकते हैं। अतः 'अनन्त्ययोः' नहीं भी रखा जा सकता है। सूत्रक्रम का परिवर्तन करके भी 'अनन्त्ययोः' हटाना सम्भव है। ऐसा विचार प्रस्तुत सूत्र की तत्त्वबोधिनी व्याख्या में है॥ १०६॥

३३८६. अदस औ सुलोपश्च ॥ १०७ ॥ (४३७)

**अदसः सौ परतः सकारस्य औकारादेशो भवति सोश्च लोपो भवति । असौ ।**

*** औत्वप्रतिषेधः साकच्काद्वा वक्तव्यः सादुत्वं च * ( म० भा० वा० १ ) । यदा चौत्वप्रतिषेधः, तदा सकारादुत्तरस्य उत्वं भवति । असुकः, असुकौ ।**

*** उत्तरपदभूतानां त्यदादीनामकृतसन्धीनामादेशा वक्तव्याः * ( म० भा० वा० २ ) परमाहम् । परमायम् । परमानेन ।**

न्यासः

**अदस औ सुलोपश्च ॥** सावित्येव । त्यदाद्यत्वापवादोऽदस औत्वं विधीयते । **असाविति ।** पूर्वसूत्रेण दकारस्य सकारः, 'वृद्धिरेचि' इति वृद्धिः ।

**यदा चेत्यादि । सादुत्वञ्चेति ॥** चकारः सन्नियोगार्थः । तेन यस्मिन् पक्ष औत्वप्रतिषेधः, तस्मिन्नेव पक्षे सादुत्तरस्याकारस्योत्वं विधीयते ।

**उत्तरपदभूतानामित्यादि ।** इह परमाहम्, परमायम्, परमानेनेति 'त्वाहौ सौ' 'इदोऽय् पुंसि', 'अनाप्यकः' इति समासाद् या विभक्तिः, तस्यामेत आदेशा भवन्तो बहिरङ्गा भवन्ति; प्रागेव तु विभक्त्युत्पत्तेः । अकः सवर्णे दीर्घत्वं प्राप्नुवदन्तरङ्गम्, तस्मात् पूर्वं तदेव स्यात्, पश्चादादेशाः स्युः; ततश्च परमहम्, परमयम्, परमनेनेत्यनिष्टानि रूपाणि स्युः । तस्मादुत्तरपदभूतानामकृतस्वरसन्धीनां त्यदादीनामादेशा वक्तव्याः = व्याख्येया इत्यर्थः । आचार्यप्रवृत्तिर्ज्ञापयति—पूर्वोत्तरयोः पदयोस्तावत् कार्यं प्रथमं भवति, पश्चादेकादेश इति । यदयम् 'नेन्द्रस्य परस्य' इति प्रतिषेधं शास्ति । कथं कृत्वा ज्ञापकम् ? इन्द्रे द्वावचौ, तत्रैकः—'यस्येति च' इति लोपेनापह्रियते, अपरः—एकादेशेनेत्यनचक इन्द्रशब्दः सम्पन्नः, तत्र को वृद्धिप्रसङ्गः ! पश्यति त्वाचार्यः—पूर्वोत्तरयोः पदयोस्तावत् कार्यं भवति; पश्चादेकादेश इति; यतः 'नेन्द्रस्य परस्य' इति वृद्धिप्रतिषेधं शास्ति । तदेतस्माज्ज्ञापकाद् अकृतस्वरसन्धीनामुत्तरपदभूतानां त्यदादीनामादेशा भवन्तीति ।

पदमञ्जरी

**अदस औ सुलोपश्च ॥ असुक इति ।** अदकस् सु इति स्थिते औत्वप्रतिषेधात्त्यदाद्यत्वं दकारस्य सत्वं सकारादुत्तरस्य चाकचोऽकारस्य उत्वम् ।

**उत्तरपदभूतानामित्यादि ।** समासाद्या विभक्तिरुत्पद्यते, तदपेक्षत्वादादेशो बहिरङ्गः ततश्चान्तरङ्गत्वादेकादेशे कृते तस्यादिवद्भावादादेशेषु क्रियमाणेषु परमयम्, परमहमित्याद्यनिष्टप्रसङ्गः । तस्मादकृतसन्धिकार्याणामेवामी आदेशा वक्तव्याः । एतच्च 'नेन्द्रस्य परस्य' इत्यत्र ज्ञापयिष्यते ।

भावबोधिनी

सु प्रत्यय परे रहते 'अदस्' के सकार का 'औ' आदेश होता है और 'सु' का लोप भी होता है । उदा० असौ । [ अदस् + सु, त्यदाद्यत्व न होकर 'स्' का औ, वृद्धि अदौ + सु सुलोप, 'तदोः सावनन्त्ययोः' से 'द्' का स् आदेश—असौ । ]

* अकच्विशिष्ट अदस् से औत्व का विकल्प से प्रतिषेध और स् से उत्तरवर्ती अकार का उत्व करना चाहिए । * जब औत्व का प्रतिषेध होता है तभी सकार से परे अकार का उत्व होता है । उदा० (१) असुकः, (२) असुकौ । [ 'अदस्' 'अव्ययसर्वनाम्नाम् अकच् प्राक् टेः' से अकच् कर देने पर अदकस् + सु, औत्व का प्रतिषेध होने पर 'द्' से उत्तरवर्ती अ का उकार अदुकस् + सु, हल्ङ्यादिलोप, 'तदोः सावनन्त्ययोः' से 'द्' का स् 'असुकस्' । स् का रुत्व विसर्ग । प्रतिषेध न होने पर अदकस् + सु, सु का लोप, स् का औत्व, वृद्धि, द् का सत्व—असकौ ।

[ कुछ संस्करणों में भ्रमवश 'औ' का रूप मानकर 'असुकः, असुकौ' ऐसा प्रकाशित है । वह सर्वथा अशुद्ध है । ये दोनों रूप 'सु' प्रत्यय परे ही बनते हैं । ]

* उत्तरपदभूत त्यदादि के सन्धिकार्यरहित के ही स्थान पर आदेश कहना चाहिए । * उदा० परमाहम् । परमायम् । परमानेन ।

**अदसः सोर्भवेदौत्वं किं सुलोपो विधीयते ?**
**ह्रस्वाल्लुप्येत सम्बुद्धिर्न हलः प्रकृतं हि तत् ॥**

**न्यासः**

**अदसः सोर्भवेदौत्वमित्यादि।** अवधारणमत्र द्रष्टव्यम्। अदःशब्दात् परस्य सोरेवौत्वं भवेत्। भवतु, मा वा भूत्। अदस्शब्दस्य त्यदाद्यत्वे कृते 'वृद्धिरेचि' इति वृद्धौ कृतायामसाविति सिध्यत्येव, तत् किमर्थं सुलोपो विधीयते ? निरर्थकत्वान्नैवं सोर्लोपो विधेयः, औत्वमेव विधेयम्। अत्र दोषमाह—**ह्रस्वाल्लुप्येत सम्बुद्धिरिति।** हेऽसावित्यत्र 'एङ् ह्रस्वात् सम्बुद्धेः' इति सोर्लोपः प्रसज्येत, ततश्च सम्बुद्धौ हेऽसाविति न सिध्येत् ? **न हलः प्रकृतं हि तदिति।** नायं दोषः; सम्बुद्धेर्लोप औत्वे कृतेऽज् भवति, न हलिति, तत् कुतो लोपप्रसङ्गस्तत्र ! तर्हि हल्ग्रहणं कर्त्तव्यम् ? न कर्त्तव्यम्, यस्मात् **प्रकृतं तत्।** 'हल्ङ्याब्भ्यः सुतिस्यपृक्तं हल्' इत्यतो हल्ग्रहणं प्रकृतमेव। यद्यपि तत्र प्रथमानिर्दिष्टम्, षष्ठीनिर्देशेन चेहार्थः, तथापि 'एङ् ह्रस्वात्' इति पञ्चमी हलित्यस्याः प्रथमायाः षष्ठीत्वं प्रकल्पयिष्यति; 'तस्मादित्युत्तरस्य' इति वचनात्।

**पदमञ्जरी**

**अदसः सोर्भवेदित्यादि।** 'अदस औ' इत्येतावदेव सूत्रमस्तु, 'सौ' इत्येव, 'अदसः' इति पञ्चमी, तया पूर्वसूत्रे कृतार्थायाः सप्तम्याः षष्ठ्यां प्रकल्पितायाम् अदस उत्तरस्य सोरौकारो भवतीत्यर्थः, तत्र त्यदाद्यत्वे कृते ससाविति सिद्धे किं सुलोपो विधीयते। **ह्रस्वाल्लुप्येत सम्बुद्धिः।** यदि सोरौकारो विधीयते, तदा हि असावित्यत्र त्यदाद्यत्वे ह्रस्वात्परस्याः सम्बुद्धेरौकारस्य लोपः स्यात्, न हलः ? नैष दोषः; हलः सलोपो विधीयते। यद्येवम्, तत्र हल्ग्रहणं कर्त्तव्यम् ? नेत्याह—**प्रकृतं हि तत्।** 'हल्ङ्याब्भ्यो दीर्घात्' इत्यत्र। ननु चेदं प्रथमानिर्दिष्टम्, षष्ठीनिर्दिष्टेन चेहार्थः ? एवं तर्हि एङ्ह्रस्वादिति पञ्चमी हलिति प्रथमायाः षष्ठीं

**भावबोधिनी**

**विमर्श—**यदि पहले सन्धिकार्य किया जायगा तो समास से होने वाली विभक्ति की अपेक्षा आदेश बहिरङ्ग हैं अतः पहले एकादेश करने के बाद उस एकादेशविशिष्ट—परमास्मद्, परमेदम् का 'अन्तादिवच्च' से आदिवद्भाव मानकर 'त्वाहौ सौ' से 'अस्मद्' का 'अह्' होगा, परमेदम् में एदम् का 'इदोऽय् पुंसि' से अय् अम् = अयम् होगा। पूर्ववर्त्ती 'परम' रह जाता है। इन आदेशों को मिलाने पर—परमाहम्, परमायम्, परमानेन आदि अनिष्ट रूप होने लगेंगे। अतः त्यदादि के आदेशादि कार्य करने के बाद ही 'परम' आदि के साथ दीर्घ आदि सन्धिकार्य करने चाहिए।

( अनु० ) अदस् से परे सु प्रत्यय का औत्व करना चाहिए सुलोप क्यों किया जा रहा है ? [ अदस् + सु में त्यदाद्यत्व, पररूप करके सु का औ, वृद्धि द् का स् करने पर 'असौ' रूप बन जाता है। अतः सूत्र में 'सुलोप' का विधान व्यर्थ है ? ] ह्रस्व से परे सम्बुद्धि का लोप होने लगेगा। [ यदि सु का औ किया जायगा तब तो 'असौ' इसमें वृद्धि से पहले ह्रस्व से परे होने से 'एङ्ह्रस्वात् सम्बुद्धेः' सूत्र से सम्बोधन एकवचन में 'सु' ( जो कि 'औ' बन चुका है ) का लोप होने लगेगा। [ अतः 'सु' का 'औ' नहीं किया जा सकता। ]—ऐसा नहीं है क्योंकि 'हल्' की अनुवृत्ति है। [ अर्थात् हल् रूप सम्बुद्धि का ही लोप होता है। जब 'औ' आदेश हो जाता है तब सम्बुद्धि हल् न होकर अच् हो जाता है। अतः लोप की प्रसक्ति नहीं है। ] [ तब भी यह दोष है— ] 'आप्' का एत्व होने लगेगा ? [ स्त्रीलिङ्ग में असा + औ इसमें ( 'आङि चापः' ) 'सम्बुद्धौ च' इस सूत्र से एत्व होने लगेगा जैसा कि 'हे खट्वे' आदि में होता है ? ] नहीं, यह दोष भी नहीं है क्योंकि [ 'बहुवचने झल्येत्' इस सूत्र से 'सम्बद्धौ च' इसमें ] 'झलि' इसकी अनुवृत्ति होती है। [ अतः झलादि सम्बुद्धि परे रहते ही एत्व होता है। अजादि परे नहीं होता। कोई दोष नहीं है। ]

[ तब भी यह दोष है— ] 'प्रत्ययस्थात् कात् पूर्वस्य इदाप्यसुपः' सूत्र से क से पूर्व का इत्व होने लगेगा। स्त्रीलिङ्ग में अकच् करने पर असका + औ में क से पूर्व इत्व होने लगेगा। परन्तु प्रकृति का औ करने पर तो टाप् होता ही नहीं, इत्व की प्राप्ति नहीं है। अतः 'सु' का औ नहीं किया जा सकता। ] और शीभाव की प्रसक्ति होती है। [ स्त्रीलिङ्ग में असा + औ में 'औङ आपः' सूत्र से औ का शी = ई होने लगेगा। फलतः अनिष्ट रूप होने लगेगा।

**आप एत्वं भवेत्तस्मिन्न झलीत्यनुवर्तनात्।**
**प्रत्ययस्थाच्च कादित्वं शीभावश्च प्रसज्यते ॥ ( म० भा० श्लो० १-२ )**

**३३८७. इदमो मः ॥ १०८ ॥ (३४३)**

इदमः सौ परतो मकारोऽन्तादेशो भवति । इयम् । अयम् ।

इदमो मकारस्य मकारवचनं त्यदाद्यत्वबाधनार्थम् ॥

**३३८८. दश्च ॥ १०९ ॥ (३४५)**

**न्यासः**

अयं तर्हि दोषः—**आप एत्वं भवेत् तस्मिन्नित्यादि**। तस्मिन्नौकारे परतस्त्यदाद्यत्वे कृते स्त्रियां टापि—हे असौ ब्राह्मणीत्यत्र 'सम्बुद्धौ च' इत्येत्वं स्याद्, यथा हि हे खट्वे इत्यत्र ? **न झलीत्यनुवर्त्तनादिति।** नायं दोषः; 'सम्बुद्धौ च' इत्यत्र 'बहुवचने झल्येत्' इत्यनुवर्त्तते, तेन झलादौ सम्बुद्धावेत्वेन भवितव्यम् । न चौकारे कृते झलादिः सम्बुद्धिर्भवति, किं तर्हि ? अजादिः ।

**प्रत्ययस्थाच्च कादित्वं शीभावश्च प्रसज्यतेति**। पूर्वकश्चकारः तह्यर्थे, इतरः समुच्चये। अयं तर्हि दोषः—असकौ ब्राह्मणीत्यत्राज्ञाताद्यर्थविवक्षायामकचि कृते टापि च 'प्रत्ययस्थात् कात्' इत्यादिना कात् पूर्वस्येत्वं प्राप्नोति ? असौ ब्राह्मणी इत्यत्र 'औङ आपः' इत्यनेन शीभावोऽदसस्त्ववयव औकारे कृते टाबेव नास्तीति नैतद्दोषद्वयं सम्भवति। शीभावदोषश्च पाक्षिको वेदितव्यः, यस्मिन् पक्षे सामान्यग्रहणार्थो ङकारः प्रत्ययस्यासज्यते। यदा तु पूर्वसूत्रनिर्देशस्तदा द्विवचनयोरेव शीभावः; तयोरेव पूर्वाचार्यैङित्त्वस्य कृतत्वात्। अन्यस्य प्राप्तिरेव नास्ति; अङित्त्वात् ॥ १०७ ॥

**इदमो मः ॥** अलोऽन्त्यपरिभाषया मकारस्यैवानेन मकारेण भवितव्यम्, न च मकारस्य मकारादेशे कृते विशेषोऽस्ति, तत् किमर्थं मकारस्य मकारः इत्युच्यते ?—इत्येतच्चोद्यं निराकर्तुमाह–**मकारस्येत्यादि**। गतार्थम् ॥ १०८ ॥

**दश्च ॥** 'इदमः' इति वर्त्तते, 'सौ' इति निवृत्तम्; उत्तरसूत्रे पुनः 'सौ' इति वचनात्। तेनायं विभक्ति-

**पदमञ्जरी**

प्रकल्पयिष्यति 'तस्मादित्युत्तरस्य' इति। पूर्वसूत्रवद्वा प्रथमाया एव यथाकथञ्चिन्निर्वाहो भविष्यति। **आप एत्वं भवेत्तस्मिन्।** इह तर्हि स्त्रियां सम्बुद्धौ असा + औ स्थिते 'आङि चापः' 'सम्बुद्धौ च' इत्येवं प्राप्नोति, प्रकृतेरेव त्वौत्वे टापोऽभावादेत्वाभावः, न, झलीत्यनुवर्त्तनात् ? नैष दोषः; 'बहुवचने झल्येत्' इत्यतो झलीति तत्रानुवर्त्तते—झलादौ सम्बुद्धाविति, औत्वे कृते अझलादित्वान्न भविष्यति। **प्रत्ययस्थाच्च कादित्वमिति।** इह तर्हि स्त्रियामकचि असका + औ इति स्थिते 'प्रत्ययस्थात्कात्पूर्वस्य' इतीत्वं प्राप्नोति, प्रकृतेरेव त्वौकारे टापोऽभावादित्वाभावः। **शीभावश्च प्रसज्यते।** इह च स्त्रियाम् असा + औ इति स्थिते 'औङ आपः' इति

**भावबोधिनी**

औत्वविधानसामर्थ्य से आदेश रोकना सम्भव नहीं है क्योंकि 'औ' आदेश पुंलिङ्ग में चरितार्थ है। यह दोष पाक्षिक है। अतः उक्त अनेक क्लिष्ट का कल्पनाओं और दोषों को देखते हुए प्रकृति का ही 'औ' करना उचित है। ] ॥१०७॥

सु परे रहते 'इदम्' का मकारान्त आदेश होता है। उदा० इयम्। अयम्। [ इदम् + सु मकार का मकार ही होता है 'यः सौ' ७।२।११० सूत्र से स्त्रीलिङ्ग में दकार का यकार होता है–इयम् + सु, सुलोप। पुंल्लिङ्ग से इदम् + सु यहाँ म् का म् आदेश करने के बाद 'इदोऽय् पुंसि' सूत्र से इद् का अय् आदेश अय् अम् + सु, सुलोप–अयम्। ]

इदम् के मकार का मकार आदेशविधान 'त्यदादीनामः' से प्राप्त अत्व का बाध करने के लिये है ॥ १०८ ॥

इदम् के दकार के स्थान पर मकार आदेश विभक्ति परे रहते होता है। उदा० इमौ, इमे। इमम्, इमौ,

इदमो दकारस्य स्थाने मकारादेशो भवति विभक्तौ परतः। इमौ, इमे। इमम्, इमौ, इमान्[1] ॥

**३३८९. यः सौ ॥ ११० ॥ (४४१)**

इदमो [2]दकारस्य यकारादेशो भवति सौ परतः। इयम्।
उत्तरसूत्रे 'पुंसि' इति वचनात् स्त्रियामयं यकारः ॥

**३३९०. इदोऽय् पुंसि ॥ १११ ॥ (३४४)**

इदम इद्रूपस्य पुंसि सौ परतः 'अय्'–इत्ययमादेशो भवति। अयं ब्राह्मणः।
पुंसीति किम्? इयं ब्राह्मणी ॥

**न्यासः**

मात्रे दकारस्य मकारो भवति ॥ १०९ ॥

**यः सौ ॥** उत्तरसूत्रे पुंसीति वचनात् स्त्रियामयं यकारः। अथ नपुंसके कस्मान्न विज्ञायते? अशक्यमेवं विज्ञातुम्; नपुंसके हि 'स्वमोर्नपुंसकात्' इति सोर्लुका भवितव्यम्। अत्र सावुच्यमानः कथं तस्मिल्लुप्ते यकारः स्यात्, प्रत्ययलक्षणेनेति चेत्? न; 'न लुमताङ्गस्य' इति प्रत्ययलक्षणप्रतिषेधात्। तस्माद् युक्तमुक्तम्—**स्त्रियामयं यकार इति ॥ ११० ॥**

**इदोऽय् पुंसि ॥ १११ ॥**

**पदमञ्जरी**

शीभावः प्राप्नोति, औत्वविधानं तु पुंसि चरितार्थम्? पाक्षिक एष दोषः; यदा 'औङ आपः' इति पूर्वाचार्यनिर्देशस्तदा नास्ति, इतरयोरस्तु पक्षयोरस्ति ॥ १०७ ॥ १०८–१०९ ॥

**यः सौ ॥ स्त्रियामयं यकार इति।** नपुंसके तु 'स्वमोर्नपुंसकात्' इति लुमता लुप्तत्वात् सोरभावः ॥ ११० ॥ १११–११२ ॥

**भावबोधिनी**

इमान्। [ इदम् + औ, त्यदाद्यत्व, पररूप—इद + औ, वृद्धि एकादेश, द का म—इमौ। इसी प्रकार अन्य रूपों में भी समझना चाहिए। ] ॥ १०९ ॥

इदम् के दकार का यकार आदेश सु परे रहते होता है। उदा० इयम्। [ इदम् + सु, म् का म्, द् का य्, सुलोप-इयम्। ]

उत्तरवर्त्ती सूत्र में 'पुंसि' ( पुल्लिङ्ग में ) ऐसा वचन होने के कारण स्त्रीलिङ्ग में ही यह यकार आदेश होता है। ]

**विमर्श**—प्रकाशित काशिका के उपलब्ध संस्करणों में इस सूत्र की वृत्ति अशुद्ध उपलब्ध होती है—'इदमो मकारस्य यकारादेशो भवति सौ परतः।' अर्थात् मकार का यकार आदेश होता है। किन्तु ऐसा मानने पर इदम् + सु–का 'इयम्' बनना असम्भव है। (१) 'इदमो मः' से म् का म् ही किया गया है। अतः 'य' करना ठीक नहीं है। (२) यदि म का य् कर भी दिया जाय तो 'इदय् + सु' से इयम् को बनाना क्लिष्ट है। (३) इदमो मः। दश्च। यः सौ। इदोय् पुंसि।' इस सूत्रपाठ क्रम से स्पष्ट है कि 'द' का ही य करना चाहिए। (४) इसीलिए सिद्धान्तकौमुदी में यह वृत्ति है 'इदमो दस्य यः स्यात् सौ' ॥ ११० ॥

पुंल्लिङ्ग में सु परे रहते इदम् के 'इद्' रूप का 'अय्' इस प्रकार का आदेश होता है। उदा० अयं ब्राह्मणः। [ इदम् + सु में म् का म् आदेश, इद् का अय् आदेश—अय् अम् = अयम् + सु, सुलोप—अयम्। ]

पुंल्लिङ्ग में—इसका क्या फल है? इयं ब्राह्मणी [ यहाँ इद् का अय् नहीं होता है। पूर्व सूत्र से दकार का यकार होता है। ] ॥ १११ ॥

---

१. 'इह साविति न सम्बध्यते; उत्तरसूत्रे साविति वचनात्'—इत्यधिकमेकस्मिन्पुस्तके।

२. 'मकारस्य यकारादेशः' इति प्रकाशितपाठोऽशुद्धः।

**३३९१. अनाप्यकः ॥ ११२ ॥ (३४६)**

**इदमोऽकारस्य इद्रूपस्य स्थाने 'अन' इत्ययमादेशो भवति आपि विभक्तौ परतः । अनेन । अनयोः ।**
**अक इति किम् ? इमकेन । इमकयोः ।**
**'आपि' इति प्रत्याहारः तृतीयैकवचनात्प्रभृति सुपः पकारेण ॥**

**३३९२. हलि लोपः ॥ ११३ ॥ (३४७)**

**हलादौ विभक्तौ परत इदमोऽककारस्य इद्रूपस्य लोपो भवति । आभ्याम्, एभिः । एभ्यः । एषाम् । एषु ।**
**'नानर्थकेऽलोऽन्त्यविधिः' ( व्या० प० ६२ ) इति सर्वस्यायमिद्रूपस्य लोपः ।**

**न्यासः**

**अनाप्यकः ॥ अनेनेति ।** त्यदाद्यत्वे पररूपत्वे च कृत इद्रूपस्यानादेशः, 'टाङसिङसामिनात्स्याः' इतीनादेशः, 'आद् गुणः' । **अनयोरिति ।** 'ओसि च' इत्येत्वम्, अनादेशः, सुलोपः ।

**पकारेणेति ।** अथ कपः पकारेण कस्मान्न भवति ? प्रयोजनाभावात् । ननु चेहेत्यत्र प्राग्दिशीयायां विभक्तौ 'हलि लोपः' यथा स्यादितीदमस्ति प्रयोजनम् ? 'इदम इश्' इतीशात्र बाधकेन भवितव्यम् । अत्र च 'अमेहक्वतसित्रेभ्यः' इत्यत्र इहेत्यकृतेद्रूपलोपस्य हकारान्तस्येदमो निर्देशो लिङ्गम् ॥ ११२ ॥

**हलि लोपः ।** पूर्वेणानादेशे प्राप्ते हलादाविद्रूपस्य लोपो विधीयते । **आभ्यामिति ।** त्यदाद्यत्वम्, अतो गुणे पररूपत्वम्, 'सुपि च' इति दीर्घत्वञ्च ।

अथालोऽन्त्यपरिभाषयान्त्यस्यायं लोपः कस्मान्न भवति ? इत्याह—**नानर्थक इत्यादि ।** अभ्युपेत्यानर्थकेऽलोऽन्त्यविधिं परिहारान्तरमाह—**अथ वेत्यादि ।** न चाल्ग्रहणं कर्त्तव्यम्, यतस्तदनुवर्त्तते ? इत्यत आह—**अनाप्यक इत्यादि ।** यद्यपि तत्र प्रथमानिर्दिष्टम्, षष्ठीनिर्दिष्टेन चेहार्थः, तथापि हलीति सप्तमी अनिति षष्ठीत्वं प्रकल्पयिष्यति; 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति वचनात् । एषा परिहारो भाष्यकारमतेन बोद्धव्यः; अस्याः परिभाषाया अनङ्गीकरणात् । अत्र दर्शने तु त्रयाणामकाराणां पररूपमेकादेशं कृत्वा दीर्घत्वादि विधेयम् ॥ ११३ ॥

**पदमञ्जरी**

**हलि लोपः ॥ अन्ग्रहणमनुवर्त्तत इति ।** यद्यपि तत्प्रथमान्तम्, तथापि हलीति सप्तम्या तस्य षष्ठी प्रकल्प्यते ॥ ११३ ॥

**भावबोधिनी**

इदम् के ककाररहित 'इद्' रूप के स्थान पर 'अन' यह आदेश आप् विभक्ति परे रहते होता है । उदा० अनेन । अनयोः [ इदम् + टा, अत्व पररूप के बाद इस सूत्र से इद् का 'अन्' आदेश, 'टाङसिङसाम् इनात्स्याः' सूत्र से 'टा' का 'इन' आदेश, 'आद्गुणः' से गुण एकादेश—अनेन । इदम् + ओस् में भी अत्व पररूप के बाद इद् का 'अन' आदेश—अन + ओस् 'ओसि च' सूत्र से अ का एत्व—अने + ओस्, ए का अय् आदेश, स् का रुत्व विसर्ग–अनयोः । ]

अक = ककाररहित का—इसका क्या फल है ? इमकेन । इमकयोः । [ अकच्विशिष्ट होने से 'अन्' नहीं होता है । ]

तृतीया के एकवचन टा = आ से लेकर 'सुप्' के पकार तक 'आप्' यह प्रत्याहार है । [ अतः आपि = टा से सुप् तक परे रहते यह आदेश होता है । ] ॥ ११२ ॥

हलादि विभक्ति परे रहते ककाररहित इदम् के इद् रूप का लोप होता है । उदा० आभ्याम्, एभिः । एभ्यः २ । एषाम् । एषु । [ इदम् + भ्याम्, त्यदाद्यत्व पररूप—इद + भ्याम्, इद् का लोप—अ + भ्याम्, 'सुपि च' से दीर्घ—आभ्याम् । इसीप्रकार इदम् + भिस् में इद् + भिस् इद् का लोप, अ + भिस्, अ का एत्व । भ्यस् परे भी यही होता है । एषाम्—इदम् + आम्, सुट् आदि होता है । ]

'अनर्थक में' 'अलोऽन्त्यस्य' यह विधि लागू नहीं होती है' इसलिए सम्पूर्ण 'इद्' का ही लोप होता है ।

अथ वा—नायमिल्लोपः[1]। 'अनाप्यकः' ( ७.२.११२ ) इति अन्ग्रहणमनुवर्त्तते ॥

**३३९३. मृजेर्वृद्धिः ॥ ११४ ॥ (२४७२)**

'विभक्तौ' इति निवृत्तम्। मृजेरङ्गस्य इको वृद्धिर्भवति। मार्ष्टा, मार्ष्टुम्, मार्ष्टव्यम्।

मृजेरिति धातुग्रहणमिदम्, धातोश्च कार्यमुच्यमानं धातुप्रत्यय एव वेदितव्यम्। तेन कंसपरिमृड्भ्याम्, कंसपरिमृड्भिरित्यत्र न भवति ॥

**३३९४. अचो ञ्णिति ॥ ११५ ॥ (२५४)**

**न्यासः**

**मृजेर्वृद्धिः ॥ मार्ष्टेति।** 'मृजू शुद्धौ', व्रश्चादिसूत्रेण षत्वम्, ष्टुत्वम्।

मृजेः क्विबन्ताद् विभक्तावुत्पन्नायां कंसपरिमृड्भ्याम्, कंसपरिमृड्भिरित्यत्र वृद्धिः प्राप्नोति, न च क्विबाश्रयः 'क्ङिति च' इति वृद्धिप्रतिषेधो भवितुमुत्सहते; यस्मात् क्ङितीति निमित्तसप्तमी। न चात्र क्विन्निमित्ता वृद्धिः प्राप्नोति; किं तर्हि? विभक्तिनिमित्ता। तस्मात् तस्याः प्रतिषेधो वक्तव्य इत्यत आह—**मृजेरिति धातुग्रहणमित्यादि।** भ्रौणहत्यमिति निपातनेन ज्ञापितोऽयमर्थः—धातोः कार्यमुच्यमानं धातुप्रत्यय एव भवतीति, तेन कंसमृड्भ्यामित्यत्र न भवति। यो हि धातोरित्येवं विहितः स धातुप्रत्ययः। न च भ्यामादिकं धातोरित्येवं विहितम्, किं तर्हि? प्रातिपदिकादित्येवम्। तस्मान्नासौ धातुप्रत्ययः। **कंसपरिमृड्भ्यामित्यादि।** पूर्ववत् षत्वे कृते षकारस्य जश्त्वं डकारः ॥ ११४ ॥

**अचो ञ्णिति। निश्चायनिष्पावाविति** निष्पूर्वाच्चिनोतेः, पुनातेश्च 'परिमाणाख्यायां सर्वेभ्यः' इति घञ्। 'इदुदुपधस्य चाप्रत्ययस्य' इति विसर्जनीयषत्वम्। **कारः, हार इति।** कृञः, हृञश्च भावे घञ्।

**पदमञ्जरी**

**मृजेर्वृद्धिः ॥ धातोश्च कार्यमुच्यमानमिति।** वस्तुतो धातोर्यत्कार्यमुच्यते, तदिह धातोरुच्यमानमिति विवक्षितम्। स धातुः स्वरूपेणैव गृह्यतां मा वा, प्राहितेन 'अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्' इत्यग्मप्यमागमो धातुप्रत्यय एव भवति, न प्रमृड्भ्यामित्यादौ।[2] **तत्प्रत्यय इति।** धातोरित्येवं विहिते। **कंसपरिमृड्भ्यामिति।** अत्र तदन्तविधिना प्रसङ्गः ॥ ११४ ॥

**अचो ञ्णिति ॥ तण्डुलनिश्चाय** इत्यादौ 'परिमाणाख्यायां सर्वेभ्यः' इति घञ्।

**भावबोधिनी**

[ यदि अनर्थक में भी अलोऽन्त्य परिभाषा मान लें, उस पक्ष में दोष निवारण करते हैं— ] अथवा यह इद् का लोप नहीं है। अपितु 'अनाप्यकः' सूत्र से 'अन्' इसकी अनुवृत्ति होती है। [ अतः इदम् के इद् का जो अन् होता है उसके अन्त्य = न् का लोप होता है। अतः इदम् + भ्याम् आदि में त्यदाद्यत्व के बाद इद् का अन् और न् का लोप कर देने पर अ + भ्याम् बचता है। इसका दीर्घ किया जाता है। ] ॥ ११३ ॥

'विभक्तौ' इस अधिकार की निवृत्ति है। मृज् इसके अङ्ग के इक् की वृद्धि होती है। उदा० मार्ष्टा, मार्ष्टुम्, मार्ष्टव्यम्। [ मृज् + तृच्, तुमुन्, तव्यत् परे हैं, ऋ की वृद्धि रपर करने पर मार्ज् + तृ, "व्रश्चभ्रस्ज" इत्यादि सूत्र से ज् का ष्—मार्ष् + तृ, ष्टुत्व, ऋ का अनङ् आदि करने पर रूप बनता है। ]

'मृजेः' यह धातु का ग्रहण है। और धातु का कहा गया कार्य धातु के प्रत्यय परे ही समझना चाहिए। इस कारण कंसपरिमृड्भ्याम्, कंसपरिमृड्भिः [ कंसपरिमृज् + भ्याम् ] आदि में वृद्धि नहीं होती है। [ क्योंकि भ्याम् आदि प्रातिपदिक के प्रत्यय हैं धातु के नहीं। ] ॥ ११४ ॥

ञित् और णित् परे रहते अजन्त अङ्ग की वृद्धि होती है। उदा० ञित् परे—(१) एकः तण्डुलनिश्चायः। [ निस् पूर्वक 'चि' से 'परिमाणाख्यायां सर्वेभ्यः' ३।३।२० सूत्र से घञ् = अ प्रत्यय, ञित् परे मानकर इ की वृद्धि ऐ,

---

१. 'अयमनोऽलोन्त्यलोपः'—इति पाठा०। २. इदं काशिकायां नास्ति।

अजन्तस्याङ्गस्य ञिति णिति च वृद्धिर्भवति । ञिति—एकस्तण्डुलनिश्चायः । द्वौ शूर्पनिष्पावौ । कारः । हारः ।

णिति—गौः, गावौ, गावः । सखायौ, सखायः । जैत्रम् । यौत्रम् । च्यौत्नः । जयतेः, यौतेश्च 'उणादयो बहुलम्' ( ३.३.१ ) इति ष्ट्रन् प्रत्ययः । च्यवतेरपि त्नण् ।।

**३३९५. अत उपधायाः ।। ११६ ।। (२२८२)**

**न्यासः**

**गौः, गावौ, गाव इति ।** 'गोतो णित्' इति सर्वनामस्थानस्य णित्त्वम् । **सखायौ, सखाय इति ।** अत्रापि 'सख्युरसम्बुद्धौ' इति । **जयतेः, यौतेश्चेति ।** 'जि जये', 'यु मिश्रणे' । **च्यवतेरिति ।** 'च्युङ् छ्युङ् ज्युङ् प्रुङ् प्लुङ् गतौ' । अज्ग्रहणमनिकोऽपि यथा स्याद्—गौरिति । ननु णित्कारणसामर्थ्यादेव तत्र भविष्यति ? नैतदस्ति; अस्ति ह्यन्यत् णित्करणस्य प्रयोजनम्, किं तत् ? गावौ, गाव इत्यवादेशे कृते 'अत उपधायाः' इति वृद्धिर्यथा स्यात् । यद्येवम्, गौरित्यत्रागुणविषये वृद्धिरियं कृतार्थेति कारयतीत्यादिषु परत्वाद् गुणेन बाध्यते ? णित्करणसामर्थ्यान्न भविष्यतीति । एतच्चानुत्तरम्; 'णेरनिटि' इत्येवमादौ णित्करणस्य चरितार्थत्वात् ? नैष दोषः; आचार्यप्रवृत्तिर्ज्ञापयति—गुणविषयेऽपि वृद्धिर्भवतीति, यदयं जागर्त्तेर्वृद्धिविषये प्रतिषेधविषये च 'जाग्रोऽविचिण्णल्ङित्सु' इति पुनर्गुण आरभ्यते । यदि हि गुणविषये वृद्धिर्न स्यात्, तदा जागरयतीत्यादिषु गुणोऽस्त्येवेति तद्विषये गुणारम्भोऽनर्थकः स्यात् । वृद्धिविषयता चारम्भस्य चिण्णलोः प्रतिषेधाद् विज्ञायते । अथ योगविभागः किमर्थः, न 'ञ्णित्यत उपधायाः' इत्येवोच्येत ? अशक्यमेवं वक्तुम्; एवं ह्युच्यमाने यद्यपि गावौ, गाव इत्यत्रावादेशे कृते चायकः, लावक इत्यत्र गुणे कृतेऽयवादेशयोः कृतयोः सिध्यति—गौः, सखायौ; जैत्रमित्यादौ तु न सिध्यति; अयवादेशयोर्गुणस्य च यथायोगमसम्भवात् । तस्माद् यथायोग योगविभागः कर्त्तव्यः ।। ११५ ।।

**अत उपधायाः ।।** पाक इत्यादौ भावे घञ्, 'चजोः कु घिण्ण्यतोः' इति कुत्वम् । **राग इति ।** 'घञि च भावकरणयोः' इत्यनुनासिकलोपः । **पाचयतीति ।** 'हेतुमति च' इति णिच् **चकासयतीति ।** उपधाग्रहणादिह चकारादकारस्य न भवति ।

**पदमञ्जरी**

**गौ, गावौ, गाव इति ।** अत्र गौरित्येतत्साक्षादुदाहरणम्, इतरत्रावादेशे कृते 'अत उपधायाः' इत्येव सिद्धम् । **सखायौ सखाय इति ।** अत्रापि सखायावित्येतदुदाहरणम्, जसि तु 'जसि च' इति गुणे अयादेशे च कृते पूर्ववत्सिद्धम् । **च्यौत्नमिति** बलनाम, छान्दसम्—'तमिच्च्यौत्नैरार्यन्ति' (ऋ० ८. १६. ६) । किमर्थं पुनरिदमुच्यते, यावता जेतृयोतृशब्दाभ्यां प्रज्ञाद्यणि जैत्रम्, यौत्रमिति सिद्धम् । च्यौत्नमिति 'उणादयोऽव्युत्पन्नानि प्रातिपदिकानि' (हे० प० १०३) । तण्डुलनिश्चायः, श्रावकः, लावक इत्यादौ तु गुणे अयवोश्च कृतयोः 'अत उपधायाः' इत्येव सिद्धम् । एवं कारक इत्यादौ 'गोतो णित्' इत्येतद् 'गोत औत'

**भावबोधिनी**

आय् आदेश—निस् चायः, श्चुत्व निश्चायः । तण्डुलानां निश्चायः—षष्ठी-समास ] द्वौ शूर्पनिष्पावौ । [ निस् पूर्वक पूञ् से पूर्ववत् घञ् प्रत्यय, वृद्धि औ, आव् आदेश , 'इदुदुपधस्य चाप्रत्ययस्य' से मूर्धन्यादेश निष्पावः । ] कारः । हारः । [ कृ, हृ से भाव अर्थ में घञ्, ऋ की वृद्धि आ, रपर—कारः । हारः । ]

णित् परे उदा० गौः । गावौ । गावः । [ 'गोतो णित्' से णिद्वद्भाव मान कर सर्वनामस्थान परे वृद्धि होती है । ] सखायौ । सखायः । [ यहाँ 'सख्युरसम्बुद्धौ' सूत्र से सर्वनामस्थान् का णिद्वद्भाव मानकर वृद्धि होती है । ] जैत्रम्, यौत्रम् । च्यौत्नः । 'जि' और 'यु' धातुओं से 'उणादयो बहुलम्' के अनुसार 'ष्ट्रन' (त्र) प्रत्यय होने पर णित् परे मान कर वृद्धि होती है । 'च्यु' धातु से 'त्नण्' [ प्रत्यय परे वृद्धि होती है । ] ।। ११५ ।।

अङ्ग के उपधाभूत अकार के स्थान में वृद्धि होती है ञित् और णित् प्रत्यय परे रहते । उदा० पाकः । त्यागः । यागः । [ पच्, त्यज्, यज्,—इनसे भाव में घञ् = अ प्रत्यय परे रहते 'उपधा' अकार की वृद्धि होती है । रागः ।

अङ्गोपधाया अकारस्य स्थाने ञिति णिति च प्रत्यये वृद्धिर्भवति। पाकः, त्यागः, यागः। पाचयति, पाचकः। पाठयति, पाठकः।

अत इति किम्? भेदयति, भेदकः। उपधाया इति किम्? चकासयति, तक्षकः॥

३३९६. तद्धितेष्वचामादेः॥ ११७॥ (१०७५)

तद्धिते ञिति णिति च प्रत्यये परतोऽङ्गस्याचामादेरचः स्थाने वृद्धिर्भवति। गार्ग्यः। वात्स्यः। दाक्षिः। प्लाक्षिः। णिति—औपगवः। कापटवः।

**न्यासः**

तपरकरणं लाघवार्थम्। असति हि तस्मिन्नस्योपधाया इत्युच्यमाने गौरवं स्यात्। दीर्घनिवृत्त्यर्थं तु तपरकरणं न भवति, न दीर्घस्य कृतायां वृद्धौ कश्चिद् विशेषोऽस्ति॥ ११६॥

तद्धितेष्वचामादेः॥ 'अचाम्' इति निर्धारणे षष्ठी। अचामादेरचः स्थान इति। ननु चेक्परिभाषोपस्थानादिक एव स्थाने वृद्ध्या भवितव्यम्, तस्मादिकः स्थान इत्येवं वक्तव्यम्, न त्वचः स्थान इति? एवं मन्यते—'अचो ञ्णिति' इत्यतः स्थानिनिर्देशार्थे द्वितीयमजग्रहणमनुवर्त्तते, तेन यथा 'अचो ञ्णिति' इत्यत्र स्थानिनिर्देशादिक्परिभाषा नोपतिष्ठते, तथेहापीत्यदोषः। गार्ग्यः, वात्स्य इति। 'गर्गादिभ्यो यञ्'। दाक्षिः, प्लाक्षिरिति। 'अत इञ्'। औपगवः, कापटव इति। प्राग्दीव्यतीयोऽण्।

**पदमञ्जरी**

इति वक्तव्यम्—गोत औकारादेशो भवति सर्वनामस्थाने परतः। कथं सखायौ, सखायः? 'सख्युरसम्बुद्धौ' इत्येतत् 'सख्युरैत्' इति वक्ष्यामि, अत्रोच्यते; 'ञ्णिति' इति तावदुत्तरार्थं वक्तव्यम्। किञ्च—प्रियमाचष्टे प्रापयतीत्यादौ प्राद्यादेशेषु वृद्धिर्न स्यात्। अथ ते दीर्घान्ता विधीयेरन्? तदतिगुरु स्यादिति यथान्यासमेवास्तु॥ ११५॥ ११६॥

तद्धितेष्वचामादेः॥ अचामादेरचो वृद्धिरिति। ननु च इक्परिभाषोपस्थानादिक एव स्थानित्वेन भवितव्यम्, यद्यपि तुल्यजातीयस्य निर्धारणं भवति, यथा—गवां कृष्णा सम्पन्नक्षीरतमेत्युक्ते गौरेव प्रतीयते, तथात्राप्यचामादिरजेव; तथापि साक्षाद् 'अचः' इति निर्देशाभावादिक्परिभाषोपतिष्ठेतैव—इगात्मकस्याच इति, तस्मात्स्थानिनिर्देशार्थमच इति वक्तव्यम्? तन्न वक्तव्यम्; प्रकृतमनुवर्त्तते—'अचो ञ्णिति' इति, तत्र निर्दिष्टस्थानिकत्वादिक्परिभाषाया अव्यापारः।

**भावबोधिनी**

रञ्ज् से घञ् प्रत्यय, 'घञि च भावकरणयोः' सूत्र से घञ् प्रत्यय, धातु के 'न्' का लोप। 'चजोः कु घिण्ण्यतोः' सूत्र से च् का क्, ज् का ग्। उपधा अकार की वृद्धि।] पाचयति, पाचकः। पाठयति, पाठकः। [पच् + णिच्, पच् + ण्वुल्, पठ् + णिच्, पठ् + ण्वुल्, उपधावृद्धि होने पर पाचि, पाचक, पाठि, पाठक आदि के बाद लुडादि तथा विभक्त्यादि कार्य होते हैं।]

अकार की—इसका क्या फल है? भेदयति, भेदकः। [भिदिर् + णिच्, ण्वुल् परे वृद्धि नहीं होती क्योंकि अकार नहीं है।] उपधा [के अकार।] की—इसका क्या फल है? चकासयति। [चकास् + णिच्। तक्ष् + ण्वुल्। उपधा का अकार नहीं होने से वृद्धि नहीं होती है।]॥ ११६॥

ञित् और णित् तद्धित प्रत्यय परे रहते अङ्ग के अचों के आदि अच् के स्थान में वृद्धि होती है। उदा० गार्ग्यः। वात्स्यः। [गर्गस्य गोत्रापत्यम्, वत्सस्य अपत्यम्—इस अर्थ में 'गर्गादिभ्यो यञ्' सूत्र से यञ् प्रत्यय, आदि अच् की वृद्धि, भसंज्ञा, अलोप आदि होता है।] दाक्षिः। प्लाक्षिः। [दक्ष और प्लक्ष—शब्दों से अपत्य अर्थ से 'इञ्' प्रत्यय 'अत इञ्' सूत्र से होता है। आदि अच् की वृद्धि] णित् परे उदा० औपगवः। कापटवः। [उपगु और कापटु शब्दों से अपत्य अर्थ में अण् प्रत्यय, आदि अच् की वृद्धि, भसंज्ञा होने पर 'ओर्गुणः' सूत्र से 'उ' का गुण ओ, अव आदेश।]

त्वाष्ट्रः, जागत इत्यत्राचामादेर्वृद्धिरन्त्योपधालक्षणां वृद्धिं बाधते (म० भा०) ॥

**३३९७. किति च ॥ ११८ ॥ (१०७६)**

**किति च तद्धिते परतोऽङ्गस्याचामादेरचः स्थाने वृद्धिर्भवति । 'नडादिभ्यः फक्' (४.१.९९)—**

**न्यासः**

अथ त्वाष्ट्रः, जागत इत्यत्र त्वष्टृजगद्भ्यां तस्येदमित्यणि कृते यथाक्रमम् 'अचोञ्णिति' इत्यज्लक्षणा वृद्धिः प्राप्नोति, 'अत उपधायाः' इत्युपधालक्षणा वृद्धिः कस्मान्न भवति ? इत्याह—**अचामादेर्वृद्धिरन्त्योपधावृद्धिं बाधत इति ।** कथं पुनरन्यस्योच्यमानाऽन्यस्य बाधिका स्यात् ? ज्ञापकात् । यदयमनुशतिकादिषु पुष्करसच्छब्दं पठति, यज्ज्ञापयति—यत्रादिवृद्धिस्तत्रान्या वृद्धिर्न भवतीति । तस्यानुशतिकादिषु पाठस्यैतत् प्रयोजनम्—उभयपदवृद्धिर्यथा स्यात्, पुष्करसदोऽपत्यं पौष्करसादिरिति । 'बाह्वादिभ्यश्च' इतीञ् । यदि चादिवृद्धिरन्यस्या वृद्धेर्बाधिका न स्यात्, उपधालक्षणेनैव वृद्धेः सिद्धत्वात् पौष्करसादिशब्दस्य पुष्करसच्छब्दोऽनुशतिकादिषु न पठ्येत । पश्यत्याचार्यः—यत्रादिपदवृद्धिस्तत्रान्यावृद्धिर्न भवतीति; यतोऽनुशतिकादिषु पुष्करसच्छब्दं पठति । ननु ठगर्थस्तत्र पाठः, तत्र ह्युपधालक्षणा वृद्धिर्न प्राप्नोतीति ठकोऽञ्णित्त्वात्—पुष्करसदा चरतीति पौष्करसादिक इति ? नैतदस्ति; यदि पुष्करसच्छब्दाच्चरत्यर्थे ठगुत्पद्यते । कस्मात् पुनर्नोत्पद्यते ? अनभिधानात् । अभिधानलक्षणा हि कृत्तद्धितसमासा भवन्तीति । तस्माज्ज्ञापक एवानुशतिकादिषु पाठः पुष्करसच्छब्दस्य ॥ ११७ ॥

**किति च ॥** यद्यपि 'तद्धितेषु' इति बहुवचनान्त प्रकृतम्, तथापीहैकवचननिर्देशादेकवचनविषयो बहुवचनस्य विपरिणामेन विज्ञायते, इत्यत आह—**किति च तद्धिते परत इति । नाडायनः, चारायण इति ।**

**पदमञ्जरी**

अथ त्वाष्ट्रः, जागत इत्यत्र त्वष्टृजगच्छब्दाभ्याम् 'तस्येदम्' इत्यणि कृते यथाक्रमम् 'अचो ञ्णिति', 'अत उपधायाः' इति वृद्धिः कस्मान्न भवति ? तत्राह—**त्वाष्ट्रः, जागत इत्यत्रेति । अन्त्योपधालक्षणां वृद्धिं बाधत इति ।** परत्वादिति भावः । अन्त्योपधालक्षणाया वृद्धेरवकाशः—गौः, याचकः, अस्या अवकाशः—सुश्रुत् सौश्रुतः; त्वाष्ट्रः, जागत इत्यत्रोभयप्रसङ्गे परत्वादादिवृद्धिर्भवति । सकृद्गतिन्यायश्चाश्रीयते, न पुनः-प्रसङ्गविज्ञानम् (व्या० प० ४०) । एवं च कृत्वा पुष्करसच्छब्दस्यानुशतिकादिषु पाठोऽर्थवान्न भवति । यदि त्वादिवृद्धिविषयेऽन्त्योपधावृद्धिः स्यात्, तदोपधालक्षणयैव वृद्ध्या पौष्करसादेः सिद्धत्वादनुशतिकादिषु तन्न पठेत्, ठगर्थं तत्र पाठः स्यात्—पौष्करसादिकः । न ह्यत्रोपधालक्षणा वृद्धिः प्राप्नोति, अञ्णित्त्वात् ? नैतदस्ति; न ह्यस्माच्चरत्यर्थे ठगुत्पद्यते, अनभिधानात् । यद्वा प्रतिपदविहिते बाह्वादिलक्षण इञ्येवोभयपदवृद्धिः, नान्यत्रेति ठगर्थः पाठो न भवति । यत्र त्वादिवृद्धिः प्रतिषिध्यते, तत्रान्त्योपधालक्षणा वृद्धिः कस्मान्न भवति—व्यसोर्भावो वैयसवम्, 'इगन्ताच्च लघुपूर्वात्' इत्यण्, व्यापदि भवं वैयापदमिति ? तत्राप्यैचौ परत्वात् बाधकाविति सिद्धम् ॥ ११७ ॥

**किति च ॥ नाडायनः, चारायण इति ।** 'नडादिभ्यः फक्' । **आक्षिकः, शालाकिक इति ।**

**भावबोधिनी**

त्वाष्ट्रः, जागतः—इनमें [ त्वष्टृ और जगत् शब्दों से अण् प्रत्यय होने पर आदि अच्, उपधा तथा अन्त्य—इन तीनों की वृद्धि प्राप्त होने पर ] अचों में आदि अच् की वृद्धि अन्त्य अच् और उपधा के अकार की वृद्धि का बाध कर देती है । [ अतः केवल आदि अच् की वृद्धि होती है । ] ॥ ११७ ॥

और कित् तद्धित परे भी अङ्ग के अचों में आदि अच् के स्थान पर वृद्धि होती है । उदा० नाडायनः, चारायणः । 'नडादिभ्यः फक्' से फक् = आयन प्रत्यय । [ कित् परे होने से आदि अच् की वृद्धि, णत्व । ] आक्षिकः,

नाडायनः, चारायणः । 'प्राग्वहतेष्ठक्' ( ४.४.१ )—आक्षिकः, शालाकिकः ॥

॥ इत्युपाध्यायश्रीवामनकृतायां काशिकावृत्तौ
सप्तमाध्यायस्य द्वितीयः पादः ॥

———

न्यासः

'नडादिभ्यः फक्' इति फक् आक्षिकः, शालाकिक इति । अक्षिशलाकाशब्दाभ्याम् 'तेन दीव्यति खनति जयति जितम्' इति ठक्, 'ठस्येकः' ॥ ११८ ॥

॥ इति बोधिसत्त्वदेशीयाचार्यश्रीजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरण-
पञ्जिकायां सप्तमाध्यायस्य द्वितीयः पादः ॥

———

पदमञ्जरी

दीव्यत्यर्थे ठक् ॥ ११८ ॥

॥ इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां सप्तमाध्यायस्य द्वितीयपादः ॥

———

भावबोधिनी

शालाकिकः । [ अक्ष और शलाका शब्दों के तृतीयान्त रूप से 'तेन दीव्यति खनति जयति जितम्' ( ४।४।२ ) सूत्र से ठक्=ठ=इक, प्रत्यय, कित् होने से आदि अच् की वृद्धि, भसंज्ञा, अ, आ का लोप—आक्षिकः शालाकिकः । ] ॥११८॥

॥ इस प्रकार उपाध्याय श्री वामन-विरचित 'काशिका' वृत्ति में सप्तम अध्याय का द्वितीय पाद समाप्त हुआ ॥

॥ इस प्रकार जयशङ्करलाल-त्रिपाठि-विरचित 'भावबोधिनी' हिन्दी-व्याख्या में काशिकावृत्ति के
सप्तम अध्याय का द्वितीय पाद समाप्त हुआ ॥

व्याख्याद्वयसमाश्लिष्टा काशिका विदुषां मुदे ।
जयशङ्करलालेन प्रणिधानेन संस्कृता ॥

—०—

# अथ सप्तमाध्याये तृतीयः पादः

**३३९८. देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसामात् ॥ १ ॥ (१४३९)**

देविका, शिंशपा, दित्यवाट्, दीर्घसत्र, श्रेयस्—इत्येतेषामङ्गानामचामादेरचः स्थाने वृद्धिप्रसङ्गे आकारो भवति ञिति, णिति, किति तद्धिते परतः। देविकायां भवमुदकं दाविकमुदकम्। देविकाकूले

**न्यासः**

**देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसामात्** ॥ 'तद्धितेष्वचामादेः' इत्यान्तरतम्यादैकारे वृद्धौ प्राप्तायां देविकादीनामाकारो विधीयते। अत्र पक्षत्रयं सम्भाव्यते—१. प्रकृतेनाङ्गेन देविकादयो विशिष्यन्ते—देविकादीनामङ्गानामिति, २. तैर्वाङ्गम्—देविकाद्यन्तस्याङ्गस्येति, अथ वा–३. तैराद्योऽच्–देविकादीनां सम्बन्धिनामचां मध्ये य आदिरजिति। तत्र यद्याद्यः पक्ष आश्रीयेत, तदा देविकाकूले भवाः शालयो दाविकाकूलाः शालयः इति न सिध्येत्, न ह्यत्र देविकाशब्दोऽङ्गम्, किं तर्हि ? देविकाकूलशब्दः। ननु चाङ्गस्येत्यवयवषष्ठी, तत्रैवं विशेषणविशेष्यभावः करिष्यते–अङ्गस्य ये देविकादयोऽवयवभूता इति, भवति चेहावयवोऽङ्गस्य देविकाशब्दः, ततोऽयमदोष इति चेत् ? सत्यमेतत्; किन्त्वतिप्रसङ्गः स्यात्, सुदेविकायां भवः

**पदमञ्जरी**

**देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयसामात्** ॥ अत्र विशेषणविशेष्यभावे कामचाराद् देविकादिभिरङ्गं विशेष्यते, तेन वा तानि, तत्रापि सामानाधिकरण्येन, वैयधिकरण्येन वा—इति चत्वारः पक्षाः। तत्र देविकादिभिः सामानाधिकरण्येनाङ्गस्य विशेषणात् तदन्तविधिसम्भवाद्देविकाद्यन्तस्याचामादेराकारो भवतीत्यर्थः स्यात्। तत्र केवलानां न स्यात्, न हि तदेव तदन्तं भवति। व्यपदेशिवद्भावोऽपि प्रातिपदिकेन निषिद्धः। यदि तु प्रत्ययविधिविषयः स प्रतिषेधः, तदा केवलानां भवतु, तदादौ तु न स्यात्–देविकाकूले भवा दाविकाकूलाः शालय इति। तदन्ते चातिप्रसङ्गः—सुदेविकादौ भवं सौदेविकमिति; अत्र सोरुकारस्याकारः स्यात्। अथ वैयधिकरण्येन विशेषणम्–देविकादीनां यदङ्गमिति, किञ्च–देविकादीनामङ्गं यत्र च तेऽवयवभूताः, ततश्च केवलान्न स्यात्, न हि स एव तस्यावयवो भवति। व्यपदेशिवद्भावोऽपि प्रातिपदिकेन

**भावबोधिनी**

नत्वा गणेशं काशीशं शारदां पितरौ गुरून्।
तृतीयं सप्तमे पादं व्याचष्टे 'जयशङ्करः' ॥

अब काशिका-सप्तम अध्याय में तृतीय पाद आरम्भ होता है—

देविका, शिंशपा, दित्यवाट्, दीर्घसत्र, श्रेयस्—इन शब्दों के अङ्गों ( अङ्गसंज्ञकों ) के अचों के आदि अच् के स्थान पर वृद्धि के प्रसङ्ग में, ञित्, णित्, कित् तद्धित परे रहते, आकार ( आदेश ) हो जाता है अर्थात् वृद्धि ( ऐ, औ ) न होकर केवल 'आ' होता है। उदा० देविकायां भवम् उदकम्–दाविकम्। [ देविका नामक नदी में होने वाला जल। ] देविकाकूले भवाः शालयः—दाविकाकूलाः शालयः। [ देविका नदी के तट पर उत्पन्न होने वाले शाली = चावलविशेष। ] पूर्वदेविका नामक पूर्व के लोगों का ग्राम है, वहाँ होने वाला—पूर्वदाविकः। [ सभी उदाहरणों में 'तत्र भव.' सूत्र से अण् प्रत्यय करने पर ] ''प्राचां ग्राम-नगराणाम्'' इस सूत्र से जो उत्तरपद की वृद्धि प्राप्त होती है वह भी 'आ' ही होती है। [ अतः 'पूर्वदेविका ग्राम में होनेवाला—इस अर्थ में अण् होने पर उत्तरपद भी 'देविका' की वृद्धि 'आ' ही होती है। पूर्वपद में भी देविका की वृद्धि न होकर 'आ' ही होता है। ]

**विमर्श**—प्रस्तुत सूत्र के अर्थ के प्रसङ्ग में विशेष्य-विशेषणभाव का विचार आवश्यक है। यह सूत्र 'अङ्गस्य' ( ६।४।१ ) इस अधिकार में है। अतः (१) देविका आदि के द्वारा अङ्ग को विशेषित किया जाय,

**भवाः शालयो दाविकाकूलाः शालयः। पूर्वदेविका नाम प्राचां ग्रामः, तत्र भवः पूर्वदाविकः। 'प्राचां ग्रामनगराणाम्' (७।३।१४) इत्युत्तरपदवृद्धिः, साप्याकार एव भवति।**

**शिंशपा—शिंशपाया विकारश्चमसः शांशपश्चमसः। पलाशादिरयम्, तेन पक्षे अण्, अनुदात्तादिलक्षणो वा अञ्। शिंशपास्थले भवाः शांशपास्थलाः। पूर्वशिंशपा नाम प्राचां ग्रामः, तत्र भवः पूर्वशांशपः।**

**न्यासः**

सौदेविकः—इत्यत्रापि स्यात्। अथ द्वितीयपक्ष आश्रीयेत, एवमपि दाविकाकूलाः शालय इति न सिध्येत्। देविकादिभिः प्रकृतेऽङ्गे विशेष्यमाणे विशेषणे च तदन्तविधिरिति देविकाद्यन्तस्याङ्गस्येति भवितव्यम्, न तदादेः। तस्मात् तदादेरपि यथा स्यादिति यत्नान्तरमास्थेयमिति। तृतीये तु पक्ष आश्रीयमाणे, विनापि यत्नान्तरेण केवलस्य तदादेस्तदन्तस्य भवति। सर्वत्राचामादेरचो देविकादिसम्बन्धित्वात्। अतस्तमेवाश्रित्याह—**देविकाशिंशपादित्यवाड्दीर्घसत्रश्रेयस इत्येतेषामित्यादि**। एषां देविकादीनामचां मध्य आदिभूतो योऽज् वृद्धेरैकारस्य प्रसङ्गे तस्याकारो विधीयते।

**पदमञ्जरी**

प्रतिषिद्धः। यदि तु प्रत्ययविषयः स प्रतिषेधः, तदा केवलानां भवतु, तदन्ते त्वतिप्रसङ्गः पूर्ववत्। केवलं तदादावप्रसङ्ग एवास्मिन्पक्षे परिहृतः। अथाङ्गं समानाधिकरणं विशेषणम्—अङ्गं ये देविकादय इति, तदा तदन्तेऽतिप्रसङ्गः परिहृतः, तदादौ त्वप्रसङ्गः स्यादेव। तदेव तर्हि व्यधिकरणं विशेषणम्—अङ्गस्य ये अवयवभूता देविकादयस्तेषामचामादेराकार इति? तदा केवले तदादौ च न दोषः, किन्तु परपदभूतानामपि तेषामाकारप्रसङ्गः। तत्र प्राग्ग्रामे पूर्वशांशप इत्यादाविष्ट एवाकारः, सुदेविकादावग्रामे त्वनिष्टप्रसङ्गः। तदेवमेते चत्वारोऽपि पक्षा दुष्टाः।

अथापरः पक्षः—अङ्गेन देविकादिभिश्चाचामादिर्विशेष्यते—अङ्गस्याचामादेराकारो भवति स चेद्देविकादीनां सम्बन्धी भवतीति। अत्र पक्षे केवलेषु तदादौ चाङ्गे नास्ति दोषः; नापि सौदेविकमित्यत्र पूर्वदस्योत्तरपदस्य वा प्रसङ्गः; किन्तु प्राग्ग्रामे पूर्वशांशपः—इत्यादावुत्तरपदभूतानां देविकादीनामाकारो न स्यात्? नैष दोषः; 'प्राचां ग्रामनगराणाम्' इत्यत्रैतदनुवर्तिष्यते, तत्र च वाक्यभेदेन सम्बन्धः—प्राचां ग्रामनगराणामुत्तरपदस्याचामादेरचो वृद्धिर्भवति, देविकादीनामुत्तरपदानामचामादेराकार इति। **अयमपि वृत्तिकारस्य** पक्षो न भवति; यद्ययं पक्षोऽभविष्यत्, उत्तरपदवृद्धावप्येतदनुवर्त्तिष्यत इत्येवावक्ष्यत्।

**भावबोधिनी**

(२) अथवा अङ्ग द्वारा देविका आदि को विशेषित किया जाय। इनमें भी (३) सामानाधिकरण्य मानकर अथवा (४) वैयधिकरण्य मानकर।

देविका आदि के द्वारा सामानाधिकरण्य से अङ्ग को विशेषित करने पर तदन्तविधि हो जाने से—देविका आदि हैं अन्त में जिसके ऐसे अङ्ग के अचों में आदि का आकार होता है। परन्तु ऐसा अर्थ करने पर केवल (अकेले) देविका आदि का नहीं हो सकेगा क्योंकि वह स्वयं तदन्त (स्वान्त) नहीं होता है। यदि वैयधिकरण्य से अन्वय माना जाय—देविका आदि का जो अङ्गसंज्ञक शब्दरूप उसके आदि अच् का 'आ' होता है। देविका आदि का अङ्ग जिसमें देविका आदि अवयवभूत हैं—ऐसा मानें तब केवल (अकेले) शब्दों से नहीं होगा क्योंकि वह स्वयं अपना (अवयव) नहीं हो सकता। और व्यपदेशिवद्भाव प्रातिपादिक से निषिद्ध है। यदि वह निषेध केवल प्रत्ययविषयक मान लिया जाय तब भी केवलों (अकेले शब्दों) से ही होगा, फलतः तदन्त में अतिप्रसङ्ग बना ही है। यदि अङ्ग को समानाधिकरण विशेषण मानें—अङ्ग जो देविका आदि उसके आदि अच् का आकार होता है, ऐसा मानने पर देविकाद्यन्त का परिहार तो हो जाता है किन्तु तदादि का अतिप्रसङ्ग बना ही रहता है। यदि व्यधिकरण विशेषण माना जाय तब—'अङ्ग के अवयवभूत जो देविका आदि उनके अचों में आदि का आकार होता है।' ऐसा मानने पर केवल (अकेले) में और तदादि में दोष नहीं है परन्तु परपद बने हुए भी

दित्यवाट्—दित्यौह इदं दात्यौहम् । दीर्घसत्रे भवं दार्घसत्रम् । श्रेयस्—श्रेयसि भवं श्रायसम् ।

❀ वहीनरस्येद्वचनं कर्त्तव्यम् ❀ । ( म० भा० ) वृद्धिविषयेऽचामादेरचः स्थाने वहीनरस्य इकारादेशो भवति । वहीनरस्यापत्यं वैहीनरिः । केचित्तु विहीनरस्यैव वैहीनरिमिच्छन्ति ॥

**न्यासः**

**पूर्वशांशप इति** । पूर्ववदुत्तरपदस्य वृद्धिः । **साप्याकार एव भवतीति** । उत्तरपदाधिकारे देविकादीनामनुवृत्तेर्लभ्यते ।

**वहीनरस्येद्वचनं कर्त्तव्यमिति** । अकारस्य या वृद्धिः प्राप्नोति तद्बाधनार्थमेतत् । इकारे कृते या वृद्धिः प्राप्नोति सा तु भवत्येव । **केचित्त्वित्यादि** । कुणडवाडवादयः । विहीनो नरः कामक्रोधाभ्यामिति पृषोदरादित्वान्नलोपः विहीनरस्यापत्यं वैहीनरिः—'अत इञ्' ॥ १ ॥

**पदमञ्जरी**

कस्तर्हि वृत्तिकारस्य पक्षोऽयमभिधीयते ?
परिभाषेयमान्तर्यपरिभाषाऽपवादिनी ॥
देविकादेरचामादेर्यत्र वृद्धिः प्रसज्यते ।
तत्रोपतिष्ठते, तेन सर्वमिष्टं प्रसिध्यति ॥ इति ।

अनारभ्यमाणे एतस्मिन्, देविकादीनामादेरचो वृद्धिर्भवन्ती स्थानेऽन्तरतमवचनादैकारः प्राप्नोति, तदपवादेनाकारः प्राप्यते, तत्राङ्गं भवतु देविकादयः पूर्वपदमुत्तरपदं वा; सर्वथा यत्र देविकादीनामचामादेरचो वृद्धिप्रसङ्गः, तत्राकारो भवतीति परिभाष्यते । ननु च 'अङ्गस्य' इति वर्त्तते ? सत्यम्; नैवमस्याभिसम्बन्धः—अङ्गस्याचामादेराकारो भवति स चेद्देविकादोनां सम्बन्धीति, किं तर्हि ? देविकादीनामचामादेराकारो भवति स चेदङ्गस्य सम्बन्धीति । अथैवमभिसम्बन्धे किं व्यावर्त्यम् ? न किञ्चित्, अनुवृत्तस्य तु सम्बन्धो वक्तव्य इत्येतावत् । **साप्याकार एव भवतीति** । उक्तोऽत्र हेतुः ।

**वहीनरस्येति** । वहोऽस्यास्तीति वही, वही चासौ नरश्चेति वहीनरः, 'अन्येषामपि दृश्यते' इति दीर्घत्वम् । **वैहीनरिरिति** । अत्राकारवृद्धिः प्राप्ता इकारेण बाध्यते । तस्य त्वैकारवृद्धिर्भवत्येव, न हि तस्यां माप्राप्तायामिकारो विधीयते, एवं च कृत्वा सूत्रेऽप्यकार एव विधेयः, तस्याकावृद्धौ सिद्धमिष्टम् ? तथा तु न कृतमित्येव । **केचित्त्विति** । विहीनो नरो विहीनरः, पृषोदरादित्वान्नशब्दस्य लोपः ॥ १ ॥

**भावबोधिनी**

इन देविका आदि के अचों के आदि अच् का आकार होने लगेगा—इस प्रकार के विभिन्न व्याख्यान व्याख्याकारों ने किये हैं । निष्कर्ष यह है कि देविका आदि से आदि अच् को विशेषित करके—देविका आदि सम्बन्धियों के अचों में जो आदि अच् होता है उसका आकार होता है । यही काशिकाकार का भी मत है ।

( अनु० ) शिंशपा—शिंशपा का विकार ( = बना हुआ ) चमस । यज्ञीय ( पात्रविशेष ) = शांशपः चमसः' [ कहा जाता है ] । यह पलाशादि ( में पठित ) है इस कारण [ 'पलाशादिभ्यो वा' ४।३।१४१ से वैकल्पिक अञ् प्रत्यय होकर ] पक्ष में [ तस्य विकारः (४।३।१३४) से ] अण् होता है। अथवा अनुदात्तादि मानकर 'अनुदात्तादेश्च' (४।३।१४०) सूत्र से वैकल्पिक अञ् होता है । शिंशपास्थल में होने वाले—( इस अर्थ में ) शांशपास्थलाः । [ शिंशपास्थल + अण् या अञ् प्रत्यय, वृद्धि का अपवाद आदि आकार आदेश । ] पूर्वशिंशपा नामक ग्राम पूर्ववालों के हैं, उनमें होने वाला—( इस अर्थ में ) पूर्वशांशपः । [ पूर्वशिंशपा + अण् या अञ्, यहाँ भी 'पूर्वदाविकः—इस पूर्वोक्त के समान ही 'प्राचां ग्रामनगराणाम्' सूत्र से उत्तरपद की जो वृद्धि होती है वह भी आकार ही होती है अर्थात् यह उसका अपवाद सूत्र है । ]

दित्यवाट्—दित्यवाट् का यह ( इस अर्थ में ) दात्यौहम् । ( दित्यवाह् + अण्, वृद्धि का अपवाद आदि आकार आदेश दात्यवाह् + अण्, व् का ऊठ्, वृद्धि आदि करने पर—दात्यौहम् बनता है । ] दीर्घसत्र में

## २३९९. केकयमित्रयुप्रलयानां यादेरियः ॥ २ ॥ (११४४)

**केकय, मित्रयु, प्रलय—इत्येतेषां यकारादेः 'इय'—इत्ययमादेशो भवति तद्धिते ञिति, णिति, किति च परतः। केकयस्यापत्यं कैकेयः। 'जनपदशब्दात्क्षत्रियादञ्' (४।१।१६८) इत्यञ् प्रत्ययः।**

**मित्रयुभावेन श्लाघते मैत्रेयिकया श्लाघते। 'गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु' (५।१।१३४) इति वुञ्। लौकिकं हि तत्र गोत्रं गृह्यते। लोके च ऋषिशब्दः 'गोत्रम्' इत्यभिधीयते।**

**प्रलय—प्रलयादागतं प्रालेयमुदकम्॥**

**न्यासः**

**केकयमित्रयुप्रलयानां यादेरियः॥** केकयमित्रयुप्रलयानामिति याद्यपेक्षयाऽवयवषष्ठी। यादेरित्येषापीयादेशापेक्षया स्थानषष्ठी—य आदिर्यस्य स यादिः। अकारसहितो यकार उकारसहितश्च। केकयादीनां योऽवयवो यादिस्तस्येयादेशो भवति। ननु च मित्रयुशब्दः परमप्रकृतिः, न गोत्रम्; 'अपत्यं पौत्रप्रभृति गोत्रम्' इत्यपत्यविशेषस्य गोत्रसंज्ञाविधानात्, तत् कथं गोत्रादुच्यमानः प्रत्ययः परमप्रकृतेर्भवति? इत्यत आह—**लौकिकं हीत्यादि।** किं पुनर्लौकिकं गोत्रम्? इत्यत आह—**लोके चेत्यादि।** इह लौकिकं गोत्रं गृह्यते। लोके च ऋषिशब्दः 'गोत्रम्' इत्यभिधीयते। मित्रयुशब्दश्चायमृषिवचनः, तस्मात् ततोऽपि गोत्रादुच्यमानः प्रत्ययो भवतीति।

**प्रालेयमिति।** 'तत आगतः' इत्यण्॥ २॥

**पदमञ्जरी**

**केकयमित्रयुप्रलयानां यादेरियः॥ लौकिकं हि तत्र गोत्रं गृह्यत इति।** मित्रयुशब्दोऽभेदोपचारात्तदपत्यसन्ताने यदा वर्तते न परं प्रकृतावेव, तदेदमुच्यते। यदा तु गृष्ट्यादिभ्यष्ठञो यस्कादित्वाद् बहुषु लुक् क्रियते, तदा पारिभाषिकेऽपि गोत्रे न दोषः। अत्र यद्यपि वृद्धिप्रसङ्गेऽयमादेश उच्यते, तथापि वृद्धिर्न बाध्यते; विषयभेदात्—अचामादेर्वृद्धिः, यादेरियादेशः, अङ्गं तूभयोर्विशेषणम्, न कार्यि॥ २॥

**भावबोधिनी**

होनेवाला—(इस अर्थ में) दार्घसत्रम्। [ दीर्घसत्र + अण्, आदि का आकार आदेश। ] श्रेयस्—श्रेयस् में होनेवाला—(इस अर्थ में) श्रायसम्। [ श्रेयस् + अण्, आदि का आकार आदेश ]

* वहीनर शब्द का इत्व आदेश कहना चाहिये।* वृद्धि के विषय में अचों में आदि अच् के स्थान पर वहीनर का इकार आदेश होता है अर्थात् 'विहीनर' हो जाता है। उदा० वहीनरस्य अपत्यम्—इस अर्थ में वैहीनरिः। [ वहीनर + इञ्, प्राप्त आकार वृद्धि का अपवाद इत्व—विहीनर + इञ्, पुनः वृद्धि ऐ—वैहीनर् + इ। ] कुछ लोग तो 'विहीनर' का ही 'वैहीनरि' यह उदाहरण चाहते हैं। [ इनके अनुसार–विहीनो नरः—इस अर्थ में 'पृषोदरादीनि यथोपदिष्टम्' सूत्र से 'न' लोप कर देने पर 'विहीनर' से इञ् प्रत्यय, आदिवृद्धि होती है। ]

[ वर्तमान लाहौर से कुछ मील दूर बहने वाली एक नदी का नाम 'देविका' है। उसके तटीय क्षेत्र में पैदा होने वाले चावल वहाँ प्रसिद्ध हैं। ] ॥ १ ॥

केकय, मित्रयु, प्रलय—इन (तीन) शब्दों के यकारादि भाग के स्थान पर 'इय' यह आदेश ञित्, णित् और कित् तद्धित प्रत्यय के परे रहते होता है (अर्थात् 'य' 'यु' के स्थान पर 'इय' हो जाता है)। उदा० केकयस्य अपत्यम्—(इस अर्थ में) कैकेयः। इसमें 'जनपदशब्दात् क्षत्रियादञ्' (४।१।१६६) सूत्र से अञ् प्रत्यय होता है। [ केकय + अञ्, आदिवृद्धि, 'य' का 'इय' आदेश—कैक + इय + अ, गुण, भसंज्ञा, अलोप—कैकेयः। ]

मित्रयु (मित्र के समान, स्नेहशील) भाव से प्रशंसा करता है = मैत्रिकया श्लाघते। यहाँ 'मित्रयु' शब्द से "गोत्रचरणाच्छ्लाघात्याकारतदवेतेषु' (५।१।१३३) सूत्र से वुञ् = अक प्रत्यय होता है। सूत्र में लौकिक गोत्र का ग्रहण होता है। और लोक में 'ऋषि' शब्द भी गोत्र ऐसा कहा जाता है। [ मित्रयु + अक, यु का 'इय' आदेश, आदिवृद्धि—मैत्र + इय + अक, गुण, टाप् इत्व—मैत्रेयिका, तृतीया एकवचन का रूप है—मैत्रेयिकया। ]

प्रलय—प्रलय से आया हुआ—इस अर्थ में प्रालेय उदक। [ प्रलय + अण् 'तत आगतः' सूत्र से। 'य' का इय, गुण, आदिवृद्धि—प्रालेयम्॥ २॥

### ३४००. न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच् ॥ ३ ॥ (१०९८)

यकारवकाराभ्यामुत्तरस्य अचामादेरचः स्थाने वृद्धिर्न भवति; ताभ्यां तु यकारवकाराभ्यां पूर्वमैजागमौ भवतो ञिति, णिति, किति च तद्धिते परतः यकारादैकारः, वकारादौकारः। व्यसने भवं वैयसनम्। व्याकरणमधीते वैयाकरणः स्वश्वस्यापत्यं सौवश्वः।

य्वाभ्यामिति किम्? न्रर्थस्यापत्यं नार्थिः। पदान्ताभ्यामिति किम्? यष्टिः प्रहरणमस्य याष्टीकः। यत इमे छात्त्रा याताः।

**न्यासः**

**न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्** ॥ 'तद्धितेष्वचामादेः' इत्यादिना ञ्णिदादौ तद्धिते वृद्धौ प्राप्तायां प्रतिषेधोऽमुच्यते, तत्सन्नियोगेनैजागमौ भवतः। **यकारादैकार इत्यादिना** यथासंख्येन सम्बन्धं दर्शयति। **वैयसनमिति**। 'असु क्षेपणे'। विपूर्वाद् विशेषेणास्यते क्षिप्यते येनेति करणे ल्युट्, प्रादिसमासः, यणादेशः; ततः 'तत्र भवः' इत्यण्। तत्र यकारात् पदान्तात् परस्याकारस्य वृद्धिर्न भवति, तस्मात् पूर्वमैजागमः। **वैयाकरण इति**। विशेषेणाक्रियन्ते व्युत्पाद्यन्ते शब्दा अनेनेति करणे ल्युट्, व्याकरणमिति, प्रादिसमासः, ततः 'तदधीते तद्वेद' इत्यण्, तत्र पर्जन्यवल्लक्षणप्रवृत्त्या पदान्ताद् यकारात् परस्य या वृद्धिः प्राप्नोति सा न भवति, तस्मात् पूर्वमैजागमः। **सौवश्व इति**। शोभनोऽश्वः स्वश्वः, पूर्ववत् समासः ततोऽपत्यार्थे शिवाद्यण्। अत्र वकारात् पदान्तात् परस्य वृद्धिर्न भवति, तस्मात् पूर्वमैजागमो भवति। **नार्थिरिति**। ना अर्थो यस्य स न्रर्थः, तस्यापत्यम् 'अत इञ्'। **याष्टीक इति**। 'शक्तियष्ट्योरीकक्'। **याता इति**। इणः

**पदमञ्जरी**

**न य्वाभ्यां पदान्ताभ्यां पूर्वौ तु ताभ्यामैच्** ॥ अत्रार्थद्वयविधानाद्वाक्यभेदः, तस्यैव द्योतकस्तुशब्दः, 'पूर्वौ' इत्यनेन सम्बन्धादैचाविति प्राप्ते एकवचनं सौत्रम्। वृत्तौ तु क्रियाविशेषणत्वादेकवचनम्। **ताभ्यां तु पूर्वमिति। ऐजागमौ भवतीति**। टित्वाद्यागमलिङ्गाभावेऽपि पूर्वशब्देन देशविशेषे भवन्नागम इत्युच्यते—आगच्छतीत्यागम इति। **वैयसनमिति**। 'गतिकारकोपपदानां प्राक्सुबुत्पत्तेः समास' इत्युत्तरपदविषयमित्यवोचाम। तेन वैयसनादिषु य्वोः पदान्तत्वम्। स्वश्वशब्दः शिवादिः।

**याष्टीक इति**। 'शक्तियष्ट्योरीकक्'। ननु चात्राचामादेः स्थाने यौ य्वौ ताभ्यामित्याश्रयणादेव न भविष्यति? तत्राह—**यत इम इति**। 'इण् गतौ', लटः शत्रादेशः, शपो लुक्, 'इणो यण्'। इहासत्यपि प्रतिषेधे वैयसनमित्यादौ व्यसन + अ इति स्थिते वृद्धिश्च प्राप्नोति, ऐजागमश्च; तत्र वृद्धिरनित्या, शब्दान्तर-

**भावबोधिनी**

(पद के अन्त में वर्तमान) यकार और वकार से उत्तरवर्त्ती अच् जो अचों में आदि है उसके स्थान पर वृद्धि नहीं होती है, [अपि तु] उन यकार और बकार से पूर्व में ऐच् (ऐ, औ) का आगम ञित्, णित्, कित्, तद्धित प्रत्यय के परे रहते होता है। यकार से ऐकार और बकार से औकार का आगम होता है। उदा० व्यसने भवम्—वैयसनम्। [व्यसन + अण्, वि + असन में 'वि' का पदान्तत्व यण् के बाद 'व्' में मानकर 'य' से पूर्व 'ऐ' आगम व् ऐ यसन = वैयसनम्।] 'व्याकरणम् अधीते—इस अर्थ में 'वैयाकरणः'। (वि + आकरण + अण् यहाँ भी यण् के बाद पदान्तता 'व्' में मानकर, 'ऐ' आगम होता है आदिवृद्धि नहीं—व् ऐ य् आ करण + अ = वैयाकरण] स्वश्व (= सु + अश्व) का अपत्य—इस अर्थ में सौवश्वः। [स्वश्व + अण् में व् को पदान्त मान कर उसके पूर्व में 'औ' आगम—स् औ वश्व = सौवश्वः। इसी प्रकार—स्वर + अण् में सौवरः, सौवरी आदि बनता है।]

यकार और वकार से परे—इसका क्या फल है? न्रर्थस्य अपत्यम्—इस अर्थ में नार्थिः ही होता है। [ना = पुरुषः अर्थः यस्य सः—इस विग्रह में समास नृ + अर्थ यण् न्रर्थ बनता है। यहाँ पदान्त यकार या वकार नहीं अपि तु रेफ् है। अतः ऐच् न होकर इञ् प्रत्यय परे आदिवृद्धि ही होती है।]

पदान्त से परे—इसका क्या फल है? यष्टिः प्रहरण है इसका—इस अर्थ में—याष्टीकः। [यष्टि + ईकक्,

**प्रतिषेधवचनमैचोर्विषयप्रक्लृप्त्यर्थम्। इह मा भूद्—दाध्यश्विः, माध्वश्विरिति, न ह्यत्र**

**न्यासः**

परस्य लटः शत्रादेशः, 'इणो यण्' इति यण्, ततः 'तस्येदम्' इत्यण्। तत्रोभयत्रापि यकारस्य पदान्तता नास्ति। अथ प्रतिषेधवचनं किमर्थम्? उच्यते; यस्मान्न प्राप्तायां वृद्धावैचौ विधीयमानौ तस्या बाधकौ भविष्यतः, यथा—'ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याय' इति दधिदानस्य तक्रदानं बाधकम्। अथापि बाधकौ न स्याताम्, तथापि नित्यत्वादैचोः कृतयोः पश्चाद् वृद्धिर्भवन्ती तयोरेव भविष्यतीति। न चात्र शब्दान्तर-प्राप्त्या तयोरप्यैचोरनित्यत्वमाशङ्कनीयम्, न हि तौ शब्दान्तरस्य विधीयेते, अपि त्वभक्तावेव य्वाभ्यां पूर्वौ।

यद्यपि शब्दान्तरस्य प्राप्तिः स्यात्, तथापि द्वयोरनित्ययोः परत्वादैचोः कृतयोः 'सकृद्गतौ विप्रतिषेधे यद् बाधितं तत् बाधितमेव' इति पुनर्वृद्धिर्न भवति। यद्यपि पुनःप्रसङ्गविज्ञानाद्वृद्धिः स्यात्, तथापीष्ट-सिद्धिः स्यादेव; विशेषाभावादित्यत आह—

**प्रतिषेधवचनमित्यादि।** प्रक्लृप्तिः = प्रकल्पनम्, व्यवस्थेत्यर्थः। यत्र य्वाभ्यां परस्य वृद्धेः प्रतिषेधः स एवैचोर्विषयः कथन्नाम प्रकल्पेत? व्यवतिष्ठेतेत्येवमर्थः। प्रतिषेध उच्यते, किमर्थं पुनरैचोर्विषयप्रक्लृप्तिः क्रियते? इत्यत आह—**इह मा भूदिति।** यदि प्रतिषेधवचनैचोर्विषयव्यवस्था न क्रियेत, तदा दाध्यश्विः, माध्वश्विरित्यत्रापि स्यात्। अतो मा भूदेष दोष इति प्रतिषेधवचनेनैचोर्विषयव्यवस्था क्रियते। दधिप्रियोऽश्वो दध्यश्वः, मधुप्रियोऽश्वो मध्वश्वः—समानाधिकरणाधिकारे 'शाकपार्थिवादीनां समास उत्तरपद-लोपश्च' इति मध्यमपदलोपो समासः। अथ क्रियमाणे प्रतिषेधवचने कस्मादेवात्र न भवति, यावता य्वाभ्यां परस्य वृद्धिर्नास्ति? इत्यत आह—**न ह्यत्रेत्यादि।** प्रसङ्गे हि सति वृद्धेः प्रतिषेधो भवति, नासति; न चात्र

**पदमञ्जरी**

प्राप्तेः। सा ह्यैचि कृते तस्यैव प्राप्नोति; तन्मध्यपतितस्य तद्ग्रहणेन ग्रहणात्। ऐजागमस्तु नित्य इति स एव तावद्भवति। तत्र कृते यद्यपि पुनःप्रसङ्गविज्ञानाद् वृद्धिः, तथाप्यान्तर्यत ऐकारस्यैकारः, औकारस्यौकार इति न कश्चिद्दोषः, किं प्रतिषेधेन!

नन्वसति तस्मिन्, वैयाकरणी भार्या अस्य वैयाकरणभार्य इति 'वृद्धिनिमित्तस्य' इति पुंवद्भाव-प्रतिषेधः स्यात्, सति तु प्रतिषेधे न भवति; कथं न भवति, यावता वृद्धेर्निमित्तं ञणका यस्मिंस्तद्धित इति बहुव्रीहिः, विद्यते चात्र णकारः? सत्यं विद्यते, निमित्तं तु न भवति; 'कुर्वद्रूपे हि निमित्तशब्दो मुख्यः' इत्युक्तम्। ननु च मा भूत् 'तद्धितेष्वचामादेः' इत्यस्या वृद्धेर्निमित्तम्, एव त्वसौ णित्तद्धिताश्रय ऐज्विधीयते तस्यैव वृद्धिसंज्ञकस्य निमित्तं णकार इति स्यादेव पुंवद्भावप्रतिषेधः? उच्यते; न हि वस्तुतो या वृद्धिस्तस्या यन्निमित्तं ञकारादिस्तद्वति प्रतिषेधः, किं तर्हि? वृद्धिरित्येवं या विधीयते तन्निमित्ते। अतः पुंवद्भाव-प्रतिषेधनिवृत्त्यर्थं वृद्धेः प्रतिषेधो वक्तव्य एव? न वक्तव्यः; एकस्मिन्नङ्गे विशेषविहितावैचौ सामान्य-विहिताया वृद्धेर्बाधकौ भविष्यतः, सत्यपि सम्भवे बाधनं भवतीति न्यायात्; ततश्च पूर्ववत्पुंवद्भावप्रतिषेधो न भविष्यतीति 'य्वाभ्यां पूर्वमैच्' इत्येवास्तु, नार्थः प्रतिषेधेन? इत्यत आह—**प्रतिषेधवचनमिति।** प्रतिषेध-

**भावबोधिनी**

यहाँ यकार पद के आदि में है। अतः वृद्धि ही होती है ऐच् नहीं।] यत् = जाने वाले पुरुष के ये छात्र हैं—इस अर्थ में—याताः। [इण् धातु से शतृ प्रत्यय 'इणो यण्' सूत्र से 'इ' का 'य्' यण् य + अत् = यत्। सम्बन्ध अर्थ में 'तस्येदम्' सूत्र से अण् प्रत्यय होने पर आदिवृद्धि ही होती है ऐच् नहीं। क्योंकि यकार पदादि है पदान्त नहीं।]

प्रतिषेध का कथन ऐच् (ऐ तथा औ) के विषय की व्यवस्था करने के लिए है। जिससे यहाँ न हो सके—दाध्यश्विः, माध्वश्विः। [दध्यश्व + इञ्, मध्वश्व + इञ्] इनमें यकार और वकार के उत्तरवर्ती के वृद्धि का प्रसङ्ग नहीं है इसलिये वृद्धि न होने के कारण उसका प्रतिषेध भी नहीं होता है, अतः इसका प्रसङ्ग नहीं है।

**विमर्श**—भाव यह है कि यह सूत्र दो कार्य करता है (१) वृद्धि का निषेध और (२) ऐच् आगम। प्रतिषेध-वचन होने से जिन यकार और वकार से परे प्राप्त हुई वृद्धि का प्रतिषेध होता है उन्हीं से पूर्व में ऐच् होता है। इस

य्वाभ्यामुत्तरस्य वृद्धिप्रसङ्गोऽस्ति। वृद्धेरभावात् प्रतिषेधोऽपि नास्तीत्यप्रसङ्गः।

उत्तरपदवृद्धेरप्ययं प्रतिषेध इष्यते। पूर्वंत्र्यलिन्दे भवः पूर्वत्रैयलिन्दः। यत्र तूत्तरपदसम्बन्धी

**न्यासः**

य्वाभ्यां परस्य वृद्धेः प्रसङ्गोऽस्ति, अतः प्रतिषेधो नास्त्येवेत्यभिप्रायः। ननु च 'अचामादेः' इत्यनुवर्त्तते, तेन य्वौ विशिष्येते—अचामादेरचः स्थाने यौ य्वाविति। न च दाध्यश्विरित्यादावेवंविधौ तौ स्त इति, न चात्रैचो भविष्यतः, अतो नार्थः? नैतदस्ति; एकं ह्यचामादिग्रहणम्, तेन यदि य्वौ विशिष्येते तदा वृद्धिरविशेषिता स्यात्। ततश्चेहापि वृद्धेः प्रतिषेधः स्यात्—द्वे अशीती भृतो भृतो भावी वा 'प्राग्वतेष्ठञ्' द्व्याशीतिक इति। अथ वृद्धिर्विशिष्यते—अचामादेरित्येवं वा वृद्धिः, ततो न भवत्येष दोषः। न ह्यत्राचामादेरित्येवं वृद्धिः, किं तर्हि? 'संख्यायाः संवत्सरसंख्यस्य च' इत्येवम्। किं तर्हि य्वौ न विशेषितौ स्याताम्, ततश्च दाध्यश्विरित्यादावैचौ स्यातामेव। तस्मात् तयोर्विषयव्यवस्थार्थं नेति वक्तव्यम्।

उत्तरपदवृद्धेरप्ययं प्रतिषेध इष्यत इति। स चोत्तरपदाधिकारेऽस्यानुवर्तमानत्वाल्लभ्यते। पूर्वत्रैयलिन्द इति। अत्र 'दिशोऽमद्राणाम्' इत्युत्तरपदवृद्धौ प्राप्तायां प्रतिषेधः। यद्युत्तरपदवृद्धेरप्ययं प्रतिषेधः, तदा द्व्याशीतिक इत्यत्रापि 'संख्यायाः संवत्सरसंख्यस्य च' इति या वृद्धिरुत्तरपदस्य प्राप्तेत्यस्या अपि प्रतिषेध

**पदमञ्जरी**

वचने सति याभ्यां य्वाभ्यां परस्य वृद्धिः प्राप्ता प्रतिषिध्यते, ताभ्यामेव पूर्वावैचौ भवत इत्यर्थो भवति, असति हि तस्मिन् यौ कौचन य्वौ गृह्येयाताम्। तस्मादैचोर्विशिष्टो विषयः प्रक्लृप्तो यथा स्यादित्येवमर्थं प्रतिषेधवचनं क्रियत इत्यर्थः। दाध्यश्विः, माध्वश्विरिति। दधिप्रियोऽश्वो यस्य स दध्यश्वः। एवं मध्वश्वः, ताभ्याम् 'अत इञ्'।

ननु च 'अचामादेः' इत्यनेनं य्वौ विशेषयिष्यामः—अचामादेरचः स्थाने यौ य्वाविति? एवमपि द्वे अशीती अधीष्टः, 'तद्धितार्थे' इति समासः, तमधीष्ट इति 'प्राग्वतेष्ठक्', द्व्याशीतिकः—अत्र प्राप्नोति। सति तु प्रतिषेधे 'तद्धितेष्वचामादेः' इत्यनुवृत्तेर्याभ्यां परस्य 'तद्धितेष्वचामादेः' इति वृद्धिः प्राप्ता प्रतिषिध्यते, ताभ्यामिति विज्ञायते; अत्र तु 'संख्यायाः संवत्सरसंख्यस्य च' इत्येवमुत्तरपदवृद्धिर्विधीयत इति तस्या निषेधाभावादैजागमाभावः सिद्धः। स्यादेतत्—अचामादेरित्यनुवृत्तं स्वरूपपरं सद् वृद्धेर्विशेषणम्, अचामादेरित्येवं या वृद्धिस्तस्याः प्रसङ्गे तदपवादौ य्वाभ्यां पूर्वमैचो भवत इत्यर्थः, इह तु नैवं वृद्धेः प्रसङ्ग इत्यैचौ न भविष्यत इति? एवमपि य्वावविशेषितौ स्याताम्, ततश्च दाध्यश्वादौ प्रसङ्गः। न च सकृच्छ्रुतमचामादेरित्येतदेवोभयं विशेषयितुमर्हति, येनाचामादेः स्थाने य्वौ ताभ्यां पूर्वावैचो भवतः, सति तस्मिन्नचामादेरित्येवं वृद्धेः प्रसङ्ग इत्याश्रयणान्न क्वापि दोषः स्यात्। न च तन्त्रावृत्त्येकशेषाणामन्यतमाश्रयणे प्रमाणमस्ति, तस्मात्सुष्ठूक्तम्—प्रतिषेधवचनमैचोर्विषयप्रक्लृप्त्यर्थमिति।

उत्तरपदवृद्धेरपीति। एतच्च तत्रास्याधिकाराल्लभ्यते। यत्र स्विति। एतदप्युत्तरपदेन य्वोर्विशेषणाल्लभ्यते—उत्तरपदस्य यौ य्वौ ताभ्यां परस्य वृद्धिर्न भवति, ताभ्यां च पूर्वमैजागम इति। इह—इश्च अजश्च यजौ, उश्च अजश्च वजौ, तयोरिदं ऐयजम्, औवजमिति ऐचोरभक्तत्वादतन्मध्यपतितत्वाच्च अङ्गग्रहणेनाग्रहणादैयजीयम्, औवजीयमित्यादौ शेषनिघातो न स्यात्, शेषविवक्षायां च वृद्धाच्छो न स्यात्, प्रातिपदिकस्यावृद्धत्वात्? उच्यते; यद्येवंविधमभिधानमस्ति, ततः पूर्वशब्द आवर्तयितव्यः, तत्रैकोऽवयववचनः, अपरो व्यवस्थावचनः—य्वाभ्यां पूर्वावैचौ भवतस्तौ चाङ्गस्यावयवाविति।

**भावबोधिनी**

कारण ऐच् के क्षेत्र = विषय का निश्चय कराने के लिए प्रतिषेध कराकर वहीं ऐच् कहा गया है। दध्यश्वः + इञ् में यकार से उत्तर की वृद्धि प्राप्त नहीं होती है, अतः उसका निषेध और ऐच् आगम भी नहीं होते हैं। ]

(अनु०) उत्तरपद की वृद्धि का भी यह प्रतिषेध इष्ट है। उदा० पूर्वत्र्यलिन्द में भव = होने वाला—इस अर्थ में—पूर्वत्रैयलिन्दः। [ पूर्वत्रि + अलिन्द + अण् में इ का यण् य् होने से वह पदान्त होता है यहाँ 'दिशोऽमद्राणाम्'

**यण्न भवति तत्र नेष्यते प्रतिषेधः—द्वे अशीती भृतो भूतो भावी वा द्व्याशीतिकः ॥**

**२४०१. द्वारादीनां च ॥ ४ ॥ (१३८६)**

**'द्वार'—इत्येवमादीनां य्वाभ्याम् उत्तरपदस्याचामादेरचः स्थाने वृद्धिर्न भवति, पूर्वौ तु ताभ्यामैजागमौ भवतः । द्वारे नियुक्तो दौवारिकः । द्वारपालस्येदं दौवारपालम् । तदादिविधिश्चात्र भवति । स्वर—स्वरमधिकृत्य कृतो ग्रन्थः सौवरः । सौवरोऽध्यायः । सौवर्यः सप्तम्य इति । व्यल्कशे भवः वैयल्कशः । स्वति—स्वस्तीत्याह सौवस्तिकः । स्वर्—स्वर्भवः सौवः । ❀ अव्ययानां भमात्रे टिलोपः ❀ ।**

**न्यासः**

स्यादित्यत आह—**यत्र त्वित्यादि** । कथं पुनरिष्यमाणोऽप्यत्र प्रतिषेधो न भवति ? उत्तरपदस्याचामाद्येनाचा हि य्वोर्विशेषणत्वात् । उत्तरपदसम्बन्धी योऽचामादिरच् तस्य स्थाने यौ य्वौ ताभ्यामुत्तरपदस्य वृद्धिर्न भवति । न च द्व्याशीतिक इत्यत्रोत्तरपदस्याचामादेरचः स्थाने यकार इति नात्र वृद्धेः प्रतिषेधो भवतीति ॥ ३ ॥

**द्वारादीनाञ्च ॥ दौवारिक इति** । 'तत्र नियुक्तः' इति ठक् । द्वारपालस्येदं दौवारपालमिति । 'तस्येदम्' इत्यण् । प्रायेण तु पुस्तके **द्वारपालस्येदं दौवारपालिकमिति** पाठः, स चायुक्तः; न हि तस्येदमित्यत्रार्थे द्वारपालशब्दात् लक्षणेन केनचिट्ठग्विहितः ।

**पदमञ्जरी**

अत्र संग्रहश्लोकौ—

नाप्राप्ताया हि वृद्धेः प्रतिपदविधिरैज्बाधको नञ् किमर्थो
याभ्यां य्वाभ्यां परस्यैच् प्रसजति तत एवैष पूर्वो यथा स्यात् ।
मा दाध्यश्वादिके भूदिति ननु विहितौ यावचां स्थान आदे-
र्य्वौ ताभ्यामैजिहैवं न भवति इति चेद् द्वे अशीती अधीष्टे ॥
स्यादेज् व्याशीतिकेऽङ्गाद्यच इति विहितस्यैवमैच्चेत्प्रसङ्गाद्
य्वौ न स्यातां विशिष्टौ श्रुतमपि च सकृन्नोभयं भेत्तुमर्हम् ।
स्यादेतस्योत्तरत्राप्याधिकृतिरिह च य्वोः परस्योत्तरस्यै-
वं पूर्वत्रैयलिन्दे भवति, न च भवेद् द्वे अशीती अधीष्टे ॥ ३ ॥

**द्वारादीनां च । दौवारिक इति** । 'तत्र नियुक्तः' इति ठक् । **द्वारपालस्येदं दौवारपालमिति** । 'संज्ञापूर्वको विधिरनित्यः' इति वृद्धलक्षणश्छो न भवति, 'कलापिनोऽण्' इत्यत्राणग्रहणस्याधिकविधानार्थत्वाद्वा । कथं पुनर्द्वारशब्दस्य पाठे द्वारपालशब्दस्य विधिरयं भवति ? तत्राह—**तदादिविधिश्चात्र भवतीति** ।

**भावबोधिनी**

सूत्र से उत्तर पद की वृद्धि प्राप्त है उसका प्रतिषेध करके ऐच् ( ऐ ) आगम होता है । ] परन्तु जहाँ उत्तर पद-सम्बन्धी यण् नहीं होता है, वहाँ प्रतिषेध भी इष्ट नहीं है, ( अर्थात् वृद्धि होती ही है ) जैसे—द्वे अशीती भृतो भूतो भावी वा—इस अर्थ में—द्व्याशीतिकः । [ द्विअशीति—यण् द्व्यशीति से 'तमधीष्टो भृतो भूतो भावी वा' (५।१।८०) सूत्र से ठञ् = इक प्रत्यय और 'संख्यायाः संवत्सर-संख्यस्य च' सूत्र से उत्तरपद की वृद्धि ही होती है क्योंकि यहाँ यण् पूर्वपद ( द्वि ) सम्बन्धी है । इस विषय में महाभाष्य में बहुत विचार किया गया है । वे कारिकायें पदमञ्जरी में उद्धृत हैं ॥ ३ ॥

द्वार—इत्यादि शब्दों के यकार तथा वकार से उत्तरवर्त्ती पद के अचों में आदि अच् के स्थान पर वृद्धि नहीं होती है, किन्तु उन यकार और वकार से पूर्व में ऐच् का आगम होता है । उदा० द्वारे नियुक्तः—इस अर्थ में—दौवारिकः । [ द्वार + ठक् = इक, ऐच् = औ का आगम द् औ वार + इक, भसंज्ञा, अलोप—दौवारिकः । ] द्वारपाल का यह—इस सम्बन्ध अर्थ में—दौवारपालम् । [ द्वारपाल + अण्, औ ( ऐच् ) का आगम आदि पूर्ववत्

स्वर्गमनमाह सौवर्गमनिकः ।

स्वाधाय इति केचित्पठन्ति, तदनर्थकम् । शोभनोऽध्याय इत्येतस्यां व्युत्पत्तौ तु पूर्वेणैव सिद्धम् । अथाप्येवं व्युत्पत्तिः क्रियते—स्वोऽध्यायः स्वाध्याय इति ? एवमप्यत्रैव स्वशब्दस्यैव पाठात्सिद्धम् । तदादावपि हि वृद्धिरियं भवत्येव ।

स्फ्यकृत—स्फ्यकृतस्यापत्यं स्फैयकृतः । स्वादुमृदुन इदं सौवादुमृदवम् ।

श्वन्—शुन इदं शौवनम् । अणि 'अन्' (६।४।१६८) इति प्रकृतिभावः । शुनो विकारो मांसं

**न्यास**

**क्वचित्** पुनर्द्वारपालस्यापत्यं **दौवारपालिक इति पाठः**, तत्र 'रेवत्यादिभ्यष्ठक्' इति ठक् । ननु तत्र द्वारपालीशब्दः पठ्यते, न तु द्वारपालशब्दः ? एवं तर्हि मन्यते—द्वारपालशब्दस्तत्र पठितव्यः, स द्वारपालीशब्दमपि ग्राहयिष्यति; 'प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम्' इति न्यायात् । ये तु तत्र द्वारपालशब्दं न पठन्ति, तेऽपत्यार्थे दौवारपालिरितीञन्तमुदाहरन्ति । कथं पुनर्द्वारस्य गणे पाठे द्वारपालस्य भवति ? अत्रापि द्वारादिभिराद्यचो विशेषणात्—द्वारादीनां शब्दानामचां मध्ये य आदिरजिति । वक्ष्यमाणाद्वा तदादिविधेर्ज्ञापकात् । **सौवर इति** । स्वरमधिकृत्य कृतो ग्रन्थ इति 'अधिकृत्य कृते ग्रन्थे' इत्यण् । **सौवर्य्य इति** । 'टिड्ढाणञ्' इति ङीप् । **वैयल्कश इति** । 'तत्र भवः' इत्यण् । **सौवस्तिक इति** । 'तदाहेति माशब्दादिभ्य उपसंख्यानम्' इति ठक् । **सौवर्गमनिक इति** । 'आहौ प्रभूतादिभ्य उपसंख्यानम्' इति ठक् ।

**पदमञ्जरी**

अत्र च कारणं देविकादिसूत्र एवोक्तम् । ज्ञापकं चात्र वक्ष्यति । **सौवरोऽध्याय इति** । स पुनः शन्तनुप्रणीतः, फिषित्यादिकः । 'सौवर्यः सप्तम्यस्तदन्तसप्तम्यः' इति भाष्ये ।

**शोभनोऽध्यायः स्वाध्याय इति** । आङत्र मध्ये प्रक्षेप्तव्यः, 'अन्येषामपि दृश्यते' इति वा उत्तरपदादेर्दीर्घत्वम् ।

**भावबोधिनी**

समझने चाहिए । ] इस सूत्र में तदादिविधि होती है । [ इस कारण द्वार आदि शब्द जिनके आदि में होते हैं उन शब्दों से भी ऐच् का आगम होता है । ] स्वर—स्वर को अधिकृत = विषय बनाकर रचा गया ग्रन्थ—सौवरः ग्रन्थः । सौवरः अध्यायः । [ स्वर + अण्, ऐच् = औ का आगम— स् औ वर + अण् भसंज्ञा अलोप = सौवरः ] सौवर्यः सप्तम्यः । [ स्वर + अण् = सौवर से स्त्रीलिङ्ग में ङीप् = ई होकर सौवरी, प्रथमा बहुवचन का रूप है । ] व्यल्कश—व्यल्कश में होने वाला—वैयल्कशः । [ व्यल्कश + अण् ऐ का आगम । ] स्वस्ति—सौवस्तिकः 'स्वस्ति' ऐसा कहने वाला—इस अर्थ में [ 'तदाह माशब्दादिभ्य उपसंख्यानम्' वचन से ठक् = इक प्रत्यय, आदिवृद्धि का अपवाद ऐच् = औ आगम—स् औ वस्ति + इक, भसंज्ञा, इलोप होता है । ] स्वर्—स्वर् = स्वर्ग में होने वाला—सौवः । [ स्वर् + अण्, ऐच् = औ का आगम स् औ वर् + अ इस अवस्था में ] ।

* भसंज्ञामात्र में अव्ययों की टि का लोप हो जाता है । * [ इस वचन से टि = अर् का लोप हो जाने पर स् औ व् + अ = सौवः—बनता है । ]

स्वर्गमनम् आह—इस अर्थ में [ 'आहौ प्रभूतादिभ्य उपसंख्यानम्' वचन से ठक् = इक होने पर, ऐच् = औ का आगम—सौवर्गमन + इक भ संज्ञा, अलोप ] सौवर्गमनिकः बनता है ।

कुछ विद्वान् [ इस गण में ] 'स्वाध्याय' शब्द का भी पाठ करते हैं, किन्तु वह अनर्थक है । कारण यह है कि—शोभनः अध्यायः—ऐसी व्युत्पत्ति करने पर [ सु + अध्याय यहाँ आङ् का प्रक्षेप मानकर सु + आ + अध्याय यण् आदि करने पर 'न य्वाभ्याम्' इस ] पूर्व सूत्र से ही ऐच् आगम सिद्ध है । यदि यह व्युत्पत्ति की जाय—स्वः

**शौवम्। 'प्राणिरजतादिभ्योऽञ्' (४।३।१५४) इत्यञ्। श्वादंष्ट्रायां भवः शौवादंष्ट्रो मणिः। स्वस्येदं सौवम्। स्वग्रामे भवः सौवग्रामिकः। अध्यात्मादित्वाट्ठञ् (वा०)। अपदान्तार्थोऽयमारम्भः।**

**द्वार। स्वर। स्वाध्याय। व्यल्कश। स्वस्ति। स्वर्। स्फ्यकृत। स्वादुमृदु। श्वन्। स्व। द्वारादिः॥**

**न्यासः**

**पूर्वेणैव सिद्धमिति।** वकारस्य पदान्तत्वात् तत्रैतत् स्यात्। यद्येवं व्युत्पत्तिः क्रियते—स्वोऽध्यायः स्वाध्यायः, तदाऽपदान्तत्वान्न प्राप्नोति, तस्यां व्युत्पत्तावर्थवान् स्वाध्यायशब्दस्य पाठः? इत्यत आह—**अथाप्येवमित्यादि।**

कथं पुनः स्वशब्दात् स्वाध्यायशब्दस्य सिद्धयति? इत्याह—**तदादावपि हीत्यादि। स्फैयकृत इति।** 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' इत्यण्। **सौवादुमृदव इति।** अत्रापि 'तस्येदम्' इत्यण्।

एवं **शौवनमित्यत्रापि। शौवमिति।** 'नस्तद्धिते' इति टिलोपः। **शौवादंष्ट्र इति।** 'अन्येषामपि' इति दीर्घः॥ ४॥

**पदमञ्जरी**

**एवमपीत्यादि।**

यद्यत्र स्वशब्दः पठ्यते, किमायातं स्वाध्यायशब्दस्य? तत्राह—**तदादावपि हीति।** स्वार्थिक-स्वाभाविकादयस्तु भाष्यप्रयोगतसाधवः। **स्फैयकृत इति।** ऋषित्वादण्। **सौवादंष्ट्रो मणिरिति।** 'शुनो दन्तदंष्ट्रा' इति दीर्घत्वम्, पूर्ववदण्॥ ४॥

**भावबोधिनी**

अध्यायः = स्वाध्याय। ? ऐसा मानने पर भी इसी गण में 'स्व' शब्द के ही पाठ से (ऐच्) सिद्ध है, तदादि (स्व शब्द है आदि में जिसके) में भी यह वृद्धि (अर्थात् इसका अपवादभूत ऐच्) होती ही है। [ फलतः—सौवध्यायिकः आदि रूप सम्भव हैं। इस आधार पर तो सौवर्थिकः, सौवभाविकः। आदि शब्द रूप होंगे न कि—स्वार्थिक, स्वभाविकः? इसका समाधान यह है कि महाभाष्यकार आदि के प्रयोग के आधार पर 'स्वार्थिक' 'स्वाभाविक' आदि को शुद्ध समझ लेना चाहिए। ]

स्फ्यकृत—स्फ्यकृतस्य अपत्यम् [ यहाँ "ऋष्यन्धक" सूत्र से अण्, ऐच् आगम, टिलोप ]—स्फैयकृतः। स्वादुमृदुनः इदम् [ इस अर्थ में अण् प्रत्यय, ऐच् = औ आगम-शौवा-मृदु + अ, 'ओर्गुणः' से गुण, अवादेश ] स्वौवामृदवम्।

श्वन्—शुनः इदम् (कुत्ते का यह–) इस सम्बन्धी अर्थ में शौवनम्। [ श्वन् + अण्, ऐच् = औ का आगम ] 'अन्' (६।४।१६७) इस सूत्र से प्रकृतिभाव होता है। [ अतः अन् = टि का लोप नहीं होता है। ] शुनः विकारः मांसम् (कुत्ते का विकार मांस)—इस अर्थ में "प्राणिरजतादिभ्योऽञ्' (४।१।१५४) सूत्र से अञ् प्रत्यय होता है। [ अतः प्रकृतिभाव न होकर टि = अन् का लोप होता है—श् औ व् + अ = शौवम् ] श्वादंष्ट्रायां भवः—(कुत्ते की दाढ़ में होने वाला) मणि—इस अर्थ में [ अञ् प्रत्यय आदि पूर्वोक्त कार्य होते हैं—श्वदंष्ट्रा यहाँ 'अन्येषामपि दृश्यते' सूत्र से दीर्घ होने के कारण–श्वादंष्ट्रा + अण् में ऐच = औ, आ = टिलोप—शौवादंष्ट्रः बनता है। ] स्वस्य इदम् [ इस अर्थ में–स्व + अण्, ऐच् = औ आगम, टिलोप। ] स्वग्रामे भवः—(इस अर्थ में) सौवग्रामिक [ स्वग्राम शब्द से ] 'आध्यात्मादिभ्यश्च' वार्तिक से ठञ्=इक प्रत्यय [ ऐच्=औ आगम सौवग्रामिकः ]। अपदान्त यकार वकार [ से पूर्व ऐच् आगम करने ] के लिये यह सूत्र बनाया गया है।

[ इस गण में पठित शब्द—] द्वार। स्वर। व्यल्कश। स्वस्ति। स्वर्। स्फ्यकृत। स्वादुमृदु। श्वन्। स्व। [ कुछ विद्वान्—'स्वाध्याय' शब्द भी पढ़ते हैं। ] ये द्वारादि हैं॥ ४॥

### ३४०२. न्यग्रोधस्य च केवलस्य ॥ ५ ॥ (१५४३)

न्यग्रोधशब्दस्य केवलस्य यकारादुत्तरस्याचामादेरचः स्थाने वृद्धिर्न भवति, तस्माच्च पूर्वमैकार आगमो भवति । न्यग्रोधस्य विकारो नैयग्रोधश्चमसः ।

केवलस्येति किम् ? न्यग्रोधमूले भवाः शालयः न्यग्रोधमूला शालयः । 'न्यग्रोहयतीति न्यग्रोधः'— इति व्युत्पत्तिपक्षे नियमार्थम्, अव्युत्पत्तिपक्षे विध्यर्थम् ॥

### ३४०३. न कर्मव्यतिहारे ॥ ६ ॥ ( ३२१७)

**न्यासः**

**न्यग्रोधस्य च केवलस्य ॥ नैयग्रोध इति ।** 'तस्य विकारः' इत्यण् ।

**न्यग् रोहतीति न्यग्रोध इति ।** न्यञ्चतीति ऋत्विगादिनाऽञ्चतेः क्विन्, 'क्विन्प्रत्ययस्य कुः' इति कुत्वम्—ककारः, नेर्यणादेशः । न्यक्पूर्वाद्रुहेः पचाद्यच् । तत्र 'न्यङ्क्वादीनाञ्च' इति हकारस्य घकारः, 'झलां जशोऽन्ते' इति ककारस्य गकारः, लघूपधगुणः—एवं यदा न्यग्रोधशब्दो व्युत्पाद्यते तदा पदान्तत्वाद् यकारस्य 'न य्वाभ्याम्' इत्यादिनैव सिद्धे नियमार्थमेतत्—केवलस्यैव यथा स्यात्, तदादेर्मा भूदिति । **अव्युत्पत्तिपक्षे विध्यर्थमेतदिति ।** अपदान्तत्वाद् यकारस्य ॥ ५ ॥

**न कर्मव्यतिहारे ॥ यदुक्तमिति ।** वृद्धिप्रतिषेधः, ऐजागमश्च । **व्यावक्रोशीत्यादि ।** 'क्रुश आह्वाने',

**पदमञ्जरी**

**न्यग्रोधस्य च केवलस्य ॥ नैयग्रोध इति ।** नीचैर्गतो प्ररोहैर्वर्धत इत्यर्थः ।

**अव्युत्पत्तिपक्षे तु विध्यर्थमिति ।** अपदान्तत्वाद्यकारस्य । अथास्मिन्नपि पक्षे केवलग्रहणं किमर्थम्, यावता न्यग्रोधस्येत्युच्यते, तत्र कः प्रसङ्गो यत्तदादौ स्यात् ? ज्ञापनार्थं तु । एतज्ज्ञापयति—अस्मिन्प्रकरणे यान्युपात्तानि तदादिवृद्धिभाजोऽचो विशेषणानीति ॥ ५ ॥

**न कर्मव्यतिहारे ॥ कर्मव्यतिहारे यदुक्तमिति ।** यदस्मिन्प्रकरणे उक्तं तत्कर्मव्यतिहारे न

**भावबोधिनी**

केवल ( अकेले ) न्यग्रोध शब्द के यकार से उत्तरवर्त्ती अचों में आदि अच् के स्थान पर वृद्धि नहीं होती है और उस यकार से पूर्व में ऐच् का आगम हो जाता है । उदा० न्यग्रोध का विकार—इस अर्थ में [ अण् प्रत्यय, वृद्धि का अपवाद, ऐच् = ऐ आगम—न् ऐ यग्रोध + अ ] नैयग्रोधः चमसः ( बरगद की लकड़ी का चम्मच के अकारसदृश यज्ञीय पात्रविशेष ) ।

केवल ( अकेले ) न्यग्रोध का—इसका क्या फल है ? न्यग्रोध के मूल में ( जड़ के पास के खेत में ) होने वाले शालिनामक चावल—न्याग्रोधमूलाः शालयः । [ यहाँ ऐच् आगम न होकर वृद्धि ही होती है । ] 'न्यग्रोहयति —इस व्युत्पत्तिपक्ष में यह सूत्र नियमार्थ है । और अव्युत्पन्न प्रातिपदिक पक्ष में विधि = विधान के लिये है ।

**विमर्श**—न्यञ्चति—इस विग्रह में नि + अञ्च् + क्विन्, प्रत्यय का सर्वापहारी लोप, यण्, कुत्वादि करने पर न्यक् बनता है । पुनः न्यक् पूर्वक रुह् धातु से अच् प्रत्यय, 'न्यङ्क्वादीनाञ्च' सूत्र से हकार का धकार, न्यक् रुध् + अ, जश्त्व से क् का ग, उपधागुण—न्यग्रोध । इस व्युत्पत्ति में 'नि' के यण् का य् पदान्त होने से सामान्य सूत्र 'न य्वाभ्यां पदान्ताभ्याम्' इसी से ऐच् आगम सिद्ध था । पुनः इससे वही कार्य करना नियमार्थ माना जाता है—केवल न्यग्रोध का ही होता है तदादि का नहीं । परन्तु जब रूढ़ = अव्युत्पन्न माना जाता है तब ऐच् का विधान करने के लिए इस सूत्र की आवश्यकता है । बरगद में जटायें नीचे की ओर जाती हैं इसीलिये 'न्यग्रोध' कहा जाता है ॥ ५ ॥

[ पूर्वसूत्रों से ] जो ( वृद्धिनिषेध और ऐच् आगम ) कहा गया है वह कर्मव्यतिहार ( काम की अदला-बदली ) में नहीं होता है । यह ( वृद्धि के ) प्रतिषेध और ( ऐच् ) आगम का निषेध है अर्थात् वे कार्य होते हैं । उदा० व्यावक्रोशी, व्यावलेखी, व्याववर्त्ती, व्यावहासी है । [ वि + आङ् पूर्वक आह्वान अर्थवाली √क्रुश, लिखना अर्थवाली √लिख, रहना अर्थवाली √वृत् धातु, और हंसना अर्थवाली √हस धातु से ] 'कर्मव्यतिहारे णच् 'स्त्रियाम्'

कर्मव्यतिहारे यदुक्तं तन्न भवति। प्रतिषेधागमयोरयं प्रतिषेधः। व्यावक्रोशी, व्यावलेखी, व्यावचर्ची, व्यावहासी वर्त्तते। 'कर्मव्यतिहारे णच् स्त्रियाम्' (३।३।४३) इति णच् प्रत्ययः, तदन्तात् 'णचः स्त्रियामञ्'[1] (५।४।१४)।

**३४०४. स्वागतादीनां च ॥ ७ ॥ (१५४९)**

'स्वागत'—इत्येवमादीनां यदुक्तं तन्न भवति। स्वागतमित्याह स्वागतिकः। स्वध्वरेण चरति स्वाध्वरिकः। स्वङ्गस्यापत्यं स्वाङ्गिः। व्यङ्गस्यापत्यं व्याङ्गिः। व्यडस्यापत्यं व्याडिः। व्यवहारेण चरति व्यावहारिकः। व्यवहारशब्दोऽयं लौकिके वृत्ते वर्त्तते, न तु कर्मव्यतिहारे। स्वपतौ साधुः स्वापतेयः। द्वारादिषु स्वशब्दपाठादत्र प्राप्तिः।

**स्वागत। स्वध्वर। स्वङ्ग। व्यङ्ग। व्यड। व्यवहार। स्वपति। स्वागतादिः ॥**

**न्यासः**

'लिख अक्षरविन्यासे', 'चर्च अध्ययने' चुरादिः, 'हसे हसने'—एभ्यो व्यवपूर्वेभ्यो णच्, तदन्तादञ्। अत्र यथोक्ते कार्ये प्रतिषिद्धे वृद्धिरेव भवति, द्वौ प्रतिषेधौ प्रकृत्यर्थं गमयत इति कृत्वा। 'टिड्ढाणञ्' इति ङीप् ॥ ६॥

**स्वागतादीनां च ॥ स्वागतिक इति।** शोभनमागतं स्वागतम्। 'तदाहेत्यादौ प्रभूतादिभ्य उपसंख्यानम्' इति ठक्। **स्वाध्वरिक इति।** अत्रापि 'चरति' इति ठक्। शोभनोऽध्वरः स्वध्वरः। **स्वाङ्गिरित्यादि।** स्वाङ्गिर्व्याङ्गिर्व्याडिरिति 'अत इञ्'। शोभनान्यङ्गान्यस्य स्वङ्गः, विगतान्यङ्गान्यस्य व्यङ्गः, विगतोऽडोऽस्य व्यडः। व्यवहरणं व्यवहारः, भावे घञ्। ननु च व्यवहारशब्दोऽयं कर्मव्यतीहारे वर्तते, तत्र 'न कर्मव्यतीहारे' इति प्रतिषेधः सिद्धः, तत् कस्मादिह पठ्यते? इत्याह—**व्यवहारशब्दोऽयमिति।** किं पुनर्लौकिकम्? लौकिकं पुनर्वृत्तं येनाचारेण व्यवहाराल्लोके व्यावहारिक इत्युच्यते तद्वेदितव्यम्। **स्वापतेयमिति।** 'पथ्यतिथिवसतिस्वपतेर्ढञ्'। कथं पुनरत्र प्राप्तिः, यावता नास्य वकारः पदान्तः? इत्याह—**द्वारादिषु स्वशब्दपाठादस्य प्राप्तिरिति।** तदादिविधिनेत्यभिप्रायः। यथा तदादिविधिर्भवति तथा तत्रैवोक्तम् ॥ ७ ॥

**पदमञ्जरी**

भवतीत्यर्थः ॥ ६ ॥

**स्वागतादीनां च ॥** व्यवक्रोशीत्यादौ व्यवपूर्वो धातुः कर्मव्यतिहारे दृष्ट इति व्यवहारशब्दोऽपि कर्मव्यतिहारे वर्त्तते, ततश्च पूर्वेणैवात्र सिद्धेरत्रास्य पाठोऽनर्थक इत्याशङ्क्याह—**व्यवहारशब्दोऽयमिति। द्वारादिषु स्वशब्दस्य पाठादत्र प्रसङ्ग इति।** 'तदादेरपि तत्र ग्रहणं भवति' इत्युक्तमेव ॥ ७ ॥

**भावबोधिनी**

(३।३।४३) सूत्र से णच् प्रत्यय होता है, इस णजन्त से 'णचः स्त्रियामञ्' (५।४।१४) सूत्र से अञ् प्रत्यय का अपवाद णिच् और अञ् प्रत्यय होने पर वृद्धि का अपवाद ऐच् आगम प्राप्त है। उसका निषेध प्रस्तुत सूत्र करता है। अजन्त होने से 'टिड्ढाणञ्' सूत्र से ङाप् होता है। न्यासकार ने व्यावचर्ची के स्थान पर अध्ययनार्थक √चर्च् धातु मानकर 'व्यावचर्ची' उदा० लिखा है। ] ॥ ६ ॥

जो (वृद्धिनिषेध और ऐच् आगम) कहा गया है वह—स्वागत–आदि शब्दों का नहीं होता है अर्थात् उनमें वृद्धि होती है। उदा० स्वागतम् (= अच्छा आगमन हुआ)—ऐसा जो कहता है–स्वागतिकः। [ स्वागत शब्द से 'तदाहेत्यादौ प्रभूतादिभ्य उपसंख्यानम्' वचन से ठक् = इक करने पर वृद्धि का अपवाद ऐच् आगम प्राप्त है, उसका निषेध इस सूत्र से होता है आदिवृद्धि ही होती है। ] 'स्वध्वरेण चरति—इस अर्थ में स्वाध्वरिकः। [सु+अध्वर=यण्–स्वध्वर शब्द से 'चरति' अर्थ में ठक् प्रत्यय, ऐच् आगम का निषेध, आदिवृद्धि ] स्वङ्ग ( शोभन अङ्गोंवाले ) का अपत्य इस अर्थ में ( इञ् प्रत्यय ) स्वाङ्गिः। [ यहाँ आदिवृद्धि होती है। ] व्यङ्ग—[ विगत = नष्ट हुए अङ्गोंवाले

१. 'तदन्ताद् टिड्ढाणञिति ङीप्'—इत्यधिकमेकस्मिन्पुस्तके।

## ३४०५. श्वादेरिञि ॥ ८ ॥ (१५६०)

**स्वादेरङ्गस्य इञि परतो यदुक्तं तन्न भवति । श्वभस्त्रस्यापत्यं श्वाभस्त्रिः । श्वादंष्ट्रिः । श्वन्शब्दो द्वारादिषु पठ्यते, तत्र च तदादिविधिर्भवतीत्येतदेव वचनं ज्ञापकम् ।**

*** इकारादिग्रहणं कर्त्तव्यं श्वागणिकाद्यर्थम् * ( म० भा० ) । श्वगणेन चरति श्वागणिकः । श्वायूथिकः ।**

**न्यासः**

**श्वादेरिञि ॥ स्वाभस्त्रिः, स्वादंष्ट्रिरिति ।** श्वेव भस्त्रा यस्य, शुन इव दंष्ट्रा यस्येति बहुव्रीहिः, उपसर्जनह्रस्वत्वम् । केन पुनः श्वादेर्वृद्धिप्रतिषेधः प्राप्नोति, यतोऽयं प्रतिषेध उच्यते, न ह्यस्य वकारः पदान्तः ? इत्यत आह—**श्वन्शब्दो द्वारादिषु पठ्यत इति ।** ननु च केवलः श्वशब्दो द्वारादिषु पठ्यते, तत्र कः प्रसङ्गो यस्तदादेः स्यात् ! 'यस्मिन् विधिस्तदादावल्ग्रहणे' इति तदादिविधिरिति चेत् ? नैतदस्ति; सप्तमीनिर्दिष्टे ह्यल्ग्रहणे च सति तदादिविधिर्भवति, न चात्रैतदुभयमस्तीत्यत आह—**तत्र चेत्यादि ।** यदि तत्र तदादिविधिर्न स्यात्; तदैतत् प्रतिषेधवचनमनर्थकं स्यात्, प्राप्त्यभावादित्यभिप्रायः । ज्ञापकस्य योजनम्—प्रशौवादंष्ट्रो मणिरित्यादौ वृद्धिप्रतिषेधः ।

**इकारादिग्रहणं कर्तव्यमिति ।** इकारादितद्धितौ गृह्यते, येन तदिकारादिग्रहणं व्याख्यानं कर्त्तव्यमित्यर्थः । किमर्थमित्याह **श्वागणिकाद्यर्थमिति ।** श्वागणिकादीनामर्थः = प्रयोजनं यस्मिंस्तत् तथोक्तम् । अर्थस्तु तेषामादिवृद्धिरेव तत्रेदं व्याख्यानम् = इञ्ग्रहणमिहेकारादेस्तद्धितस्योपलक्षणार्थम्, तेनान्यत्रापि तद्धिते प्रतिषेधो भवतीति ।

**पदमञ्जरी**

**श्वादेरिञि ॥ तत्र चेत्यादि ।** यदि तत्र तदादिविधिर्न स्यात् एतद्वचनमनर्थकम्, कथम् ? केवलश्वन्शब्दो द्वारादिषु पठ्यते, तत्र कः प्रसङ्गो यत्तदादेः स्यात् । **तदादिविधिर्भवतीति ।** अस्मिन्प्रकरणे यदुक्तं तद्वृद्धिभाजोऽचो विशेषणमित्यस्मिन्नर्थे ज्ञापकमित्यर्थः । **इकारादिग्रहणं चेत्यादि ।** श्वादेरितीति वक्तव्य-

**भावबोधिनी**

का अपत्य—व्याङ्गिः । [ दोनों में इञ् प्रत्यय के बाद प्राप्त ऐच् का निषेध करके आदिवृद्धि होती है । ] व्यवहारेण चरति–इस अर्थ में–व्यावहारिकः [ वि + अव + हार + ठक् = इक, ऐच् न होकर आदिवृद्धि ही होती है । ] यह व्यवहार शब्द लौकिक आचरण अर्थ में विद्यमान है न कि कर्मव्यतिहार अर्थ में । अतः पूर्वसूत्र का विषय नहीं है । ] स्वपति के विषय में साधु–इस अर्थ में–स्वापतेयः । [ स्वपति शब्द से 'पथ्यतिथिस्वपतेर्ढञ्' सूत्र से ढञ् = एय प्रत्यय, ऐच् का निषेध, आदिवृद्धि, भसंज्ञा, इलोप—स्वापत् + एय ] द्वारादिगण में 'स्व' शब्द का पाठ होने से इस अर्थ में भी ऐच् आगम प्राप्त है । [ उसका निषेध होता है । ]

[ स्वागतादिगण में पठित शब्द– ] स्वागत । स्वध्वर । स्वङ्ग । व्यङ्ग । व्यड । व्यवहार । स्वपति । ये स्वगतादि हैं ॥ ७ ॥

इञ् परे रहते श्वादि अङ्ग को जो कहा गया वह नहीं होता है अर्थात् ऐच् आगम न होकर आदिवृद्धि होती है । उदा० श्वभस्त्र का अपत्य—इस अर्थ में–श्वाभस्त्रिः । श्वदंष्ट्र का अपत्य—श्वादंष्ट्रिः [ श्वा = कुत्ते के समान भस्त्रा = पानी ढोने का चर्ममय पात्र = मशक है जिसकी वह श्वभस्त्र है । इसी प्रकार श्वा के समान दाढ़ है जिसकी वह । ] श्वन् शब्द द्वारादि गण में पठित है उसमें तदादिविधि होती है इसमें प्रस्तुत सूत्र ही ज्ञापक है । [ क्योंकि तदादिविधि मान कर ऐच् की प्राप्ति होती है उसे रोकने के लिए यह सूत्र आवश्यक है । अत एव ज्ञापक बनता है । ]

* श्वागणिक आदि के लिए इकारादि ( प्रत्यय ) का ग्रहण करना चाहिए । * उदा० श्वगणेन चरति ( कुत्तों के समूह के साथ घूमता है—) श्वागणिकः । ( श्वयूथेन चरति–इति ) श्वायूथिकः । [ श्वगण + ठक् =

❀तदन्तस्य चान्यत्रापि तद्धिते प्रतिषेध इष्यते।❀ श्वाभस्त्रेरिदं श्वाभस्त्रम् ॥

**३४०६. पदान्तस्यान्यतरस्याम् ॥ ९ ॥ (१५६१)**

श्वादेरङ्गस्य पदशब्दान्तस्यान्यतरस्यां यदुक्तं तन्न भवति। श्वापदस्येदं श्वापदम्, शौवापदम् ॥

**३४०७ उत्तरपदस्य ॥ १० ॥ (१३९६)**

'उत्तरपदस्य' इत्ययमधिकारः, 'हनस्तोऽचिण्णलोः' (७।३।३२) इति प्रागेतस्मात् यदित ऊर्ध्वमनुक्रमिष्यामः, 'उत्तरपदस्य' इत्येवं तद्वेदितव्यम्। वक्ष्यति—"'अवयवादृतोः' (७।३।११)। पूर्ववार्षिकम्। अपरवार्षिकम्। पूर्वहैमनम्। अपरहैमनम्"।

**न्यासः**

**तदन्तस्येति**। इञन्तस्यान्यत्रापीति। अणि। कथं पुनरिष्यमाणोऽन्यत्र लभ्यते, यावतान्यत्रापि तद्धित उत्पन्नः इञः 'यस्येति च' इति लोपेन भवितव्यम्? नैष दोषः; इञीति नेयं निमित्तसप्तमी, किं तर्हि? परसप्तमी। निमित्तसप्तम्यामण्निमित्ताया वृद्धेः प्रतिषेधस्य प्रतिषेधो न स्यात्। परसप्तम्यां तु यद्यपि लोपः क्रियते, तथापि स्थानिवद्भावात् प्रतिषेधः सिध्यति। **श्वाभस्त्रमिति**। 'इञश्च' इत्यण् ॥ ८ ॥

**पदान्तस्यान्यतरस्याम् ॥ पूर्वेण** नित्ये प्राप्ते प्रतिषेधे विकल्प उच्यते। **पदान्तस्येति**। पदशब्दान्तस्येत्यर्थः। **श्वापदमिति**। शुन इव पदस्येति श्वपदः, तस्येदं श्वापदम्। **शौवापदमिति**। 'अन्येषामपि दृश्यते' इति दीर्घः ॥ ९ ॥

**उत्तरपदस्य ॥** अङ्गस्याचामादेरचो वृद्धौ प्राप्तायामिदमुच्यते। ननु च 'अवयवादृतोः' इत्यादौ पञ्चमीनिर्देशादन्तरेणाप्युत्तरपदाधिकारम् 'तस्मादित्युत्तरस्य' इत्युत्तरपदस्यैव भविष्यति, तत् किमुत्तरपदा-

**पदमञ्जरी**

मित्यर्थः। तत्र वर्णग्रहणे सप्तमीनिर्देशात्तदादिविधिः। **श्वागणिक इति**। 'श्वगणाट्ठञ्' इति ठञ्। **तदन्तस्येति**। इञन्तस्य। **श्वाभस्त्रमिति**। 'इञश्च' इत्यण्। तन्निमित्तो वृद्धिप्रतिषेधः, ऐजागमश्च भिन्नकक्षत्वादशक्य इञाश्रयेण प्रतिषेधेन निवारयितुमिति वचनारम्भः ॥ ८ ॥ ९ ॥

**उत्तरपदस्य ॥** उत्तरत्र 'अचामादेः' इत्यनुवृत्तेरुत्तरपदस्याचामादेर्वृद्धिर्वेदितव्या।

ननु च 'अवयवादृतोः' इत्यादौ 'अवयवाद्' इत्यादिका पञ्चमी, तत्रान्तरेणाप्युत्तरपदग्रहणमुत्तरपदस्यैव

**भावबोधिनी**

इक, स्वयूथ + इक, ऐच् प्राप्त है। उसका निषेध करके आदिवृद्धि होती है।] ❀ तदन्त = इञन्त का अन्यत्र = अण् तद्धित परे भी प्रतिषेध इष्ट है। उदा० श्वाभस्त्रेः इदम् श्वाभस्त्रम्। (श्वाभस्त्र का सम्बन्धी—इस अर्थ में ['इञश्च' सूत्र से अण् करने पर पुनः वृद्धि का निषेध ऐच् आगम प्राप्त है, उसका भी निषेध करना इष्ट है। अतः आदिवृद्धि ही होती है।] ॥ ८ ॥

पद शब्द जिसके अन्त में है, श्वन् जिसके आदि में है ऐसे अङ्ग को भी जो (वृद्धिनिषेध और ऐच् आगम) कहा गया है वह विकल्प से नहीं होता है अर्थात् ऐच् आगम और वृद्धि दोनों के रूप होते हैं। उदा० श्वापदम्, शौवापदम्। [शुनः इव पदम् अस्य—इस विग्रह में बहुव्रीहि में—श्वपद बनता है। पुनः 'तस्येदम्' से अण् प्रत्यय —श्वपदस्य इदम् इस अर्थ में होता है। यहाँ वृद्धिनिषेध, ऐच् आगम—श् औवपद में 'अन्येषामपि दृश्यते' से दीर्घ होता है—शौवापदम्। ऐच् न होने पर श्वापदम्।] ॥ ९ ॥

'उत्तरपदस्य' (उत्तरपद का) यह अधिकार है, यहाँ लेकर आगे 'हनस्तोऽचिण्णलोः' (७।३।३२) से पूर्व तक जिन (कार्यों) को कहेंगे वे 'उत्तरपद' के स्थान पर होते हैं—ऐसा समझना चाहिए। आगे कहेंगे—'अवयववाची से उत्तरवर्ती ऋतुवाचक उत्तरपद के आदि अच् की वृद्धि कित्, गित्, ञित् तद्धित परे होती है।' उदा० पूर्ववार्षिकम्। अपरवार्षिकम् पूर्वहैमनम्। अपरहैमनम्। [इनको प्रक्रिया आगे सूत्र में की जायगी।]

यत्र पञ्चमीनिर्देशो नास्ति—'जे प्रोष्ठपदानाम्' (७।३।१०) इत्येवमादौ, तदर्थमुत्तरपदाधिकारः। पञ्चमीनिर्देशेष्वपि विस्पष्टार्थम्, वृद्धेश्च व्यपदेशार्थम्। 'उत्तरपदवृद्धौ सर्वं च' (६।२।१०५) इत्युत्तरपदाधिकारे या वृद्धिरित्येवं विज्ञायते।

**३४०८. अवयवादृतोः ॥ ११ ॥ (१३९७)**

**अवयववाचिन उत्तरस्य ऋतुवाचिन उत्तरपदस्याचामादेरचो वृद्धिर्भवति तद्धिते ञिति, णिति,**

**न्यासः**

धिकारेण ? इत्यत आह—**यत्रेत्यादि**। आदिशब्देन 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य', 'अनुशतिकादीनाञ्च', 'देवताद्वन्द्वे च'—इत्येवमादयो गृह्यन्ते। एषु पञ्चमीनिर्देशाभावादसत्युत्तरपदाधिकारेऽङ्गस्याचामादेरच एव वृद्धिः स्यात्, नोत्तरपदस्य। तस्मात् तदर्थमुत्तरपदाधिकारः क्रियते।

यद्येवम्, इह 'अवयवादृतोः' इत्येतन्नोपन्यसनीयम्, अत्र पञ्चमीनिर्देशस्य विद्यमानत्वात् ?—इति चोद्यमाशङ्क्यान्यार्थं क्रियमाणस्य यत्रापि पञ्चमीनिर्देशोऽस्ति, तत्रापि प्रासङ्गिकं कार्यमाह—**पञ्चमीनिर्देशेष्वपीत्यादि**। प्रयोजनान्तरमप्याह—**वृद्धेश्चेत्यादि**। उत्तरपदाधिकारे या विहिता वृद्धिरित्येष व्यपदेशो वृद्धेर्यथा स्यादित्येवमर्थश्चोत्तरपदाधिकारः क्रियते। किं पुनः करणमेवं वृद्धेर्व्यपदेशः प्रार्थ्यते—इत्याह—**उत्तरपदवृद्धावित्यादि**। उत्तरपदाधिकारे विहिते वृद्धिमत्युत्तरपदे पूर्वपदस्यान्तोदात्तत्वं यथा स्यादित्येवमर्थम्। 'उत्तरपदवृद्धौ सर्वञ्च' इत्यत्रोत्तरपदाधिकारे या विहिता वृद्धिरित्येवं विज्ञायते। एतत्कथं शक्यते विज्ञातुम् ? यदि व्यपदेशार्थं उत्तरपदाधिकारः क्रियते, नान्यथा। तस्माद् व्यपदेशार्थश्चोत्तरपदाधिकारः कर्त्तव्यः ॥ १० ॥

**अवयवादृतोः** ॥ नेदं स्वरूपग्रहणम् ? किं तर्हि ? अर्थग्रहणम्। तथा ह्यवयवादित्युच्यते, ऋतोश्चार्थ

**पदमञ्जरी**

भविष्यति ? अत आह—**यत्रेति**। आदिपदेन 'हृद्भगसिन्ध्वन्ते पूर्वपदस्य च', 'अनुशतिकादीनां च', 'देवताद्वन्द्वे च'—इत्येतेषां ग्रहणम्। एषु योगेषु पञ्चमीनिर्देशाभावादसत्यस्मिन्नधिकारेऽङ्गस्याचामादेरचो वृद्धिः स्यात्, नोत्तरपदस्य। वचनं तु नियमार्थं स्यात्—ज एव प्रोष्ठपदानाम्, नान्यत्र। प्रोष्ठपदानामेव वा जे इति। वचनसामर्थ्याद्वा पूर्वपदस्यैवानाद्यचो वृद्धिविधानार्थं स्यात्। तस्मादेतदर्थमेवायमधिकारः कर्त्तव्यः।

किमिदानीं पञ्चमीनिर्देशेष्वस्यानुयोग एव ? नेत्याह—**पञ्चमीनिर्देशेष्वपीति**। **वृद्धेश्च व्यपदेशार्थमिति**। उत्तरपदाधिकारे विहिता या वृद्धिरिति व्यपदेशो यथा स्यादित्येवमर्थमित्यर्थः। क्व पुनरेवंविधेन व्यपदेशेन प्रयोजनम् ? इत्यत आह—**उत्तरपदवृद्धौ सर्वं चेत्यत्रेति**। सर्वभासः, सर्वकार इत्यादौ मा भूदित्येवमर्थं तत्रैवमाश्रितम् ॥ १० ॥

**अवयवादृतोः** ॥ **ऋतोर्वृद्धिमद्विधावित्यादि**। ऋतोः = ऋतुवाचिनः शब्दाद्वृद्धिमद्विधौ = वृद्धिनिमित्ते

**भावबोधिनी**

जिनमें पञ्चमीनिर्देश नहीं है जैसे 'जे प्रोष्ठपदानाम्' आदि में, उन सूत्रों के लिये यह 'उत्तरपदस्य' अधिकार है।

पञ्चमीनिर्देश वालों में भी विशेष स्पष्टता के लिए और वृद्धि के व्यपदेश = व्यवहार, नाम के लिये हैं। 'उत्तरपदवृद्धौ सर्वं च' (६।२।१०५) उत्तरपद के अधिकार में जो वृद्धि होती है—ऐसा ज्ञात होता है। [ भाव यह है कि 'उत्तरपदवृद्धौ सर्वं च' यह सूत्र—'उत्तरपद' इस अधिकार को मानकर जो वृद्धि की गई है ऐसे वृद्धियुक्त उत्तरपद परे रहने पर 'सर्व' 'दिक्' शब्द अन्तोदात्त होते हैं। ऐसी वृद्धि का व्यपदेश प्रस्तुत अधिकार सूत्र के होने पर ही सम्भव है। ] ॥ १० ॥

अवयववाची पूर्व ( पद ) से उत्तरवर्ती ऋतुवाचक उत्तरपद के अचों के आदि अच् की वृद्धि ञित्, णित् और कित् तद्धित प्रत्यय के परे रहते होती है। उदा० पूर्ववार्षिकम्। पूर्वहैमनम्। अपरवार्षिकम्। अपरहैमनम्। इनमें 'पूर्वं वर्षाणाम्, अपरं वर्षाणाम्, पूर्वं हेमन्तस्य, अपरं हेमन्तस्य—इस प्रकार अवयव अर्थ में 'पूर्वापराधरोत्तरम्

किति च परतः। पूर्ववार्षिकम्। पूर्वहैमनम्। अपरवार्षिकम्। अपरहैमनम्। पूर्वं वर्षाणाम्, अपरं वर्षाणामित्येकदेशिसमासः। 'तत्र भवः' (४।३।५३) इत्येतस्मिन्नर्थे वर्षाभ्यष्ठक्' (४।३।१८) 'हेमन्ताच्च' (४।३।२१), 'सर्वत्राण् च तलोपश्च' (४।३।२२), इत्यण्प्रत्ययः, तत्र 'ऋतोर्वृद्धिमद्विधौ अवयवात्' (म० भा०) इति तदन्तविधिः।

अवयवादिति किम्? पूर्वासु वर्षासु भवं पौर्ववर्षिकम्। 'कालाट्ठञ्' (४।३।११) इति ठञ्। अवयवपूर्वस्यैव तदन्तविधिः, नान्यस्य ॥

## ३४०९. सुसर्वार्धाज्जनपदस्य ॥ १२ ॥ (१३९८)

### न्यासः

एवावयवी भवति। अवयवित्वेनर्त्तौ विज्ञायमानेऽर्थनिर्देशोऽयं विज्ञायते, ततश्चावयववाचिनः कार्यं विज्ञायत इत्याह—**अवयववाचिन इत्यादि। एकदेशिसमास इति।** पूर्वापरादिसूत्रेण। ननु ग्रहणवता प्रादिपदिकेन तदन्तविधिः प्रतिषिध्यते, तत् कथं वर्षाहेमन्ताभ्यां प्रत्ययो विधीयमानस्तदन्ताभ्यां लभ्यते? इत्याह—**तत्र ऋतो वृद्धिमद्विधावयवानामिति।**

**पौर्ववर्षिक इति।** पूर्वाश्च ता वर्षाश्चेति विशेषणसमासं कृत्वा भवार्थे तद्धितो विधेयः। पूर्वशब्दोऽत्र कालवाची, न त्ववयववाचीत्यङ्गस्यादिवृद्धिरेव भवतीति। अथात्रापि तदन्तविधिना ठक् कस्मान्न भवति? इत्याह—**अवयवपूर्वस्यैव हीत्यादि** ॥ ११ ॥

**सुसर्वार्धाज्जनपदस्य ॥ जनपदस्येति** नेदं स्वरूपग्रहणम्, उत्तरसूत्रे 'अमद्राणाम्' इति निषेधात्। उत्तरसूत्रे हीदमेव जनपदग्रहणमनुवर्त्तते, ततोऽत्र यदि स्वरूपग्रहणं स्यात्, मद्राणां प्रतिषेधोऽनर्थकः स्यात्,

### पदमञ्जरी

प्रत्यये विधीयमाने तदन्तविधिः, ऋतुशब्दान्तादपि प्रत्ययो भवतीत्यर्थः। किं सर्वत्र? नेत्यत आह—**अवयवादिति।** अवयववचनात् परो यदा ऋतुवचनस्तदेत्यर्थः। ये तु—अवयवानामिति षष्ठीबहुवचनान्तं पठन्ति, तेषां न समीचीनोऽर्थः। तथा च 'सुसर्वार्धदिक्शब्देभ्यः' इति पञ्चम्या निरदेशि। **पूर्वासु वर्षासु भव इति।** 'तद्धितार्थ' इति समासः। अन्ये तु—अदिक्शब्दत्वाद्विशेषणसमासं मन्यन्ते। अथात्रापि तदन्तविधिना वर्षाभ्यष्ठगेव कस्मान्न भवति? अत आह—**अवयवपूर्वस्यैव हीति** ॥ ११ ॥

**सुसर्वार्धाज्जनपदस्य ॥ जनपदवाचिन इति।** स्वरूपग्रहणं तु न भवति; उत्तरसूत्रे मद्रप्रतिषेधात्।

### भावबोधिनी

एकदेशिना एकाधिकरणे'। (२।२।१) सूत्र से एकदेशिसमास होता है। इसके बाद 'तत्र भवः' इस अधिकार अर्थ में 'वर्षाभ्यष्ठक्' सूत्र से ठक् = इक होता है। और 'हेमन्ताच्च' 'सर्वत्राण् तलोपश्च' इससे हेमन्त से अण् प्रत्यय तथा 'त' लोप होता है। इनमें 'वृद्धिमत् (= वृद्धिनिमित्तक) विधि = प्रत्ययविधान करने में 'अवयवात्' इसमें तदन्त विधि होती है अर्थात् ऋतुशब्द जिसके अन्त में होता है = ऋतुशब्दान्त से भी प्रत्यय होता है।* [ऐसे ठक् = कित् और अण् = णित् प्रत्यय परे रहते प्राप्त होने वाली आदिवृद्धि का अपवाद यह उत्तरपद आदि अच् की वृद्धि होती है—पूर्ववार्षिकम् अपरहैमनम्। वर्षा के पूर्व भाग में होने वाला। हेमन्त के अपर = बाद के भाग में होने वाला।]

अवयववाची की–इसका क्या फल है? पूर्वासु वर्षासु भवम्–[यहाँ तद्धितार्थ=भव में 'तद्धितार्थोत्तरपद०' सूत्र से समास और] 'कालाट्ठञ्' सूत्र से ठञ् = इक प्रत्यय होता है। [यहाँ 'पूर्व' शब्द अवयववाची नहीं अपितु कालवाची है अतः उत्तरपदादि अच् की वृद्धि न होकर आदि अच् की ही वृद्धि होती है।] अवयववाची पूर्व में जिसके होता है उसी की तदन्तविधि ('ऋतोर्वृद्धिमद्विधावयवानाम्'–वचन से) होती है, अन्य की नहीं ॥ ११ ॥

सु, सर्व, अर्ध—इनसे उत्तरवर्ती जनपदवाचक उत्तरपद के अचों में आदि अच् की वृद्धि ञित्, णित् और कित् प्रत्यय के परे रहते होती है। उदा० सुपाञ्चालकः। सर्वपाञ्चालकः। अर्धपाञ्चालकः। इनमें 'जनपद–तदवध्योश्च'

सु, सर्व, अर्ध—इत्येतेभ्य उत्तरस्य जनपदवाचिन उत्तरपदस्याचामादेरचो वृद्धिर्भवति तद्धिते ञिति, णिति, किति च परतः। सुपाञ्चालकः। सर्वपाञ्चालकः। अर्धपाञ्चालकः। 'जनपदतदवध्योश्च', 'अवृद्धादपि बहुवचनविषयात्' इति वुञ्। 'सुसर्वार्धदिक्शब्देभ्यो जनपदस्य' इति तदन्तविधिः॥

**३४१०. दिशोऽमद्राणाम्॥ १३॥ (१३९९)**

**दिग्वाचिन उत्तरस्य जनपदवाचिनो मद्रवर्जितस्याचामादेरचो वृद्धिर्भवति तद्धिते ञिति, णिति, किति च परतः। पूर्वपाञ्चालकः। अपरपाञ्चालकः। दक्षिणपाञ्चालकः। पूर्ववत्तदन्तविधिः प्रत्ययश्च।**

**न्यासः**

तस्मादर्थस्येदं ग्रहणम्, तेन जनपदवाचिनः कार्यं विज्ञायत इत्याह—**सुसर्वार्ध इत्येतेभ्य उत्तरस्य जनपदवाचिन इत्यादि। सुपाञ्चालक इति।** शोभनाः पञ्चाला इति प्रादिसमासः। **सर्वपाञ्चालक इति।** 'पूर्वकालैक' इत्यादिना कर्मधारयः। **अर्धपाञ्चालक इति।** 'अर्धं नपुंसकम्' 'इत्यर्धशब्देन तत्पुरुषः। सर्वत्र शैषिके जातादावर्थे तद्धितः। कथं जनपदात् 'जनपदतदवध्योश्च' इत्युच्यमानः प्रत्ययस्तदन्ताद् भवति? इत्याह—**सुसर्वार्धदिक्शब्देभ्य इत्यादि**॥ १२॥

**दिशोऽमद्राणाम्॥ पूर्वपाञ्चालक इति।** पूर्वेषु पञ्चालेषु भव इति तद्धितार्थे समासः, ततो वुञ्। दिश इति किम्? पूर्वं पञ्चालानां पूर्वपञ्चालः[1]। पूर्वापरादिसूत्रेणैकदेशिसमासः, तत्र भवः पौर्वपञ्चालः[1]। दिशि यो वर्त्तते स इह दिक्शब्दोऽभिप्रेतः। न चायं पूर्वशब्दो दिशि वर्त्तते, किं तर्हि? अवयवे। तेन पूर्वपद-

**पदमञ्जरी**

**सुसर्वार्धेत्यादि।** जनपदवाचिनः शब्दस्यानन्तरे प्रत्यये विधीयमाने तदन्तस्यापि ग्रहणं भवति, यदि सुप्रभृतिभ्यः परः सम्भवतीत्यर्थः॥ १२॥

**दिशोऽमद्राणाम्॥ पूर्वपाञ्चालक इति।** तद्धितार्थे समासः। **पौर्वपञ्चालक इति।** अवयववाच्यत्र पूर्वशब्दः, एकदेशिसमासाद् वुञ्प्रत्ययः। अदिक्शब्दत्वाद् आदिवृद्धिरेव भवति। यद्येवम्, वुञापि न भवितव्यमदिक्शब्दत्वादेव? अस्त्यत्र विशेषः, सुसर्वार्द्धाद्दिक्शब्देभ्य इति तदन्तविधौ शब्दग्रहणं क्रियते—दिशि दृष्टः

**भावबोधिनी**

की अनुवृत्ति में 'अवृद्धादपि बहुवचनविषयात्' (४।२।१२४) सूत्र से वुञ् = अक प्रत्यय होता है। [आदिवृद्धि न होकर उत्तरपद की आदिवृद्धि होती है।] "सुसर्वार्धदिक्सब्देभ्यो जनपदस्य" इस वार्तिक से तदन्तविधि होती है। [इसीलिए सुपञ्चाल आदि से प्रत्यय हो पाता है।]॥ १२॥

दिशावाची से उत्तरवर्त्ती, मद्र शब्द को छोड़कर अन्य जनपदवाची शब्द के अचों में आदि अच् की वृद्धि ञित्, णित् और कित् तद्धित परे रहते होती है। उदा० पूर्वपाञ्चालकः। अपरपाञ्चालकः। [पूर्वेषु पञ्चालेषु भवः, अपरेषु पञ्चालेषु भवः—इस तद्धितार्थ में 'तद्धितार्थोत्तरपदसमाहारे च' (२।१।५०) से समास 'अवृद्धादपि बहुवचनविषयात्' इस सूत्र से वुञ् = अक प्रत्यय परे रहते आदिवृद्धि की अपवाद उत्तरपद के आदि अच् की वृद्धि होती है।] दक्षिणपाञ्चालकः। [दक्षिणेषु पञ्चालेषु भवः—अर्थ में पूर्वोक्त सभी प्रक्रिया होती है।] इसमें भी पूर्वसूत्र के समान ['सुसर्वार्धदिक्शब्देभ्यो जनपदस्य' सूत्र से तदन्तविधि और प्रत्यय होते हैं।

दिशावाची से—इसका क्या फल है? पूर्वः पञ्चालानाम्—इस विग्रह में ['पूर्वापराधरोत्तरम्' सूत्र से अवयव अर्थ में समास हाने पर] 'तत्र भवः' अर्थ में (वुञ् प्रत्यय होने पर)—पौर्वपञ्चालकः। आपरपञ्चालकः। [इनमें प्रस्तुत सूत्र न लग कर आदिवृद्धि होती है।]

---

१. चिन्त्यमिदम्; एकाधिकरणस्याभावात्। जनपदत्वेन बहुत्वं तु नानेकाधिकरणवदिति केचित्।

१. 'पौर्वपञ्चालकः' इत्यपि क्वचित्, स चायुक्तः; यथाह नागेशः—"अत्र पूर्वशब्दो देशवाची। कालवाचीत्यपि कश्चित। दिक्शब्दपदेन च दिग्वाचिशब्दस्यैव ग्रहणम्। अतोऽत्र तदन्तविधिविषयाभावान्न वुञ्"।

दिश इति किम् ? पूर्वः पञ्चालानां पूर्वपञ्चालः, तत्र भवः पौर्वपञ्चालकः। आपरपञ्चालकः। अमद्राणामिति किम् ? पौर्वमद्रः। आपरमद्रः। 'मद्रेभ्योऽञ्' (४।२।१०८) इत्यञ्प्रत्ययः॥

**३४११. प्राचां ग्रामनगराणाम्॥ १४॥ (१४००)**

प्राचां देशे ग्रामनगराणां दिश उत्तरेषामचामादेरचो वृद्धिर्भवति तद्धिते ञिति, णिति, किति च परतः।

ग्रामाणाम्—पूर्वेषुकामशम्यां भवः पूर्वैषुकामशमः। अपरैषुकामशमः। पूर्वकार्ष्णमृत्तिकः। अपरकार्ष्णमृत्तिकः।

**न्यासः**

वृद्धिरेव भवति। योगविभाग उत्तरार्थः—प्राचां ग्रामनगराणां दिश एवोत्तरपदस्य यथा स्यात्, सुसर्वार्धान्मा भूदिति॥ १३॥

**प्राचां ग्रामनगराणाम्॥** 'जनपदस्य' इत्यनुवर्त्तते, तेन प्राचामित्येतद् देशग्रहणं विज्ञायते, न त्वाचार्यग्रहणमिति मत्वाऽऽह—**प्राचां देशे ग्रामाणामित्यादि। पूर्वैषुकामशम इति।** पूर्वा चासाविषुकामशमी चेति 'दिक्संख्ये संज्ञायाम्' इति समासः, ततो भवार्थे दिक्पूर्वपदादसंज्ञायां ञः' इति। **पूर्वपाटलिपुत्रक इति।** पूर्वस्मिन् पाटलिपुत्रे भव इति पूर्ववत् तद्धितार्थे समासः, 'रोपधेतोः प्राचाम्' इति वुञ्।

ननु चैकमेव पाटलिपुत्रम्, तत्र पाटलिपुत्रान्तरस्य व्यवच्छेद्यस्याभावात्, तत् कथं पूर्वशब्देन पाटलिपुत्रशब्दो विशिष्यते ? पाटलिपुत्रैकदेशे पाटलिपुत्रशब्दो वर्त्तत इत्यदोषः। अथ नगरग्रहणं किमर्थम्, न 'ग्रामाणाम्' इत्येवं सिद्धम्, नगरमपि हि ग्रामो भवत्येव; जननिकायनिवासे ग्रामो रूढः, नगरञ्च जन-

**पदमञ्जरी**

शब्दो दिक्शब्द इत्येवं यथा विज्ञायेत, वृद्धिविधौ तु दिश इत्येतावदुच्यते। अन्ते त्वणन्तमेव प्रत्युदाहरणं पठन्ति॥ १३॥

**प्राचां ग्रामनगराणाम्॥** 'प्राचाम्' इति नाचार्यनिर्देशः; जनपदादिभिर्देशैः साहचर्यात्।

**पूर्वैषुकामशम इति।** पूर्वा चासाविषुकामशमी चेति 'दिक्संख्ये संज्ञायाम्' इति समासः, ततो भवार्थे 'दिक्पूर्वपदादसंज्ञायां ञः' इति ञप्रत्ययः।

**भावबोधिनी**

मद्र से भिन्न की—इसका क्या फल है ? पौर्वमद्रः। आपरमद्रः। [ पूर्वेषु मद्रेषु भवः, अपरेषु भवः—अर्थ में समास करने पर ] 'मद्रेभ्योऽञ्' इस सूत्र से अञ् प्रत्यय होता है। [ यहाँ आदिवृद्धि ही होती हैं। ]॥ १३॥

पूर्व दिशा के देश में ग्राम और नगर-वाचक जो शब्द दिशावाची से उत्तरवर्त्ती हैं उन उत्तरवर्त्ती शब्दों के अचों के आदि अच् की वृद्धि ञित्, णित् और कित् तद्धित प्रत्यय के परे रहते होती है।

ग्राम के उदा० पूर्वेषुकामशम्यां भवः—इसमें [ पूर्वा चासौ इषुकामशमी च—इस विग्रह में 'दिक्संख्ये संज्ञायाम्' सूत्र से समास करने के बाद 'दिक्पूर्वपदादसंज्ञायाम्' सूत्र से ञ=अ प्रत्यय करने पर प्रस्तुत सूत्र से उत्तरपद = इषुकामशमी के आदि अच् 'इ' की वृद्धि 'ऐ' होती है, भसंज्ञा, ईलोप होने पर ]—पूर्वैषुकामशमः बनता है। [ इसी प्रकार अपरेषुकामशम्यां भवः—] अपरैषुकामशमः। पूर्वकार्ष्णमृत्तिकः। अपरकार्ष्णमृत्तिकः। [ पूर्वा चासौ कृष्णमृत्तिका, अपरा चासौ कृष्णमृत्तिका—में पूर्ववत् समास और 'ञ' प्रत्यय करके उत्तरपद के आदि अच् ऋ की वृद्धि, रपर होता है। ]

नगरों के उदा० पूर्वस्मिन् पाटलिपुत्रे भवः। अपरस्मिन् पाटलिपुत्रे भवः। [ इनमें पूर्ववत् ही समास और "रोपधेतोः प्राचाम्" सूत्र से वुञ् = अक प्रत्यय, उत्तरपद के आदि अच् की वृद्धि होती है। ] पूर्वकान्यकुब्जः। अपरकान्यकुब्जः [ पूर्वस्मिन् कान्यकुब्जे भवः, अपरस्मिन् कान्यकुब्जे भवः—इस अर्थ में पूर्वोक्त सभी प्रक्रिया होती है। यदि उत्तरपद के आदि अच् की वृद्धि नहीं की जाती तो आदिवृद्धि होती और अनिष्ट रूप बनते। ]

नगराणाम्—पूर्वस्मिन्पाटलिपुत्रे भवः पूर्वपाटलिपुत्रकः। अपरपाटलिपुत्रकः। पूर्वकान्यकुब्जः। अपरकान्यकुब्जः।

ग्रामत्वादेव नगराणामपि ग्रहणे सिद्धे भेदेन यदुभयोरुपादानं तत्सम्बन्धभेदप्रतिपत्त्यर्थम्। **दिक्पूर्वपदो हि समुदायः, पूर्वेषुकामशम्यादिः ग्रामनामधेयम्। पाटलिपुत्रादिः पुनरुत्तरपदमेव नगरमाह। तत्र ग्रामवाचिनामङ्गानामवयवस्य दिक्शब्दादुत्तरस्य च नगरवाचिनामुत्तरपदानामवयवस्य वृद्धिर्भवतीत्येवमभिसम्बन्धः क्रियते। इतरत्र तु दिश उत्तरेषां नगराणामित्येव।**

**न्यासः**

निकायनिवास एव, अतश्च नगरमपि ग्रामः; यतो ये ग्रामे विधयो नेष्यन्ते, नगरेऽपि ते न क्रियन्ते। तथा हि—अभक्ष्यो ग्राम्यकुक्कुटः', 'अभक्ष्यो ग्राम्यशूकरः—इत्युक्ते नागरोऽपि न भक्ष्यते; 'ग्रामे नाध्येतव्यम्' इत्युक्ते नगरेऽपि नाधीयते, तस्मान्नगरमपि ग्रामः। एवञ्च कृत्वा—'उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तात्', 'वाहीकग्रामेभ्यश्च', 'दिक्शब्दा ग्रामजनपदाख्यानचानराटेषु' इत्यत्र ग्रामग्रहणेन नगरग्रहणमपि भवतीत्याह—**ग्रामत्वादेवेत्यादि**। यदि तर्हि नगरमपि ग्रामः, तदा विशिष्टलिङ्गः 'नदीदेशोऽग्रामाः' इत्यत्र नगरग्रहणं प्राप्नोति? सत्यमेतत्, तत्र तु नगराणां प्रतिषेधो वक्तव्यः। स एव च सम्बन्धभेदः कुतो हेतोर्भवति, यस्य प्रतिपत्तये ग्रामनगरयोर्भेदेनोपादानं क्रियते! इत्याह—**दिक्पूर्वपदो हीत्यादि**। यदि हि यथा दिक्पूर्वपदः पूर्वोत्तरसमुदायः पूर्वेषुकामशम्यादिर्ग्रामनामधेयम्, तथा नगरनामधेयमपि स्यात्, ततः सम्बन्धो न भिद्येत। यथा च पाटलिपुत्रादि शब्दरूपमुत्तरपदभूतमेव नगरस्य वाचकम्, तथा यदि ग्रामनामधेयमपि ग्रामस्य स्याद्, एवमपि सम्बन्धो न भिद्येत? न चैवम्; अन्यादृश एव हि पूर्वोत्तरसमुदायात्मको ग्रामवाची शब्दः, अन्यादृशश्चोत्तरपदात्मको नगरवाची शब्दः। तस्माद् ग्रामनगरयोर्भेदात् सम्बन्धभेदो भवति। एवं सम्बन्धभेदहेतुं दर्शयित्वा सम्बन्धभेदं दर्शयन्नाह—**तत्रेत्यादि**। **ग्रामवाचिनामिति**। पूर्वेषुकामशमीत्येवमादीनाम्। **अवयवस्येति**। इषुकामशमी कृष्णमृत्तिकेत्येवमादेः। **दिक्शब्दादिति**। पूर्वादेः। **इतरत्र त्वित्यादि**। **नगरेषु**। **दिश उत्तरेषां नगराणामिति**। अत्र वृद्धिर्भवतीत्यभिसम्बन्धः क्रियत इत्येतदपेक्ष्यते।

**पदमञ्जरी**

**पूर्वपाटलिपुत्रक इति**। पूर्ववत्समासः, 'रोपधेतोः प्राचाम्' इति वुञ्। यद्यप्येकमेव पाटलिपुत्रम्, तथापि पाटलिपुत्रस्यैकदेशे पाटलिपुत्रशब्दस्य वृत्तेः पूर्वत्वविशेषणं युक्तमेव।

जना यत्र सन्ति स ग्रामः, ततश्च नगरमपि ग्रामः। ये हि ग्रामे विधयो नेष्यन्ते साधीयस्ते नगरेऽपि न क्रियन्ते। तद्यथा—'अभक्ष्यो ग्रामकुक्कुटः' इति सुतरां नागरोऽपि न भक्ष्यते। 'ग्रामे नाध्येयम्' इति साधीयो नगरेऽपि नाधीयते। शास्त्रेऽपि—'उदीच्यग्रामाच्च बह्वचोऽन्तोदात्तात्', 'वाहीकग्रामेभ्यश्च', 'दिक्शब्दाः ग्रामजनपदाख्यानचानराटेषु'—नगरमपि गृह्यते, तस्मादिहापि नार्थो नगरग्रहणेन? इत्यत आह—**ग्रामत्वादेवेति**। **सम्बन्धभेदप्रतिपत्त्यर्थमिति**। अङ्गस्येति प्रकृतम्, उत्तरपदस्येति च, तत्र ग्रामाणामित्येतदङ्गस्येत्यनेन सम्बध्यते—ग्रामवाचिनामङ्गानामिति। नगराणामित्येतदुत्तरपदस्येत्यनेन—नगरा-

**भावबोधिनी**

ग्राम ( मनुष्यों का निवासस्थान आदि विशेषताओं वाला ) होने से ही नगरों का भी ग्रहण सिद्ध रहने पर भेद से ( अलग-अलग ) दोनों का उपादान ( उल्लेख ) उनके सम्बन्धभेद का ज्ञान कराने के लिए है। जिनमें दिशावाचक पूर्वपद है ऐसे समुदाय—पूर्वेषुकामशमी आदि गाँव नामवाले ( कहे जाते ) हैं। [ इनमें 'पूर्व' यह दिशावाचक पूर्वपद है अतः यह समुदाय = समस्त शब्द गाँव का वाचक है। ] परन्तु पाटलिपुत्र आदि अकेला उत्तरपद ही नगर अर्थ कहता है। [ इसमें दिग्वाची पूर्वपद होना आवश्यक नहीं है। यही दोनों में सम्बन्धभेद है। ] इनमें ग्रामवाची अङ्गसंज्ञक शब्दों के अवयव और दिशावाची से उत्तरपद की [ आदि अच् की वृद्धि होती है तथा ] नगरवाचकों के उत्तरपदों के अवयव ( आदि अच् ) की वृद्धि होती है—ऐसा सम्बन्ध किया जाता है। परन्तु अन्यत्र = नगरवाचकों में दिक् वाची से उत्तरवर्ती नगरवाचकों के [ आदि अच् की वृद्धि होती है ]।

**पूर्वैषुकामशमः**—इत्येवमादिषु कृतायामुत्तरपदवृद्धौ एकादेशो भवतीति ज्ञापितम् । 'नेन्द्रस्य परस्य' (७।३।२२) इति प्रतिषेधेन ॥

## ३४१२. संख्यायाः संवत्सरसंख्यस्य च ॥ १५ ॥ (१७५२)

**न्यासः**

पूर्वैषुकामशम इत्येवमादिषु पूर्वोत्तरपदयोरन्तरङ्गत्वादाद् गुणे कृते दिक्शब्दो ग्रामश्चोत्तरपदं नास्तीति वृद्धिर्न प्राप्नोति, वृद्धिर्हि तद्धिते कृते तदाश्रयेण भवन्ती बहिरङ्गा भवति । प्रागेव तद्धितोत्पत्तेर्गुणः प्राप्नुवन्नन्तरङ्गो भवति । न च वचनाद् वृद्धिर्भविष्यतीति शक्यते वक्तुम्, यत्र ह्येकादेशो नास्ति स च वचनस्यावकाशः—पूर्वकार्ष्णमृत्तिक इत्येवमादौ । न चान्तादिवद्भावोऽस्ति; उभयत आश्रये नान्तादिवदिति प्रतिषेधात् । अतोऽत्र पूर्वपदमुत्तरपदञ्चाश्रीयते ?—इति यश्चोदयेत्, तं प्रत्याह—**पूर्वैषुकामशम इत्येवमादिष्वित्यादि** । यथा 'नेन्द्रस्य परस्य' इति निर्देशेनायमर्थो ज्ञापितः, तथा 'अदस औ सुलोपश्च' इत्यत्र प्रतिपादितः । **ग्रामनगराणामिति** बहुवचनं स्वरूपविधिनिरासार्थम् ॥ १४ ॥

**संख्यायाः संवत्सरसंख्यस्य च ॥ द्विसांवत्सरिक इति** । पूर्ववत् तद्धितार्थे समासः । ततः प्राग्वतीयष्ठञ्[1] ।

**पदमञ्जरी**

वाचिनामुत्तरपदानामिति । न चायं सम्बन्धभेदः सकृदुपात्ते ग्रामशब्दे सम्भवति, तस्मान्नगरग्रहणं क्रियते । तत्र **दिक्पूर्वपदो हीत्यादिना** सम्बन्धभेद आश्रयणीय इत्यत्र हेतुर्दर्शितः । **तत्रेत्यादिना** तु स एव सम्बन्धभेदः । इह पूर्वैषुकामशम इति समसनक्रियानन्तरं पूर्वोत्तरपदयोर्गुणः प्राप्नुवन्नन्तरङ्गः, उत्तरपदवृद्धिस्तु पश्चादुपनततद्धितापेक्षत्वाद्बहिरङ्गा, तत्र गुणे कृते पूर्वोत्तरयोर्व्यपवर्गाभावाद्वृद्धिर्न प्राप्नोति; अन्तादिवद्भावोऽप्युभयत आश्रयणे प्रतिषिद्धः । अत्र हि दिग्वाचि पूर्वपदमुत्तरपदं च युगपदाश्रीयेते, तत्राह—**पूर्वैषुकामशम इत्येवमादिष्विति** । यथा 'नेन्द्रस्य परस्य' इति ज्ञापकम्, तथा तत्रैव वक्ष्यामः ॥ १४ ॥

**संख्यायाः संवत्सरसंख्यस्य च ॥** संवत्सरश्च संख्या च संवत्सरसंख्यम्, समाहारद्वन्द्वः । **द्विसां**-

**भावबोधिनी**

'पूर्वैषुकामशमः' आदि लक्ष्यों में उत्तरपद की वृद्धि कर लेने के बाद ही ( पुनः 'वृद्धिरेचि' से वृद्धिरूप ) एकादेश होता है—यह ज्ञापित किया गया है—'नेन्द्रस्य परस्य' ( ७।३।२२ ) इस प्रतिषेध सूत्र द्वारा ।

**विमर्श**—सामान्यरूप से गाँव और नगर का भेद जनसंख्या, क्षेत्र और सुविधाओं की उपलब्धता के आधार पर किया जाता है । परन्तु यहाँ नाम के स्वरूप से भी दोनों का भेद बतलाया गया है । जहाँ दो पदों के समूह ( समास ) में पूर्वपद दिशावाची हो वह ग्रामवाचक समझना चाहिए, जैसे—पूर्वेषुकामशमी । अकेला इषुकामशमी गाँववाचक नहीं होता है । किन्तु जो उत्तरपद अकेला भी वाचक हो तो वह शब्द नगरवाचक होता है; जैसे—पाटलिपुत्र, कान्यकुब्ज आदि । इसी भेद को समझाने के लिए ग्राम और नगर दोनों का ग्रहण है ।

एक बात यहाँ और समझ लेनी चाहिए कि 'पूर्व + इषुकामशमी + ञ' इस अवस्था में एकादेश करने के पहले ही उत्तरपद के आदि अच् की वृद्धि कर लेनी चाहिए—पूर्व + ऐषुकामशमी + ञ में पुनः वृद्धिरूप एकादेश करना चाहिए । यह ज्ञापित करने में प्रमाण है आगे का 'नेन्द्रस्य परस्य' ( ७।३।२२ ) सूत्र । यह सूत्र—'सौमेन्द्र.' आदि में पूर्व तथा उत्तरपद दोनों के आदि अच् की वृद्धि का निषेध करता है । यदि—सोम + इन्द्र + अण् में पहले गुण कर लिया जायगा तो निषेध की सम्भावना ही नहीं रहेगी क्योंकि 'इन्द्र' में दो अच् हैं, एक ( अन्त्य ) का लोप होता है और दूसरे ( आदि ) का गुणरूप एकादेश हो जाता है । तब उत्तरपद का आदि अच् नहीं मिल सकता । अतः पहले उत्तरपद के आदि अच् 'इ' की बहिरङ्ग भी वृद्धि कर लेनी चाहिए—सोम + ऐन्द्र+अ, बाद में पुनः वृद्धिरूप एकादेश करना चाहिए । इस कारण—पूर्व + ऐषुकामशमः बनाने के बाद एकादेश वृद्धि की जाती है ॥ १४ ॥

संख्यावाची से उत्तरवर्ती पद संवत्सर शब्द के तथा संख्यावाची ( उत्तरपद ) के अचों के आदि अच् के स्थान पर, ञित्, णित् तथा कित् तद्धित प्रत्यय परे रहते, वृद्धि होती है । उदा० द्वौ संवत्सरौ अधीष्टः, भृतः, भूतः,

१. क्वचिदार्हीयष्ठगिति पाठः, स चायुक्तः । आर्हीये तु तस्याध्यर्धपूर्वेति लुक्स्यात् ।

संख्याया उत्तरपदस्य संवत्सरशब्दस्य संख्यायाश्चाचामादेरचः स्थाने वृद्धिर्भवति तद्धिते ञिति, णिति, किति च परतः। द्वौ संवत्सरावधीष्टो भृतो भूतो भावी वा द्विसांवत्सरिकः।

संख्यायाः—द्वे षष्टी अधीष्टो भृतो भूतो भावी वा द्विषाष्टिकः। द्विसाप्ततिकः। द्विषष्ट्यादिशब्दो वर्षेषु संख्येयेषु वर्त्तमानः कालाधिकारविहितं प्रत्ययमुत्पादयति।

'परिमाणान्तस्य' (७।३।१७) इत्येव सिद्धे संवत्सरग्रहणं परिणामग्रहणे कालपरिमाणस्याग्रहणार्थम्।

**न्यासः**

**द्विषाष्टिकः, द्विसाप्ततिक इति।** ननु च 'तमधीष्टो भृतो भूतो भावी' इत्यत्र कालादिति वर्त्तते, न द्विषष्ट्यादिः कालशब्दः, किं तर्हि? संख्याशब्दः, तत्कथं कालाधिकारविहितं प्रत्ययमुत्पादयति? इत्याह—**द्विषष्ट्यादिशब्द इत्यादि।** कालवाचिशब्दस्तत्र कालग्रहणेन गृह्यते, द्विषष्ट्यादिशब्दो हि यदा वर्षेषु संख्येयेषु वर्तते, तदा कालवृत्तित्वात् कालशब्दो भवति। ततः कालाधिकारीयं प्रत्ययमुत्पादयति।

अथ संवत्सरग्रहणं किमर्थम्, यावता 'परिमाणान्तस्यासंज्ञाशाणयोः' इत्यत्र परिमाणशब्देन परिच्छेद-हेतुमात्रं गृह्यते, न तु प्रस्थादिवदारोहपरिणाहपरिच्छेदहेतुः; अन्यथा हि शाणप्रतिषेधोऽनर्थकः स्यात्, न हि शाणः परिमाणमारोहपरिणाहपरिच्छेदहेतुः, अतः कालोऽपि परिच्छेदहेतुर्भवति, ततश्च सोऽपि परिमाणमिति संवत्सरशब्दस्य 'परिमाणस्यासंज्ञाशाणयोः' इत्येव सिद्धम्? इति चोद्यनिरासायाह—**संवत्सरग्रहणमित्यादि।** परिमाणग्रहणेन कालपरिमाणस्य ग्रहणं मा भूदित्येवमर्थं संवत्सरग्रहणम्। संवत्सरग्रहणेनासावर्थो ज्ञाप्यते—परिमाणग्रहणे कालपरिमाणग्रहणं न भवतीति। ततश्च यत्र परिमाणग्रहणं तत्र कालपरिमाणं न गृह्यते। **तेनेत्यादिना** परिमाणग्रहणे कालपरिमाणस्याग्रहणे सति यदिष्टं सिध्यति तद्दर्शयति। **उत्तरपदवृद्धिर्न भवतीति।**

**पदमञ्जरी**

**वत्सरिक इति।** 'प्राग्वतेष्ठञ्', तस्य 'अध्यर्धपूर्व' इति लुग्न भवति, अनार्हीयत्वात्।

**द्विषाष्टिक इति।** ननु 'तमधीष्टो भृतः' इत्यत्र कालादिति वर्त्तते, तत्कथं द्विषष्ट्यादिशब्देभ्यः प्रत्ययः? इत्यत आह—**द्विषष्ट्यादिशब्द इति।** कालवृत्तिः शब्दस्तत्र गृह्यते, न मासादय एवेति भावः।

ननु च 'परिमाणान्तस्यासंज्ञाशाणयोः' इत्यत्र परिच्छेदहेतुत्वमात्रं गृह्यते, न त्वारोहतः परिणाहतश्च येन मीयते तदेव प्रस्थादि; अन्यथा शाणप्रतिषेधोऽनर्थकः स्यात्; कालश्चापि परिच्छेदहेतुर्भवत्येव, ततश्च संवत्सरग्रहणमनर्थकम्, परिमाणान्तस्येत्येव सिद्धत्वात्? इत्यत आह—**संवत्सरग्रहणमिति। द्वैसमिक इति।** अधीष्टादिषु 'समायाः खः', 'द्विगोर्वा' इति पक्षे ठञ्।

**भावबोधिनी**

भावी वा—इस विग्रह में—द्विसांवत्सरिकः। [ द्वि—यह संख्यावाची है, संवत्सर उत्तरपद है। तद्धितार्थ में समास करते हुए 'तमधीष्टो भृतो भूतो भावी वा' ( ५।१।७९ ) सूत्र से ठञ् = इक प्रत्यय होता है। आदि अच् की वृद्धि न होकर उत्तरपद के आदि अच् की वृद्धि होती है। ]

संख्यावाची उत्तरपद के उदा० द्वे षष्टी अधीष्टो, भृतो भूतो वा—इन अर्थों में—द्विषाष्टिकः। द्विसाप्तिकः [ द्वे सप्तती अधीष्टो भृतो भूतो भावी वा—इन अर्थों में ठञ्=इक, उत्तरपद के आदि अच् की वृद्धि होती है। षष्टि = साठ, सप्तति = सत्तर ये शब्द कालवाची नहीं है तब कालार्थक प्रत्यय कैसे होंगे? ] द्विषष्टी आदि शब्द (संख्या अर्थ में न होकर) संख्येय = वर्ष अर्थ में रहता हुआ 'काल' इस अधिकार में विहित प्रत्यय उत्पन्न कराता है। [ द्वे षष्टी = दो साठ = एक सौ बीस वर्ष तक जो अधीष्ट = सत्कारपूर्वक कार्य में लगाया गया, भृत = पाला गया, हुआ, होने वाला—वह 'द्विषाष्टिकः' कहा जाता है। यहाँ वर्ष अर्थ कुछ कम व्यावहारिक लगता है। क्योंकि इतने लम्बे समय की संगति कठिन है। अतः प्रसङ्गानुसार 'दिन' आदि भी समझे जाने चाहिए। ]

[ आगे कहे जाने वाले ] 'परिमाणान्तस्य' (७।३।१७) इसी सूत्र से सिद्ध रहने पर [ क्योंकि वहाँ परिमाण का अर्थ परिच्छेदकमात्र है ] इस सूत्र में 'संवत्सर का ग्रहण—परिमाण के ग्रहण में कालपरिमाण का ग्रहण नहीं

तेन द्वैसमिकः, त्रैसमिकः—इत्युत्तरपदवृद्धिर्न भवति। द्विवर्षा त्रिवर्षा माणविकेति 'अपरिमाणबिस्ताचित' (४।१।२२) इति पर्यु दासो न भवति॥

**३४१३. वर्षस्याभविष्यति॥ १६॥ (१७५४)**

संख्याया उत्तरस्य वर्षशब्दस्याचामादेरचो वृद्धिर्भवति तद्धिते ञिति, णिति, किति च परतः, स चेत्तद्धितो भविष्यत्यर्थे न भवति। द्वे वर्षे अधीष्टो भृतो भूतो वा द्विवार्षिकः। त्रिवार्षिकः।

अभविष्यतीति किम्? यस्य त्रैवर्षिकं धान्यं निहितं भृत्यवृत्तये, अधिकं वापि विद्येत, स सोमं पातुमर्हति। त्रीणि वर्षाणि भावीति त्रैवर्षिकम्।

**न्यासः**

'परिमाणान्तरस्य' इत्यादिना। **द्विवर्षेति।** द्वे वर्षे भृतो भूतो भावी वा पूर्ववट् ठक्, तस्य 'वर्षाल्लुक्' इत्यनुवर्तमाने 'चित्तवति' इति लुक्। **पर्युदासो न भवतीति।** ङीप्प्रतिषेधे कर्त्तव्ये। तेन प्रतिषेधः प्रवर्त्तत एवेति 'द्विगोः' इति ङीब्न भवति॥ १५॥

**वर्षस्याभविष्यति॥ द्वे वर्षे अधोष्टो भृतो वा कर्म करिष्यतीति द्विवार्षिको मनुष्य इति।** अत्राधीष्टभृतयोस्तद्धित उत्पन्ने भविष्यत्ता प्रतीयते, तस्मात् तयोरपि प्रतिषेधेन भवितव्यमिति कस्यचिद्

**पदमञ्जरी**

न केवलं वृद्धिविषयमेव ज्ञापकम्, किं तर्हि? सार्वत्रिकमित्याह—**द्विवर्षा माणविकेति।** द्वे वर्षे भृता इति पूर्ववट्ठञ्, तस्य 'वर्षाल्लुक्', 'चित्तवति नित्यम्' इति लुक्। **पर्युदासो न भवतीति।** प्रतिषेधस्य। तेन प्रतिषेध एव भवति।

अथ संख्याग्रहणं किमर्थम्, यावता संख्ययापि परिच्छिद्यते, तत्र 'परिमाणान्तस्य' इत्येव सिद्धम्? केचिदाहुः—संख्याग्रहणमपि ज्ञापकार्थमेव, परिमाणग्रहणेन संख्यापि न गृह्यत इति। तथा च 'अपरिमाण-बिस्ताचित' इत्यत्र **वृत्तावुक्तम्**—'कालः संख्या च परिमाणं न भवति। द्विवर्षा, त्रिवर्षा, द्विशता, त्रिशता' इति। अपर आह—साक्षाच्छिष्टेन निमित्तभावेनानुमितं कार्यित्वं मा बाधीति परिमाणात्पृथगिह संख्याग्रहणं कृतमिति॥१५॥

**वर्षस्याभविष्यति॥ यस्येत्यादि।** यस्य यियक्षोर्यागवर्षादारभ्य त्रीणि वर्षाणि धान्यं भावि=तावन्तं

**भावबोधिनी**

होता है—इसके लिए है। इस कारण—'द्वैसमिकः त्रैसमिकः' आदि में उत्तरपद के आदि अच् की वृद्धि नहीं होती है। द्विवर्षा, त्रिवर्षा माणविका—[ द्वे वर्षे, त्रीणि वर्षाणि—भृता आदि अर्थों में ठञ् प्रत्यय, 'वर्षाल्लुक्' तथा 'चित्त-वति नित्यम्' से लुक् हो जाता है। इसमें ] 'अपरिमाणबिस्ताचित' (४।१।२२) इस सूत्र से ( निषेध का ) पर्युदास नहीं होता है। [ भाव यह है काल को सामान्य परिमाण नहीं माना जाता है। अतः 'वर्ष' आदि परिमाणवाचक नहीं होते हैं। इसीलिए 'द्विवर्षा' शब्द में 'अपरिमाणबिस्ताचित (४।१।२२) से ङीप् का निषेध होता ही है, 'अपरिमाण' ही माना जाता है ]॥ १५॥

संख्यावाचक शब्द से उत्तरवर्त्ती 'वर्ष' शब्द के अचों के आदि अच् की वृद्धि ञित्, णित्, कित् तद्धित प्रत्यय के परे होती है यदि वह तद्धित प्रत्यय भविष्यत्काल अर्थ में न हो। उदा० द्वे वर्षे अधीष्टः, भृतः, भूतः—इन अर्थों में—द्विवार्षिकः। [ त्रीणि वर्षाणि अधीष्टः भृतः, भूतः—इन अर्थों में ] त्रिवार्षिकः।

भविष्यत्काल अर्थ में न होने पर—इसका क्या फल है? 'जिसका त्रैवर्षिक धान्य भृत्यों की वृत्ति के लिए रखा गया है अथवा और अधिक रहे, वह व्यक्ति सोमरस पी सकता है। तीन वर्षों तक रहने वाला इस अर्थ में—त्रैवर्षिकम् ही होता है। [ यहाँ भविष्यत्काल होने से यह सूत्र नहीं लगता। सामान्य रूप से आदि अच् की ही वृद्धि होती है ]।

अधीष्टभृतयोः 'अभविष्यति' इति प्रतिषेधो न भवति। गम्यते हि तत्र भविष्यत्ता, न तु तद्धितार्थः। द्वे वर्षे अधीष्टो भृतो वा कर्म करिष्यतीति द्विवार्षिको मनुष्यः ॥

## ३४१४. परिमाणान्तस्यासंज्ञाशाणयोः ॥ १७ ॥ (१६८३)

परिमाणान्तस्याङ्गस्य संख्यायाः परं यदुत्तरपदं तस्याचामादेरचो वृद्धिर्भवति तद्धिते ञिति, णिति, किति च परतः; संज्ञायां विषये शाणे चोत्तरपदे न भवति। द्वौ कुडवौ प्रयोजनमस्य द्विकौडविकः। द्वाभ्यां सुवर्णाभ्यां क्रीतं द्विसौवर्णिकम्। 'विभाषा कार्षापणसहस्राभ्याम्' (५।१।२९) इत्यत्र 'सुवर्णशतमानयोरुपसंख्यानम्' (वा०) इति लुको विकल्पः। द्वाभ्यां निष्काभ्यां क्रीतम् 'द्वित्रिपूर्वान्निष्कात्' (५।१।३०)—द्विनैष्किकम्।

### न्यासः

भ्रान्तिः स्यात्, अतस्तां निराकर्तुमाह—**अधीष्टभृतयोरित्यादि**। किं पुनः कारणं न भवति? इत्याह—**गम्यते हीत्यादि**। तत्र यदि शब्दान्तरम् 'द्वे वर्षे अधीष्टो भृतो वा कर्म करिष्यति' इति प्रयुज्यते, ततो भविष्यत्ता गम्यते, नान्यथा। तस्मान्नासौ तद्धितार्थं इत्यधीष्टभृतयोरभविष्यतीति प्रतिषेधो न भवति। ननु च मनुष्येऽभिधेये 'चित्तवति नित्यम्' इति ठञो लुका भवितव्यम्, तत् कथं द्विवार्षिको मनुष्य इति सिध्यति? नैष दोषः; न ह्यसावविशेषेण लुक्, किं तर्हि? विशिष्ट एव विषये। कथम्? तत्र नित्यग्रहणं कर्तव्यम्, पूर्वेणैव सिद्ध आरम्भसामर्थ्यादेव नित्यं लुग्भविष्यतीति, तत् कृतं विशिष्टे विषये भूते यथा स्यात्, अधीष्टादौ मा भूदित्येवमर्थम्। तेनाधीष्टादौ 'वर्षाल्लुक्' इति विभाषैव लुग्भवति ॥ १६॥

**परिमाणान्तस्यासंज्ञाशाणयोः** ॥ संज्ञायाः परत्वं न सम्भवतीत्यतः संज्ञाशाणयोरिति विषयसप्तमीं दर्शयन्नाह—**संज्ञायां विषय इत्यादि**। **शाणे चोत्तरपद इति**। विषय इत्यपेक्षते। यद्युत्तरपदस्य शाणस्य

### पदमञ्जरी

कालं जीवनाय पर्याप्तम्, स सोमयागेऽधिकारी, न न्यून इत्यर्थः। **गम्यते हीति**। वाक्यार्थस्तत्र भविष्यत्ता, न पदार्थं इत्यर्थः। **द्विवार्षिको मनुष्य इति**। 'वर्षाल्लुक्', 'चित्तवति नित्यम्' इति नित्यं लुग्न भवति; भूतार्थ एव हि स इष्यते, अन्यत्र चित्तवत्यपि विकल्प एव ॥१६॥

**परिमाणान्तस्यासंज्ञाशाणयोः** ॥ **द्विकौडविक इति**। कुडेरवप्रत्यये कुडवः=प्रस्थचतुर्थभाग इत्युणादिषु व्युत्पत्तिः। कुडवमित्येतदव्युत्पन्नं शब्दान्तरं द्रष्टव्यम्। ततः 'प्राग्वतेष्ठञ्', अनार्हीयत्वाल्लुगभावः।

### भावबोधिनी

'अधीष्ट और भृत' इन अर्थों में 'अभविष्यति' यह प्रतिषेध नहीं लागू होता है। इनमें भविष्यत्ता व्यक्त होती है, ऊपर से समझी जाती है, न कि वह तद्धित प्रत्यय की अर्थ होती है। जैसे—द्वे वर्षे अधीष्टः भृतः, भृतः वा—द्विवार्षिकः मनुष्यः कर्म करिष्यति। [ यहाँ दो वर्षों तक पाला गया मनुष्य काम करेगा—यहाँ भविष्यत्काल तद्धित प्रत्यय से नहीं अपितु अन्य रूप से व्यक्त हो जाता है। अतः प्रस्तुत सूत्र लगता ही है। उत्तरपद के आदि अच् की वृद्धि होती है ] ॥ १६ ॥

परिमाणवाचक जिसके अन्त में है ऐसे अङ्गसंज्ञक का संख्यावाचक से जो उत्तरपद उसके अचों के मध्य में आदि अच् की वृद्धि ञित्, णित् और कित् तद्धित प्रत्यय परे रहते, संज्ञा के विषय में तथा शाण उत्तरपद में नहीं होती है। उदा० द्वौ कुढवौ प्रयोजनम् अस्य—इसमें द्विकौवलिकः। इसी प्रकार—द्वाभ्यां सुवर्णाभ्यां क्रीतम्—इसमें द्विसौवर्णिकम् होता है। [ कुडवः = प्रस्थ = सेर का चौथा भाग। उसमें खरीदी गई वस्तु अर्थ में 'प्राग्वतेष्ठञ्' सूत्र से ठञ् = इक, उत्तरपद के आदि अच् की वृद्धि होती है। द्विसौवर्णिकम्०—इसमें 'विभाषा कार्षापणसहस्राभ्याम्' सूत्र पर 'सुवर्णशतमानयोरुपसंख्यानम्' वचन से लुक् का विकल्प होता है। अतः लुक् के अभावपक्ष में प्रस्तुत उदा० है। ] द्वाभ्यां निष्काभ्यां क्रीतम्—इस अर्थ में ठञ् का 'द्वित्रिपूर्वान्निष्कात्' ( ५।१।७ ) [ सूत्र से विकल्प से लोप होता है। लोपाभावपक्ष में—] द्विनैष्किकम्। [ लोपपक्ष में द्विसुवर्णम् और द्विनिष्कम् रूप होते हैं। ]

असंज्ञाशाणयोरिति किम् ? पाञ्चलोहितिकम् । पाञ्चकलापिकम् । पञ्च लोहित्यः परिमाणमस्य, पञ्च कलापानि परिमाणमस्येति विगृह्य 'तदस्य परिमाणम्' ( ५।१।५७ ) इति योगविभागात्प्रत्ययः, तद्धितान्तश्चायं समुदायः संज्ञा। द्वाभ्यां शाणाभ्यां क्रीतं द्वैशाणम् । त्रैशाणम् । 'शाणाद्वा' ( ५।१।३५ ) 'द्वित्रिपूर्वादण्च' ( ५।१।३६ ) इत्यण्प्रत्ययः ।

'असंज्ञाशाणकुलिजानाम्' इति केचित्पठन्ति । द्वे कुलिजे प्रयोजनमस्य द्वैकुलिजिकः ॥

**३४१५. जे प्रोष्ठपदानाम् ॥ १८ ॥ ( १४०९ )**

'जे' इति जातार्थो निर्दिश्यते । तत्र यस्तद्धितो विहितस्तस्मिन् ञिति, णिति, किति च परतः

**न्यासः**

परत्वमुपपद्यते, तथापि दुर्घटमेकस्याः सप्तम्या विषयसप्तमीत्वम्, परसप्तमीत्वञ्चेति । तेन शाणशब्दमप्युत्तरपदं प्रति विषयसप्तम्येषा युक्ता। **द्विकौडविकमिति ।** 'प्राग्वतेष्ठञ्' । अनार्हीयत्वाच्च प्रत्ययस्य 'अध्यर्धपूर्वद्विगोः' इति लुग्न भवति। **द्विसौवर्णिक इति ।** स एव प्रत्ययः । कथं पुनरत्र वृद्धिः, यावता परिमाणान्तस्येत्युच्यते, सुवर्णश्च गुरुत्वमानादुन्मानम्, न परिमाणमिति ? नैष दोषः; आचार्यप्रवृत्तिर्ज्ञापयति—गुरुत्वपरिमाणमपीह परिच्छेदहेतुत्वात् परिमाणं गृह्यत इति यदयम् 'असंज्ञाशाणयोः' इसि शाणप्रतिषेधमारभते। अथ 'अध्यर्धपूर्व' इति लुक्कस्मान्न भवति ? इत्याह—**विभाषेत्यादि । द्विनैष्किकमिति ।** 'असमासे निष्कादिभ्यः' इति ठक् ।

**पाञ्चलोहितिक इति ।** तस्मिन्नेव ठकि कृते 'भस्याढे तद्धिते' इति पुंवद्भावेन 'वर्णादनुदात्तात् तोपधात् तो नः' इत्यनेन विहितयोर्ङीन्नकारयोर्निवृत्तिः ।

**द्वैकुलिजिकमिति ।** प्राग्वतीयष्ठञ्च ॥ १७ ॥

**जे प्रोष्ठपदानाम् ॥** 'संख्यायाः' इति निवृत्तम् । **ज इति जातार्थो निर्दिश्यत इति ।** जातशब्दैक-

**पदमञ्जरी**

**द्वाभ्यां सुवर्णाभ्यामिति ।** शाणप्रतिषेधात्परिच्छित्तिसाधनमिह परिमाणम्; तेनोन्मानस्यापि भवति–लोहिनी = गुञ्जा, ताभिः पञ्चभिः परिमितमाकारविशेषयुक्तं हिरण्यं पाञ्चलोहितिकम् । **कलापः**—कश्चिन्मानविशेषः ।

**योगविभागादिति ।** पूर्वासु वृत्तिषु 'तदस्य परिमाणं संख्यायाः संज्ञा' इत्येकयोगेन पठितत्वाद्, भाष्ये तत्र योगविभागस्योक्तत्वादेवमुक्तम् । **तद्धितान्तश्चायमिति ।** यथा तु 'अध्यर्धपूर्वद्विगोः' इत्यत्र वार्त्तिकं तथा तद्धितलुकि सति संज्ञेति तत्रैवावोचाम। **द्वैषाण इति ।** यद्यत्रोत्तरपदवृद्धिः स्यात्, पूर्वपदस्य न स्यात् । कुलिजम् = धान्यमानम् । अन्तग्रहणं चिन्त्यप्रयोजनम् ॥ १७ ॥

**जे प्रोष्ठपदानाम् ॥ ज इति जातार्थो निर्दिश्यत इति ।** उपसरज इत्यादौ दृष्टस्य पदैकदेशस्य प्रयोगः, भीमसेनो भीम इतिवत् ।

**भावबोधिनी**

संज्ञा विषय में और 'शाण' शब्द परे नहीं होता है—इसका क्या फल है ? पाञ्चलोहितिकम् । पाञ्चकलापिकम् । पाँच लोहिती = गुंजा परिमाण है इसका, पाँच कलाप = एक नापविशेष परिमाण है इसका—ऐसा विग्रह करके 'तदस्य परिमाणम्' इस सूत्र से योगविभाग से समास होता है। तद्धितप्रत्ययान्त यह शब्दरूप संज्ञा बनता है। [ इसलिए आदिवृद्धि ही होती है। ] द्वाभ्यां शाणाभ्यां क्रीतम्–इस अर्थ में–द्वैषाणम्, त्रैषाणम् । इनमें 'शाणाद् वा' 'द्वित्रिपूर्वादण् च' सूत्र से अण् होता है। [ प्रस्तुत सूत्र न लग कर आदिवृद्धि ही होती है। ]

कुछ लोग यहाँ पर—'असंज्ञा शाणकुलिजानाम्' ( संज्ञाविषय में, शाण और कुलिज शब्द परे नहीं होता है )—ऐसा पढ़ते हैं। उदा० दो कुलिज हैं प्रयोजन इसके—इस अर्थ में—द्वैकुलिजिकः । [ कुलिज यह धान्य के एक परिमाण का नाम है। ] ॥ १७ ॥

'जे' इससे 'जात' ( उत्पन्न हुआ ) अर्थ का निर्देश है। 'जात' अर्थ में जिस तद्धित प्रत्यय का विधान है, उस ञित्, णित् और कित् के परे रहते प्रोष्ठपद ( अङ्ग ) के उत्तरवर्ती अचों के आदि अच् की वृद्धि होती है।

प्रोष्ठपदानामुत्तरस्याचामादेरचो वृद्धिर्भवति। प्रोष्ठपदा नाम नक्षत्रम्, ताभिर्युक्तः काल (४।२।३) इत्यण्। तस्य 'लुबविशेषे' (४।२।४) इति लुप्। प्रोष्ठपदासु जातः—'ऋतुनक्षत्रेभ्योऽण्' (४।३।१६) इत्यण्—प्रोष्ठपादो माणवकः।

जे इति किम् ? यदा प्रोष्ठपदो मेघो धरणीमभिवर्षति—प्रोष्ठपदासु भवः प्रौष्ठपदः।

'प्रोष्ठपदानाम्' इति बहुवचननिर्देशात् पर्यायोऽपि गृह्यते—भद्रपाद इति ॥

## ३४१६. हृद्भगसिन्ध्वन्ते पूर्वपदस्य च ॥ १९ ॥ (११३३)

हृद, भग, सिन्धु—इत्येवमन्तेऽङ्गे पूर्वपदस्योत्तरपदस्याचामादेरचो वृद्धिर्भवति तद्धिते ञिति, णिति, किति च परतः। सुहृदयस्येदं सौहार्दम्। सुहृदयस्य भावः सौहार्द्यम्। सुभगस्य भावः सौभाग्यम्। दौर्भाग्यम्। सुभगाया अपत्यं सौभागिनेयः। दौर्भागिनेयः।

### न्यासः

देशस्य ज इति, तस्यायं प्रयोगः। भवति हि पदैकदेशस्यापि प्रयोगः, यथा—भीमो भीमसेनः, सत्यभामा भामेति। तस्माज्जातशब्दस्यैकदेशस्य प्रयोगेण जातार्थो निर्दिश्यत इति विज्ञेयम्।

प्रोष्ठपदास्विति। 'लुपि युक्तवद् व्यक्तिवचने' इति युक्तवद्भावः। भद्रपाद इति। भद्रपदेन युक्तः काल इति अणादिकार्यं पूर्ववद्विधेयम् ॥ १८ ॥

हृद्भगसिन्ध्वन्ते पूर्वपदस्य च ॥ सौहार्दमिति। 'तस्येदम्' इत्यण्। यदा सुहृदयशब्दादण्, तदा 'हृदयस्य हृल्लेखयदण्लासेषु' इति हृद्भावः। सौहार्द्यमिति। 'गुणवचनब्राह्मणादिभ्यः' इति ष्यञ्, 'वा शोकष्यञ्रोगेषु' इति हृद्भावः। सौभागिनेयः, दौर्भागिनेय इति। 'कल्याण्यादीनामिनङ् च' इति ढकि कृत इनङादेशः।

### पदमञ्जरी

बहुवचननिर्देशादिति। यद्यपि ज्योतिषां बहुत्वाद्बहुवचनान्तप्रोष्ठपदाशब्दः, तथापि तस्यैव शब्दरूपापेक्षायामेकवचनं न्याय्यं मन्यते ॥ १८ ॥

हृद्भगसिन्ध्वन्ते पूर्वपदस्य च ॥ सुहृद् इति। 'सुहृद्दुर्हृदौ मित्रामित्रयोः' इति निपातितः

### भावबोधिनी

प्रोष्ठपद नामक नक्षत्र है इनसे युक्त काल—इस अर्थ में अण् प्रत्यय होता है। इस अण् का 'लुबविशेषे' (४।२।४) सूत्र से लुप् होता है। पुनः प्रोष्ठपदासु जातः—इस अर्थ में 'सन्धिवेलाद्यृतुनक्षत्रेभ्यः' (४।३।१६) सूत्र से अण् होता है—प्रोष्ठपादः माणवक। [ उत्तरपद 'पद' के आदि अच् की वृद्धि होती है। ]

ज = जात अर्थवाले प्रत्यय के परे रहते—इसका क्या फल है ? जब प्रोष्ठपद नामक मेघ धरिणी पर खूब बरसता है—प्रोष्ठपदासु भवः—इस अर्थ में प्रौष्ठपदः। [ प्रोष्ठपद + अण्, जात अर्थ न होने से उत्तरपद के आदि अच् की वृद्धि न होकर आदि अच् की ही वृद्धि होती है। यहाँ प्रोष्ठपदा में भव = होनेवाला मेघ अर्थ है। ]

प्रोष्ठपदानाम्—यह बहुवचन का निर्देश होने से इसका पर्याय भी लिया जाता है—भद्रपादः। ( भद्रपदासु जातः—अर्थ में अण् होने पर उत्तरपद के आदि अच् की वृद्धि होती है। ] ॥ १८ ॥

हृद, भग, सिन्धु—ये जिसके अन्त में हों ऐसे अङ्ग में पूर्वपद के और उत्तरपद के अचों में आदि अच् की वृद्धि, ञित्, णित् और कित् तद्धित प्रत्यय परे रहते, होती है। उदा० सुहृदयस्य इदम् [ इस अर्थ में अण् प्रत्यय, 'हृदयस्य हृल्लेखयण्लासेषु' (६।३।४८) सूत्र से हृदय का हृद् आदेश—सु + हृद् + अण् दोनों पदों के आदि अच् की वृद्धि—सौहार्दम् ] सुहृदयस्य भावः—इस अर्थ में सौहार्द्यम्। यहाँ 'गुणवचनब्राह्मणादिभ्यः' सूत्र से ष्यञ् = य प्रत्यय करने पर 'वा शोकष्यञ्रोगेषु' (६।३।४९) सूत्र से हृदय का हृद् आदेश—सु + हृद् + य, दोनों पदों के आदि अचों की वृद्धि—सौहार्द्यम्। ] सुभगस्य भावः—इस अर्थ में—सौभाग्यम्। [ दुर्भगस्य भावः—इस अर्थ में ]

कल्याण्यादिषु ( ५।१।१२६ ) 'सुभगदुर्भग' इति पठ्यते। 'सुभग मन्त्रे' इत्युद्गात्रादिषु (५।१।१२९) पठ्यते, तत्रोत्तरपदवृद्धिर्नेष्यते—'महते सौभगाय'; छन्दसि सर्वविधीनां विकल्पितत्वात् (पु० प० ३५)।

सक्तुप्रधानाः सिन्धवः सक्तुसिन्धवः, सक्तुसिन्धुषु भवः साक्तुसैन्धवः। पानसैन्धवः। सिन्धुशब्दः कच्छादिषु (४।२।१३३) पठ्यते, तेन तदन्तविधिरिष्यते इत्यण्प्रत्ययः॥

## ३४१७. अनुशतिकादीनां च ॥ २० ॥ (१४३८)

'अनुशतिक'—इत्येवमादीनां चाङ्गानां पूर्वपदस्य चोत्तरपदस्य चाचामादेरचः स्थाने वृद्धिर्भवति तद्धिते ञिति, णिति, किति च परतः। अनुशतिकस्येदम् आनुशातिकम्। अनुहोडेन चरति आनुहौडिकः।

**न्यासः**

**तत्रोत्तरपदवृद्धिर्नेष्यत इति।** सुभगस्य भावः। 'प्राणभृज्जातिवयोवचनोद्गात्रादिभ्योऽञ्' इत्यञि कृते, महते सौभगाय वर्द्धन्तामित्येवं भवति। कथं पुनरिष्यमाणाप्युत्तरपदवृद्धिर्न प्राप्नोति? इत्याह—**छन्दसीत्यादि।**

**सक्तुसिन्धव इति।** शाकपार्थिवादित्वान्मध्यमपदलोपी समासः। **साक्तुसैन्धव इति।** ओर्देशे ठञि प्राप्ते 'कच्छादिभ्यश्च' इत्यण्। ननु च केवलस्तत्र सिन्धुशब्दः पठ्यते, कथं तदन्ताद्भवति? इत्याह—**तेनेत्यादि।** कथं पुनस्तेन सिन्धुशब्देन तदन्तविधिर्लभ्यते, यावता 'ग्रहणवता प्रतिपदिकेन तदन्तविधिर्नास्ति' इति तदन्तविधिः प्रतिषिध्यते? नैष दोषः; चकारस्तत्रानुक्तसमुच्चयार्थः, तेन सिन्धुशब्दात् तदन्तादपि भवति ॥१९॥

**अनुशतिकादीनाञ्च ॥ अनुशतिक इति।** शतेन क्रीतः—'शताच्च ठन्यतावशते' इति ठन्—शतिकः, अनुगतः शतिकेनानुशतिकः, ततः 'तस्येदम्' इत्यण्। **आनुशातिकम्, आनुहौडिकमिति।** 'चरति' इति ठक्।

**पदमञ्जरी**

सुहृच्छब्दः। यदा तु **सुहृदयस्येदमिति** पाठः, तदा 'हृदयस्य हृल्लेख' इत्यादिना हृद्भावः। **सौहार्दमिति।** 'वा शोकष्यञ्रोगेषु' इति हृद्भावः। सिन्धवो जनपदः, नदीवचनस्यापि ग्रहणम्, तथा समुद्रवचनस्यापि ॥ १९॥

**अनुशतिकादीनां च ॥ आनुशातिकमिति।** शतेन क्रीतं शतिकम्, 'शताच्च ठन्यतावशते' इति

**भावबोधिनी**

दौर्भाग्यम्। [ सुभग + ष्यञ्, दुर्भग + ष्यञ्, उभयपद के आदि अच् की वृद्धि, भसंज्ञा, अलोप ] सुभगाया अपत्यम्—सौभागिनेयः, दुर्भगाया अपत्यम्–दौर्भागिनेयः। [ सुभगा + ढक् = एय, 'कल्याण्यादीनाम् इनङ् च' से इनङ् आदेश—सु + भगिन + एय, उभयपद के आदि अचों की वृद्धि। दुर्+भगा + ढक्=एय, इनङ्, उभयपद की वृद्धि। ]

'कल्याण्यादि' गण में 'सुभग, दुर्भग' शब्द पढ़े जाते हैं। 'सुभग मन्त्रे' (५।१।१२९) ऐसा उद्गात्रादि में पढ़ा जाता है; इसमें उत्तरपद की वृद्धि इष्ट नहीं है—महते सौभगाय, [यहाँ उत्तरपद 'भग' की आदिवृद्धि नहीं होती है। ] क्योंकि वेद में सभी विधियाँ विकल्प से मानी जाती है।

सक्तुप्रधानाः सिन्धवः—सक्तुसिन्धवः [ यहाँ 'शाकपार्थिवादीनां सिद्धये उत्तरपद-लोपस्योपसंख्यानम्' वचन से 'प्रधान' शब्द का लोप हो जाता है- ] 'सक्तुसिन्धुषु भवः—इस अर्थ में [ अण् करने पर उभयपद की आदि-वृद्धि करने पर- ] 'सात्तुसिन्धवः। [ यहाँ ओर्देशे ठञ' से प्राप्त ठञ् का अपवाद अण् प्रत्यय 'कच्छादिभ्यश्च' सूत्र से होता है ] पानसैन्धवः। [ पानप्रधानाः सिन्धवः—आदि पूर्ववत् करके अण् में उभयपद की आदिवृद्धि होती है। ] 'सिन्धु' शब्द कच्छादिगण में पठित है इसलिये उससे तदन्तविधि इष्ट है अतः अण् प्रत्यय होता है। [ कच्छादिभ्यश्च' सूत्र में 'च' का ग्रहण अनुक्त का समुच्चय करने के लिए है। अतः सिन्धु शब्द और सिन्धुशब्दान्त दोनों से अण् होती है ] ॥ १९ ॥

'अनुशतिक' आदि जो अङ्गसंज्ञक शब्द हैं उनके पूर्वपद तथा उत्तरपद के अचों में आदि अच् के स्थान पर ञित्, णित् तथा कित् तद्धित प्रत्यय परे रहते होती है। उदा० अनुशतिकस्य इदम्–[ इस अर्थ में 'तस्येदम्' से अण्

**अनुसंवरणे दीयते आनुसांवरणम् । अनुसंवत्सरे दीयते आनुसांवत्सरिकः । अङ्गारवेणुर्नाम कश्चित्, तस्यापत्यम् आङ्गारवैणवः ।**

**असिहत्य—तत्र भवं आसिहात्यम् । 'अस्यहत्य' इति केचित् पठन्ति, ततोऽपि विमुक्तादित्वादण् ( ५।२।६१ ) । अस्यहत्यशब्दोऽस्मिन्नध्यायेऽस्ति आस्यहात्यः । 'अस्यहेतिः' इत्येवमपरे पठन्ति, अस्यहेतिः प्रयोजनमस्य आस्यहैतिकः । अत एव वचनादस्य समुदायस्य प्रातिपदिकत्वं विभक्तेश्चालुक् ।**

**वध्योग इति—बिदादिरयम् ( ४।१।१०४), तस्यापत्यं वाध्यौगः । पुष्करसत्, अनुहरत्—एतौ बाह्वादिषु ( ४।१।९६ ) पठ्येते । पौष्करसादिः, आनुहारतिः । कुरुकत—गर्गादिः (४।१।१०५), कौरुकात्यः । कुरुपञ्चाल—कुरुपञ्चालेषु भवः कौरुपाञ्चालः । 'जनपदसमुदायो जनपदग्रहणेन न गृह्यते' इति वुञ् न भवति । उदकशुद्धस्यापत्यम् औदकशौद्धिः ।**

### न्यासः

**आनुसांवत्सरिकमिति** । 'तत्र च दीयते कार्यं भववत्' इत्यतिदेशाद् 'बह्वचोऽन्तोदात्तात्' इति ठञ् । **आङ्गारवैणव इति** । 'तस्यापत्यम्' इत्यण् ।

**आसिहात्यमिति** । 'तत्र भवः' इत्यण् । **आस्यहात्यमिति** । 'विमुक्तादिभ्योऽण्' । **आस्यहैतिकमिति** पाठे 'तदस्य प्रयोजनम्' इति प्राग्वतीयष्ठञ् । ननु च प्रातिपदिकादिति वर्तते, अस्यहत्यास्यहेतिश्च पदसमुदायोऽयम्, न प्रातिपदिकम्, तत्कथमतः प्रत्ययः? सत्यपि वा प्रत्यये कथं विभक्तेरलुक्? इत्याह—**अत एवेत्यादि** ।

**वाध्यौग इति** । 'अनृष्यानन्तर्ये बिदादिभ्योऽञ्' । **पौष्करसादिरानुहारितिरिति** । 'बाह्वादिभ्यश्च' इतीञ् । **कौरुकात्यमिति** । गर्गादित्वाद् यञ् । **कौरुपाञ्चाल इति** । 'तत्र भवः' इत्यण् । ननु च जनपदशब्दात् 'जनपदतदवध्योश्च' इति वुञा भवितव्यम्! इत्यत आह—**जनपदसमुदायो जनपदग्रहणेनेत्यादि** । कुरुपञ्चालशब्दो हि जनपदसमुदायवचनः, न च जनपदसमुदायो जनपदग्रहणेन गृह्यत इति कुतो वुञ्प्रसङ्गः? **औदकशौद्धिरिति** । 'अत इञ्' ।

### पदमञ्जरी

ठन्, अनुगतः शतिकेन अनुशतिकः, ततः 'तस्येदम्' इत्यण् । **आनुहौडिक इति** । 'चरति' इति ठक् । **आनुसांवरणमिति** । 'तत्र च दीयते कार्यं भववत्' इत्यण् । **आनुसांवत्सरिकमिति** । 'बह्वचोऽन्तोदात्ताट्ठञ्' ।

**कुरुकत**-शब्दो गर्गादिः ।

### भावबोधिनी

करने पर अनु + शतिक इन दोनों के आदि अचों की वृद्धि होती है । शतेन क्रीतः—अर्थ में ठन् = इक—शतिकः । अनुगतः शतिकः—अनुशतिकः तस्य इदम्—इस अर्थ में अण् है । ] आनुहौडिकः [ होडेन चरति—इसमें ठक् = इक, आदिवृद्धि । अनुगतः हौडेन—अनुहोडः, तस्य इदम्—अर्थ में अण् करने पर उभयपद की आदिवृद्धि होती है । ] अनुसंवरणे दीयते—इस अर्थ में अनुसांवरणम् । [ यहाँ 'तत्र च दीयते कार्यं भववत्' सूत्र के अनुसार अण् प्रत्यय होने पर उभयपद की आदिवृद्धि होती है । ] अनुसंवत्सरे दीयते—इसमें आनुसांवत्सरिकः । [ यहाँ उपर्युक्त सूत्र के अर्थ में 'बह्वचोऽन्तोदात्तात्' सूत्र से ठञ् = इक होता है । उभयपद की आदिवृद्धि होती है । ] अङ्गारवेणु—इस नामवाला कोई है, उसका अपत्य—इस अर्थ में [ अण् करने पर उभयपद की आदिवृद्धि अङ्गारवैणु + अ, 'ओर्गुणः' से उकार का गुण अवादेश— ] आङ्गारवैणवः ।

असिहत्य—इससे 'तत्र भवम्' अर्थ में [ अण् प्रत्यय, उभयपद की आदिवृद्धि ]—आसिहत्यम् । कुछ विद्वान्—यहाँ 'अस्यहत्य' यह पाठ करते हैं । यहाँ [ 'विमुक्तादिभ्योऽण्' ( ५।२।६१ ) से अण् प्रत्यय ] विमुक्तादिगणीय होने से होता है—'अस्यहत्य' शब्द है इस अध्याय में इस अर्थ में—'आस्यहात्यः' बनता है । दूसरे लोग 'अस्यहेति' शब्द

**इहलोक, परलोक—तत्र भवः ऐहलौकिकः, पारलौकिकः। 'लोकोत्तरपदस्य' (वा०) इति ठञ्। सर्वलोक—तत्र विदितः सार्वलौकिकः। सर्वपुरुषस्येदं सार्वपौरुषम्। सर्वभूमेर्निमित्तं संयोग उत्पातो वा सार्वभौमः। प्रयोग—तत्र भवः प्रायौगिकः। परस्त्री—पारस्त्रैणेयः। 'कुलटाया वा' (४।१।१२७) इतीनङ्।'**

**※ राजपुरुषात् ष्यञि ※ (ग० सू० १७६)। राजपौरुष्यम्। ष्यञीति किम्? राजपुरुषस्यापत्यं राजपुरुषायणिः। 'उदीचां वृद्धादगोत्रात्' (४।१।१५७) इति फिञ्।**

**न्यासः**

**ऐहलौकिकः, पारलौकिक इति।** 'लोकोत्तरपदस्य' इति ठञ्। एतत् 'समानस्य तदादेश्च' इत्येवमादिकायां कारिकायामियमिष्टिरिति पठ्यते। **सार्वलौकिक इति।** 'लोकसर्वलोकाट् ठञ्'। **सार्वपौरुषमिति।** 'तस्येदम्' इत्यण्। **सार्वभौम इति।** 'सर्वभूमिपृथिवीभ्यामणञौ' इत्यण्, अञ्वा। **प्रायौगिक इति।** अध्यात्मादित्वाट् ठञ्। **पारस्त्रैणेय इति।** 'कुलटाया वा' इतीनङ्। तत्र 'स्त्रीभ्यो ढक्', 'कल्याण्यादीनामिनङ् च' इत्यनुवर्तते।

**पदमञ्जरी**

**सार्वलौकिकमिति।** 'लोकसर्वलोकाभ्यां ठञ्'। **सार्वभौम इति।** 'सर्वभूमिपृथिवीभ्यामणञौ'। प्रयोगाधिदेवाधिभूतेत्यध्यात्मादयः। **कुलटाया वेतीनङिति।** अपपाठोऽयम्, तत्र हि स्वरूपग्रहणम्। कल्याण्या-

**भावबोधिनी**

पढ़ते हैं, अस्यहेति प्रयोजन है इसका—इस अर्थ में [ 'तदस्य प्रयोजनम्' से ठञ् = इक प्रत्यय उभयपद की आदिवृद्धि ] आस्यहैतिकः। [ यहाँ शङ्का यह है कि प्रत्यय तो प्रातिपदिक से होता है—'अस्यहत्य' या 'अस्यहेति' यह तो पदसमुदाय है तब प्रत्यय कैसे होता है? समाधान ] इसी कारण इस वचन से इस ( पदसमुदाय ) की प्रातिपदिकसंज्ञा होती है और षष्ठी विभक्ति का अलुक् भी होता है।

'वध्योग' शब्द विदादिगणीय है 'तस्यापत्यम्' [ अर्थ में 'अनृष्यानन्तर्ये विदादिभ्योऽञ्' से अञ् प्रत्यय, बध् + योग में उभयपद की आदिवृद्धि करने पर ]—वाध्यौगः। पुष्करसत्, अनुहरत्—ये दोनों शब्द बाह्वादिगण में पठित हैं। [ अतः 'बाह्वादिभ्यश्च' सूत्र से इञ् प्रत्यय करने पर उभयपद की आदिवृद्धि करने पर ]—पौष्करसादिः। आनुहारतिः [ बनते हैं ]। कुरुकत्—यह गर्गादिगणीय है [ 'गर्गादिभ्यो यञ्' से यञ् प्रत्यय होने पर उभयपद की आदिवृद्धि ]—कौरुकात्यः। कुरुपञ्चाल—[ 'तत्र भवः' अर्थ में अण्, उभयपद की आदिवृद्धि ]—कौरुपाञ्चालः। 'जनपदों का समुदाय जनपद के ग्रहण से गृहीत नहीं होता है' इस वचन के कारण जनपदों के समुदायवाचक—'कुरुपञ्चाल' शब्द से 'जनपदतदवध्योश्च' सूत्र से वुञ् नहीं होता है। [ अतः सामान्य अण् प्रत्यय ही 'कौरुपाञ्चालः' में होता है। ] उदकशुद्धस्य अपत्यम्—[ 'अत इञ्' से इञ् प्रत्यय, उभयपद की आदिवृद्धि— ] औदकशुद्धिः।

इहलोक, परलोक—इनसे 'तत्र भव.' अर्थ में—ऐहलौकिकः पारलौकिकः [ बनता है। ] इनमें 'लोकोत्तरपदस्य' से ठञ् = इक प्रत्यय होता है। [ उभयपद की आदिवृद्धि होती है। ] सर्वलोक से 'तत्र विदितः' ( उसमें ज्ञात है )—इस अर्थ में [ ठञ् = इक प्रत्यय, "लोकसर्वलोकाट्ठञ्" सूत्र से होने पर उभयपद के आदि अच् की वृद्धि होती है ]—सार्वलौकिकः। [ सर्वपुरुषस्य इदम्—इस अर्थ में 'तस्येदम्' से अण् होने पर उभयपद की आदि वृद्धि होती है ] सार्वपौरुषम्। सर्वभूमेर्निमित्तम् संयोगः, उत्पातो वा—इस अर्थ में [ "सर्वभूमिपृथिवीभ्यामणञौ" सूत्र से अण् या अञ् प्रत्यय करने पर उभयपद की आदिवृद्धि, भ संज्ञा इलोप होने पर ]—सार्वभौमः। 'प्रयोग' से 'तत्र भवः' इस अर्थ में [ अण् करने पर उभयपद की आदिवृद्धि ]—प्रायौगिकः। परस्त्री से—जनपदों के समुदायवाचक-'कुरुपञ्चाल' शब्द से 'कुलटाया वा' सूत्र से ढक् प्रत्यय और इनङ् [ आदेश करने पर उभयपद की आदिवृद्धि करने पर ]—पारस्त्रैणेयः।

**विमर्श**—अपत्य अर्थ में 'कल्याण्यादीनामिनङ्' इस सूत्र से ही ढक् प्रत्यय और इनङ् करना उचित है—ऐसा पदमञ्जरीकार का कथन है। उनके अनुसार 'कुलटायाः' इस सूत्र में शब्दस्वरूप का ही ग्रहण है। और

१. 'कल्याण्यादीनामिनङ्' इति पदमञ्जरीसम्मतः पाठः।

शतकुम्भसुखशयनादयः'—शतकुम्भे भवः शातकौम्भः। सौखशायनिकः। पारदारिकः'। सूत्रनडस्यापत्यं सौत्रनाडिः।

आकृतिगणश्चायमिष्यते। नेतेदमपि सिद्धं भवति—अभिगममर्हति आभिगामिकः। आधिदेवे भवमाधिदैविकम्। आधिभौतिकम्। चतस्र एव विद्याः चातुर्वैद्यम्। स्वार्थे ष्यञ्।

अनुशतिक। अनुहोड। अनुसंवरण। अनुसंवत्सर। अङ्गारवेणु। असिहत्य। वध्योग। पुष्करसत्। अनुहरत्। कुरुकत। कुरुपञ्चाल। उदकशुद्ध। इहलोक। परलोक। सर्वलोक। सर्वपुरुष। सर्वभूमि। प्रयोग। परस्त्री। ❋राजपुरुषात् ष्यञि ❋ ( ग० सू० १७६ )। सूत्रनड। अनुशतिकादिः॥

**न्यासः**

राजपौरुष्यमिति। ब्राह्मणादित्वात् ष्यञ्। सौत्रनाडिरिति। 'अत इञ्'। आभिगामिक इति। अभिगममर्हतीत्यार्हीयष्ठक्।

आधिदैविकम्, आधिभौतिकमिति। भवार्थेऽध्यात्मादित्वाट्ठञ्। चातुर्वैद्यमिति। ष्यञ्। स्वार्थिको वक्तव्यश्चातुर्वर्ण्यादिसिद्ध्यर्थमिति स्वार्थ एव ष्यञ्॥ २०॥

**पदमञ्जरी**

दिषु परस्त्रीशब्दः पठ्यते, तस्मात् कल्याण्यादीनामिनङिति पाठः। चातुर्वैद्यमिति। चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ्, ताः पुनश्चतस्रो विद्याः=चत्वारो वेदाः॥ २०॥

**भावबोधिनी**

'कल्याण्यादि गण' में 'परस्त्री' शब्द का पाठ भी है। इसलिये पदमञ्जरीकार का कथन ही प्रामाणिक है। मूल में प्रकाशित पाठ "कुलटाया वा इतीनङ्" के स्थानपर "कल्याण्यादीनामिनङ्" यही शुद्ध पाठ समझना चाहिये। प्रकाशित पाठ अशुद्ध है।

( अनु० ) ❋ 'राजपुरुष' शब्द से ष्यञ् परे रहते [ उभयपद की आदिवृद्धि कहनी चाहिए ]॥❋ उदा० राजपौरुष्यम्। [ राजपुरुषस्य भावः—इस अर्थ "गुणवचन-ब्राह्मणादिभ्यः" सूत्र से ष्यञ् होने पर उभयपद की आदिवृद्धि होती है। ] ष्यञ् परे रहते—इसका क्या फल है ? राजपुरुषस्य अपत्यम्—इस अर्थ में—राजपुरुषायणिः। यहाँ 'उदीचां वृद्धादगोत्रात्' सूत्र से फिञ् = इनि [ प्रत्यय होने पर केवल आदिवृद्धि ही होती है ]।

❋ शतकुम्भ, सुखशयन, आदि [ की भी उभयपद की आदिवृद्धि कहनी चाहिए ]। ❋ शतकुम्भे भवः—इस अर्थ में शातकौम्भः। [ शतकुम्भ + अण् ] सुखशयन–सौखशायनिकः। [ ठक् = इक ] सूत्रनडस्य अपत्यम्–अर्थ में—सौत्रनाडिः। [ 'अत इञ्' सूत्र से इञ् प्रत्यय, उभयपद की आदिवृद्धि। ]

यह आकृतिगण मानना इष्ट है। इससे यह भी सिद्ध होता है—अभिगमम् अर्हति [ 'तदर्हति' से ठक् = इक, उभयपद की आदिवृद्धि ] आभिगामिकः। अधिदेवे भवम्–आधिदैविकम्। अधिभूते भवम्–आधिभौतिकम्। [ इनमें 'अध्यात्मादेष्ठञिष्यते' वचन से ठञ् = इक, उभयपद की आदिवृद्धि होती है। ] चतस्र एव विद्याः—इस अर्थ में—चातुर्वैद्यम् [ उभयपद की आदिवृद्धि ]। यहाँ स्वार्थ में ही ष्यञ् है। [ अतः चतस्रः विद्याः और चातुर्वैद्यम् में कोई अन्तर नहीं। ]

[ इस गण में पठित शब्द ]—अनुशतिक। अनुहोड। अनुसंवरण। अनुसंवत्सर। अङ्गारवेणु। असिहत्य। वध्योग। पुष्करसत्। अनुहरत्। कुरुकत्। कुरुपञ्चाल। उदकशुद्ध। इहलोक। परलोक। सर्वलोक। सर्वपुरुष। सर्वभूमि। प्रयोग। परस्त्री। ❋ राजपुरुष शब्द से ष्यञ् परे ही ❋। सूत्रनड। ये अनुशतिकादि हैं॥ २०॥

---

१–१. पाठोऽयं बहुषु पुस्तकेषु नास्ति।

**इहलोक, परलोक—तत्र भवः ऐहलौकिकः, पारलौकिकः। 'लोकोत्तरपदस्य' (वा०) इति ठञ्। सर्वलोक—तत्र विदितः सार्वलौकिकः। सर्वपुरुषस्येदं सार्वपौरुषम्। सर्वभूमेर्निमित्तं संयोग उत्पातो वा सार्वभौमः। प्रयोग—तत्र भवः प्रायोगिकः। परस्त्री—पारस्त्रैणेयः। 'कुलटाया वा' (४।१।१२७) इतीनङ्।¹**

*** राजपुरुषात् ष्यञि * (ग० सू० १७६)। राजपौरुष्यम्। ष्यञीति किम्? राजपुरुषस्यापत्यं राजपुरुषायणिः। 'उदीचां वृद्धादगोत्रात्' (४।१।१५७) इति फिञ्।**

**न्यासः**

**ऐहलौकिकः, पारलौकिक इति।** 'लोकोत्तरपदस्य' इति ठञ्। एतत् 'समानस्य तदादेश्च' इत्येवमादिकायां कारिकायामियमिष्टिरिति पठ्यते। **सार्वलौकिक इति।** 'लोकसर्वलोकाट् ठञ्'। **सार्वपौरुषमिति।** 'तस्येदम्' इत्यण्। **सार्वभौम इति।** 'सर्वभूमिपृथिवीभ्यामणञौ' इत्यण्, अञ्वा। **प्रायौगिक इति।** अध्यात्मादित्वाट् ठञ्। **पारस्त्रैणेय इति।** 'कुलटाया वा' इतीनङ्। तत्र 'स्त्रीभ्यो ढक्', 'कल्याण्यादीनामिनङ् च' इत्यनुवर्त्तते।

**पदमञ्जरी**

**सार्वलौकिकमिति।** 'लोकसर्वलोकाभ्यां ठञ्'। **सार्वभौम इति।** 'सर्वभूमिपृथिवीभ्यामणञौ'। प्रयोगाधिदेवाधिभूतेत्यध्यात्मादयः। **कुलटाया वेतीनङिति।** अपपाठोऽयम्, तत्र हि स्वरूपग्रहणम्। कल्याण्या-

**भावबोधिनी**

पढ़ते हैं, अस्यहेति प्रयोजन है इसका—इस अर्थ में [ 'तदस्य प्रयोजनम्' से ठञ् = इक प्रत्यय उभयपद की आदिवृद्धि ] आस्यहैतिकः। [ यहाँ शङ्का यह है कि प्रत्यय तो प्रातिपदिक से होता है—'अस्यहत्य' या 'अस्यहेति' यह तो पदसमुदाय है तब प्रत्यय कैसे होता है? समाधान ] इसी कारण इस वचन से इस ( पदसमुदाय ) की प्रातिपदिकसंज्ञा होती है और षष्ठी विभक्ति का अलुक् भी होता है।

'वध्योग' शब्द विदादिगणीय है 'तस्यापत्यम्' [ अर्थ में 'अनृष्यानन्तर्ये विदादिभ्योऽञ्' से अञ् प्रत्यय, बध् + योग में उभयपद की आदिवृद्धि करने पर ]—वाध्यौगः। पुष्करसत्, अनुहरत्—ये दोनों शब्द बाह्वादिगण में पठित हैं। [ अतः 'बाह्वादिभ्यश्च' सूत्र से इञ् प्रत्यय करने पर उभयपद की आदिवृद्धि करने पर ]—पौष्करसादिः। आनुहारतिः [ बनते हैं ]। कुरुकत्—यह गर्गादिगणीय है [ 'गर्गादिभ्यो यञ्' से यञ् प्रत्यय होने पर उभयपद की आदिवृद्धि ]—कौरुकात्यः। कुरुपञ्चाल—[ 'तत्र भवः' अर्थ में अण्, उभयपद की आदिवृद्धि ]—कौरुपाञ्चालः। 'जनपदों का समुदाय जनपद के ग्रहण से गृहीत नहीं होता है' इस वचन के कारण जनपदों के समुदायवाचक—'कुरुपञ्चाल' शब्द से 'जनपदतदवध्योश्च' सूत्र से वुञ् नहीं होता है। [ अतः सामान्य अण् प्रत्यय ही 'कौरुपाञ्चालः' में होता है। ] उदकशुद्धस्य अपत्यम्—[ 'अत इञ्' सें इञ् प्रत्यय, उभयपद की आदिवृद्धि— ] औदकशुद्धिः।

इहलोक, परलोक—इनसे 'तत्र भव.' अर्थ में—ऐहलौकिकः पारलौकिकः [ बनता है। ] इनमें 'लोकोत्तरपदस्य' से ठञ् = इक प्रत्यय होता है। [ उभयपद की आदिवृद्धि होती है। ] सर्वलोक से 'तत्र विदितः' ( उसमें ज्ञात है )—इस अर्थ में [ ठञ् = इक प्रत्यय, "लोकसर्वलोकाट्ठञ्" सूत्र से होने पर उभयपद के आदि अच् की वृद्धि होती है ]—सार्वलौकिकः। [ सर्वपुरुषस्य इदम्—इस अर्थ में 'तस्येदम्' से अण् होने पर उभयपद की आदि वृद्धि होती है ] सार्वपौरुषम्। सर्वभूमेर्निमित्तम् संयोगः, उत्पातो वा—इस अर्थ में [ "सर्वभूमिपृथिवीभ्यामणञौ" सूत्र से अण् या अञ् प्रत्यय करने पर उभयपद की आदिवृद्धि, भ संज्ञा इलोप होने पर ]—सार्वभौमः। 'प्रयोग' से 'तत्र भवः' इस अर्थ में [ अण् करने पर उभयपद की आदिवृद्धि ]—प्रायौगिकः। परस्त्री से—जनपदों के समुदायवाचक-'कुरुपञ्चाल' शब्द से 'कुलटाया वा' सूत्र से ढक् प्रत्यय और इनङ् [ आदेश करने पर उभयपद की आदिवृद्धि करने पर ]—पारस्त्रैणेयः।

**विमर्श**—अपत्य अर्थ में 'कल्याण्यादीनामिनङ्' इस सूत्र से ही ढक् प्रत्यय और इनङ् करना उचित है—ऐसा पदमञ्जरीकार का कथन है। उनके अनुसार 'कुलटायाः' इस सूत्र में शब्दस्वरूप का ही ग्रहण है। और

---

१. 'कल्याण्यादीनामिनङ्' इति पदमञ्जरीसम्मतः पाठः।

शतकुम्भसुखशयनादयः[1]—शतकुम्भे भवः शातकौम्भः। सौखशायनिकः। पारदारिकः[1]। सूत्रनडस्यापत्यं सौत्रनाडिः।

आकृतिगणश्चायमिष्यते। नेतेदमपि सिद्धं भवति—अभिगममर्हति आभिगामिकः। आधिदेवे भवमाधिदेविकम्। आधिभौतिकम्। चतस्र एव विद्याः चातुर्वैद्यम्। स्वार्थे ष्यञ्।

अनुशतिक। अनुहोड। अनुसंवरण। अनुसंवत्सर। अङ्गारवेणु। असिहत्य। वध्योग। पुष्करसत्। अनुहरत्। कुरुकत। कुरुपञ्चाल। उदकशुद्ध। इहलोक। परलोक। सर्वलोक। सर्वपुरुष। सर्वभूमि। प्रयोग। परस्त्री। *राजपुरुषात् ष्यञि* (ग० सू० १७६)। सूत्रनड। अनुशतिकादिः॥

**न्यासः**

राजपौरुष्यमिति। ब्राह्मणदित्वात् ष्यञ्। सौत्रनाडिरिति। 'अत इञ्'। आभिगामिक इति। अभिगममर्हतीत्यार्हीयष्ठक्।

आधिदेविकम्, आधिभौतिकमिति। भवार्थेऽध्यात्मादित्वाट्ठञ्। चातुर्वैद्यमिति। ष्यञ्। स्वार्थिको वक्तव्यश्चातुर्वर्ण्यादिसिद्ध्यर्थमिति स्वार्थ एव ष्यञ्॥ २०॥

**पदमञ्जरी**

दिषु परस्त्रीशब्दः पठ्यते, तस्मात् कल्याण्यादीनामिनङिति पाठः। चातुर्वैद्यमिति। चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ्, ताः पुनश्चतस्रो विद्याः=चत्वारो वेदाः॥ २०॥

**भावबोधिनी**

'कल्याण्यादि गण' में 'परस्त्री' शब्द का पाठ भी है। इसलिये पदमञ्जरीकार का कथन ही प्रामाणिक है। मूल में प्रकाशित पाठ "कुलटाया वा इतीनङ्" के स्थानपर "कल्याण्यादीनामिनङ्" यही शुद्ध पाठ समझना चाहिये। प्रकाशित पाठ अशुद्ध है।

(अनु०) * 'राजपुरुष' शब्द से ष्यञ् परे रहते [ उभयपद की आदिवृद्धि कहनी चाहिए ]॥* उदा० राजपौरुष्यम्। [ राजपुरुषस्य भावः—इस अर्थ "गुणवचन-ब्राह्मणादिभ्यः" सूत्र से ष्यञ् होने पर उभयपद की आदिवृद्धि होती है। ] ष्यञ् परे रहते—इसका क्या फल है? राजपुरुषस्य अपत्यम्—इस अर्थ में—राजपुरुषायणिः। यहाँ 'उदीचां वृद्धादगोत्रात्' सूत्र से फिञ् = इनि [ प्रत्यय होने पर केवल आदिवृद्धि ही होती है ]।

* शतकुम्भ, सुखशयन, आदि [ की भी उभयपद की आदिवृद्धि कहनी चाहिए ]। * शतकुम्भे भवः—इस अर्थ में शातकौम्भः। [ शतकुम्भ + अण् ] सुखशयन—सौखशायनिकः। [ ठक् = इक ] सूत्रनडस्य अपत्यम्—अर्थ में—सौत्रनाडिः। [ 'अत इञ्' सूत्र से इञ् प्रत्यय, उभयपद की आदिवृद्धि। ]

यह आकृतिगण मानना इष्ट है। इससे यह भी सिद्ध होता है—अभिगमम् अर्हति [ 'तदर्हति' से ठक् = इक, उभयपद की आदिवृद्धि ] आभिगामिकः। अधिदेवे भवम्-आधिदैविकम्। अधिभूते भवम्—आधिभौतिकम्। [ इनमें 'अध्यात्मादेष्ठञिष्यते' वचन से ठञ् = इक, उभयपद की आदिवृद्धि होती है। ] चतस्र एव विद्याः—इस अर्थ में—चातुर्वैद्यम् [ उभयपद की आदिवृद्धि ]। यहाँ स्वार्थ में ही ष्यञ् है। [ अतः चतस्रः विद्याः और चातुर्वैद्यम् में कोई अन्तर नहीं। ]

[ इस गण में पठित शब्द ]—अनुशतिक। अनुहोड। अनुसंवरण। अनुसंवत्सर। अङ्गारवेणु। असिहत्य। वध्योग। पुष्करसत्। अनुहरत्। कुरुकत्। कुरुपञ्चाल। उदकशुद्ध। इहलोक। परलोक। सर्वलोक। सर्वपुरुष। सर्वभूमि। प्रयोग। परस्त्री। * राजपुरुष शब्द से ष्यञ् परे ही *। सूत्रनड। ये अनुशतिकादि हैं॥ २०॥

---

१-१. पाठोऽयं बहुषु पुस्तकेषु नास्ति।

## ३४१८. देवताद्वन्द्वे च ॥ २१ ॥ ( १२३९ )

देवताद्वन्द्वे च पूर्वपदस्योत्तरपदस्य चाचामादेरचः स्थाने वृद्धिर्भवति तद्धिते ञिति, णिति, किति च परतः। 'आग्निमारुतीमनड्वाहीमालभेत्'[1]। ( मै० २।५।७ ) आग्निमारुतं कर्म।

यो देवताद्वन्द्वः सूक्तहविःसम्बन्धी, तत्रायं विधिः। इह च न भवति—स्कन्दविशाखौ देवते अस्य स्कान्दविशाखः। ब्रह्मप्रजापती—ब्राह्मप्रजापत्यम् ॥

### न्यासः

**देवताद्वन्द्वे च ॥ आग्निमारुतीमिति।** अग्निश्च मरुच्चेति द्वन्द्वः, तौ देवते अस्याः—'सास्य देवता' इत्यण्, ततः पूर्वोत्तरयोर्वृद्धिः, 'इद वृद्धौ' इत्यग्निशब्दस्यानङ्विषय इकारादेशः, 'टिड्ढाणञ्' इति ङीप्।

**यो देवताद्वन्द्वः सूक्तसम्बन्धीत्यादि।** यः सूक्तं भजते स सूक्तसम्बन्धी, यस्मै हविर्निरूप्यते स हविःसम्बन्धीति। अर्थद्वारकश्चेदं द्वन्द्वस्य विशेषणम्। **इह च न भवतीत्यादि।** कथं पुनः सामान्योक्तौ सत्यामयं विशेषो लभ्यते? एवं मन्यते—'नेन्द्रस्य परस्य' इत्यत्र नेति योगविभागः कर्त्तव्यः, तेन सूक्तसम्बन्धिनो हविःसम्बन्धिनश्चान्यत्र न भवतीति। **स्कान्दविशाख इति।** 'तस्येदम्' इत्यण्। **ब्राह्मप्रजापत्यमिति।** 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः' ॥ २१ ॥

### पदमञ्जरी

**देवताद्वन्द्वे च ॥** अग्निवरुणौ देवते अस्य आग्निवारुणम्, अग्निमरुतौ देवते अस्य आग्निमारुतम्। 'इद्वृद्धौ' इत्यग्निशब्दस्य इत्वम्।

**यो देवताद्वन्द्व इत्यादि।** यः सूक्तं भजते स्तुत्यतया स **सूक्तसम्बन्धी**, हविर्यस्मै निरूप्यते स **हविःसम्बन्धी**। अर्थद्वारकं चेदं द्वन्द्वस्य विशेषणम्। **स्कान्दविशाख इति।** 'सास्य देवता' इत्यण्। **ब्राह्मप्रजापत्यमिति।** 'पत्युत्तरपदाण्ण्यः'। ननु 'सास्य देवता' इत्यत्र न जातिवचनो देवताशब्दः, किं तर्हि? यस्यै हविर्निरूप्यते, या वा मन्त्रस्तुत्या सास्य देवता गृह्यते; न चैवम्भूतोऽत्र द्वन्द्वार्थः, एवम्भूतत्वे वा यथा तद्धिता भवन्ति तथायमपि विधिः प्राप्नोति? अत्राहुः—तद्धितः क्वचिदन्यत्रापि भवति—ज्ञा देवतास्य ज्ञः, स्थालीपाक इति हि भाष्ये दृष्टमिति ॥ २१ ॥

### भावबोधिनी

देवताओं के द्वन्द्व समास में भी पूर्वपद तथा उत्तरपद के अचों में आदि अच् के स्थान पर वृद्धि, ञित्, कित्, णित् तद्धित प्रत्यय परे, होती है। उदा० आग्निमारुतीम् अनड्वाहीम् आलभेत। [ अग्निश्च मरुच्च—इस अर्थ में द्वन्द्व समास करने के बाद 'अग्निमरुतौ देवता अस्य' इस अर्थ में 'साऽस्य देवता' सूत्र से अण् करने पर उभयपद की आदिवृद्धि होती है। यहाँ 'आग्निवारुणीम्' यही पाठ शुद्ध है। न्यासकार की अपेक्षा पदमञ्जरीकार का पाठ उचित है। ] आग्निमारुतं कर्म। [ अग्निश्च मरुत् च इस प्रकार से द्वन्द्व करके अग्निमारुतौ देवतेऽस्य—इस अर्थ में अण् प्रत्यय करने पर उभयपद की आदिवृद्धि होती है। ]

जो देवताओं का द्वन्द्व सूक्त और हविष् से सम्बद्ध होता है वहीं पर प्रस्तुत सूत्र प्रवृत्त होता है। अतः यहाँ [ उभयपद की वृद्धि ] नहीं होती है—स्कन्दविशाखौ देवते अस्य—इसमें [ अण् करने पर केवल आदिपद की ही वृद्धि होती है ] स्कान्दविशाखः। ब्रह्मप्रजापती [ देवते अस्य-इस अर्थ में ]—ब्राह्मप्रजापत्यम्। [ 'दित्यदित्यादित्यपत्युत्तरपदाण्ण्यः' सूत्र से ण्य = य प्रत्यय परे केवल आदिवृद्धि होती है। ]

**विमर्श**—'अग्निश्च वरुणश्च' तथा 'अग्निश्च मरुच्च' दोनों में द्वन्द्व करने पर 'देवताद्वन्द्वे च' (६।३।२६) ऐसे दूसरे सूत्र से पूर्वपद का आनङ् अन्त्यादेश करने पर—अग्ना, ईत्व करने पर 'अग्नीवरुणौ' बनते है। जब 'साऽस्य देवता' सूत्र से अण् होता है तब "इद्वृद्धौ" (६।३।२८) सूत्र से 'अग्ना' तथा 'अग्नी' का इत्वादेश कर देने से 'अग्निमरुत्+अण्, अग्निवरुण + अण् में प्रस्तुत सूत्र उभयपद के आदि अच् की वृद्धि करता है।

जो देवताद्वन्द्व किसी सूक्त से सम्बद्ध अथवा जिस देवताद्वन्द्व के लिये हविष् दी जाती है वही देवताद्वन्द्व यहाँ उभयपदवृद्धि के लिये इष्ट माना जाता है ॥ २१ ॥

---

१. 'अग्निवारुणीमनड्वाहीमालभेत' इत्येवोपलभ्यते।

## ३४१९. नेन्द्रस्य परस्य ॥ २२ ॥ (१२४०)

इन्द्रशब्दस्य परस्य यदुक्तं तन्न भवति । सौमेन्द्रः । आग्नेन्द्रः ।

परस्येति किम् ? ऐन्द्राग्नमेकादशकपालं चरुं निर्वपेत् ।

इन्द्रशब्दे द्वावचौ—तत्र तद्धिते एकस्य 'यस्येति च' (६।४।१४८) इति लोपः, अपरस्य पूर्वेण सहैकादेश इत्यप्राप्तिरेव वृद्धेः, तदेदं प्रतिषेधवचनं ज्ञापकम्—बहिरङ्गमपि पूर्वोत्तरपदयोः पूर्वं कार्यं भवति, पश्चादेकादेश इति । तेन पूर्वैषुकामशम इत्यादि सिद्धं भवति ॥

## ३४२०. दीर्घाच्च वरुणस्य ॥ २३ ॥ (१२४१)

दीर्घादुत्तरस्य यदुक्तं तन्न भवति । ऐन्द्रावरुणम् (२।१।७) । मैत्रावरुणम् ।

**न्यासः**

नेन्द्रस्य परस्य ॥ सौमेन्द्रः, आग्नेन्द्र इति । 'सास्य देवता' इत्यण्, 'देवताद्वन्द्वे च' इत्यानङादेशः, पूर्वपदस्याद् गुणः । ऐन्द्राग्न इति । अत्रापि पूर्ववदणादिकार्यम् ।

इन्द्रशब्दे द्वावचावित्यादि । प्रागेवोक्तत्वात् सुबोधम् ॥ २२ ॥

दीर्घाच्च वरुणस्य ॥ ऐन्द्रावरुणम्, मैत्रावरुणमिति । 'देवताद्वन्द्वे च' इत्यानङि कृते दीर्घात् परो

**पदमञ्जरी**

नेन्द्रस्य परस्य ॥ आग्नेन्द्रम्, सौमेन्द्रमिति । 'अजाद्यदन्तम्' इतीन्द्रशब्दस्य पूर्वनिपातो न भवति; प्रायिकत्वात्तस्य ।

इन्द्रशब्द इत्यादि । इन्द्रश्च मरुच्चेत्यादौ व्यञ्जनान्तेन सह द्वन्द्वे इन्द्रशब्दस्य पूर्वनिपातेन भाव्यम् । यथा—ऐन्द्रामारुतीं भेदकामालभेतेति । वाय्विन्द्रावित्यादिकस्तु द्वन्द्वः सूक्तहविःसम्बन्धी न भवतीति भावः ॥ २२ ॥

दीर्घाच्च वरुणस्य ॥ अत्र हीत्यादि । उदाहरणेषु 'देवताद्वन्द्वे च' इत्यानङ्कृते दीर्घात्परो

**भावबोधिनी**

परवर्त्ती ( उत्तरपद ) इन्द्र शब्द के लिये जो ( वृद्धि ) कहा गया है वह नहीं होता है । उदा० सौमेन्द्रः । आग्नेन्द्रः । [ सोमश्च इन्द्रश्च देवता अस्य—इस अर्थ में अण् करने पर उभयपद की आदिवृद्धि होती है । अग्नि + इन्द्र में 'देवताद्वन्द्वे च' (६।३।२६) से आनङ् अन्त्यादेश करने से अग्ना + इन्द्र + अण् आदिवृद्धि तथा गुण एकादेश होने पर रूप बनता है । न्यास में पुंलिङ्ग और पदमञ्जरी में नपुंसकलिङ्ग में उदा० दिये गये हैं । ]

परवर्त्ती इन्द्र की नहीं—इसका क्या फल है ? 'ऐन्द्राग्नम् एकादशकपालं चरुं निर्वपेत् ।' [ इस द्वन्द्व में इन्द्र पूर्वपद है । अतः निषेध नहीं होता है । ]

शङ्का—'इन्द्र' इस शब्द में दो अच् ( इ, अ ) हैं, इनमें तद्धित प्रत्यय ( अण् ) परे रहते एक ( अन्त्य भ संज्ञक ) का लोप 'यस्येति च' सूत्र हो जाता है । [ सौमेन्द्रः आदि में ] दूसरे ( इ ) का पूर्ववर्ती के साथ अर्थात् पूर्व और पद के स्थान पर एक आदेश हो जाता है, इस प्रकार [ कोई शेष नहीं रहने से ] वृद्धि की प्राप्ति ही नहीं है । [ इस स्थिति में यह सूत्र व्यर्थ हो जाता है ? समाधान ] तो यह प्रतिषेधवचन ज्ञापक बनता है—पूर्व तथा उत्तरपद का कार्य बहिरङ्ग होता हुआ भी पहले हो जाता है, उसके बाद ही एक आदेशरूपी ( गुण या वृद्धि ) कार्य होता है । इसीलिये 'पूर्वैषुकामशमः' आदि ( पूर्वोक्त ) रूप बन पाते हैं । 'प्राचां ग्रामनगराणाम्' (७।३।१४) पर उदा० है पूर्वेषुकामशम्यां भवः—पूर्वैषुकामशमः । [ पूर्व + ईषुकामशमी + अण् यहाँ पहले उत्तरपद के आदि अच् की वृद्धि की जाती है—पूर्व + ऐषुकामशमी + अण्, बाद में 'वृद्धिरेचि' से अ + ऐ के स्थान पर वृद्धिरूप एकादेश किया जाता है । इसी प्रकार—सोम + इन्द्र + अण् में भी पहले 'वृद्धि' ही होती है । उस वृद्धि में यदि परवर्त्ती 'इन्द्र' हो तो निषेध करने के लिये प्रस्तुत सूत्र की आवश्यकता है । ] ॥ २२ ॥

जो ( उभयपद की वृद्धि कार्य ) कहा गया है वह दीर्घ वर्ण से परवर्त्ती 'वरुण' शब्द का नहीं होता है । उदा० ऐन्द्रावरुणम्, मैत्रावरुणम् । [ अग्निश्च वरुणश्च—इन दोनो द्वन्द्वों में 'देवताद्वन्द्वे' (६।३।२६) इस षष्ठ

दीर्घादिति किम् ? 'अग्निवारुणीमनड्वाहीमालभेत' (कठ० १३।६)। अग्नेः—'ईदग्नेः सोमवरुणयोः' (६।३।२७) इत्यस्यानङपवादस्य 'इद्वृद्धौ' (६।३।२८) इति प्रतिषेधो विधीयते, तेन दीर्घात्परो न भवति ॥

**३४२१. प्राचां नगरान्ते ॥ २४ ॥ (१४३१)**

प्राचां देशे नगरान्तेऽङ्गे पूर्वपदस्योत्तरपदस्याचामादेरचो वृद्धिर्भवति तद्धिते ञिति, णिति, किति च परतः। सुह्मनगरे भवः सौह्मनागरः। पौण्ड्रनागरः।

प्राचामिति किम् ? मद्रनगरमुदक्षु, तत्र भवः माद्रनगरः ॥

**३४२२. जङ्गलधेनुवलजान्तस्य विभाषितमुत्तरम् ॥ २५ ॥ (१४३२)**

जङ्गल, धेनु, वलज—इत्येवमन्तस्याङ्गस्य पूर्वपदस्याचामादेरचो वृद्धिर्भवति, विभाषितमुत्तरम्= उत्तरपदस्य विभाषा भवति तद्धिते ञिति, णिति, किति च परतः। कुरुजङ्गलेषु भवं कौरुजङ्गलम्, कौरुजाङ्गलम्। वैश्वधेनवम्, वैश्वधैनवम्। सौवर्णवलजः, सौवर्णवालजः ॥

**न्यास**

वरुणशब्दः ॥ २३ ॥

**प्राचां नगरान्ते ॥** यद्यत्र प्राचामित्यत्राचार्यग्रहणं स्यात्, ततश्चोत्तरसूत्रे 'विभाषितम्' इति न ब्रूयात्, एतदेव हि विकल्पार्थं प्राचांग्रहणं तत्रानुवर्त्तिष्यते। तस्माद् देशग्रहणं विज्ञायते इत्याह—**प्राचां देश इत्यादि**। नगरग्रहणेनेह स्वरूपग्रहणम्; 'स्वं रूपं शब्दस्य' इति वचनात् ॥ २४ ॥

**जङ्गलधेनुवलजान्तस्य विभाषितमुत्तरम् ॥** 'उत्तरम्' इत्यनेनोत्तरपदं लक्ष्यते; तस्य चोत्तरपदस्य नित्यं सन्निधानात् विभाषितत्वं नोपपद्यते। तस्मात् तत्सम्बन्धिन्या वृद्धेर्विभाषितत्वाद् 'विभाषितम्'

**पदमञ्जरी**

वरुणशब्दः ॥ २३ ॥

**प्राचां नगरान्ते ॥ प्राचां देश इति।** आचार्यग्रहणं तु न भवति; उत्तरसूत्रे 'विभाषितम्' इति वचनात् ॥ २४॥

**जङ्गलधेनुवलजान्तस्य विभाषितमुत्तरम् ॥** जङ्गलम्=वनप्रायो देशः, कुरुषु जङ्गलं कुरुजङ्गलम्। धेनुः= नवप्रसूता, विश्वेषां धेनुर्विश्वधेनुः। सुवर्णविकारः=वलजम्, सौवर्णवलजम्[1]। 'उत्तरम्' इत्युत्तरपदं

**भावबोधिनी**

अध्यायस्थ सूत्र से अन्त्य का आनङ् आदेश होता है—इन्द्रावरुणौ, मित्रावरुणौ देवते अस्य इसमें अण् करने पर प्राप्त उभय पद की वृद्धि का निषेध होता है। केवल आदिवृद्धि होती है। ]

दीर्घ वर्ण से परे वरुण की—इसका फल है ? 'अग्निवारुणीम् अनड्वाहीम् आलभेत' इसमें 'अग्नि' को 'ईदग्नेः सोमवरुणयोः' (६।३।२७) से प्राप्त होने वाले आनङ् के अपवादभूत 'ईत्व' आदेश का 'इद्वृद्धौ' (६।३।२८) इससे प्रतिषेध कर दिया जाता है, 'इ' पुनः कर दिया जाता है। इस कारण दीर्घ ( ई ) से परे 'वरुण' शब्द नहीं रहता है ॥ २३ ॥

पूरब के लोगों के देश में नगर जिसके अन्त में है ऐसे अङ्गसंज्ञक शब्द में पूर्वपद तथा उत्तरपद के अचों में आदि अच् के स्थान पर वृद्धि ञित्, णित्, और कित् तद्धित प्रत्यय परे रहते होती है। उदा० सुह्मनगरे भवः—इस अर्थ में—सौह्मनागरः। [ पुण्ड्रनगरे भवः—इस अर्थ में ] पौण्ड्रनागरः।

पूरब के लोगों के—इसका क्या फल है ? उत्तर वालों में 'मद्रनगर' है, उसमें होने वाला—इस अर्थ में—माद्रनगरः। [ यहाँ केवल आदि अच् की वृद्धि होती है। ] ॥ २४ ॥

जङ्गल, धेनु, तथा वलज—ये जिसके अन्त में हों ऐसे अङ्ग के पूर्वपद तथा उत्तरपद के अचों में आदि अच् के स्थान पर वृद्धि होती है किन्तु उत्तरपद [ के आदि अच् ] की विकल्प से होती है ञित्, णित् तथा कित् तद्धित प्रत्यय के परे रहते। उदा० कुरुजङ्गलेषु भवम्—इस अर्थ में कौरुजाङ्गलम् [ उत्तरपद की वृद्धि न होने

१. काशिकायां तु नपुंसकपाठः।

### ३४२३. अर्धात्परिमाणस्य पूर्वस्य तु वा ॥ २६ ॥ (१६८४)

अर्धशब्दात्परस्य परिमाणवाचिन उत्तरस्याचामादेरचः स्थाने वृद्धिर्भवति, पूर्वस्य तु वा भवति तद्धिते ञिति, णिति, किति च परतः। अर्धद्रोणेन क्रीतमार्धद्रौणिकम्, अर्धद्रौणिकम्। आर्धकौडविकम्, अर्धकौडविकम्।

परिमाणस्येति 'किम्'? अर्धक्रोशः प्रयोजनमस्यार्धक्रोशिकम्[1] ॥

### ३४२४. नातः परस्य ॥ २७ ॥ (१६८५)

अर्धात्परस्य परिमाणाकारस्य वृद्धिर्न भवति, पूर्वस्य तु वा भवति तद्धिते ञिति, णिति, च परतः। अर्धप्रस्थिकः, आर्धप्रस्थिकः। अर्धकंसिकः, आर्धकंसिकः।

**न्यासः**

इत्युक्तम्। अत एवाह—**उत्तरपदस्य विभाषा भवतीति**। वृद्धिरिति प्रकृतेन सम्बन्धः ॥ २५ ॥

**अर्धात् परिमाणस्य पूर्वस्य तु वा ॥ आर्धद्रौणिकमिति।** 'अर्धं नपुंसकम्' इति समासः, 'प्राग्वतेष्ठञ्'। अथ वावचनं किमर्थम्, न विभाषितमिति पूर्वसूत्रादनुवर्त्तिष्यते, उत्तरमित्यनेन तत् सम्बद्धम्, अतस्तदनुवृत्तावुत्तरपदस्यैव विकल्पः स्यादिति चेत्? नैतदस्ति; उत्तरमित्येतन्न स्वरिष्यते, तुशब्दश्चेह क्रियते, स नियमार्थो भविष्यति—पूर्वस्यैव भवति, नोत्तरपदस्येति। एवं तर्ह्येकयोगे स्वरितत्वकरणाकरणाद्धि वावचनमेव लघीय इति पुनर्वावचनं क्रियते ॥ २६ ॥

**नातः परस्य ॥** पूर्वेण परिमाणस्य वृद्धिरुच्यमाना अकारस्याचामादेः प्राप्नोतीति प्रतिषिध्यते। पूर्वपदस्य तु विकल्पो भवत्येव; पूर्वस्य त्वित्यनुवृत्तेः। **आर्धप्रस्थिक इति**। 'अर्धं नपुंसकम्' इति समासः, पूर्ववत् प्रत्ययः।

**पदमञ्जरी**

लक्ष्यते, तस्य नित्यसन्निहितत्वात् स्वरूपेण विभाषितत्वानुपपत्तेर्विभाषितवृद्धिकत्वाद् विभाषितमिति गौणो वादः ॥ २५ ॥

**अर्द्धात्परिमाणस्य पूर्वस्य तु वा ॥ अर्द्धद्रौणिकमिति।** प्राग्वतेष्ठञ्।

वावचनमनर्थकम्, विभाषितमित्यनुवृत्तेः, तत्रैवं वक्तव्यम्–पूर्वं त्विति। तथा तु न कृतमित्येव ॥ २६ ॥

**नातः परस्य ॥ आर्धप्रस्थिकम्, आर्धकंसिकमिति।** पूर्ववट्ठञ्। कंसाट्टिठँस्तु न भवति; तदन्तविधेरभावात्। प्राग्वतेः संख्यापूर्वपदानां तदन्तविधिः, न वार्धशब्दः संख्यावाची।

**भावबोधिनी**

पर ] कौरुजङ्गलम्। वैश्वधेनवम्, वैश्वधेनवम्। [ वैश्वधेनु + अण्, उ का गुण, अवादेश ] सौवर्णवालजः सौवर्णवलजः। [ जङ्गल = वन। वलज = सोने का गहना आदि वस्तु ] ॥ २५ ॥

अर्ध शब्द से परे परिमाणवाचक उत्तरपद के अचों में आदि अच् के स्थान पर वृद्धि होती है, परन्तु पूर्वपद के आदि अच् की विकल्प से होती है ञित्, णित् तथा कित् तद्धित प्रत्यय परे रहते। उदा० अर्धद्रोणेन क्रीतम्—इस अर्थ में [ ठञ् = इक करने पर ] आर्धद्रौणिकम्, [ आदिवृद्धि न होने पर ] अर्धद्रौणिकम्। आर्धकौडविकम्, अर्धकौडविकम्। [ द्रोण तथा कुडव प्राचीनकाल के नापवाचक शब्द हैं। आधे द्रोण और कुडव से खरीदी गई वस्तु यह अर्थ है। ]

परिमाणवाचक का—इसका क्या फल है? आधा क्रोश = कोस है प्रयोजन इसका—आर्धक्रोशिकम्। [ उत्तरपद की वृद्धि नहीं होती है। ] ॥ २६ ॥

इस अर्ध शब्द से परे परिमाणवाचक शब्द के अकार की वृद्धि नहीं होती है परन्तु पूर्व की विकल्प से होती है ञित्, णित् तथा कित् तद्धित प्रत्यय के परे रहते। उदा० अर्धप्रस्थिकः, आर्धप्रस्थिक.। [ अर्धप्रस्थेन क्रीतः

१–१. पाठोऽयं बहुत्र नास्ति।

अत इति किम्? आर्धकौडविकः। तपरकरणं किम्? इह मा भूत्—अर्धखार्यां भवा अर्धखारी। किं च स्यात्? अर्धखारी भार्या यस्य अर्धखारीभार्यः—'वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे' (६।३।३९) इति पुंवद्भावप्रतिषेधो न स्यात्। यत्र हि तद्धिते वृद्धिः प्रतिषिध्यते, स वृद्धिनिमित्तं न भवतीति पुंवद्भावो न प्रतिषिध्यते, यथा—वैयाकरणी भार्या अस्य वैयाकरणभार्य इति॥

**न्यासः**

**किञ्च स्यादिति**। एवं मन्यते—आकारो हि वृद्धिमानेव, तत्र नास्ति विशेषः सत्यसति वा वृद्धि-प्रतिषेधे, तदेव रूपम्, अतोऽसत्यपि तपरकरणे नैव किञ्चिदनिष्टमापद्यत इति। **वृद्धिनिमित्तस्येत्यादि**। असति तपरकरणे तत्कालार्थे यदनिष्टमापद्यते तद्दर्शयति। किं पुनः कारणं पुंवद्भावप्रतिषेधो न स्यात्? इत्यत आह—**यत्र हीत्यादि**। वृद्धिं कुर्वन्नेव हि तद्धितो वृद्धिनिमित्तं भवति। तस्माद् यत्र तद्धिते वृद्धि-प्रतिषेधः क्रियते स वृद्धेर्निमित्तं न भवति। तेन वृद्धिनिमित्तस्य तद्धितस्य पुंवद्भावो न प्रतिषिध्यत इति पुंवद्भावः स्यात्। क्व? **यथेत्यादि**। **वैयाकरणी भार्यास्येति**। वृद्धिप्रतिषेधः पुनरत्र 'न य्वाभ्याम्' इत्यादिना। अथ परस्येति किमर्थं पूर्वस्य मा भूदिति? नैतदस्ति; अत इति विशेषणोपादानसामर्थ्यात् पूर्वस्य न भविष्यति। न हि पूर्वस्यार्धशब्दस्यातोऽन्यो वृद्धिभाक् सम्भवति, 'पूर्वस्य तु वा' इति च विकल्पशासनमनर्थकं स्याद्, यदि तस्य प्रतिषेधः स्यात्। इदं तर्हि प्रयोजनम्—तदन्तविधिर्मा भूदिति? तदन्तविधौ सतीहापि प्रतिषेधः स्याद्—अर्धद्रौणिकमिति। पूर्वस्तु विधिः—अर्धेन मुष्टिना क्रीतमर्धमौष्टिकम्, आर्धमौष्टिकमित्येवमर्थः स्यात्। परग्रहणे तु सति यदर्धात् परमनन्तरं तदेवाश्रितं भवतीति नास्ति तदन्तविधिप्रसङ्गः॥ २७॥

**पदमञ्जरी**

**किं च स्यादिति**। आकारो वृद्धिरेव, तत्र सत्यसति वा वृद्धिप्रतिषेधे नास्ति विशेष इति मन्यते। किं पुनः कारणं पुंवद्भावप्रतिषेधो न स्यात्? इत्यत आह—**यत्र हीति**। यदुक्तम्—'कुर्वद्रूपे निमित्तशब्दो मुख्यः' इति।

परस्येति किम्? पूर्वस्य मा भूत्, अत इति विशेषणोपादानसामर्थ्यात्-पूर्वस्य न भविष्यति, न हि पूर्वस्यार्धशब्दस्याकारादन्यो वृद्धिभागस्ति। किञ्च—यदि पूर्वस्य प्रतिषेधः स्यात्, 'पूर्वस्य तु वा' इत्येतदनर्थकं स्यात्। इदं तर्हि प्रयोजनम्—तदन्तविधिर्मा भूदिति, अन्यथाऽकारान्तस्योत्तरपदस्यैवं विज्ञायते। तत्र को दोषः? इह प्रतिषेधः स्यात्—अर्धद्रौणिकम्, अर्धकौडविकमिति। पूर्वस्तु विधिः—अर्धमुष्टिना क्रीतोऽर्धमौष्टिक इत्यादौ चरितार्थः। तस्मात्तदन्तविधिनिरासार्थम् 'परस्य' इत्युक्तम्॥ २७॥

**भावबोधिनी**

अर्थ में ठञ् है।] आर्धकंसिकः, अर्धकंसिकः।

अकार की—इसका क्या फल है? आर्धकौडविकः। [ अर्धकुडवेन क्रीतः—इस अर्थ में ठञ् = इक। कुडव में आदि अकार नहीं है, अतः निषेध न होकर वृद्धि ही होती है।] तपरकरण किसलिये है? यहाँ न हो—अर्धखार्यां भवा—अर्धखारी। [ यहाँ 'खारी' का आ दीर्घ है। अतः सूत्र नहीं लगता है।] तो क्या हो सकता है? अर्धखारी भार्या यस्य सः—अर्थ में अर्धखारीभार्यः—इसमें 'वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे' (६।३।३९) इस सूत्र से पुंवद्भाव नहीं हो सकेगा। कारण यह है जिस तद्धित परे रहते वृद्धि का प्रतिषेध होता है, वह वृद्धिनिमित्त नहीं होता है अर्थात् जिस तद्धित को मानकर वृद्धि का प्रतिषेध किया जाता है वह प्रत्यय तो वृद्धि का निमित्त नहीं है [ अपितु उसके अभाव का निमित्त होता है ] इस लिए पुंवद्भाव का प्रतिषेध नहीं होता है; जैसे—वैयाकरणी भार्या यस्य सः—वैयाकरणभार्यः। [ तपरकरण करने पर वृद्धिनिषेध नहीं होता है। इसलिये पुंवद्भाव का प्रतिषेध होता है।]॥ २७॥

## ३४२५. प्रवाहणस्य ढे ॥ २८ ॥ (११२९)

प्रवाहणस्य ढे परत उत्तरपदस्याचामादेरचो वृद्धिर्भवति पूर्वपदस्य वा भवति । प्रवाहणस्यापत्यं प्रावाहणेयः, प्रवाहणेयः । 'शुभ्रादिभ्यश्च' (४।१।१२३) इति ढक् प्रत्ययः ॥

## ३४२६. तत्प्रत्ययस्य च ॥ २९ ॥ (११२८)

ढक्प्रत्ययान्तस्य प्रवाहणशब्दस्य तद्धितेषु परत उत्तरपदस्याचामादेरचो वृद्धिर्भवति, पूर्वस्य तु वा । प्रवाहणेयस्यापत्यं प्रावाहणेयिः, प्रवाहणेयिः । प्रावाहणेयकम्, प्रवाहणेयकम् ।

### न्यासः

**प्रवाहणस्य ढे** ॥ प्रवाहण-शब्दस्य, ढे प्रत्यये परत उत्तरपदस्येति व्यधिकरणे षष्ठ्यौ । प्रवाहण-शब्दस्य यदुत्तरपदमवयवस्तस्येत्यर्थः । **प्रवाहणेय इति** । वहेः प्रपूर्वाण्णिच्—प्रवाहयतीति प्रवाहणः । णिजन्तात् 'कृत्यल्युटो बहुलम्' इति कर्त्तरि ल्युट्, प्रादिसमासः, 'णेर्विभाषा' इति णत्वम्, ततोऽपत्यार्थे ढक् । किमर्थं पुनरुत्तरपदस्य वृद्धिर्विधीयते, यावता वृद्धिमदेवैतत् ? यद्यप्येवम्, तथापि वृद्धिर्विधातव्या; तद्धितस्य वृद्धिनिमित्तत्वाद्, 'वृद्धिनिमित्तस्य च तद्धितस्यारक्तविकारे' इति पुंवद्भावप्रतिषेधो यथा स्यात् । यदि ह्युत्तरपदवृद्धिर्न विधीयते, ततो यस्मिन् पक्षे पूर्वपदे वृद्धिर्न विधीयते तस्मिन् पक्षे प्रवाहणेयी भार्या अस्येति प्रवाहणेयीभार्य इत्यत्र पुंवद्भाव प्रतिषेधो न स्यात्; वृद्धेरनिमित्तत्वात् तद्धितस्य । यथा—वैयाकरणभार्य इत्यत्र । ननु चासत्यपि वृद्धिनिमित्तत्वे तद्धितस्य 'जातेश्च' इति पुंवद्भावप्रतिषेधो भविष्यति, अस्ति ह्यत्रापि गोत्रञ्च चरणैः सहेति जातित्वम् ? एवं तर्हि एतज्ज्ञापयति—अनित्योऽयं प्रतिषेध इति । तेन हस्तिनीनां समूहो हास्तिकमित्यत्र 'भस्याढे तद्धिते' इत्यौपसंख्यानिकस्य पुंवद्भावस्य प्रतिषेधो न भवति ॥ २८ ॥

**तत्प्रत्ययस्य च** ॥ **प्रावाहणेयिरिति** । 'अत इञ्' । **प्रावाहणेयकमिति** । 'गोत्रचरणाद् वुञ्' ।

### पदमञ्जरी

**प्रवाहणस्य ढे** ॥ प्रवाहणशब्दस्य, ढे परत उत्तरपदस्येति व्यधिकरणे षष्ठ्यौ । प्रवाहणशब्दस्य अवयवभूतं यदुत्तरपदं तस्येत्यर्थः । ननु वृद्धिमदेवात्र स्वत एवोत्तरपदम्, कस्मै प्रयोजनायास्य पुनर्वृद्धिर्विधीयते ? उच्यते; यदा पूर्वपदे वृद्धिर्न भवति तदा यद्युत्तरपदेऽपि वृद्धिर्न स्यात्, 'वृद्धिनिमित्तस्य' इति पुंवद्भावप्रतिषेधो न स्यात्—प्रवाहणेयीभार्य इति । मा भूदेवम्, 'जातेश्च' इत्येवं भविष्यति, 'गोत्रं च चरणैः सह' इति जातित्वम् ? एवं तर्ह्येतज्ज्ञापयति—अनित्योऽयं प्रतिषेध इति । तेन हस्तिनीनां समूहो हास्तिकमित्यत्र भस्याढे' इति वा, 'ठक्छसोश्च' इति वा प्राप्तस्यौपसंख्यानिकस्य पुंवद्भावस्य प्रतिषेधो न भवति । प्रवाहयतीति प्रवाहणः, ण्यन्ताद् वहेर्नन्द्यादेर्ल्युः, 'णेर्विभाषा' इति णत्वम् ॥ २८ ॥

**तत्प्रत्ययस्य च** । **प्रवाहणेयिरिति** ॥ यून्यपत्ये 'अत् इञ्' । **प्रवाहणेयकमिति** । 'गोत्रचरणाद् वुञ्' ।

### भावबोधिनी

प्रवाहणरूप अङ्ग के, ढ = प्रत्यय परे रहते, उत्तरपद के अचों में आदि अच् की वृद्धि नहीं होती है किन्तु पूर्वपद की विकल्प से वृद्धि होती है । उदा० प्रवाहणस्य अपत्यम्—इस अर्थ में 'शुभ्रादिभ्यश्च' (४।१।१२३) सूत्र से ढक् = एय प्रत्यय होता है । [ यहाँ पूर्वपद की वृद्धि और उसका अभाव मानकर दो रूप बनते हैं । 'वाहण' की वृद्धि का निषेध 'प्रवाहणेयीभार्यः' आदि में पुंवद्भाव रोकने के लिये है । ] ॥ २८ ॥

ढक्प्रत्ययान्त प्रवाहण ( = प्रावाहणेय ) शब्द की तद्धित के परे रहते उत्तरपद के आदि अचों में प्रथम अच् की वृद्धि होती है किन्तु पूर्वपद की आदिवृद्धि विकल्प से होती है । उदा० प्रवाहणेयस्य अपत्यम्—इस अर्थ में [ 'अत इञ्' सूत्र से इञ् प्रत्यय करने पर उत्तरपद की आदिवृद्धि नित्य होती है किन्तु पूर्वपद की विकल्प से होती है अतः दो रूप होते हैं–] प्रावाहणेयिः, प्रवाहणेयिः । [ वुञ्=अक प्रत्यय में ] प्रावाहणेयकम्, प्रवाहणेयकम् ।

बाह्यतद्धितनिमित्ता वृद्धिर्ढाश्रयेण विकल्पेन बाधितुमशक्येति सूत्रारम्भः ॥

**३४२७. नञः शुचीश्वरक्षेत्रज्ञकुशलनिपुणानाम् ॥ ३० ॥ (१४६०)**

**नञ उत्तरेषां शुचि, ईश्वर, क्षेत्रज्ञ, कुशल, निपुण—इत्येतेषामचामादेरचो वृद्धिर्भवति, पूर्वपदस्य वा भवति तद्धिते ञिति, णिति, किति च परतः। शुचि—आशौचम्, अशौचम्। ईश्वर—आनैश्वर्यम्, अनैश्वर्यम्। क्षेत्रज्ञ—आक्षैत्रज्ञ्यम्, अक्षैत्रज्ञ्यम्। कुशल—आकौशलम्, अकौशलम्। निपुण—आनैपुणम्, अनैपुणम्।**

**न्यासः**

अथ किमर्थमिदमुच्यते, यावता ढप्रत्ययान्तस्य प्रवाहणेयशब्दस्योत्तरपदं नित्यं वृद्धिमदेवेति, तदर्थस्तावदारम्भो न युक्तः; पूर्वपदस्य वृद्धेर्विकल्पो यथा स्यादित्येवमर्थोऽपि नैवास्यारम्भो युज्यते, इञादावपि तद्धिते तन्निमित्तां वृद्धिं बाधित्वा पूर्वसूत्रेण च निमित्त एव विकल्पो भविष्यति, न हीञादावुत्पन्ने तद्धिते ढस्य परत्वमपैति ? इत्याह—**बाह्यतद्धितेत्यादि**। बाह्यतद्धितो निमित्तं यस्याः सा तथोक्ता। बाह्यत्वं पुनरिञादेस्तद्धितस्य प्रावाहणेयशब्देऽनन्तर्भावात्। सैवं बाह्यं तद्धितं निमित्तमाश्रित्य भवन्ती बहिरङ्गा। प्रागेव तु बाह्यतद्धितोत्पत्तेर्ढाश्रयो विकल्पो भवन्नन्तरङ्गस्तां बाधितुं न शक्नोति। ततश्च यदीदं नारभ्येत तदा स्यादेव। तस्माद्विकल्पार्थमिदमारभ्यते ॥ २९ ॥

**नञः शुचीश्वरक्षेत्रज्ञकुशलनिपुणानाम्** ॥ उदाहरणान्युत्तरत्र व्युत्पादयिष्यन्ते।

**पदमञ्जरी**

किमर्थमिदमुच्यते ? ढे परतः पूर्वेण विकल्प उक्तः, ठान्तस्येञादौ नित्यवृद्धिर्मा भूदिति। नैतदस्ति प्रयोजनम्, इञादिनिमित्ताया अपि वृद्धेर्ढाश्रय एव विकल्पो बाधको भविष्यति, 'ढे' इति हि परसप्तमी, न निमित्तसप्तमी, तेनान्यनिमित्ताया अपि वृद्धेर्ढे परतः प्रतिषेधो लभ्यत एव ? अत आह—**बाह्यतद्धितनिमित्तेति**। अयमभिप्रायः—ढे उत्पन्ने तदाश्रयां वृद्धिं बाधित्वा विकल्पस्तावत्प्रवृत्तः, पश्चादिञादिरुत्पन्नः, तन्निमित्ता च वृद्धिः प्राप्ता, न त्विदानीं ढनिमित्तो विकल्पः, पूर्वमेव प्रवृत्तत्वात्, आवृत्त्ययोगादिति ॥ २९ ॥

**नञः शुचीश्वरक्षेत्रज्ञकुशलनिपुणानाम् ॥ अप्राप्तैव विधीयत इति**। अप्राप्तिमेवोपपादयति—**न नञ्पूर्वादिति। उत्तरो भावप्रत्यय इति**। त्वतलभ्यामुत्तरः ष्यञादिः, ततश्चोत्तरो भावप्रत्ययः प्रागेव नञ्समासात् शुच्यादिभ्य एव विधेयः, पश्चान्नञ्समासः; तत्र नञोऽङ्गेऽनन्तर्भावादप्राप्ता वृद्धिर्विधीयत इति।

**भावबोधिनी**

बाह्यभूत तद्धित प्रत्यय को निमित्त मानकर होने वाली वृद्धि 'ढ' को मानकर होनेवाले विकल्प से बाधित करना सम्भव नहीं है, इसलिए यह सूत्र बनाया गया।

**विमर्श**—यद्यपि इससे पूर्ववर्ती सूत्र से 'ढ' प्रत्यय परे पूर्वपद की आदिवृद्धि विकल्प से की ही गई, अतः यह सूत्र व्यर्थ प्रतीत होता है ? इसका समाधान यह है कि 'प्रवाहणेय' से जो इञ् आदि प्रत्यय किये जाते हैं वे उस शब्द से बहिर्भूत हैं। अतः उन्हें मानकर जो उभयपद की वृद्धि प्राप्त है वह पूर्वसूत्र से विकल्प से रोकना सम्भव नहीं है। उसे रोकने के लिये सूत्र बनाना आवश्यक है। ] ॥ २९ ॥

नञ् से उत्तरवर्त्ती–शुचि, ईश्वर, क्षेत्रज्ञ, कुशल, निपुण—इन शब्दों के अचों में आदि अच् की वृद्धि होती है किन्तु पूर्वपद [ के आदि ] की वृद्धि विकल्प से ञित्, णित्, कित् तद्धित परे होती है। उदा० शुचि—आशौचम्, अशौचम्। [ न विद्यते शुचिः अस्य–इस विग्रह में बहुव्रीहि करने पर भाव अर्थ में 'इगन्ताच्च लघुपूर्वात्' सूत्र से अण् होता है। उत्तरपद की नित्य और पूर्वपद की विकल्प से आदिवृद्धि होती है। ] ईश्वर–आनैश्वर्यम् अनैश्वर्यम्। [ भाव अर्थ में ष्यञ् होता है। ] क्षेत्रज्ञ–आक्षैत्रज्ञ्यम्, अक्षैत्रज्ञ्यम्। कुशल–आकौशलम्, अकौशलम्। निपुण—आनैपुणम्, अनैपुणम्। [ यहाँ 'तस्येदम्' से अण् होता है। ]

अत्र केचिदाहुः—इयं पूर्वपदस्य वृद्धिरप्राप्तैव विभाषा विधीयते। 'न नञ्पूर्वात्तत्पुरुषात्' (५।१।१२१) इत्युत्तरो भावप्रत्ययः प्रतिषिध्यते, तत्र शुच्यादिभ्य एव प्रत्यये कृते पश्चान्नञ्समासे सति वृद्धिरनङ्गस्यापि वचनाद्भवतीति।

तदपरे न मृष्यन्ते—भाववचनादन्योऽपि हि तद्धितो वृद्धिनिमित्तमपत्यादिष्वर्थेषु नञ्समासादेव विद्यते। बहुव्रीहेश्च नञ्समासाद्भाववचनोऽप्यस्ति, तत्राङ्गाधिकारोपमर्दनं न युज्यत इति।

**न्यासः**

अत्र केचिदाहुरित्यादि ग्रहणकवाक्यम्। अस्य 'न नञ्पूर्वात् तत्पुरुषादिति' विवरणम्। 'न नञ्पूर्वात् तत्पुरुषात्' इति त्वतलभ्यामन्यो भावप्रत्ययः प्रतिषिध्यते, तत्रोत्तरं भावप्रत्ययमिच्छता शुच्यादिभ्य एव, न तु नञ्समासेभ्य उत्तरो भावप्रत्ययः कर्त्तव्यः। तस्मिन् कृते पश्चान्नञ्समासः, ततश्चाङ्गस्याचामादेरचो विधीयमाना वृद्धिर्न प्राप्नोति। न हि पूर्वं भावप्रत्यये कृते पश्चान्नञ्समासे नञ् अङ्गस्याचामादिर्भवति, उत्तरपदस्यैवाङ्गत्वात्; उच्यते चेदं वचनम्, तत्र वचनसामर्थ्यादङ्गस्यापि वृद्धिर्भवति।

**तदपर इत्यादि।** यदुक्तमियं पूर्वपदस्य वृद्धिरप्राप्तैव विभाषा विधीयत इति, तदपर आचार्या न न क्षमन्ते। किं कारणम्? इत्याह—**भाववचनादन्योऽपि हीत्यादि।** एवकारो भिन्नक्रमो विद्यत इत्यस्यानन्तरं द्रष्टव्यः। यदि नञ्समासादपत्यादिष्वर्थेषु वृद्धिनिमित्तं भाववचनादपरस्तद्धितो न विद्यते, एवं बहुव्रीहेश्च नञ्समासाद् भाववचनादन्योऽपि न विद्येत; ततो युज्यतेऽशुच्यादिशब्दानामनङ्गत्वादङ्गाधिकारोपमर्दनेन वृद्धिः, वचनस्याकृतार्थत्वात्। न त्वेतदेवम्; विद्यत एव ह्यन्योऽपत्यादिष्वर्थेषु नञ्समासाद् वृद्धिनिमित्तस्तद्धितः—अकुशलस्यापत्यमाकौशलिः, अकुशलस्येदमाकौशलमिति। बहुव्रीहेश्च नञ्समासाद्भाववचनोऽपि विद्यत एव—नास्य शुचयो विद्यन्त इत्यशुचिः, तस्य भावः 'इगन्ताच्च लघुपूर्वात्' इत्यण्—आशौचम्। यत एवमन्योऽपि भाववचनात् तद्धितो नञ्समासाद् विद्यते, वृद्धिनिमित्तको बहुव्रीहेश्च नञ्समासाद्भाववचनोऽपि विद्यते। तस्मात् तत्र कृतार्थत्वाद्वचनस्याङ्गाधिकारबाधनं न युज्यते।

**पदमञ्जरी**

**तदपरे इत्यादि।** असति विषयेऽङ्गाधिकार उपमृद्यः, अस्ति च विषयः; कः पुनरसौ? भाववचनादन्योऽपत्यादिषु विहितः प्रत्ययः। अथापि भाववचने श्रद्धा, सोऽपि शक्यत एव दर्शयितुमित्याह—**बहुव्रीहेश्चेति।**

**भावबोधिनी**

यहाँ कुछ विद्वान् कहते हैं—यह पूर्वपद की वृद्धि अप्राप्त ही है, उसका विकल्प किया जाता है। 'नञ्पूर्व तत्पुरुष से भाव प्रत्यय नहीं होता है' इस वचन से उत्तर में होनेवाले भाव प्रत्यय का प्रतिषेध होता है। इनमें पहले 'शुचि' आदि शब्दों से ही भाव में प्रत्यय कर देने के बाद नञ्समास होने पर प्रस्तुत वचन के कारण अनङ्ग की भी वृद्धि होती है।

**विमर्श**—भाव यह है कि "न नञ्पूर्वात् तत्पुरुषादचतुर०" (५।१।१२१) सूत्र से यह निषेध होता है कि त्व, तल् से भिन्न ष्यञ् आदि प्रत्यय नञ्तत्पुरुष से नहीं होते हैं। इसलिये पहले प्रत्यय करके बाद में नञ् समास करना चाहिए। इस स्थिति में नञ् तो अङ्गसंज्ञक के बाहर है उसकी वृद्धि प्राप्त ही नहीं है। तब निषेध व्यर्थ होकर यह ज्ञापित करता है कि अनङ्ग की भी वृद्धि होती है। अतः पूर्वपद की अप्राप्त वृद्धि का विकल्प किया जाता है।

( अनु० ) इस उपर्युक्त को दूसरे विद्वान् नहीं सहन करते हैं—"भाववाचक से भिन्न भी तद्धित प्रत्यय वृद्धि का निमित्त होनेवाला अपत्यादि अर्थों में नञ् समास से होता है। और बहुव्रीहि नञ् समास से भाववाचक भी होता है। इसमें 'अङ्ग' इस अधिकार का उपमर्दन ( उपेक्षा ) ठीक नहीं है। [ 'नञ्तत्पुरुष से उत्तरवर्त्ती

अक्षेत्रज्ञानीश्वरौ तत्पुरुषावेव ब्राह्मणादिषु (५।१।१२४) पठ्येते, ततस्ताभ्यां भावे ष्यञ्भवति ॥

**३४३८. यथातथयथापुरयोः पर्यायेण ॥ ३१ ॥ ( १७८९ )**

**यथातथ, यथापुर—इत्येतयोर्नञ उत्तरयोः पर्यायेणाचामादेरचो वृद्धिर्भवति तद्धिते ञिति, णिति, किति च परतः। आयथातथ्यम्, अयाथातथ्यम्। आयथापुर्यम्, अयाथापुर्यम्। अयथातथ, अयथापुरेति ब्राह्मणादिषु नञ्समासावेतौ द्रष्टव्यौ।**

**न्यासः**

यदप्युक्तम्—'न नञ्पूर्वात् तत्पुरुषादित्युत्तरो भावप्रत्ययः प्रतिषिध्यत एव' तदप्ययुक्तमिति दर्शयन्नाह—**अक्षेत्रज्ञोऽनीश्वर इत्यादि**। एतौ हि द्वौ शब्दौ ब्राह्मणादिषु तत्पुरुषावेव पठ्येते, तेनाभ्यां तत्पुरुषाभ्यामेव। ष्यञ् भवति, अन्यथा हि ब्राह्मणादिष्वनयोः पाठस्य वैयर्थ्यं स्यात्। तस्मादङ्गस्यैवेयं वृद्धिर्नित्यं प्राप्ता सतो भावप्रत्यये, अन्यत्र च तद्धिते विकल्पेन विधीयते यथायोगम्। तत्राशौचमिति यदि तत्पुरुषः क्रियते—न शुचिरशुचिः, तदा 'तस्येदम्' इत्यणि कृते वृद्धिः; अथ बहुव्रीहिः—नास्ति शुचिरस्येत्यशुचिः, ततो यदि भावार्थो विवक्ष्यते तदा 'इगन्ताच्च लघुपूर्वात्' इत्यण्; अथ 'तस्येदम्' इत्यर्थो विवक्ष्यते, तदा 'प्राग्दीव्यतोऽण्' इत्यण्—आनैश्वर्य्यम्, आक्षैत्रज्ञ्यमिति। तत्पुरुषाभ्यां ब्राह्मणादित्वात् ष्यञि कृते वृद्धिः। आकौशलमानैपुणमिति यदि बहुव्रीहिरथापि तत्पुरुषः, उभयथापि 'तस्येदम्' इत्यणेव। यद्यपि कुशलनिपुणशब्दौ ब्राह्मणादिषु युवादिषु च पठ्येते, तथापि तदन्तात् तत्पुरुषाद् बहुव्रीहेरपि भाव प्रत्ययो नोपपद्यते; तदन्तविधेरभावात् ॥ ३० ॥

**यथातथयथापुरयोः पर्यायेण ॥ ब्राह्मणादिषु नञ्समासावेतौ द्रष्टव्याविति**। तेन नञ्समासाभ्यां ष्यञ् भवतीति भावः। **एताविति**। यथातथा-यथापुरशब्दौ। **'यथाऽसादृश्ये' इत्यव्ययीभावसमासाविति**। ननु च 'असादृश्ये' इति प्रतिषेधः प्राप्नोति ? नैष दोषः; न ह्यत्र सादृश्यं गम्यते। तथा हि—यथातथमिति सत्यमुच्यते, यथापुरमिति पुरातनम्। कथं पुनर्ज्ञायतेऽव्ययीभावसमासौ ? इत्याह—**तथा हीत्यादि**। अत्र

**पदमञ्जरी**

'उत्तरो भावप्रत्ययः प्रतिषिध्यते' इत्येतदप्यत्र न सार्वत्रिकमित्याह—**अक्षेत्रज्ञेति**। तदेवमङ्गाधिकारो न बाधनीय इति स्थितम्। एवं च 'तदुपस्पर्शादशौचम्' इत्यादिप्रयोगोपपत्तिः। 'दशाहं शावमाशौचम्' इत्यादौ त्विदमर्थेऽण् द्रष्टव्यः ॥ ३० ॥

**यथातथयथापुरयोः पर्यायेण ॥ ब्राह्मणादिषु नञ्समासावेतौ द्रष्टव्याविति**। तेन 'न नञ्पूर्वात्' इति ष्यञः प्रतिषेधो न भवतीति भावः। **यथाऽसादृश्य इत्यव्ययीभावसमास इति**। पदार्थानतिवृत्तौ। तथाभावमनतिक्रान्तं यथातथम् = सत्यमुच्यते, यद्वस्तु पुरा यथाभूतं तदद्यापि तथाभावमनतिक्रान्तं यथापुरमुच्यते। किं पुनरव्ययीभावत्वे प्रमाणम् ? इत्यत आह—**तथा हीति**। **भाष्ये त्विति**। न हि ह्रस्वत्वमकृत्वा विग्रहप्रदर्शनमव्ययीभावस्योपपद्यते।

**भावबोधिनी**

ष्यञ् आदि भाव प्रत्यय का प्रतिषेध होता है'—यह ठीक नहीं है, सार्वत्रिक नहीं है क्योंकि ] 'अक्षेत्रज्ञ, अनीश्वर' ये नञ् तत्पुरुष ही ब्राह्मणादिगण में पठित हैं, इस कारण इन दोनों शब्दों से भावार्थ में ष्यञ् होता है। [ इसलिये 'अङ्ग' इस अधिकार का बाध या उपेक्षा ठीक नहीं है। ] ॥ ३० ॥

'यथातथ' 'यथापुर' इन नञ् से उत्तरवर्त्ती दो शब्दों के अचों के मध्य में आदि अच् की वृद्धि पर्याय से ञित्, णित् तथा कित् तद्धित प्रत्यय के परे रहते होती है अर्थात् "न नञ्पूर्वात्" इस सूत्र से ष्यञ् का प्रतिषेध भी नहीं होता है। उदा० आयथातथ्यम् अयाथातथ्यम्। आयथापुर्यम्, अयाथापूर्यम्। [ यथा की पर्याय से वृद्धि करने के कारण एक बार नञ् से उत्तरवर्त्ती 'यथा' के अकार की वृद्धि होती है। पक्ष में आदिवृद्धि करने पर नञ् = अ की वृद्धि होती है। ] 'अयथातथा' और 'अयथापुर' ये दोनों शब्द ब्राह्मणादिगण ( ५।१।१२१ ) में नञ्-समास वाले समझने चाहिए।

सूत्रे यथातथ-यथापुरशब्दौ तु 'यथाऽसादृश्ये' ( २।१।७ ) इति अव्ययीभावसमासौ, तथा हि नपुंसकाश्रयं ह्रस्वत्वं कृतम्। भाष्ये तु यथा दर्शितम्—'अयथातथा भावः' ( म० भा० ) इति, तथा 'सुप्सुपा' इति समासो लक्ष्यते[2] ॥

**३४२९. हनस्तोऽचिण्णलोः ॥ ३२ ॥ (२५७४)**

**'तद्धितेषु' इति निवृत्तम्, तत्सम्बद्धम् 'किति' इत्यपि। 'ञ्णिति' इति वर्तते। हनस्तकारादेशो भवति ञ्णिति प्रत्यये परतः, चिण्णलौ वर्जयित्वा। घातयति। घातकः। साधुघाती। घातङ्घातम्। घातो वर्तते।**

**न्यासः**

हि 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इति नपुंसकाश्रयं ह्रस्वत्वं कृतम्। नपुंसकत्वं चाव्ययीभावस्य विहितम्, तस्मादव्ययीभावसमासाविति ज्ञायते। **भाष्ये त्वित्यादि**। अयथातथा भाव इति ह्रस्वत्वमकृत्वा वाक्यं यथा दर्शितं तथा 'सुप्सुपा' इति समासो लक्ष्यते, नाव्ययीभावः। अव्ययीभावे हि नपुंसकाश्रयं ह्रस्वत्वं स्यात्। अस्मिंस्तु पक्षे सौत्रत्वान्निर्देशस्य—'छन्दोवत्सूत्राणि भवन्ति' इति वर्णव्यत्ययेन दीर्घस्य स्थाने ह्रस्वो वेदितव्यः ॥ ३१ ॥

**हनस्तोऽचिण्णलोः ॥ तद्धितेष्विति निवृत्तमिति**। अस्वरितत्वात्। **तत्सम्बद्धं कितीत्यपीति**। निवृत्तमित्यपेक्षते। तत्सम्बद्धत्वं पुनस्तस्य 'किति च' इत्यत्र 'तद्धितेषु' इत्यनुवृत्तेः। यदि पुनः कितीत्यनुवर्तेत, ततो लक्षणे 'जायापत्योष्टक्', 'अमनुष्यकर्तृके च' इति टकि कृते—जायाघ्नस्तिलकालक इत्यत्रापि स्यात्। ञ्णिद्ग्रहणं तु प्रत्ययमात्रेण सम्बद्धम्। अतः 'तद्धितेषु' इत्येतस्मिन् निवृत्तेऽपि तदनुवर्त्तक एव। **घातयतीति**। हेतुमण्णिच्। 'हो हन्तेर्ञ्णिन्नेषु' इति कुत्वम्। **घातक इति**। ण्वुल्। **साधुघातीति**। 'सुप्यजातौ णिनिस्ताच्छील्ये' इति णिनिः। **घातंघातमिति**। 'आभीक्ष्ण्ये णमुल् च', 'आभीक्ष्ण्ये द्वे भवतः' इति द्विर्वचनम्। **घात इति**। भावे घञ्।

**पदमञ्जरी**

अयं योगः शक्योऽवक्तुम्। कथम्? यदा पूर्वपदस्य वृद्धिः, नञ्समासाद्भावप्रत्ययः। यदा तूत्तरपदस्य वृद्धिस्तदा ष्यञन्तेन नञ्समासः। स्वरेऽपि नास्ति विशेषः; अव्ययपूर्वपदप्रकृतिस्वरेणाद्युदात्तत्वात्। प्रत्ययान्तरं चाभ्यां न भवति; अनभिधानात् ॥ ३१ ॥

**हनस्तोऽचिण्णलोः ॥ तद्धितेष्विति निवृत्तमिति**। धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानात्।

**भावबोधिनी**

सूत्र में 'यथातथा–यथापुर' शब्द तो 'यथाऽसादृश्यते' ( २।१।७ ) ( असादृश्ये में वर्तमान 'यथा' शब्द का समास होता है और वह अव्ययीभाव होता है। ) से अव्ययीभाव समास वाले हैं। इसलिए नपुंसक मानकर ह्रस्व किया गया। परन्तु भाष्य में जैसा दिखाया गया है—'अयथातथा भावः' यह, इससे तो 'सुप्सुपा' (२।१।४) सूत्र से समास लक्षित होता है। [ अतः यहाँ अव्ययीभाव नहीं समझना चाहिए। इस पक्ष में सौत्र मान कर ह्रस्वत्व करना चाहिए। ] ॥ ३१ ॥

यहाँ से 'तद्धितेषु' इसकी और इससे सम्बद्ध 'किति' इसकी भी निवृत्ति होती है। परन्तु ञित् और णित् की अनुवृत्ति होती है। हन् धातु का ( अन्त का ) तकार आदेश होता है ञित् और णित् प्रत्यय परे रहते किन्तु चिण् और णमुल् को छोड़ कर। उदा० घातयति। [ हन्+णिच् = इ, उपधावृद्धि, 'हो हन्तेर्ञ्णिन्नेषु' सूत्र से कुत्व ह् का घ्, प्रस्तुत सूत्र से 'न्' का त्—घाति+लट् आदि। ] घातकः। [ हन् + ण्वुल = अक, पूर्वोक्त सभी कार्य। ] साधुघाती। [ साधुं हन्ति—इस अर्थ में 'णिनिस्ताच्छील्ये' सूत्र से णिन्=इन् प्रत्यय, पूर्वोक्त कार्य, उपपद समास साधुघातिन् + सु ] 'घातम् घातम् [ हन् + णमुल = अम्, पूर्ववत् सभी कार्य, द्वित्व। ] घातः। [ हन् + घञ् = अ, पूर्वोक्त सभी कार्य। ]

---

१. 'अस्मिंस्तु पक्षे सौत्रत्वाद्दीर्घस्य ह्रस्वः—इत्यधिकं क्वचित्।

२. न्यासपदमञ्जर्योरनुरोधेन 'हि' इत्यपि पठनीयम्।

**अचिण्णलोरिति किम् ? अघानि । जघान ।**

**धातोः कार्यमुच्यमानं धातोः प्रत्यये विज्ञायते । इह न भवति—वार्त्रघ्नम् (म० भा०) इतरदिति ॥**

## ३४३०. आतो युक्चिण्कृतोः ॥ ३३ ॥ (२७६१)

**आकारान्तस्याङ्गस्य चिणि कृति ञ्णिति युगागमो भवति । अदायि । अधायि । कृति—दायः, दायकः । धायः, धायकः ।**

### न्यासः

**अघानीति ।** लुङ्, 'चिण् भावकर्मणोः' इति चिणादेशश्च, 'भावकर्मणोः' इत्यात्मनेपदम्, 'चिणो लुक्' इति तकारस्य लुक् । **जघानेति ।** लिट्, तिप्; तस्य णल्, 'अभ्यासाच्च' इति कुत्वम्–घकारः । अथेह कस्मान्न भवति—वृत्रं हतवानिति, 'ब्रह्मभ्रूणवृत्रेषु क्विप्', तदन्तात् 'तस्येदम्' इत्यण्, 'षपूर्वहन्धृतराज्ञामणि' इत्यल्लोपः—वार्त्रघ्नः, भ्रौणघ्नः ? इत्याह—**धातोरित्यादि ।** धातोरित्येवमुचार्य्य यो विहितः प्रत्ययः स धातुप्रत्ययः । धातोः कार्यमुच्यमानं तत्रैव धातुप्रत्यये भवति । एतच्च भ्रौणहत्यमिति (६.४.१७४ सू०) निपातनेन ज्ञापितम् । तेन वार्त्रघ्नः, भ्रौणघ्न इत्यादौ न भवति । न ह्यत्र धातोरित्येवं प्रत्ययो विहितः, किं तर्हि ? प्रातिपदिकादित्येवम् ॥ ३२ ॥

**आतो युक् चिण्कृतोः ॥ चिणि कृति चेति ।** चिण्ग्रहणमकृदर्थम् । अकृत्त्वं तु तस्य द्वितीयधात्वधिकारेऽविहितत्वात् । **अदायि, अधायीति ।** ददातिदधात्योः पूर्ववल्लुङादि कार्यम् । **दायः, धाय इति ।** घञ् । **दायकः, धायक इति ।** ण्वुल् ।

### पदमञ्जरी

**तत्सम्बद्धं क्ङितीत्यपीति ।** निवृत्तमित्यपेक्ष्यते । ञ्णिद्ग्रहणं तु प्रत्ययमात्रेण सम्बद्धम्, अतः 'तद्धितेषु' इत्यस्मिन्निवृत्तेऽपि तदनुवर्त्तत एव । उदाहरणेषु 'हो हन्तेर्ञ्णिन्नेषु' इति कुत्वम् ॥ ३२ ॥

**आतो युक् चिण्कृतोः ॥** चिण्ग्रहणमकृदर्थम् । **ददौ, दधाविति ।** ननु च 'आत औ णलः' इत्यौत्वमत्र बाधकं भविष्यति, अनवकाशा हि विधयो बाधका भवन्ति, सावकाशं चौत्वम्, कोऽवकाशः ? यदा उत्तमे णलि णित्वाभावः ? एवं तर्हि 'अचिण्णलोः' इत्यनुवर्तिष्यते, चिणि तु वचनाद्भविष्यति, तत्राह—**चौडिर्बालाकिरिति ।** बाह्वादित्वादिञ् । अत्र दाक्ष्यादौ चरितार्थं यस्येतिलोपं बाधित्वा परत्वाद्युक् स्यात् । अचामादेरित्यनुवृत्तेर्न

### भावबोधिनी

चिण् और णल् परे नहीं—इसका क्या फल है ? अघानि । [ हन् से भाव या कर्म में लुङ् लकार में च्लि का चिण् आदि होता है । 'न्' का 'त्' नहीं होता है । ] जघान । [ हन् + लिट् = तिप् = णल्, यहाँ भी 'न्' का 'त्' होना छोड़ कर पूर्व प्रक्रिया होती है । ]

धातु के लिए जो कार्य कहा जाता है वह धातु से प्रत्यय के परे रहते—समझा जाता है । अतः यहाँ ( 'त' ) नहीं होता है—वार्त्रघ्नम् इतरत् । [ वृत्रं हतवान्—इस अर्थ में 'ब्रह्मभ्रूणवृत्रेषु क्विप्' से क्विप् प्रत्यय करने पर वृत्रहन् = वृत्रहा बनता है । तब 'तस्येदम्' से अण् और 'षपूर्वहनधृतराज्ञामणि' सूत्र से अलोप, आदि ऋ की वृद्धि रपर, कुत्व आदि करने पर—वार्त्रघ्नम् बनता है । यहाँ धातु से प्रत्यय नहीं किया जाता है अपि तु प्रातिपदिक से । अतः प्रस्तुत सूत्र से 'न' का 'त' नहीं होता है । ] ॥ ३२ ॥

आकारान्त अङ्ग को चिण् तथा ञित्, णित् कृत् प्रत्यय परे रहते 'युक्' आगम होता है । चिण् परे उदा० अदायि, अधायि । [ 'दा' और 'धा' धातु से भाव, कर्म में लुङ् च्लि का चिण् आदि कार्य होते हैं—अदा + इ, अधा + इ, युक् = य् आगम में रूप बनते हैं । ] कृत् प्रत्यय में उदा० दायः, दायकः । धायः, धायकः । [ दा + घञ्, धा + घञ = अ, दा + ण्वुल्, धा + ण्वुल् = अक् में युक् = य् आगम होने पर रूप बनते हैं । ]

चिण्कृतोरिति किम् ? ददौ, दधौ । चौडिः, बालाकिः—बाह्वादिस्वादिञ् (४।१।९६) । ज्ञा देवता अस्य ज्ञः ॥

## ३४३१. नोदात्तोपदेशस्य मान्तस्यानाचमेः ॥ ३४ ॥ (२७६३)

उदात्तोपदेशस्य मान्तस्याङ्गस्याचमिवर्जितस्य चिणि कृति च ञ्णिति यदुक्तं तन्न भवति । किञ्चोक्तम् ? 'अत उपधायाः' (७।२।११६) इति वृद्धिः । अशमि, अतमि, अदमि । कृति खल्वपि—शमकः, तमकः, दमकः । शमः, तमः, दमः ।

उदात्तोपदेशस्येति किम् ? यामकः, रामकः ।

**न्यासः**

ददौ, दधाविति । 'आत औ णलः' इत्यौत्वम् । चौडिः, बालाकिरिति । चूडाबलाकाभ्यां बाह्वादीञ् । अचामादेरित्यनुवृत्तेरत्र न भविष्यतीति यो मन्येत, तं प्रत्युदाहरणान्तरमाह—ज्ञा देवतास्येति ज्ञः । 'सास्य देवता' इत्यण् । अत्र व्यपदेशिवद्भावेनाचामादिराकारो भवति । अत्रासति चिण्कृतद्ग्रहणे सत्यामप्यचामादेरित्यनुवृत्तौ स्यादेवात्र युक् । 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इत्येतच्च प्रत्ययविधिविषय एव ह्युक्तम् ॥ ३३ ॥

नोदात्तोपदेशस्य मान्तस्यानाचमेः ॥ अशमि, अतमि, अदमीति । 'शमु उपशमे', 'तमु काङ्क्षायाम्', 'दमु उपशमे', लुङादि पूर्ववत् । शमक इत्यादौ ण्वुल् । शम इत्यादौ घञ् । यामकः, रामक इति । 'यम उपरमे', 'रमु क्रीडायाम्' । अनुदात्तोपदेशावेतौ ।

अथ कथमुद्यमोपरमौ ? इत्याह—उद्यमोपरमावित्यादि । अनुगन्तव्यावित्यादि । साधुत्वेनेति शेषः । निपातनादेतौ साधुत्वेन वेदितव्यावित्यर्थः ।

**पदमञ्जरी**

भविष्यति ? अत आह—ज्ञा देवता अस्येति । आदिवद्भावादत्र प्रसङ्गः । किञ्च—'अचामादेः' इत्यनुवृत्तौ दरिद्रायक इत्यत्र न स्यात् ॥ ३३ ॥

नोदात्तोपदेशस्य मान्तस्यानाचमेः ॥ उपदेशे उदात्त उदात्तोपदेशः । अस्मादेव निपातनात्साधुः । किञ्चोक्तमिति । सन्निहितस्य कस्यचिदप्रसङ्गात्प्रश्नः । अत उपधाया इति वृद्धिरिति । चिण्कृदुपजीवनार्थं तु न तदनन्तरमिदमारब्धम् ।

निपातनादनुगन्तव्यमिति । येषां तु 'अपाणिनीयो धातुपाठेऽर्थनिर्देशः' इति पक्षः, तेषामत्र 'संज्ञापूर्वको विधिरनित्यः' इति वृद्ध्यभावः । शमी, तमीति । 'शमित्यष्टाभ्यो घिनुण्', अत्र प्रत्ययस्वरे कृते सम्प्रति धातुरनुदात्तः । यामकः, रामक इति । लित्स्वरे कृते भवत्ययं सम्प्रत्युदात्तः ।

**भावबोधिनी**

चिण् तथा कृत् (ञित्, णित्) परे रहते—इसका क्या फल है ? ददौ, दधौ । [ दा + लिट् = तिप् = णल्, धा + णल् । युक् नहीं होता है । ] चौडिः, बालाकिः । 'बाह्वादिभ्यश्च' से इञ् प्रत्यय होता है । ज्ञा देवता अस्य–[इस अर्थ में अण् होता है—] ज्ञः ।[इन प्रत्युदाहरणों में चिण् या कृत् प्रत्यय न होने से युक् नहीं है ।] ॥ ३३॥

उपदेश में उदात्तस्वर वाले मकारान्त अङ्ग को चिण् और ञित्, णित् कृत् परे जो कहा गया है वह नहीं होता है आङ्पूर्वक चम धातु को छोड़ कर अर्थात् उसका होता है । और क्या कहा गया है ? 'उपधा के अकार की वृद्धि होती है' (७।२।११६) यह । यह वृद्धि 'आचम्' को छोड़ कर अन्य मकारान्त की नहीं होती है । उदा० अशमि, अतमि, अदमि । [ शम्, तम्, दम् से लुङ्, च्लि, चिण् में प्राप्त वृद्धि का निषेध होता है । [ ञित्, णित् ] कृत् परे भी नहीं होती है—शमकः, तमकः, दमकः । [ शम् + ण्वुल् = आदि करने पर प्राप्त वृद्धि नहीं होती है ] शमः, तमः, दमः । [ शम् + घञ् आदि में भी प्राप्त वृद्धि नहीं होती है ।

उपदेश में उदात्त—इसका क्या फल है ? यामकः, रामकः । [ यम् तथा रम् अनुदात्तोपदेश हैं । अतः निषेध नहीं होता है । ]

**कथमुद्यमोपरमौ ? 'अड उद्यमे' ( धा० पा० ३५८ ), 'यम उपरमे' ( धा० पा० ९८५ )—इति निपातनादनुगन्तव्यौ। उपदेशग्रहणं किम् ? शमी, दमी, तमीत्यत्र यथा स्यात्; इह मा भूत्—यामकः, रामक इति। मान्तस्येति किम् ? चारकः, पाठकः। अनाचमेरिति किम् ? आचामकः।**

**❀ अनाचमिकमिवमीनामिति वक्तव्यम् ❀। आचामः। कामः। वामः। आम इति—चौरादिकस्य णिचि वृद्धौ सत्यां भवति। तत्र हि मित्त्वं नास्ति, 'नान्ये मितोऽहेतौ' ( ग० सू० १७७ ) इति।**

**न्यासः**

**शमी, तमी, दमीत्यत्र यथा स्यादिति।** शमादिभ्यः 'शमित्यष्टाभ्यो घिनुण्'। असत्युपदेशग्रहणेऽत्र न स्यात्; प्रत्ययस्वरे कृते धातोरनुदात्तत्वात्। उपदेशग्रहणे तु सति तेनाद्यवस्था लक्ष्यत इति यद्यप्युत्तरकालमनुदात्तत्वं भवति, तथापि भवत्येव प्रतिषेधः; उपदेशावस्थायामुदात्तत्वात्। **इहेत्यादि।** यद्युपदेशग्रहणं न क्रियते, ततो यामकः, रामक इत्यत्रापि स्यात्; 'लिति' इति प्रत्ययात् पूर्वस्योदात्तत्वविधानात्। उपदेशग्रहणे तु न भवति; उपदेशेऽनुदात्तत्वात्।

**अनाचमिकमिवमीनामिति वक्तव्यमिति।** 'कमु कान्तौ', 'टुवम उद्गिरणे', 'चमु छमु जमु झमु अदने'—एषां त्रयाणां धातूनां प्रतिषेधो न भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—चमेस्तावदनाचमेरिति सूत्र एवोपादानात् प्रतिषेधो न भवतीति। इतरयोस्तु 'वामदेवाड् ड्यड्ड्यौ', 'धनहिरण्यात् कामे' इति निपातनादिति। अथ कथमामः ? इत्याह—**आम इति चौरादिकस्येत्यादि।** 'अम रोगे' इत्यस्य चौरादिकस्य णिचि वृद्धौ, 'एरच्' इत्यचि कृते—आम इति। न हि णिच्यपि वृद्धेः प्रतिषेधो भवति; तस्याचिण्कृत्त्वात्। अकृत्त्वं तु पूर्ववद्वेदितव्यम्। ननु 'जनिजॄष्क्नसुरञ्जोऽमन्ताश्च' इति मित्संज्ञायां सत्याम् 'मितां ह्रस्वः' इत्यनेनेह णौ भवितव्यम् ? इत्यत आह—**अत्र हि मित्त्वं नास्तीति।** कथं नास्ति ? इत्याह—**ना य**

**पदमञ्जरी**

'अनाचमेः' इत्यल्पमिदमुच्यते ? इत्याह—**अनाचमिकमिवमीनामिति वक्तव्यमिति।** 'टुवम उद्गिरणे', 'कमु कान्तौ', 'चमु अदने', तत्र सूत्रे आङ्पूर्वस्य पर्युदासः, वाक्ये तु केवलस्य। **वृत्तौ** तु वाक्योदाहरणमप्याङ्पूर्वस्यैव दर्शितम्, नात्राप्तैर्निरणायि। **काम इति।** कमेः 'आयादय आर्धधातुके वा' इति णिङभावपक्षे घञ्, वृद्धिः। **णिचि वृद्धौ सत्यामिति।** न हि तत्रायं प्रतिषेधः, णिचोऽकृत्त्वात्। ननु च सत्यामपि वृद्धौ 'जनीजॄष्क्नसुरञ्जोऽमन्ताश्च' इति मित्त्वे सति 'मितां ह्रस्वः' इति ह्रस्वेन भाव्यम् ? अत आह—**तत्र हीति।**

**भावबोधिनी**

तो फिर 'उद्यमः, उपरमः, ये कैसे बनते हैं ? 'अड उद्यमे' ( धा० पा० ३५८ ) 'यम् उपरमे' ( धा० पा० ९८५ ) ऐसे निपातन से समझना चाहिए। [ अर्थात् पाणिनि आदि विभिन्न आचार्यों ने ऐसे प्रयोग किये हैं उन्हीं के अनुसार निपातन से इन्हें साधु समझ लेना चाहिए। ]

उपदेश—का ग्रहण किस लिए है ? 'शमी, दमी, तमी' इन्हीं [ निषेध ] का जिस प्रकार से हो सके, इनमें न हो सके—यामकः, रामक। [ 'शमित्यष्टाभ्यो घिनुण्' सूत्र से घिनुण् होता है। यदि 'उपदेश' का ग्रहण नहीं रहता तो इनमें नहीं हो पाता, क्योंकि प्रत्यय-स्वर ( उदात्त ) कर देने पर [ 'अनुदात्तं पदमेकवर्जम्' सूत्र से धातु का अनुदात्तत्व हो जाता है। परन्तु 'उपदेश' का ग्रहण होने से आदि = मूल अवस्था का स्वर लिया जाता है। यदि 'उपदेश' का ग्रहण नहीं होता तो 'यम् + ण्वुल्, रम् + ण्वुल् में 'लिति' सूत्र से प्रत्यय से पूर्व का उदात्त हो जाता है, निषेध होने लगता। परन्तु उपदेश में अनुदात्त होने से निषेध नहीं होता है।]

मकारान्त का—इसका क्या फल है ? चारकः, पाठकः। [ चर् तथा पठ—ये मकारान्त नहीं हैं। अतः वृद्धिनिषेध नहीं होता है। ]

❀ आङ्पूर्वक चम, कम और वम का नहीं होता है, ऐसा कहना चाहिए। ❀ उदा० आचामः। कामः। वामः। [ आचम् + घञ्, वृद्धिनिषेध नहीं होता है। ] 'आमः' यह तो चुरादिगणीय णिच् पर रहते वृद्धि होने पर

**'सूर्यविश्रामा भूमिः'—इत्येवमादिकं प्रयोगमन्याय्यमेव मन्यन्ते ।**
**चिण्कृतोरित्येव—शशाम, तताम ॥**

**३४३२. जनिवध्योश्च ॥ ३५ ॥ (२५१२)**

**जनि, वधि—इत्येतयोश्चिणि कृति च ञ्णिति यदुक्तं तन्न भवति । अजनि, जनकः, प्रजनः । अवधि, वधकः, वधः ।**

**वधिः प्रकृत्यन्तरं व्यञ्जनान्तोऽस्ति; तस्यायं प्रतिषेधो विधीयते । 'भक्षकश्चेन्न विद्येत वधकोऽपि न विद्यते'—इति हि प्रयोगो दृश्यते । वधादेशस्यादन्तत्वादेव वृद्धेरभावः ।**

**न्यासः**

**इत्यादि ।** यस्तु भ्वादिः 'अम गत्यादिषु' पठ्यते, अम इत्येवं तस्य भवितव्यम् । अथ कथं विश्राम इति, न चामयसाधुरिति शक्यते वक्तुम्, यतः सूर्यविश्रामा भूमिरिति प्रयोगो दृश्यते ? इत्याह—**एवमादिकं प्रयोगमित्यादि** ॥ ३४ ॥

**जनिवध्योश्च ॥** वधिरयं हनादेशोऽस्ति, तस्येदं ग्रहणमिति कस्यचिदाशङ्का स्यात्, अतस्तां निराकर्तुमाह—**वधिः प्रकृत्यन्तरमित्यादि ।** प्रकृत्यन्तरमपि भवन् यद्यकारान्तः स्यात्, अनर्थकः प्रतिषेधः स्यात्,

**पदमञ्जरी**

**नान्ये मितोऽहेताविताीति ।** अहेतौ चुरादिणिच्यनुक्रान्तेभ्योऽन्येऽमन्तादयो मितो न भवन्तीत्यर्थः । **अन्याय्यमेव मन्यन्त इति ।** 'विश्रान्तिभूमिः' इति पठितव्यमित्यर्थः । तेन 'विश्रामं लभतामिदं च शिथिलज्याबन्धमस्मद्धनुः'[1] इति व्याख्यातम् ॥ ३४ ॥

**जनिवध्योश्च ॥ वधिः प्रकृत्यन्तरमिति ।** 'वध हिंसायाम्' इति भूवादौ पाठात् । **भक्षकश्चेदिति ।** योऽपि मांसं क्रीत्वा भक्षयति, तस्यापि हिंसानुषङ्गोऽस्तीत्येतदनेन प्रतिपाद्यते । यथाह मनुः—

अनुमन्ता विशसिता निहन्ता क्रयविक्रयी ।
संस्कर्त्ता चोपहर्त्ता च खादकश्चेति घातकाः ॥ (म० स्मृ० ५.५१) इति ।

**भावबोधिनी**

होता है । इसमें मित्त्व नहीं हैं—'अहेतु में चुरादिणिच् में अनुक्रान्त से भिन्न अमन्त आदि मित् नहीं होते हैं । [ अतः 'मितां ह्रस्वः' से ह्रस्व न होने से पुनः वृद्धि का प्रसङ्ग और निषेध दोनों नहीं होते हैं । ]

'सूर्यविश्रामा भूमिः' इत्यादि [ वृद्धिघटित ] प्रयोग को अशुद्ध ही मानते हैं । [ वास्तव में 'चान्द्र व्याकरण के 'विश्रामो वा' वचन से वैकल्पिक वृद्धि सम्भव है । इसी लिए कालिदास ने भी 'विश्रामं लभतामिदं च शिथिलज्याबन्धमेतद्धनुः ।' ( अभिज्ञानशाकु० २.६ ) प्रयोग किये हैं । ]

चिण् तथा ( ञित् णित् ) कृत् में ही [ निषेध होता है ]—शशाम । तताम । [ यहाँ लिट् = तिप् = णल् में निषेध नहीं होता है । ] ॥ ३४ ॥

जन् तथा वध—इनको णिच् परे तथा ञित् णित् कृत् परे जो ( वृद्धि ) कहा गया है वह नहीं होता है । उदा० अजनि । [ जन + लुङ्, च्लि का चिण् आदि होने पर प्राप्त उपधावृद्धि का निषेध हो जाता है । ] जनकः । [ जन् + ण्वुल् = अक ] प्रजनः । [ प्रजन् + घञ् इनमें भी वृद्धिनिषेध हो जाता है । ] अवधि । वधकः । वधः । [ यहाँ भी पूर्ववत् प्रक्रिया समझनी चाहिए । ] 'वध' यह दूसरी ही व्यञ्जनान्त प्रकृति है, यह उसी का प्रतिषेध किया जाता है क्योंकि 'भक्षक यदि नहीं है तो 'वधक' भी नहीं होता है—ऐसा प्रयोग देखा जाता है । [ हन् के ]

---

१. अभि० शा० २.६ ।

चिण्कृतोरित्येव—'जजान गर्भं महिमानमिन्द्रम्' ॥ (अ० वे० ३।१०।१२)

**३४३३. अर्त्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ ॥ ३६ ॥ (२५७०)**

सर्वं निवृत्तम्, 'अङ्गस्य' इति वर्त्तते। अर्ति, ह्री, व्ली, री, क्नूयी, क्ष्मायी—इत्येतेषामङ्गानामाकारान्तानां च पुगागमो भवति णौ परतः। अर्ति—अर्पयति। ह्री—ह्रेपयति। व्ली—व्लेपयति। री—रेपयति। क्नूयी—क्नोपयति। क्ष्मायी—क्ष्मापयति। आकारान्तानाम्—दापयति, धापयति।

अर्तीति 'ऋ गतिप्रापणयोः' ( धा० पा० ९३७ ), 'ऋ गतौ' ( धा० पा० १०९९ )—इति द्वयोरपि धात्वोर्ग्रहणम्।

**न्यासः**

धोपधत्वादेव न वृद्धिर्भवतीति मत्वाह—**व्यञ्जनान्तस्येत्यादि**। कुतः पुनर्वधिः प्रकृत्यन्तरमस्तीत्येतदवसितम् ? इत्याह—**भक्षकश्चेत्यादि**। अथ हनादेशस्यैव वधेरयं प्रतिषेधः कस्मान्न भवति ? इत्याह—**हनादेशस्येत्यादि**।

**अजान गर्भमित्यादि**। छान्दसः प्रयोगः ॥ ३५ ॥

**अर्त्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुग्णौ ॥ अर्त्तीति** श्तिपा निर्देशः। ऋकारान्तस्य ग्रहणं मा विज्ञायीति, यथा—'ऋदृशोऽङि गुणः' इति। **अर्पयतीति**। हेतुमण्णिच्, 'पुगन्तलघूपधस्य' इति गुणः। **ह्रेपयति, व्लेपयतीति**। 'ह्री लज्जायाम्'। 'व्ली वरणे'। **क्नोपयति, क्ष्मापयतीति**। 'क्नूयी शब्दे', 'क्ष्मायी विधूनने'। 'लोपो व्योर्वलि' इति यकारलोपः। **द्वयोरपि धात्वोर्ग्रहणमिति**। विशेषाभावात्।

रीत्येतस्यापि 'री गतिशोषणयोः', 'रीङ् श्रवणे'—इति द्वयोरपि ग्रहणमित्यपेक्ष्यते। ननु च 'निरनुबन्धकग्रहणे न सानुबन्धकस्य' इति रीङो ग्रहणं न प्राप्नोति ? नैष दोषः; अत्र ह्यल्पाच्तरत्वाद् ह्रीव्ल्यातामन्यतमस्य पूर्वनिपाते कर्त्तव्ये 'अल्पाच्तरम्' इत्येतदनपेक्ष्यार्त्तिशब्दस्य पूर्वं निपातं कुर्वताऽन्यदपि किञ्चिदिह शास्त्रवचनं नापेक्ष्यत इत्येतत् सूचितम्। तेन निरनुबन्धकपरिभाषा नापेक्ष्यत इति रीङोऽपि ग्रहणं भवति।

**पदमञ्जरी**

**हनादेशस्येति**। अवधि भवता दस्युरित्यत्र। **जजान गर्भमिति**। व्यत्ययेन परस्मैपदम्, अन्तर्भावितण्यर्थत्वात् सकर्मकत्वम् ॥ ३५ ॥

**अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ् णौ ॥** 'व्लीङ् वरणे', 'क्नूयी शब्दे', 'क्ष्मायी विधूनने'। उदाहरणेषु पुगन्तलक्षणो गुणः। **द्वयोरपि ग्रहणमिति**। विशेषानुपादानात्।

**री इत्यपीति**। यद्यपि प्रस्रवणार्थः सानुबन्धकः, तथापि तस्यापि ग्रहणमाचार्यैः स्मर्यत इति भावः।

**भावबोधिनी**

'वध' आदेश के तो अदन्त होने से [ लुप्त अकार के स्थानिवद्भाव से ] ही वृद्धि का अभाव ( निषेध ) हो जाता है।

चिण् तथा ( ञित्, णित् ) कृत प्रत्यय परे ही [निषेध होता है]—जजान गर्भं महिमानमिन्द्रम् ] [ जन् + लिट्, तिप् = णल् में निषेध न होकर उपधावृद्धि होती ही है। ] ॥ ३५ ॥

सभी निवृत्त हो जाता है, केवल 'अङ्गस्य' इसकी अनुवृत्ति होती है। अर्ति ( ऋ ), ह्री, ब्ली, री, क्नूयी, क्ष्मायी—इन अङ्गसंज्ञकों को तथा आकारान्त अङ्गों को 'णि' परे रहते पुक् आगम होता है। उदा० ऋ—अर्पयति। [ ऋ + णिच् = इ, पुक् = प् आगम, गुण रपर—अर्प् + इ = अर्पि + लट् का रूप है। ] ह्री—ह्रेपयति। [ ह्री + णिच्, पुक्, गुण ] ब्ली—ब्लेपयति [ ब्ली + णिच्, पुक् ] री—रेपयति। क्नूयी—क्नोपयति। क्ष्मायी—क्ष्मापयति[क्नूय्+णिच्, क्ष्माय्+णिच्, मध्य में पुक्=प् कर देने पर क्नूय् प् इ, क्ष्माय् प् इ—में 'लोपो 'व्योर्वलि' सूत्र से यलोप हो जाता है। ] आकारान्त के उदा० दापयति। धापयति। [ दा + णिच्, धा+णिच्, पुक् आगम होता है। ]

'अर्ति' यह 'ऋ गति-प्रापण अर्थों में है' और 'ऋ गति अर्थ में है'—इन दोनों धातुओं का ग्रहण है।

रीत्यपि—'री गतिरेषणयोः ( धा० पा० १५०१ )', 'रीङ् श्रवणे' ( धा० पा० ११३९ ) इति।
पुकः पूर्वान्तकरणम्—अदीदपदित्यत्रोपधाह्रस्वो यथा स्यादिति ॥

**३४३४. शाच्छासाह्वाव्यावेपां युक् ॥ ३७ ॥ (२५८५)**

**शा, छा, सा, ह्वा, व्या, वे, पा—इत्येतेषामङ्गानां युगागमो भवति णौ परतः। शा—निशाययति।**

**न्यासः**

अथ किमर्थं पुनः पुक् पूर्वान्तः क्रियते, न परादिरेव पुड् विधीयताम्; पुटि सति गुणविधौ पुगन्तग्रहणं न कर्त्तव्यं भवति, "सार्वधातुकार्धधातुकयोः" इत्येवं सिद्धत्वात् पुटि; अवश्यं पुड्ग्रहणं कर्त्तव्यम्, अन्यथा हि 'अचो ञ्णिति' इति वृद्धि- स्यादिति चेत्? नैतदस्ति; नाप्राप्ते णिचो वृद्धिं प्रति निमित्तत्वे पुटं प्रत्यागमिस्त्वमुच्यत इत्युत्तरस्य बाधकं भविष्यतीति नास्ति वृद्धेः प्रसङ्गः। अयं तर्हि परादौ दोषः—दाप्यते, धाप्यत इति—अत्र णेर्लोपेनापहृतत्वात् पकारस्य श्रवणं न स्यादिति? एषोऽप्यदोषः; न हि णिलोपः सर्वापहारी भवति, येन णेर्निवृत्तौ पुडागमोऽपि निवर्तेत। प्रत्ययलक्षणञ्चास्तीति निवृत्तेऽपि णौ पुटः श्रवणं भविष्यतीत्याह—**पुकः पूर्वान्तकरणमित्यादि**। दापयतेर्लुङ्, च्लिः, तस्य 'णिश्रिद्रुस्रुभ्यः कर्त्तरि' इति चङि णिलोपः, 'णौ चङ्युपधाया ह्रस्वः' इति ह्रस्वत्वम्, 'चङि' इति द्विर्वचनम्, 'सन्वल्लघुनि चङ्परे' इतीत्त्वम्, 'दीर्घो लघोः' इति दीर्घत्वम्—**अदीदपत्**। अत्र यदि पुट् क्रियते तदा ह्रस्वत्वं न स्यात्; अनुपधत्वात्। पुकि तु सति भवति। अतो ह्रस्वार्थं पुकः पूर्वान्तकरणम् ॥ ३६ ॥

**शाच्छासाह्वाव्यावेपां युक्** ॥ 'शो तनूकरणे', 'छो छेदने', 'षोऽन्तकर्मणि', 'ह्वेञ् स्पर्धायाम्', 'व्येञ् संवरणे', 'वेञ् तन्तुसन्ताने'; 'पा पाने', 'पै ओवै शोषणे'—इति द्वयोरपि। एषामाकारान्तत्वात् पुकि प्राप्ते युको विधानम्। **निशाययतीत्यादि**। 'आदेच उपदेशेऽशिति' इत्यात्त्वम्। **पाग्रहणे 'पै ओवै शोषणे'**

**पदमञ्जरी**

पूर्वान्तकरणं न यादृच्छिकम्, किं तर्हि? विवक्षितमित्याह—**पुकः पूर्वान्तकरणमिति। अदीदपदिति।** यदि पुनर्णेः पुट् स्यात्, तस्य णिग्रहणेन ग्रहणाण्णौ परतो यदङ्गं न तस्याकार उपधेति ह्रस्वो न स्यात्। दोषोपलक्षणं चैतत्, दाप्यते इत्यादौ 'णेरनिटि' इति णेर्लोपेनापहृतत्वात्पकारस्य श्रवणं न स्यात्? नैष दोषः; न हि लोपः सर्वापहारी, 'अलोऽन्त्यस्य' इत्यन्त्यस्य लोपः। इह तर्हि क्नोपयतीतीडागमः प्राप्नोति।

लाभोऽपि कश्चिन्नैवात्र परादौ सति दृश्यते।
पुगन्तस्य गुणो वाच्यो वृद्धिः स्यादन्यथा यतः ॥

यत्किलेदमुच्यते—पुटि सति गुणविधौ पुगन्तग्रहणं न कर्त्तव्यम्, 'सार्वधाकार्धधातुकयोः' इत्येव सिद्धत्वादिति, तदप्याशावादमात्रम्; यतः परादावप्यवश्यं पुटि गुणो विधेयः, अन्यथा 'अचो ञ्णिति' इति वृद्धिप्रसङ्गात् ॥ ३६ ॥

**शाच्छासाह्वाव्यावेपां युक्** ॥ **पाग्रहणे इत्यादि**। इष्टिरेवेयम्; लाक्षणिकत्वात् पारूपस्य।

**लुगागमस्त्विति**। यद्यपि पालयतीति रूपम् 'पाल रक्षणे' इत्यस्यैव चुरादिणिजन्तस्य पुनर्हेतुमण्णिचि

**भावबोधिनी**

'री'—यह भी 'री गति तथा रेषण = वृकशब्द—अर्थों में है' तथा 'रीङ् सुनना अर्थ में है।' [ दोनों का ग्रहण है। ]

पुक् को पूर्व का अन्त बनाना—'अदीदपत्' यहाँ उपधाह्रस्व जिस प्रकार हो सके, इसके लिये है। [ दा + णिच् में पूर्व का अवयव करने के लिये कित् है। अतः दाप् इतना अङ्ग बनता है। दाप् + णिच् + लुङ् में च्लि का चङ् करने पर णिलोप के बाद 'णौ चङ्युपधायाः ह्रस्वः' से उपधा आ का ह्रस्व होने से 'दप्' का द्वित्व होता है। यदि पुट् किया जाता तो वह णिच् का अवयव होता, उपधा 'आ' का ह्रस्व नहीं हो पाता। ] ॥ ३६ ॥

शा, छा, सा, ह्वा, व्या, वे पा ( = शो, छो, षो, ह्वेञ्, व्येञ्, वेञ्, पा ) इनके अङ्गसंज्ञक शब्द को युक् का आगम 'णि' परे होता है। उदा० शा—शाययति। [ 'शो तनूकरण अर्थ में है, णिच् परे 'आदेच उप-

छा—अवच्छाययति । सा—अवसाययति । ह्वा—ह्वाययति । व्या—संव्याययति । वे—वाययति । पा—पाययति ।

पाग्रहणे 'पै ओवै शोषणे' ( धा० पा० ९२१, ९२२ )—इत्यस्यापीह ग्रहणमिच्छन्ति । 'पा रक्षणे' ( धा० पा० १०५७ ) इत्यस्य लुग्विकरणत्वान्न भवति ।

❀ लुगागमस्तु तस्य वक्तव्यः ❀ ( म० भा० ) । पालयति ।

❀ धूञ्प्रीञोर्नुग्वक्तव्यः ❀ ( म० भा० ) । धूनयति । प्रीणयति ।

एतेऽपि पूर्वान्ता एव क्रियन्ते, तेन न्यशीशयत्, अपीपलत्, अदूधुनत्, अपिप्रिणत्—इत्युपधाह्रस्वं भवति ।

**न्यास**

इत्येतस्यापि ग्रहणमिच्छन्तीति । यत्र ह्यस्य ग्रहणं नेष्यते, तत्र पिबतेरित्याह, यथा—'लोपः पिबतेरीच्च' इति भावः । अथ 'पा रक्षणे' इत्यस्यापि ग्रहणं कस्मान्न भवति ? इत्याह—पा रक्षण इत्यस्य त्वित्यादि ।

लुगागमस्तु तस्य वक्तव्य इति । ननु च 'पाल रक्षणे' इति चुरादौ पठ्यते, तस्य पालयतीति भविष्यति ? सत्यमेतत्; पुकस्तु निवृत्त्यर्थो लुगागम उपसंख्यायते, अन्यथा हि पातेः पाययतीति स्यात् ।

धूञ्प्रीञोर्नुग्वक्तव्य इति । 'धूञ् कम्पने', 'प्रीञ् तर्पणे' इति—एतयोर्नुग् वक्तव्यः, व्याख्येय इत्यर्थः । तत्रेदं व्याख्यानम्—'धूञ् विधूनने', 'तृप प्रीणने' इति निपातनादेतयोर्लुग्भविष्यतीति ।

एतेऽपीति । युगादयः । निशाययतीत्यादिषु 'आदेच उपदेशेऽशिति' इत्यात्वम् । न्यशीशयदित्यादीनि अदीदपदित्यनेन तुल्यानि, पूर्ववल्लुङादीनि विधाय व्युत्पाद्यानि । अदूधुनदिति । अनकारान्तत्वादिह सन्वद्भावोऽभ्यासस्य नास्तीति अपिप्रिणदित्यत्राप्यलघुत्वाद् दीर्घत्वं नास्ति ।

**पदमञ्जरी**

सिद्धम्, तथापि पातेः पुकि पापयति, युकि तु पाययति इति मा भूदिति लुग्वचनम् ।

धूञ्प्रीञोरिति । 'धूञ् कम्पने', 'प्रीञ् तर्पणे', ञान्तस्यानुकरणम्; तेन न दैवादिकस्य नुग्भवति ।

एतेऽपीति । एते युगादयः, वक्ष्यमाणाश्च जुगादयः । कृतात्वानां ग्रहणमिति । आकारान्तानां

**भावबोधिनी**

देशेऽशिति' सूत्र से एच् का आत्व करने पर आकारान्त मानकर पुक् प्राप्त है, इसका बाधकर 'युक्' होता है—शाय् + णिच् = इ = शायि + लट्, तिप्, शप् गुण, अय् आदेश होने पर रूप बनता है । ] छा—छाययति । [ 'छो छेदन अर्थ में है, णिच्, आत्व आदि के बाद युक्, शेष पूर्ववत् । ] अवसाययति । [ षो अन्तकर्म करना अर्थ में है, धात्वादि ष् का स, आत्व आदि ] ह्व-ह्वाययति । [ ह्वेञ् स्पर्धा अर्थ में है । णिच्, आत्व, युक् होता है । ] व्या—संव्याययति । [ व्येञ् संवरण = ढकना अर्थ में है । णिच्, आत्व, युक् ] वा—वाययति । [ वेञ् तन्तु-सन्तान = बुनना अर्थ में है । णिच्, आत्व युक् ] पा—पापयति । [ पा पीना अर्थ में तथा 'पै ओ वै शोषण अर्थ में ( भ्वा० धा० ९२१, २२ ) है, आत्व करने पर पा + णिच् आत्व—पा + णिच्—दोनों में युक् होता है । यही लिख रहे हैं— ]

'पा' के ग्रहण में 'पै ओवै शोषणे ( धा० पा० ) इसका भी ग्रहण चाहते है । 'रक्षणार्थक पा' इसका लुग्विकरणवाली ( अदादिगणीय ) होने से ग्रहण नहीं होता है ।

❀ इस रक्षणार्थक 'पा' को लुक् का आगम कहना चाहिए । ❀ उदा० पालयति । [ यद्यपि 'पाल रक्षणे' इस चुरादिगणीय से स्वार्थिक णिच् में पालयति रूप बनता है तथा 'पा रक्षणे' से पुक् करने पर—'पापयति' और युक् करने पर—'पाययति' रूप न होने लग जाय । इसके लिये 'युक्' आगम करना आवश्यक है । ]

❀ धूञ् तथा प्रीञ् से नुक् आगम कहना चाहिए । ❀ उदा० धूनयति । प्रीणयति [ धूञ् कम्पन अर्थ वाली और प्रीञ् तर्पण = सन्तुष्ट करना अर्थवाली है । णिच् करने पर नुक् = न् आगम—धू + न् + इ = धूनि, प्री—न् + इ, णत्व प्रीणि + लट् आदि होता है । ]

**शाच्छासाह्वाव्यावेपां कृतात्वानां ग्रहणं पुकः प्राप्तिमाख्यातुम्। किमेतस्याख्याने प्रयोजनम्? एतस्मिन् प्रकरणे लक्षणप्रतिपदोक्तपरिभाषा ( व्या० पा० १३ ) नास्तीत्युपदिश्यते। तेनाध्यापयति, जापयति—इत्येवमादि सिद्धं भवति॥**

**३४३३. वो विधूनने जुक्॥ ३८॥ ( २५९० )**

**'वा'—इत्येतस्य विधूननेऽर्थे वर्तमानस्य जुगागमो भवति णौ परतः। पक्षेणोपवाजयति।**

**विधूनन इति किम्? आवापयति केशान्।**

**न्यास।**

ननु च शाच्छासाह्वाव्याः—इत्येत एजन्ता गणे पठ्यन्ते, तत् कथमेषां कृतात्वानां ग्रहणम्? **शाह्वेत्यादि।** कथं पुनः कृतात्वानां ग्रहणेन पुकः प्राप्तिराख्यायते? अकारान्तानां पुग्विधानात्। **अध्यापयतीत्यादिना** ज्ञापकस्य प्रयोजनं दर्शयति। अध्यापयतीति 'क्रीङ्जीनां णौ' इत्यात्वम्। आदिशब्देन जापयतीत्यादीनां ग्रहणम्। यदि पुकः प्राप्तिमाख्यातुं शाप्रभृतीनां कृतात्वानां ग्रहणं कृतम्, तदा वेञोऽपि कृतात्वस्यैव ग्रहणं युक्तम्? नैवं शक्यम्, वेत्युच्यमाने 'पै ओवै शोषणे'—इत्यस्यापि ग्रहणं स्यात्। तस्मादकृतात्त्वस्यैव वेञो ग्रहणं युक्तम्॥ ३७॥

**वो विधूनने जुक्॥** पुकि प्राप्ते जुग्विधीयते। **वा इत्येतस्येति।** 'वा गतिगन्धनयोः' इत्येतस्य। **विधूननेऽर्थ इति।** कम्पन इत्यर्थः।

**पदमञ्जरी**

युकं विधाय तदनन्तरमाकारान्तेषु गृह्यमाणेषु युकः प्राप्तिराख्याता भवतीति भावः। **एवमादीति।** आदिशब्देन—क्रापयति, निजापयति, विलापयते, मुण्डो विस्मापयते, प्रियमाचष्टे प्रापयतीत्यादेर्ग्रहणम्॥ ३७॥

**वो विधूनने जुक्॥** 'विधूनने' इत्ययमेव निर्देशो लिङ्गम्—धूञो णौ नुग्भवतीति। **वा इत्येतस्येति।**

**भावबोधिनी**

ये ( युक्, लुक्, नुक् ) भी पूर्व के अन्त अवयव किये जाते है। इस कारण—न्यशीशयत्, अपीपलत्—इनमें उपधा का ह्रस्व होता है। [ शो = शा + णिच् में युक् = य् पूर्व ( धातु ) का ही अवयव होता है—शाय् इ + लुङ् में, च्लि का चङ्, "णौ चङ्युपधायाः ह्रस्वः" से उपधाह्रस्व—शय् + इ + त, द्वित्व, अभ्यासकार्य, सन्वद्भाव, अभ्यास का 'इ' 'सन्यतः' सूत्र से और 'दीर्घो लघोः' सूत्र से दीर्घ—शीशय् + इ + अ + त, णिलोप, अट् आगम तथा नि उपसर्ग नि + अशीशय् अ त् यण् होने पर रूप बनता है। 'अदूधुनत्' में 'दा' ह्रस्व अकारान्त नहीं है। अतः सन्वद्भाव नहीं होने से ह्रस्व तथा इत्व आदि नहीं होता है। 'अपिप्रिणत्' में 'प्री' धातु दीर्घ है द्वित्व अभ्यास आदि कार्य के बाद ही ह्रस्व कर देने पर संयोग से पूर्व होने से दीर्घ ही रहती है। अतः सन्वद्भाव न होने से दीर्घ आदेश भी नहीं होता है। ]

'शा, च्छा, सा, ह्वा, व्या, वे, पा—इन किये गये आत्व वाली धातुओं का ग्रहण युक् आगम की प्राप्ति को कहने के लिये है। इसके कथन में क्या प्रयोजन है? इस प्रकरण में 'लक्षण और प्रतिपदोक्त में प्रतिपदोक्त का ही ग्रहण होता है" इस परिभाषा की प्रवृत्ति नहीं होती है—ऐसा उपदेश है। इसलिये अर्थात् उपदेश में आकारान्त या किसी आदेश से की गई आकारन्त दोनों का ग्रहण होता है-इस ) कारण—अध्यापयति, जापयति—आदि सिद्ध होते हैं। 'क्रीङ्जीनां णौ' सूत्र से आत्व करने पर अधि + आ + णिच् में आकारान्त मानकर पुक्—अधि + आप् इ = अध्यापि + लट् आदि होते हीं परिभाषा लगने पर इस प्रकार की धातुओं का ग्रहण नहीं होता और इष्ट रूप नहीं बन पाते। ]॥ ३७॥

विधूनन ( कंपाना ) अर्थ में वर्त्तमान 'वा' धातु को णि परे रहते जुक् = ज् आगम होता है। उदा० पक्षेण उपवाजयति। [ 'वा गतिगन्धनयोः' धातु से णिच् करने पर 'जुक् = ज् आगम—वाज् इ + लट् आदि ]

विधूनन = कम्पाना अर्थ में—इसका क्या फल है? आवापयति केशान्। [ यहाँ जुक् नहीं होता है। ]

किमर्थं सूत्रम्, 'वज गतौ' ( धा० पा० २५२ ) ण्यन्तस्य सिद्धत्वात् ? वातेः पुग्मा भूदित्येवमर्थम् । 'पै ओवै शोषणे' ( धा० पा० ९२१, ९२२ ) इत्यस्यैतद्रूपम् ॥

**३४३६. लीलोर्नुग्लुकावन्यतरस्यां स्नेहविपातने ॥ ३९ ॥ ( २५९१ )**

ली, ला—इत्येतयोरङ्गयोरन्यतरस्यां नुक्, लुक्—इत्येतावागमौ भवतो णौ परतः स्नेहविपातनेऽर्थे । घृतं विलाययति । विलीनयति घृतम् । विलालयति । विलापयति ।

ली + ई इतीकारः प्रश्लिष्यते, तत ईकारान्तस्यैव लुग्भवति, न तु कृतात्वस्य 'विभाषा लीयतेः' ( ६।१।५१ ) इति ।

**न्यासः**

ननु 'वज व्रज गतौ' इत्यस्य धातोर्ण्यन्तस्योपवाजयतीति सिद्धम्, तत् किमर्थमेतत् ? वातेः पुग्मा भूदित्येवमर्थं जुको विधानम् । **पै ओवै शोषण इत्येतस्यैतद्रूपमिति** । ननु च लाक्षणिकस्याकारान्तत्वम्, अतो जुका न भवितव्यम् ? नैतदस्ति; इदानीमेव ह्युक्तम्—एतस्मिन् प्रकरणे लक्षणप्रतिपदोक्तपरिभाषा नास्तीति ॥ ३८ ॥

**लीलोर्नुग्लुकावन्यतरस्यां स्नेहविपातने** ॥ **स्नेहविपातनेऽर्थ इति** । किमिदं स्नेहविपातनं नाम ? विगच्छतः स्नेहस्य पातनं व्यापारणम् । तथा हि–पातेर्ण्यन्तस्य भावे ल्युटि कृते विपातनमिति । **विलीनयतीति** । गुणायादेशौ ।

अथ 'विभाषा लीयतेः' इत्यात्वे कृत एकदेशविकृतस्यानन्यत्वाद् विलापयतीत्यत्र कस्मान्नुग् भवति ? इत्याह—**ली इत्यादि** । ली+ई इति ईकारोऽत्र प्रश्लिष्यते—ईकारान्तस्यैव यथा स्यात् कृतात्वस्य न भवति ।

**पदमञ्जरी**

'वा गतिगन्धनयोः' इत्यस्य । 'वज व्रज गतौ' इत्यस्य णिचि रूपे वाजयतीति सिद्धे, वातेः पुग्निवृत्त्यर्थं जुको विधानम् ॥ ३८ ॥

**लीलोर्नुग्लुकावन्यतरस्यां स्नेहविपातने** ॥ स्नेहः = घृतादिः, तस्य विपातनम् = विगच्छतः काठिन्यं त्यजतः प्रयोजकव्यापारः । स्नेहविपातनं काठिन्यमुपगतस्याग्नौ निष्टपनादिना द्रवत्वापादानमित्यर्थः ।

**न तु कृतात्वस्येति** । एकदेशविकृतस्यानन्यत्वात् प्रसङ्गः । **जटाभिरालापयत इति** । 'लियः सम्माननशालीनीकरणयोश्च' इत्यात्मनेपदम् ।

**भावबोधिनी**

यह सूत्र किस लिये बनाया गया है क्योंकि 'वज, व्रज गतौ' इसका ण्यन्त रूप [ बनाने पर वाजयति यह ] सिद्ध ही है ? 'वा' धातु से पुक् न हो—इसके लिये यह सूत्र है । 'पै ओ वै शोषण अर्थ में है' इसका यह रूप है । [ आत्व करने पर पुक् प्राप्त है । वह न हो, जुक् ही हो । ] ॥ ३८ ॥

'ली' तथा 'ला' इन अङ्गसंज्ञकों को विकल्प से क्रमशः नुक् तथा लुक् ये आगम णि प्रत्यय परे रहते स्नेहविपातन अर्थ में होते हैं । उदा० घृतं विलापयति, विलीनयति । [ विपूर्वक ली + णिच्, वैकल्पिक णुक् = न् आगम न होने पर विली + इ + शप् + लट् में गुण अय् आदेश होते हैं । ] विलालयति, विलापयति । [ विला + णिच्, पुक्—विलापि + लट् तिप्, शप् आदि ]

'ली' + ई यह ईकार का प्रश्लेष है, इसलिये ईकारान्त 'ली' को 'लुक्' आगम होता है, आत्व की गई 'ला' से लुक् आगम नहीं होता है—क्योंकि 'विभाषा लीयते' [ ६।१।५१ इससे वैकल्पिक आत्व आदेश होता है । अतः आकारादेश में 'विलापयति' यह पुक् वाला ही रूप होता है । ]

स्नेहविपातन इति किम् ? जतु विलापयति । जटाभिरालापयते ।

'ली' इति लीलीङोर्ग्रहणम् । 'ला' इति लातेः, कृतात्वस्य च लीयतेः ॥

**३४३७. भियो हेतुभये षुक् ॥ ४० ॥ ( २५९५ )**

'भी' इत्येतस्य हेतुभयेऽर्थे षुगागमो भवति णौ परतः । मुण्डो भीषयते । जटिलो भीषयते ।

अत्रापि भी + ई इतीकारप्रश्लेषः कृतात्वस्य षुग्निवृत्त्यर्थः । मुण्डो भापयते—इत्येवं हि तत्र भवति ।

हेतुभय इति किम् ? कुञ्चिकयैनं भाययति । नात्र हेतुः प्रयोजको भयकारणम्, किं तर्हि ? कुञ्चिका ॥

**न्यासः**

ली इति लीलीङोर्ग्रहणमिति । ननु च निरनुबन्धकपरिभाषया 'ली श्लेषणे' इत्येस्यैव क्रैयादिकस्य ग्रहणं युक्तम्, न तु 'लीङ् श्लेषणे' इत्येतस्य दैवादिकस्य ? एवं मन्यते—एक एवायं धातुर्विकरणद्वयार्थमात्मनेपदार्थञ्च द्विरुपदिश्यते । एवञ्च कृत्वा 'लियः सम्माननशालीनीकरणयोश्च' इत्युभाभ्यामात्मनेपदं भवतीति । ला इति लातेः, कृतात्वस्य च लीयतेरिति । ग्रहणमिति प्रकृतेन सम्बन्धः ॥ ३९ ॥

भियो हेतुभये षुक् ॥ हेतुः स्वतन्त्रस्य कर्तुः प्रयोजकः । बिभेत्यस्मादिति भयः,[1] हेतुश्चासौ भयश्चेति हेतुभयः, तस्मिन् हेतुभये । 'ञिभी भये' इत्यस्य वृद्धौ प्राप्तायां 'बिभेतेर्हेतुभये' इत्यात्वे च प्राप्ते पक्षे णौ षुग् विधीयते । मुण्डो भीषयत इति । 'भीस्म्योर्हेतुभये' इत्यात्मनेपदम् ।

अथात्वे कृते मुण्डो भापयत इत्यत्र कस्मान्न भवति ? इत्याह—अत्रापीत्यादि ॥ ४० ॥

**पदमञ्जरी**

ली इति लीलीङोर्ग्रहणमिति । क्रैयादिकदैवादिकयोः । निरनुबन्धकपरिभाषा तु नेष्यते । कृतात्वस्य च लीयतेरिति । ग्रहणमित्यपेक्ष्यते ॥ ३९ ॥

भियो हेतुभये षुक् ॥ हेतुः पारिभाषिकः, भीः = भयम्, हेतोर्भयं हेतुभयम्, तत्र वर्तमानस्य । भीषयत इति । 'भीस्म्योर्हेतुभये' इत्यात्मनेपदम् । भापयत इति । 'बिभेतेर्हेतुभये' इत्यात्वम् ॥ ४०।४१–४२ ॥

**भावबोधिनी**

स्नेहनिपातन ( स्नेह = घृतादि को पिघलाना ) अर्थ में—इसका क्या फल है ? जतु विलापयति । जटाभिः आलापयते । [ यहाँ पिघलाना अर्थ नहीं है । लुक् न होकर पुक् ही होता है । ] 'ली' इससे 'ली श्लेषणे' [ इस क्र्यादि गणीय ] का और 'लीङ् श्लेषणे' [ इस दिवादिगणीय ] का अर्थात् दोनों का ग्रहण होता है । [ णिच् में परस्मैपद वैकल्पिक होने से रूप में कोई भेद नहीं होता है । ] 'ला' इस ( आदान अर्थवाली ) का तथा [ 'विभाषा लीयतेः' से ] किये गये आत्ववाली 'ली' ( = ला ) का ग्रहण होता है ॥ ३९ ॥

'भी' इस अङ्गसंज्ञक को हेतुभय अर्थ में णि परे रहते षुक् आगम होता है । [ 'हेतु' शब्द प्रयोजक कर्ता में पारिभाषिक है । इसी का ग्रहण । हेतु से भय—अर्थ में यह आगम होता है । ] उदा० मुण्डो भीषयते । जटिलो भीषयते । [ ञि भी भय अर्थवाली है । णिच् और षुक् = ष् करने पर भी + ष् + इ + लट् 'भीस्म्योर्हेतुभये' सूत्र से आत्मनेपद होता है । यहाँ 'डरवाना' अर्थ है । ]

इस सूत्र में भी 'भी + ई' ऐसा ईकार का प्रश्लेष किये गये आत्व आदेशवाली ( भा ) को षुक् की निवृत्ति के लिये है । वहाँ 'मुण्डो भापयते' ऐसा ही होता है । [ जब 'बिभेतेर्हेतुभये' (६।१।५५) से आत्व होता है तब षुक् आगम न होकर पुक् ही होता है । ]

हेतु ( = प्रयोजक कर्त्ता ) से भय में—इसका क्या फल है ? कुञ्चिकया एनं भाययति । [ कूँची से इस बालक आदि को डरवाता है । ] यहाँ हेतु = प्रयोजक भय कारण नहीं है । तो फिर [ भय का ] कारण क्या है ? कूँची । [ क्योंकि कूँची देखकर डर जाता है । वह भय की कारण है । अतः षुक् नहीं होता है । ] ॥ ४० ॥

---

१. अपादाने वाच्ये भयशब्दस्यानपुंसकत्वम्, अन्यथा 'भयलिङ्गभगपदानि नपुंसके' इति ( लिङ्गा० सू० ३९ ) क्लीवत्वमस्य स्यात् ।

**३४३८. स्फायो वः ॥ ४१ ॥ ( २५६७ )**

'स्फाय्' इत्येतस्याङ्गस्य वकारादेशो भवति णौ परतः । स्फावयति ॥

**३४३९. शदेरगतौ तः ॥ ४२ ॥ ( २५९८ )**

शदेरङ्गस्यागतावर्थे वर्तमानस्य तकारादेशो भवति णौ परतः । पुष्पाणि शातयति[1] । अगताविति किम् ? गाः शादयति गोपालकः ॥

**३४४०. रुहः पोऽन्यतरस्याम् ॥ ४३ ॥ (२५९९)**

रुहेरङ्गस्यान्यतरस्यां पकारादेशो भवति णौ परतः । व्रीहीन् रोपयति, व्रीहीन् रोहयति ॥

**न्यासः**

**स्फायो वः ॥** स्फावयतीति । 'स्फायी ओप्यायी वृद्धौ' ॥ ४१ ॥

**शदेरगतौ तः ॥** किमर्थं पुनरिदमुच्यते, यावता 'शद्लृ शातने' इत्यस्मादेव निपातनात् तकारो भविष्यतीति ? गतेरन्यत्र यथा स्याद् गतौ मा भूदिति चेत् ? न; शातनशब्दो हि गतेरन्यमर्थमाचष्टे । एवं तर्हि एतज्ज्ञापयति—अबाधकान्यपि निपातनानि भवन्तीति । तेन पुराशब्दात् 'सायश्चिरम्' इत्यादिना विधीयमानयोष्ट्युटयुलोः 'पुराणप्रोक्तेषु' इति निपातनेन तुटो बाधनं न भवतीति । तेन पुरातनमित्यपि सिद्धं भवति ॥ ४२ ॥

**रुहः पोऽन्यतरस्याम् ॥** रोपयतीति । 'रुह जन्मनि प्रादुर्भावे च' । किमर्थं पुनरिदमुच्यते, यावता दिवादिषु 'रुप लुप विमोहने' इति रुपिः पठ्यते, तस्य रोपयतीति भविष्यति, रुहेस्तु रोहयतीति ? जन्मार्थेऽपि रोपयतीति प्रयोगो यथा स्यात्; अन्यथा हि विमोहनार्थस्यैव स्यात् । अनेकार्थत्वाद् धातूनां रुपिर् जन्मनि वर्त्तिष्यत इति चेत् ? नैतदस्ति; अनेकार्था हि धातवः, न तु सर्वार्थाः । न हि रुप्यतीत्युक्ते जन्मार्थः प्रतीयते, किं तर्हि ? विमोहनार्थ एव ॥ ४३ ॥

**पदमञ्जरी**

**रुहः पोऽन्यतरस्याम् ॥** अयं योगः शक्योऽवक्तुम् । कथम् ? 'रुप विमोहने' इति दिवादौ पठ्यते, स ण्यन्तोऽत्र जन्मनि वर्तिष्यते; अनेकार्थत्वाद्धातूनाम्, तस्य रोपयतीति । रुहेस्त्वारोहयतीति ॥ ४३ ॥

**भावबोधिनी**

'स्फाय्' इस अङ्ग का णि परे रहते वकार आदेश होता है । उदा० स्फावयति । [ 'स्फायी' धातु वृद्धि अर्थ में है । णिच् प्रत्यय करने पर 'य्' का 'व्' आदेश हो जाता है—स्फाव् + इ = स्फावि + लट् आदि होता है । ] ॥ ४१ ॥

शद यह अङ्ग जो अगति अर्थ में विद्यमान है, उसका णि परे तकार आदेश होता है । उदा० पुष्पाणि शातयति । [ शद् + णिच्, द् का त्, उपधावृद्धि—शाति + लट् = तिप् आदि होता है । ]

अगति = गतिभिन्न अर्थ में—इसका क्या फल है ? गाः शादयति गोपालकः । [ गोपाल गाय को दौड़ाता है । यहाँ गति अर्थ में तकार आदेश नहीं होता है । ] ॥ ४२ ॥

रुह्—इस अङ्ग का णि परे रहते विकल्प से पकार आदेश होता है । उदा० व्रीहीन् रोपयति । व्रीहीन् रोहयति [ रुह् + णिच्, हकार का विकल्प से पकार—रुप् + णिच्, उपधागुण, रोपि + लट् आदि—रोपयति । पकार न होने पर—रोहयति । ] ॥ ४३ ॥

---

१. 'फलानि शातयति' इति पुस्तकान्तरेऽधिकम् ।

**३४४१. प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः ॥ ४४ ॥ (४६३)**

**प्रत्ययस्थात्ककारात् पूर्वस्याकारस्य इकारादेशो भवति, आपि परतः, स चेदाप्सुपः परो न भवति । जटिलिका । मुण्डिका । कारिका । हारिका । एतिकाश्चरन्ति ।**

**प्रत्ययग्रहणं किम् ? शक्नोतीति शका ।**

**न्यासः**

**प्रत्ययस्थात्कात् पूर्वस्यात इदाप्यसुपः ॥ सुपः परो न भवतीति ।** सुबन्तात्परो न भवतीत्यर्थः । एष चार्थः प्रत्ययग्रहणपरिभाषया वेदितव्यः । **जटिलिका, मुण्डिकेति ।** अज्ञातादिष्वर्थेषु 'प्रागिवात् कः' । **कारिका, हारिकेति ।** ण्वुल् । **एतिकेति ।** एतदः अव्ययसर्वनाम्नाम्' इत्यकच्, त्यदाद्यत्वम्, 'अतो गुणे' पररूपत्वम्, टाप्, अकः सवर्ण-दीर्घत्वम् । **शकेति ।** पचाद्यच्, टाप् ।

**स्थग्रहणं विस्पष्टार्थमिति ।** अत्र यत्र ककारमात्रं हि प्रत्ययस्तत्र मा भूदित्येवमर्थं कस्मान्न भवति ? इत्याह—**ककारमात्रं हीत्यादि ।** कादिति वर्णग्रहणम् । अकारस्तूच्चारणार्थः । न तु केवलः ककारः प्रत्ययोऽस्ति यन्निवृत्त्यर्थं स्थग्रहणं स्यात् । 'कात् प्रत्ययात्' इत्युच्यमाने प्रत्ययावयवे प्रत्ययशब्दो वर्त्तिष्यते, अतोऽन्तरेणापि स्थग्रहणं प्रत्ययस्थस्य ककारस्य ग्रहणं शक्यते विज्ञातुम् । तस्माद् विस्पष्टार्थं स्थग्रहणम् । **मण्डना रमणेति ।** नन्द्यादिभ्यो ल्युः । **पटुका, मृदुका, गोका, नौकेति ।** पूर्ववत् कः । **राका, धाकेति ।** 'रा ला दाने' इत्यस्माद्धातेश्च 'कृदाधारार्चिकलिभ्यः कः' इत्यौणादिकः कप्रत्ययः ।

**पदमञ्जरी**

**प्रत्ययस्थात्कात्पूर्वस्यात इदाप्यसुपः ॥** अत्र यदि **कादित्यत्राकारो** विवक्षितः स्यात्, एतिकाश्चरन्तीप्यत्रेत्वं न स्याद् । एतदोऽकचि जसि त्यदाद्यत्वे टापि च रूपम् । **अकचो ह्यन्त्योऽकार उच्चारणार्थो न श्रवणार्थः;** भिन्दकि, रुन्धकि इत्यादेरसिद्धिप्रसङ्गात्, ततश्च कशब्दस्याभावादेतिका इत्यत्र न स्यादेव । **'न यासयोः'** इति च प्रतिषेधः सङ्घातग्रहणेऽनर्थकः स्यात् । तस्मादुच्चारणार्थोऽकारः, वर्णमात्रमेव विवक्षितमित्याह—**प्रत्ययस्थात्ककारादिति । स चेदिति ।** स चेदाप्सुपः परस्तान्न भवति तदेत्वमित्यर्थः । प्रत्ययग्रहणपरिभाषया सुबन्तादिति द्रष्टव्यम् । **जटिलिका, मुण्डिकेति ।** टाबन्ताभ्यामज्ञातादिषु 'प्रागिवात्कः', **'केऽणः'** इति ह्रस्वत्वम्, ततष्टाप्, तत इत्वम् । यद्यप्ययमकारो लाक्षणिकः, तथापि 'उदीचामातः स्थाने' इति लिङ्गात्तस्यापि भवति ।

**ककारमात्रं हीति ।** उक्तमिदम्–'कादिति वर्णमात्रं विवक्षितम्' इति, न ककारमात्रं कश्चित्प्रत्ययोऽस्ति, तस्मात् कात्प्रत्ययादित्युच्यमानेऽपि प्रत्ययावयवे प्रत्ययशब्दो वर्त्तिष्यते इति किं स्थग्रहणेनेत्यर्थः ।

**पटुका, मृदुकेति ।** पटुमृदुशब्दाभ्यां स्त्र्यर्थवृत्तिभ्यां के कृते टाप् । असति पूर्वग्रहणे 'तस्मादित्युत्तरस्य' इति कात्परस्यैवाकारस्य 'वार्णादाङ्गं बलीयः' इत्येकादेशं बाधित्वा इत्वं स्यात् । यद्यपि जटिलिका, मुण्डिकेत्यादावयं प्रसङ्गः शक्यो दर्शयितुम्; तथापि विस्पष्टार्थमुदाहरणान्तरमुपन्यस्तम् । **राका, धाकेति ।** 'कृदाधारार्चिकलिभ्यः कः' ।

**भावबोधिनी**

प्रत्यय में स्थित ककार से पूर्ववर्त्ती अकार का इकार आदेश आप् ( टाप् डाप्, चाप् ) परे होता है, यदि वह आप् प्रत्यय सुप् से परे न हो तो । उदा० जटिलिका । मुण्डिका । [ जटिला और मुण्डा शब्दों से स्वार्थ में या अज्ञात अर्थ में 'क' प्रत्यय, 'केऽणः' सूत्र से ह्रस्व—जटिल + क + टाप् = आ कर देने पर 'क' से पूर्व 'अ' का इकार आदेश होता है—जटिलि क + आ ] कारिका । हारिका [ कृ + ण्वुल्; हृ + ण्वुल्, अक आदेश, ऋ की वृद्धि, रपर, कार् अक हार् + अक, टाप् = आ करने पर 'अ' का 'इ' होने पर—कारिका, हारिका । ] एतिकाः चरन्ति । [ एतद् शब्द से "अव्ययसर्वनाम्नामकच् प्राक् टेः" से अकच्, द् का अ, पररूप, टाप् = आ, एतक + आ 'अ' का इकार आदेश—एतिकाः बहुवचन का रूप है । ]

प्रत्यय का ककार—इसका क्या फल है ? शक्नोति—इस कर्ता अर्थ में [ पचादि मानकर 'अच्' टाप् ] शका । [ यहाँ धातु का ककार है । इत्व नहीं होता है । ]

**स्थग्रहणं विस्पष्टार्थम्, ककारमात्रं प्रत्ययो नास्तीति सामर्थ्यात् प्रत्ययस्थस्य ग्रहणं शक्यते विज्ञातुम् ।**

कादिति किम् ? मण्डना । रमणा । पूर्वस्येति किम् ? परस्य मा भूत्-पटुका । मृदुका । अत इति किम् ? गोका । नौका । तपरकरणं किम् ? राका, धाका । आपीति किम् ? कारकः, धारकः ।

अथ आपीत्यनेन किं विशिष्यते ? ककारः । यद्येवम्, कारिकेत्यत्रापि न प्राप्नोति, अकारेण व्यवहितत्वात् ? एकादेशे कृते नास्ति व्यवधानम् । एकादेशः पूर्वविधौ स्थानिवद्भवतीति व्यवधानमेव ? वचनाद् व्यवधानमीदृशं यत्स्थानिवद्भावकृतमेकेन वर्णेन तदाश्रीयते । रथकट्यादिषु तु श्रुतिकृतमनेकेन वर्णेन व्यवधानमिति इत्त्वं न भवति ।

**न्यासः**

**अथेत्यादि** । चोदकः । **ककार इतीतरः** । ककारस्य श्रुतत्वात् तस्यैवापीति विशेषणं युक्तमित्यभिप्रायः । येनाभिप्रायेण चोदकः पृष्टवांस्तमाविष्कर्तुमाह—**यद्येवमित्यादि** । यद्यपीत्यनेन ककारो विशिष्यते—आपि परतो यः ककार इति । एवं सति कारिकेत्यत्र न प्राप्नोति; ककारस्याकारेणापो व्यवहितत्वात् । **एकादेशे कृत इत्यादीतरः** । व्यवसर्गे हि सति व्यवधानं भवति । न चैकादेशे कृते व्यवसर्गोऽस्तीत्यतो नास्ति व्यवधानम् । **एकादेशः पूर्वेत्यादि** । चोदकः । स्थानिवद्भावस्तु 'अचः परस्मिन् पूर्वविधौ' इत्यनेन । **वचनादितीतरः** । उच्यते चेदं वचनम्, न चाप्यनन्तरं ककारः सम्भवतीति तत्र वचनसामर्थ्यात् स्थानिवद्भावे कृते नैकेन वर्णेन सर्वत्र व्यवधानमाश्रीयते । यदि तर्हि वचनसामर्थ्यात् कारिकेत्यादौ व्यवधानेऽपि भवति, तदा रथकट्या, पुत्रकाम्येत्यत्रापि स्यात् ? इत्यत आह—**रथकट्यादिष्वित्यादि** । रथानां समूहः 'इनित्रकट्यचश्च' इति । कट्यच्, ततष्टाप् । पुत्रमिच्छतीति । 'काम्यच्च' इति काम्यच्प्रत्ययः, 'अ प्रत्ययात्', ततष्टाप् । तत्र श्रुतिकृतमनेकेन वर्णेन व्यवधानमितीत्त्वं न भवति । 'येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात्' इत्येकेन वर्णेन व्यवधानमाश्रीयते । येन नाव्यवधानमपि तु सर्वत्र व्यवधानम्, तेनैकेन वर्णेन व्यवहिते भवितुं युक्तम् । स्थानिवद्भावकृतमेकेन वर्णेन सर्वत्र व्यवधानमस्ति, सङ्घातेन त्वस्ति नास्ति च । तस्मात् तदिह नाश्रीयते ।

**पदमञ्जरी**

**अथापीत्यनेन किं विशिष्यत इति** । ककारः, प्रत्ययो वेति सन्देहात्प्रश्नः । **ककार इति** । प्रत्यये तु विशिष्यमाणे रथकट्यादिष्वतिप्रसङ्ग इति भावः । यद्यपि प्रत्ययोऽपि श्रुतः, तथापि तस्योपसर्जनत्वात् ककार एव विशिष्यते । **कारिकेत्यत्रापि न स्यादिति** । अतिप्रसङ्गस्तिष्ठतु तावत्, इष्टमपि न सिद्धयतीत्यपिशब्दस्यार्थः । 'आपि परतो यः ककारः'—इत्येवं विज्ञायमाने कारिकेत्यपि न स्यात्; एकादेशस्य यो द्वितीयोऽकारस्तेन व्यवधानात् । **वचनाद्व्यवधानमीदृशमिति** । आश्रीयत इति वक्ष्यमाणेन सम्बन्धः । ईदृशमित्येतद्व्याचष्टे—**स्थानिवद्भावकृतमिति** । **एकेन वर्णेनेत्युपलक्षणम्** । स्थानिवद्भावकृतमित्येतावति तात्पर्यम्; अन्यथा एतिकेत्यत्र द्वाभ्यामकाराभ्यां व्यवधानादित्त्वं न स्यात् । एक एतदः सम्बन्धी, द्वितीयः 'त्यदादीनामः' इत्यकारः; तत्राकारयोर्यः पररूपमेकादेशः, यश्च टापा सह दीर्घः—द्वयोरपि तयोः स्थानिवद्भावः ।

**भावबोधिनी**

'स्थ' का ग्रहण स्पष्टता के लिये है क्योंकि अकेला ककार ( क् ) प्रत्यय नहीं है [ अपि तु प्रत्यय का अवयव है ] इसलिये सामर्थ्यवश ही प्रत्ययस्थ के ग्रहण को समझा जा सकता है । [ 'कात् प्रत्ययात्' ऐसा कहा जाने पर भी प्रत्ययावयव में प्रत्यय शब्द रहेगा, इसलिये 'स्थ' ग्रहण की कोई आवश्यकता नहीं है । केवल स्पष्टता के लिये है । ]

'क' से परे ( आप् )—इसका क्या फल है ? मण्डना । रमणा । [ णिजन्त मण्डि और रमि धातुओं से 'नन्द्यादि' मानकर ल्यु, या "ण्यासश्रन्थ" सूत्र से युच् प्रत्यय, टाप् है । ] पूर्व के अकार का—इसका क्या फल है ? परवर्ती अ का न हो—पटुका, मृदुका । [ स्त्री अर्थ में पटु मृदु से क प्रत्यय, टाप् करने पर परवर्ती 'आ' का 'इ' न हो ] अकार का ( इ ) होता है—इसका क्या फल है ? गोका, नौका । [ यहाँ अ नहीं है । इत्व नहीं होता है । ] तपरकरण अर्थात् ह्रस्व अ का होता है—इसका क्या फल है ? राका । धाका । [ 'रा' तथा 'धा' धातुओं से औणादिक 'क' प्रत्यय टाप् होता है । ह्रस्व अ न होने से इत्व नहीं होता है । ]

असुप इति किम्? बहवः परिव्राजका अस्यां मथुरायां बहुपरिव्राजका मथुरा। सुबन्तादयं परिव्राजकशब्दात्पर आबिति प्रतिषेधो भवति। प्रसज्यप्रतिषेधश्चायम्, न पर्युदासः। पर्युदासे हि सति

**न्यासः**

सुबन्तादयमिति। परिव्राजकशब्दात् पर आबिति प्रत्ययलक्षणे सुबन्तता वेदितव्या। **प्रसज्यप्रतिषेधश्चायमिति।** न चेत् सुबन्तादाप् परो भवति। कः पुनः पर्युदासे दोषो यतः स नाश्रीयते? इत्याह—**पर्युदासे हीत्यादि।** यद्ययं पर्युदासः स्यात्—सुपोऽन्योऽसुप्, ततश्चेदाप् परो भवतीति; ततो बहुपरिव्राजकेत्यत्रापि स्यादेवेत्वम्, असुबन्तात् पूर्वोत्तरपदसमुदायात् पर आबिति कृत्वा। असुबन्तत्वं पुनः समुदायस्य, तस्मात् सुबनुत्पत्तेः; अवयवाद्धि परिव्राजकशब्दादत्र सुबुत्पत्तिः, न तु समुदायात्। **अविद्यमानः सुब् यस्मिन् सोऽयमसुबित्ययमपि नाश्रीयत इति।** बहुव्रीहिरपि नाश्रीयत इत्यर्थः। कः पुनस्तदाश्रयणे दोषो यतः सः

**पदमञ्जरी**

अन्ये त्वाहुः—अत्रापि टापा सह य एकादेशस्तस्यैव स्थानिवद्भावः, न त्वकारयोः कृतस्य पररूपस्य; सकृत्प्रवृत्त्या लक्षणस्य चरितार्थत्वात्। तेनात्राप्येकेनैव व्यवधानमिति। वचनाद्व्यवधानेऽपि भविष्यतीति वक्तव्ये, ईदृशं व्यवधानमिति यदुक्तम्, तस्य व्यावर्त्यं दर्शयति—**रथकट्यादिष्विति।** रथानां समूहो रथकट्या, 'इनित्रकट्यचश्च'। आदिशब्देन गर्गकाम्यादेर्ग्रहणम्। गर्गमिच्छत्यात्मन इति काम्यजन्तादप्रत्ययः, ततष्टाप्। एतदुक्तं भवति—आपीति सप्तम्या यदानन्तर्यमुपात्तं तन्नात्यन्ताय त्यज्यते, किन्तु यावत्सम्भवमाश्रीयत इति।

**भावबोधिनी**

आप् प्रत्यय परे—इसका क्या फल है? कारका, धारका। [ यहाँ आप् नहीं है। ]

प्रश्न यह है कि 'आप् परे' इससे किसको विशेषित किया जाता है? ककार को [ विशेषित किया जाता है। आप् परे रहते जो ककार ]। यदि ऐसा है तब तो 'कारिका' यहाँ भी नहीं प्राप्त होता है क्योंकि [ कअ = क+टाप् इस स्थिति में 'क्' के ] अकार से व्यवधान है? [ क+आप् में दीर्घ रूप ] एक आदेश कर देने पर व्यवधान नहीं है। [ 'अचः परस्मिन् पूर्वविधौ' इस सूत्र से ] पूर्व सम्बन्धीविधि की कर्तव्यता में एक आदेश का स्थानिवद्भाव हो जाता है। इससे अकार का व्यवधान रहता ही है। [ चूंकि उपर्युक्त व्यवधान सर्वत्र रहता है। इस कारण सूत्र की व्यर्थता देखकर ] इस सूत्र को बनाने के कारण व्यवधान ऐसा जो कि स्थानिवद्भाव से किया गया है, एक वर्ण से होने पर वह [ यहाँ ] मान लिया जाता है, सहन कर लिया जाता है, अर्थात् ऐसे स्थल पर एक वर्ण जो स्थानिवद्भाव से प्रतीत है उसका व्यवधान रहने पर भी अव्यवधान ही समझा जाता है। ] परन्तु 'रथकट्या' आदि शब्दों में श्रुति ( श्रवण ) से किया गया अनेक वर्णों का व्यवधान है, [ अतः वह व्यवधान ही माना जाता हैं ] इस कारण 'इत्व' नहीं होता है।

**विमर्श**—भाव यह है कि 'आपि' को ककार ( व्यंजन ) का विशेषण मानने पर—आप् प्रत्यय परे रहते जो ककार। परन्तु ऐसा मान लेने पर 'कारिका' आदि में इत्व नहीं हो सकेगा, क्योंकि कारक+टाप् = आप् यहाँ क् और आप् के बीच में 'अ' स्वर का व्यवधान है। यदि दीर्घरूप एकादेश मानें तब भी 'अचः परस्मिन् पूर्वविधौ' से अकार का स्थानिवद्भाव होने से व्यवधान रहता ही है। परन्तु ऐसी स्थिति सर्वत्र ही रहती है, फलतः सूत्र व्यर्थ होने लगेगा। इसलिये यह माना जाता है कि यदि स्थानिवद्भाव से एक वर्ण का व्यवधान होता है तो वह अव्यवधान समझना चाहिये। यदि कई वर्ण सुनाई देते हों तो व्यवधान ही समझना चाहिए। इससे 'कारिका' आदि में इत्व होगा। परन्तु 'रथानां समूहः' इस अर्थ में 'इनित्रकट्यचश्च' से कट्यच् प्रत्यय और टाप् करने पर 'रथकट्या' में इत्व नहीं होता है क्योंकि 'आप्' और 'क्' में कई वर्णों का व्यवधान सुनाई देता है। ]

( अनु० ) असुप् = असुबन्त से परे—इसका क्या फल है? 'बहवः परिव्राजका अस्यां मथुरायां सा—बहुपरिव्राजका मथुरा। [ जिसमें बहुत से संन्यासी हैं ऐसी मथुरा नगरी। ] यह आप् प्रत्यय सुबन्त परिव्राजक से परे होता है इसलिये [ इत्व का ] प्रतिषेध होता है। और यहाँ नञ् प्रसज्य-प्रतिषेध है पर्युदास नहीं हैं अर्थात् सुबन्त से परे आप् होने पर इत्व नहीं होता? ऐसा माना जाता है। क्योंकि पर्युदास होने पर—असुबन्त समुदाय से परे आप् है इसलिये इस उदा० में इत्व होने ही लगता है। अविद्यमान है सुप् जिसमें वह असुप् है—यह भी नहीं

समुदायादसुबन्तात्पर आबितीत्त्वमत्र स्यादेव। अविद्यमानः सुप् यस्मिन् सोऽयमसुबिति—अयमपि नाश्रीयते। तथा हि सति बहुचर्मिकेत्यत्रापि न स्यात्।

❀ मामकनरकयोरुपसंख्यानं कर्त्तव्यमप्रत्ययस्थत्वात् ❀ ( म० भा० )। मम इयं मामिका। नरिका। अणि ममकादेशः। 'केवलमामक' ( ४।१।३० ) इति नियमात् संज्ञाच्छन्दसोरीकारो नान्यत्र। तेनाणप्रत्ययान्तादपि टाब्भवति—नरान् कायतीति नरिका। 'आतोऽनुपसर्गे कः' इति कः प्रत्ययः।

❀ प्रत्ययनिषेधे त्यक्त्यपोश्चोपसंख्यानम् ❀ ( ७।३।४६ )। 'उदीचामातः स्थाने यकपूर्वायाः'

**न्यासः**

नाश्रीयते ? इत्याह—**तथा हीत्यादि**। एवं तर्हीत्यर्थः। बहुव्रीहौ पूर्वोत्तरपदयोः प्रत्ययलक्षणेन सुबन्तव्यपदेशोऽस्तीति नासावसुप्, अपि तु विद्यमानसुबेव। तेन बहुचर्मिकेत्यत्र नासुपः पर आबितीत्वं न स्यात्। बहूनि चर्माण्यस्यां विद्यन्त इति बहुव्रीहिः। 'शेषाद्विभाषा' इति कप्, टाप्।

**मामिकेति**। ममेयमिति 'तस्येदम्' इत्यण्, 'तवकममकौ' इति ममकादेशः। नन्वणन्तान्ममकशब्दात् 'टिड्ढाणञ्' इति ङीपा भवितव्यम्, तत् कथं टाब् भवति ? **केवलमामकेति नियमादित्यादि**। **नरिकेति**। 'कै गै शब्दे'। 'आदेच उपदेशेऽशिति' इत्यात्त्वम्, 'आतोऽनुपसर्गे कः', ततष्टाप्।

**दाक्षिणात्यिका, इहत्यिकेति**। दक्षिणस्यां दिशि भवेति 'दक्षिणापश्चात्पुरसस्त्यक्' इति त्यक्। इह भवेति 'अव्ययात्त्यप्'। उभयत्राज्ञातादिष्वर्थेषु 'प्रागिवात्कः'।

उपसंख्यानशब्दस्य प्रतिपादनमर्थः। तत्रेदं प्रतिपादनम्—'उदीचामातः स्थाने' इत्यत्र व्यवस्थित-

**पदमञ्जरी**

**सुबन्तादयं परिव्राजकशब्दादिति**। प्रत्ययलक्षणेन सुबन्तत्वम्। **पर्यदासे हीति**। सुपोऽन्योऽसुप्, ततश्चेदाप्पर इत्याश्रीयमाण इत्यर्थः। **समुदायादसुबन्तादिति**। अवयवात्परिव्राजकशब्दात्सुबुत्पन्नः, न समुदायादिति तस्यासुबन्तत्वम्। **एवमपि नाश्रीयते इति**। बहुव्रीहिरपि नाश्रीयत इत्यर्थः। किं कारणम् ? इत्यत आह—**तथा हीति**। **बहुचर्मिकेति**। बहूनि चर्माण्यस्यामिति बहुव्रीहिः, 'शेषाद्विभाषा' इति कप्। तत्पुरुषे त्वस्मिन्, नात्र सुबन्तात्परष्टाब् भवति; कपा व्यवहितत्वात्।

**मामिकेति**। ममेयमित्यण, 'तवकममकावेकवचने' इति ममकादेशः। **दाक्षिणात्यिकेति**। 'दक्षि-

**भावबोधिनी**

माना जाता है। कारण यह है कि ऐसा मानने पर बहुचर्मिका—इसमें भी नहीं हो पायेगा। [ असुप् में बहुव्रीहि भी नहीं है क्योंकि विभक्तिलुक् होने पर भी प्रत्ययलक्षण मानकर सुबन्तत्व मिल जायगा, सुबन्त से परे हो जाने पर 'बहुचर्मिका' आदि में भी इत्व नहीं हो सकेगा। अतः तत्पुरुष ही है और इससे सुबन्त से अव्यवहित परे नहीं आप्' है, है, इत्व में बाधा नहीं है। ]

❀ मामक और नरक शब्दों में भी इत्व का उपसंख्यान करना चाहिए क्योंकि इनमें 'क' प्रत्ययस्थ नही है।❀ उदा० इयं मम—मामिका। [ मम इयम् अर्थ में अण् करने पर [ 'तवकममकावेकवचने' सूत्र से ] ममक आदेश, [ स्त्रीत्वविवक्षा में टाप् = आ इस वचन से इत्व। इसी प्रकार 'नरकस्य इयम् अर्थ में नरक + टाप्, इत्व ]। [ यदि अण् प्रत्यय है तब तो 'टिड्ढाणञ्' सूत्र से ङीप् होना चाहिए टाप् कैसे होता है ? ] "केवल-मामकभागधेयपापापरसमानार्थकृतसुमङ्गलभेषजाच्च" ( ४।१।३० ) इस सूत्र के नियामक होने से संज्ञा और वेद विषय में ही ईकार ( ङीप् ) होता है अन्यत्र नहीं। इस नियम के कारण अण् प्रत्ययान्त से भी टाप् होता है। 'नरान् कायति—इस अर्थ में—नरिका रूप होता है। 'आतोऽनुपसर्गे कः' सूत्र से क = अ प्रत्यय, उपपद समास 'आदेच उपदेशेऽशिति' सूत्र से 'ऐ' का आत्व—नर का + अ, आलोप—नरक + टाप्।

❀ प्रत्यय में प्रतिषेध में त्यक् और त्यप् का प्रतिपादन करना चाहिए अर्थात् इन प्रत्ययों में इत्व कहना चाहिए।❀ फल यह है कि "उदीचामातः स्थाने यकपूर्वायाः" इस वक्ष्यमाण सूत्र से विकल्प न होने लगे, ( नित्य ही इत्व हो )—दाक्षिणात्यिका, इहत्यिका। [ दक्षिणस्यां दिशि भवा—इस अर्थ में 'दक्षिणा-पश्चात्पुरुषस्त्यक्' सूत्र से

इति विकल्पो मा भूदिति, दाक्षिणात्यिका । इहत्यिका ॥

**३४४२. न यासयोः ॥ ४५ ॥ (४६४)**

'या', 'सा'—इत्येतयोरिकारादेशो न भवति । यका । सका ।

'यासा' इति निर्देशोऽतन्त्रम्, यत्तदोरुपलक्षणमेतत् । इहापि प्रतिषेध इष्यते—यकांयकामधीमहे, तकांतकां पचामहे ( म० भा० ) इति ।

❀ यासयोरित्वप्रतिषेधे त्यकन उपसंख्यानम् ❀ ( म० भा० ) । उपत्यका । अधित्यका ।

**न्यासः**

विभाषाविज्ञानात् त्यक्त्यपोर्नित्यं भविष्यतीति ॥ ४४ ॥

**न यासयोः ॥** येत्येतस्य 'उदीचामातः स्थाने' इत्यादिना विकल्पे प्राप्ते, सेत्यस्य पूर्वेण नित्ये प्राप्ते प्रतिषेधोऽयमारभ्यते; प्राप्तिपूर्वकत्वात् प्रतिषेधस्य । यदा तयोरकज् भवति तदायं प्रतिषेधो विज्ञायते । **यका, सकेति** । यत्तदोः पूर्ववदकच्, सुः, त्यदाद्यत्वञ्च । **यासेति निर्देशोऽतन्त्रमिति** । अप्रधानमित्यर्थः । किं कारणम् ? इत्याह—**यत्तदोरुपलक्षणार्थमेतदिति** । किं कारणमेवं व्याख्यायते ? इत्याह—**इहापीत्यादि** । यासेति प्रथमैकवचनान्तरूपम् । तत्र यद्ययं निर्देशस्तन्त्रं स्यात्, प्रथमैकवचनान्तयोर्ग्रहणाद् विभक्त्यन्तरे यकाम्, तकामित्यत्र न स्यात्, इष्यते च तत्रापि । तस्मादतन्त्रमयं निर्देशो यत्तदोः प्रातिपदिकयोरुपलक्षणार्थमेतद्—इत्युच्यते ।

**यासयोरित्वप्रतिषेध इत्यादि** । उपसंख्यानशब्दस्य प्रतिपादनमर्थः । तदेतदुक्तं भवति—यत्तदोः प्रतिषेध इत्यस्मिन् क्रियमाणे त्यकन्प्रत्ययान्तस्य प्रतिषेधप्रतिपादनं कर्त्तव्यमिति । तत्रेदं प्रतिपादनम्—नेति योगविभागोऽत्र क्रियते, तेन त्यकन्प्रत्ययान्तस्य प्रतिषेधो भविष्यतीति । एवमुत्तरत्राप्युपसंख्यानशब्दस्य प्रतिपादनार्थो वेदितव्यः । प्रतिपादनमप्येतदेव योगविभागकरणमाश्रित्य कर्त्तव्यम् । **उपत्यका, अधित्यकेति** । 'उपाधिभ्यां त्यकन्नासन्नारूढयोः' इति त्यकन् । **पावकेति** । ण्वुल् । **अलोमकेति** । नास्या लोमानि सन्तीति बहुव्रीहिः, 'शेषाद्विभाषा' इति कप् ।

**पदमञ्जरी**

णादाच्', दक्षिणा, ततो भवादौ 'दक्षिणापश्चात्पुरसस्त्यक्' । **इहत्यिकेति** । 'अव्ययात्त्यप्' ॥ ४४ ॥

**न यासयोः ॥** पूर्वेण नित्यमित्त्वे प्राप्ते निषेधोऽयमुच्यते, प्राप्तिपूर्वकत्वात् प्रतिषेधस्य । यदा यत्तदोरकज्भवति तदा प्रतिषेधः । **यका, सकेति** । यत्तदोरकच्, सौ त्यदाद्यत्वे टाप् । या सेति प्रथमैकवचनान्तयोरुपादानाद्विभक्त्यन्तरे प्रतिषेधो न स्यादित्यत आह—**यासेति निर्देशो न तन्त्रमिति** । **यत्तदोरुपलक्षणमिति** । यद्येवम्, यत्तदोरित्येव वक्तव्यम् ? सत्यम्; तथा तु न कृतं किं कुर्मः ! **यकांयकामधीमह इति** । ऋचं गाथां च । **तकांतकाम्पचामह इति** । ओषधिं शाकिनीं वा, द्वावेतौ प्रयोगौ ।

**भावबोधिनी**

त्यक् = त्य प्रत्यय, टाप् । इह भवा—इस अर्थ में 'अव्ययात्त्यप्' सूत्र से त्यप्—इह + त्य, अज्ञात आदि किसी अर्थ में 'क' प्रत्यय, टाप् । विकल्प से इत्व प्राप्त है । इस वचन से नित्य होता है ] ॥ ४४ ॥

[ प्रत्यय में स्थित ककार से पूर्व ] 'या' 'सा' इन शब्दों के [ अकार का ] इकार आदेश नहीं होता है । उदा० यका । सका । [ यत्, तत् शब्दों से अत्व, पररूप, टाप् आदि करके—'या सा' में 'अव्ययसर्वनाम्नामकच् प्राक् टेः" सूत्र से अकच् होने पर क से पूर्व अकार का इत्व प्राप्त है प्रस्तुत सूत्र से निषेध हो जाता है । ]

'यासा' ऐसा निर्देश अतन्त्र = अप्रधान है [ अर्थात् केवल प्रथमान्त रूपों का ही ग्रहण नहीं है क्योंकि ] यह निर्देश यत् और तत् का उपलक्षण है । इसमें भी प्रतिषेध इष्ट है—यकां यकामधीमहे । तकां तकां पचामहे । [ यहाँ द्वितीया एकवचन में भी इत्व का निषेध हो जाता है । ]

❀ या, सा—इनके इत्व प्रतिषेध में त्यकन् का भी प्रतिपादन करना चाहिए अर्थात् उसमें भी निषेध मानना चाहिए ।❀ उदा० उपत्यका । अधित्यका । [ 'उपाधिभ्यां त्यकन्नासन्नारूढयोः' सूत्र से उप तथा अधि से त्यकन् प्रत्यय आसन्न और आरूढ अर्थों में होता है । और स्त्रीविषय होते से टाप् होने पर इत्व प्राप्त है, निषेध होता है । ]

❀ पावकादीनां छन्दस्युपसंख्यानम् ❀ ( म० भा० )। 'हिरण्यवर्णाः शुचयः पावकाः' ( अ० वे० १।३३।१ )। यासु आलोमकाः। छन्दसीति किम् ? पाविका।

❀ आशिषि चोपसंख्यानम् ❀ ( म० भा० )। जीवताद् = जीवका। नन्दताद् = नन्दका। भवताद् = भवका।

❀ उत्तरपदलोपे चोपसंख्यानम् ❀ ( म० भा० ) देवदत्तिका, देवका। यज्ञदत्तिका, यज्ञका।

❀ छिपकादीनां चोपसंख्यानम् ❀ ( म० भा० )। क्षिपका। ध्रुवका।

❀ तारका ज्योतिष्युपसंख्यानम् ❀ ( म० भा० )। तारका। ज्योतिषीति किम् ? तारिका दासी।

**न्यास**

**जीवका, नन्दकेति**। 'आशिषि' च इति वुन्। **देवका, यज्ञकेति**। देवदत्तयज्ञदत्तशब्दाभ्याम् 'अनुकम्पायां कन्' इति कनि कृते 'अनजादौ च विभाषा लोपो वक्तव्यः' इत्युत्तरपदलोपः।

**क्षिपका, ध्रुवकेति**। 'क्षिप प्रेरणे', 'ध्रुव स्थैर्ये', 'इगुपधज्ञाप्रीकिरः कः'। तदन्तादज्ञाताद्यर्थे 'प्रागिवात् कः'।

**तारकेति**। तरतेर्ण्वुल्।

**पदमञ्जरी**

**उपत्यकेति**। 'उपाधिभ्यां त्यकन्नासन्नारूढयोः'। अत्र कश्चिदाह–'स्त्रीविषयोऽयं त्यकन्प्रत्ययान्तः; ततश्च प्रक्रियालाघवाय त्यिकन्निति वक्तव्ये त्यकन्नित्यकारोच्चारणसामर्थ्यादित्वाभावः' इति, तदयुक्तम्, पञ्चभिरुपत्यकाभिः क्रीतः पञ्चोपत्यक इत्यादावार्हीयस्य ठकः 'अध्यर्धपूर्व' इति लुकि कृते 'लुक् तद्धितलुकि' इति टापो लुकि निमित्ताभावादित्वं न स्यादिति तद्धितलुगर्थमेतत्स्यात्, बहिरङ्गो लुक्, 'अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते'। ननु च 'सुपो धातुप्रातिपदिकयोः' इत्येतद्विषयमेतत् ? नेत्याहः यश्च यावांश्च लुग्ग्रामः, सर्वोऽप्यन्तरङ्गान्विधीन्बाधते, यथा—'स्नीस्रंस' इत्यादौ नलोपो न भवति। पञ्चखट्व इत्यादौ टापा सहैकादेशो न भवति; यदि स्यात्, आदिवद्भावादाब्ग्रहणेन ग्रहणाल्लुकि सति अकारोऽत्र न श्रूयेत।

**पावका इति**। पुनन्ति पावयन्तीति वा पावकाः। **अलोमका इति**। बहुव्रीहेः कप्।

**जीवकेति**। 'आशिषि च' इति वुन्।

**देवकेति**। देवदत्तशब्दात् 'अनुकम्पायां कन्', 'अनजादौ च विभाषा लोपो वक्तव्यः' इति दत्तशब्दस्य लोपः।

**क्षिपकेति**। क्षिपेरिगुपधात्कः। 'ध्रु गतिस्थैर्ययोः', पचाद्यचि कुटादित्वाद् गुणाभावे उवङ्, उभाभ्यामज्ञातादिषु 'प्रागिवात्कः'।

तरतेर्ण्वुल्—**तारका**। वर्णयति महत्त्वादिकं गुणमिति **वर्णका**=प्रावारविशेषः, तन्तूनां विकारस्तान्तवम् 'ओरञ्'। **वर्णिकेति**। भागुरी व्याख्या, टीकाविशेषः। वृतेर्ण्यन्तात् ण्वुल्—**वर्त्तिका**।

**भावबोधिनी**

*पावका आदि के इत्व का प्रतिषेध वेद में कहना चाहिए।* उदा० 'हिरण्यवर्णाः शुचयः पावकाः।' यासु अलोमकाः। [ इनमें इत्व नहीं होता है। ] वेद में—इसका क्या फल है ? पाविका। [ लौकिक प्रयोग में टाप् करने पर इत्व होता ही है। ]

*आशीर्वाद अर्थ में भी इत्वप्रतिषेध कहना चाहिए।* उदा० जीवताद् = [ इस आशीर्लिङ् अर्थ में "आशिषि च" सूत्र से वुन् = अक, टाप् करने पर ] जीवका। [ इसी प्रकार आशीर्लिङ् में ] नन्दतात् = नन्दका। भवतात्—भवका। [ सभी में वुन् = अक, टाप् के बाद इत्व प्राप्त है निषेध हो जाता है। ]

*उत्तरपद के लोप में भी इत्वप्रतिषेध कहना चाहिए।* उदा० देवदत्तिका—देवका। यज्ञदत्तिका—यज्ञका। [ देवदत्त तथा यज्ञदत्त शब्दों से 'अनुकम्पायां कन्' सूत्र से 'क' प्रत्यय स्त्रीत्व-विवक्षा में टाप्, "अनजादौ च विभाषा लोपो वक्तव्यः" वचन से उत्तरपद का लोप कर देने पर प्राप्त इत्व का प्रतिषेध होता है। ]

*क्षिपका आदि का भी इत्व-प्रतिषेध कहना चाहिए।* उदा० क्षिपका। ध्रुवका। [ +क्षिप् तथा ध्रुव-धातुओं से क = अ प्रत्यय, अज्ञात आदि किसी अर्थ में 'क' प्रत्यय टाप् करने पर प्राप्त इत्व का प्रतिषेध होता है। ]

※ वर्णका तान्तव उपसंख्यानम् ※ ( म० भा० ) । वर्णका = प्रावरणभेदः । तान्तव इति किम् ? वर्णिका भागुरी लौकायते ।

※ वर्तका शकुनौ प्राचामुपसंख्यानम् ※ ( म० भा० ) । वर्तका शकुनिः । प्राचामन्यत्र उदीचां तु-वर्तिका । शकुनाविति किम् ? वर्तिका भागुरी लौकायतस्य ।

※ अष्टका पितृदैवत्ये ※ । अष्टका । पितृदैवत्य इति किम् ? अष्टिका खारी ।

※ वा सूतकापुत्रकावृन्दारकाणामुपसंख्यानम् ※ ( म० भा० ) सूतिका, सूतका । पुत्रिका, पुत्रका । वृन्दारिका, वृन्दारका ॥

**न्यासः**

**वर्णका तान्तव इति** । तन्तूनां विकार इति 'ओरञ्', 'ओर्गुणः' । तान्तवः = प्रावरणविशेषः । तत्र वर्णकेत्युपसंख्यातव्या । 'वर्ण क्रियाविस्तारगुणवचनेषु' इति चौरादिको धातुः, ततो ण्वुल्—**वर्णिकेति** । व्याख्यात्रीत्यर्थः ।

**वर्तकेति** । 'वृतु वर्त्तने', ण्वुल् । **वर्तिकेति** । अध्येत्रीत्यर्थः । **अष्टका पितृदैवत्य इति** । पितृदैवत्यम् = वैदिककर्मविशेषः, तत्राष्टकेत्युपसंख्यायते । 'अशू व्याप्तौ'—इत्यस्मात् 'इष्यशिभ्यां तकन्' इति तकन् प्रत्ययः, व्रश्चादिसूत्रेण षत्वम्, ष्टुत्वम् । **अष्टकेति** । अष्टौ परिमाणमस्या इति 'तदस्य परिमाणम्' इति 'संख्याया अतिशदन्तायाः कन्' ।

**वा सूतकेत्यादि** । उपसंख्यानशब्दस्य प्रतिपादनमर्थः । तत्रेदं प्रतिपादनम्—सूतका, सूतिका—इत्यादयः शब्दाः पृषोदरान्तः पातिनः, तेन पृषोदरादित्वादेवायं विकल्पः सिद्धः ॥ ४५ ॥

**पदमञ्जरी**

**अष्टकेति** । अश्नन्ति ब्राह्मणा ओदनमस्यामित्यष्टका, 'इष्यशिभ्यां तकन्' इति तकन् । पितरश्च ता देवताश्च पितृदेवताः, तदर्थं कर्म **पितृदैवत्यम्** 'देवताण्तात्तादर्थ्ये यत्' इति यत् । **अष्टिकेति** । अष्टौ परिमाणमस्याः, 'संख्याया अतिशदन्तायाः कन्' ।

**सूतकेति** । 'न सामिवचने' इति प्रतिषेधेन ज्ञापितः स्वार्थे कन् । **पुत्रिकेति** । शार्ङ्गरवादित्वान्ङीनि कृते स्वार्थिकः कन्, 'केऽणः' इति ह्रस्व इकारः, तस्य पक्षेऽत्वं विधीयते । **वृन्दारिकेति** । 'शृङ्गवृन्दाभ्यामारकन् वक्तव्यः' इत्यारकन् ॥ ४५ ।

**भावबोधिनी**

※ज्योतिष् में 'तारका' कहना चाहिए ।※ उदाहरण—तारका । [ तॄ + ण्वुल् = अक, टाप् । प्राप्त इत्व का निषेध । ] ज्योतिष् में—इसका क्या फल है ? तारिका दासी । [ यहाँ इत्व प्रतिषेध नहीं होता है । ]

※ तान्तव = तन्तुओं के विकार अर्थ में 'वर्णका' कहना चाहिए ।※ उदा० वर्णका = एक प्रकार का प्रावरण = आच्छादन वस्त्र । [ 'वर्ण्' इस चुरादिगणीय से ण्वुल्, टाप्, प्राप्त इत्व का निषेध ] तान्तव = तन्तु-सम्बन्धी विकार में—इसका क्या फल है ? वर्णिका भागुरी लौकायते । [ वर्णिका = वर्णन करने वाली व्याख्या—अर्थ में इत्व होता है । ]

※प्राग्देशियों के मत में शकुनि अर्थ में 'वर्त्तका' होता है । ※ उदा० वर्त्तका = शकुनि । [ वृत् + ण्वुल् इत्व-प्रतिषेध । ] प्राग्देशवाचियों से भिन्न उत्तरवालों के मत में—वर्तिका । [ इत्व होता है । ] शकुनि = पक्षी, वतख अर्थ में—इसका फल है ? वर्त्तिका भागुरी लौकायतस्य । [ यहाँ शकुनि अर्थ नहीं है । अतः इत्व होता है । ]

※ पितृदैवत्य = वैदिक कार्यविशेष में 'अष्टका' होता है । [ इत्वनिषेध होता है । ] उदा० अष्टका । [ अष्टौ परिमाणम् अस्य—इस अर्थ में 'तदस्य परिमाणम्' "संख्याया अतिशदन्तायाः कन्" सूत्र से कन्, टाप्, इत्व का प्रतिषेध । ] पितृदैवत्य अर्थ में—इसका क्या फल है ? अष्टिका खारी । [ यहाँ खारी एक परिमाणविशेष है । इत्व होता है । ]

※ सूतका, पुत्रका, वृन्दारका—इनका विकल्प से ( इत्वप्रतिषेध ) कहना चाहिए ।※ उदा० सूतिका, सूतिका । पुत्रिका, पुत्रका । वृन्दारिका, वृन्दारका । [ न्यासकार ने उपर्युक्त शब्दों को पृषोदरादि गण में माना है किन्तु सम्प्रति उस गण में इनका पाठ नहीं मिलता है । अतः वार्त्तिक की आवश्यकता है । ] ॥ ४५ ॥

## ३४४३. उदीचामातः स्थाने यकपूर्वायाः ॥ ४६ ॥ (४६५)

उदीचामाचार्याणां मतेन यकारपूर्वायाः ककारपूर्वायाश्चातः स्थाने योऽकारस्तस्यातः स्थाने इकारादेशो भवति । 'उदीचाम्'-ग्रहणं विकल्पार्थम् । इभ्यिका, इभ्यका । क्षत्रियिका, क्षत्रियका । ककार-पूर्वायाः—चटकिका, चटकका । मूषिकिका, मूषिकका ।

आत इति किम् ? सांकाश्ये भवा सांकाशियका ।

स्थानग्रहणमनुवादेऽपि स्थानसम्बन्धप्रतिपत्त्यर्थम् । 'आत' इत्यनेन ह्यात इति विशिष्यते ।

**न्यासः**

**उदीचामातः स्थाने यकपूर्वायाः** ॥ पूर्वेण नित्यमित्वे प्राप्ते विकल्पार्थं वचनम् । यकौ पूर्वौ यस्याः सा यकपूर्वा । कोऽन्यपदार्थः ? समुदायः । तथा हि पूर्वशब्दोऽवयवे वर्त्तते । स चावयवः समुदायस्य भवति, नावयवान्तरस्य । न हि वर्णो वर्णस्यावयवो भवति । अवयवान्तरापेक्षस्तु तस्य पूर्वत्वव्यपदेशः । तत् पुनरवयवान्तरं प्रकृतत्वात् स्थान्यकार एव विज्ञायते । स्त्रीलिङ्गनिर्देशस्तु तस्य वक्ष्यते । **आतः स्थान इति** । योऽकार इति व्यवहितेन सम्बन्धः । **इभ्यिकेत्यादि** । इभ्यादिशब्देभ्यः 'प्रागिवात् कः', 'केऽणः' इति ह्रस्वः ।

**सांकाशियकेति** । 'धन्वयोपधाद्वुञ्' । नात्रातः स्थानेऽकार इति नित्यमेवेत्वम् ।

अथ स्थानग्रहणं किमर्थम्, यावतात इत्येषैव षष्ठी स्थानेयोगं प्रतिपादयिष्यति, 'षष्ठी स्थानेयोगा' इति वचनात् ? इत्यत आह—**स्थानग्रहणमित्यादि** । आकारस्य स्थाने लक्षणान्तरेण विहितस्याकारस्य संकीर्त्तनम् = अनुवादः । अत्रापि स्थाने सम्बन्धप्रतिपत्तिर्यथा स्यात्—इत्येवमर्थं स्थानग्रहणम् । किं पुनः कारणम्—असति स्थानग्रहणेऽनुवादे सम्बन्धप्रतिपत्तिर्न स्यात् ? इत्याह—**आत इत्यनेनेत्यादि** । आदेशविधौ 'अस्तेर्भूः' इत्येवमादौ 'षष्ठी स्थानेयोगा' इत्येषा परिभाषोपतिष्ठते, न त्वनुवादे; विधिवाक्यशेषभूतत्वादस्याः ।

**पदमञ्जरी**

**उदीचामातः स्थाने यकपूर्वायाः** ॥ यकौ पूर्वौ यस्याः सा यकपूर्वा, कोऽन्यपदार्थ ? आकारः । अर्थगतं स्त्रीत्वं शब्दे समारोप्य स्त्रीलिङ्गनिर्देशः, पूर्वशब्दो व्यवस्थावचनः । **इभ्यिकेति** । इभमर्हतीति 'दण्डादिभ्यो यः'-इभ्या, ततः पूर्ववत्कः, ह्रस्वत्वं च । चटक-मूषकशब्दाभ्यामजादित्वाट्टाप् । **साङ्काशियकेति** । सङ्काशेः निर्वृत्तं साङ्काश्यम्, 'सङ्काशादिभ्यो ण्यः', ततो भवार्थे 'धन्वयोपधाद्वुञ्' इति वुञ् ।

स्थानग्रहणमनर्थकम्, 'षष्ठी स्थानेयोगा' इति सिद्धत्वादिति ? अत आह- **स्थानग्रहणमित्यादि** । परिभाषाया विधिशेषत्वादनुवादे उपस्थानं न स्यादिति भावः । अनुवादत्वमेव स्पष्टयति—**आत इत्यनेन हीति** । अतो योऽकारस्तस्येत्वं भवतीति वचनव्यक्तौ नाकारस्य विधिस्पर्शः कश्चिदस्तीत्यर्थः ।

**भावबोधिनी**

उदीच्य आचार्यों के मत में जिसके पूर्व में यकार है और ककार है ऐसे आत् = आ के स्थान में जो [ प्रत्ययस्थित ककार से पूर्व ] अकार उस अकार के स्थान में इकार आदेश होता है । उदीच्य—का ग्रहण विकल्प के लिये है । [ अर्थात् पाणिनि के मत में इत्व नहीं होता है । इससे दो रूप होते हैं । ] उदा० इभ्यिका, इभ्यका । क्षत्रियिका, क्षत्रियका । [ इभ्या, क्षत्रिया इनसे अज्ञात आदि अर्थों में 'क' प्रत्यय करने पर "केऽणः" (७।४।१३) से टाप् के आ का ह्रस्व अ होने से पुनः टाप् करने पर—इभ्यका, क्षत्रियका—में य जिसके पूर्व में है ऐसे आ के स्थान पर 'अ' हुआ है यह प्रत्ययस्थ ककार से पूर्व भी है अतः इत्व होने से—इभ्यिका, क्षत्रियिका रूप बनता है । किन्तु पाणिनि के मत में इत्व नहीं होने से—इभ्यका, क्षत्रियका रूप भी होते हैं । ] ककार जिसके पूर्व में है ऐसे आ के अ का इत्व—उदा० चटकिका, चटकका । मूषिकिका, मूषकका । [ चटक तथा मूषक से स्त्रीत्व-विवक्षा में टाप् करने के बाद अज्ञातादि अर्थों में 'क' प्रत्यय होता है । "केऽणः" से ह्रस्व, पुनः टाप्—चटकका मूषकका में प्रत्ययस्थ ककार से पूर्व तथा ककार पूर्व में है जिससे ऐसे 'आ' के 'अ' अर्थात् प्रथम ककार के 'अ' का इत्व होता है—चटकिका, मूषकिका । पाणिनि के मत में इत्व नहीं होता है । यहाँ नित्य इत्व प्राप्त है । वैकल्पिक करने के लिये यह सूत्र है । ]

यकपूर्वाया इति किम् ? अश्वा, अश्विका । 'यकपूर्वायाः' इति स्त्रीलिङ्गनिर्देशः—आतः स्त्रीप्रत्ययस्य प्रतिपत्त्यर्थम् । इह न भवति—शुभं यातीति शुभंयाः, शुभंयिका । भद्रं यातीति भद्रंयाः, भद्रंयिका ।

**न्यासः**

न चात्राकारस्य स्थानेऽकारोऽनेन विधीयते, किं तर्हि ? लक्षणान्तरेणाभिनिर्वृत्तोऽनेन विशिष्यते—आतः स्थाने योऽकार इति । तेन नात्र तस्याः परिभाषाया उपस्थानमिति तत्र यदि स्थानग्रहणं न क्रियते, तदातः समीपो योऽकार इति सामीप्यसम्बन्धप्रतिपत्तिः स्यात् । अथ वा पूर्ववत् प्रश्ने कृत इत्याह—**आत इत्यनेनेत्यादि** । इकारस्य यः स्थानित्वेनोपात्तोऽकारः स आत इत्यनेन विशिष्यते । एवञ्च विशेष्यत्वादकारस्य प्राधान्यम्, आकारस्य विशेषणत्वादप्राधान्यम् । तत्रासति स्थानग्रहणे यद्यपि सा परिभाषानुवाद उपतिष्ठेत, तथापि प्रधाने कार्यसम्प्रत्ययादात इत्यस्या एव षष्ठ्याः स्थानसम्बन्धो विज्ञायेत, न त्वात इत्यस्याः । स्थानग्रहणे तु सत्यस्या अपि विज्ञायते–एतदर्थं स्थानग्रहणम् । **अश्विकेति** । पूर्ववत् कः, ह्रस्वत्वञ्च । अथ 'यकपूर्वायाः' इति स्त्रीलिङ्गेन निर्देशः किमर्थः ? इत्याह—**स्त्रीलिङ्गनिर्देश इत्यादि** । स्त्र्यधिकारविहितः प्रत्ययः स्त्रीप्रत्ययः । तस्यैव प्रतिपत्तिर्यथा स्यादित्येवमर्थं स्त्रीलिङ्गेन निर्देशः । असति तस्मिन्नाकारमात्रस्थाने योऽकारस्तस्य स्थानित्वं विज्ञायेत, ततश्च यातेः शुभम्भद्रंशब्दयोरुपपदतः 'विजुपेच्छन्दसि' इति 'आतो मनिन्क्वनिब्वनिपश्च' इति विच् । तदन्तात् कप्रत्यये शुभंयिका, भदंयिकेत्यत्रापि विकल्पः प्रसज्येत । तस्मात् तन्निवृत्त्यर्थं स्त्रीलिङ्गनिर्देशः । शुभम्भद्रंशब्दौ मकारान्तौ निपातौ ।

**पदमञ्जरी**

**स्त्रीप्रत्ययस्य प्रतिपत्त्यर्थमिति** । यः 'स्त्रियाम्' इत्यधिकृत्य विहितष्टाबादिः स स्त्रीप्रत्ययः, तस्य प्रतिपत्तिर्यथा स्यादित्येवमर्थमित्यर्थः । असति हि स्त्रीलिङ्गे यः कश्चनाकारो गृह्येत ।

**भावबोधिनी**

आकार के स्थान में जो अकार—इसका क्या फल है ? साङ्काश्ये भवा–साङ्काशियका । [ यहाँ साङ्काश्य से वुञ् = अक प्रत्यय "धन्वयोपधाद् वुञ्" सूत्र से होता है । टाप् करने पर नित्य इत्व होता है क्योंकि 'क' से पूर्व 'आ' का 'अ' नहीं है अपितु स्वभावतः अ ही है । ]

[ 'आतः' में षष्ठी है उसी से 'स्थाने' का ज्ञान हो जाता है तब सूत्र में पुनः 'स्थाने' ग्रहण की क्या आवश्यकता है ? ] अनुवाद स्थल में भी स्थान-सम्बन्ध का ज्ञान कराने के लिये 'स्थाने' का दुबारा ग्रहण है । कारण यह है कि 'आतः' इससे 'अत् = ह्रस्व अकार विशेषित होता है । [ यदि 'स्थाने' का पुनः ग्रहण नहीं होगा तो अनुवाद में सम्बन्ध का ज्ञान नहीं हो सकेगा । कारण यह है कि 'षष्ठी स्थानेयोगा' यह परिभाषा आदेश की विधि में ही प्रवृत्त होती है क्योंकि विधि का ही अङ्ग बनती है । उद्देश्य = अनुवाद का नहीं । [ विशेष व्याख्या न्यास में देखें ] ।

य तथा क हैं पूर्व में जिसके—इसका क्या फल है ? अश्वा—अश्विका । [ इसमें नित्य इत्व होता है क्योंकि 'आ' से पूर्व में य् अथवा क् नहीं हैं । ] [ सामान्य रूप से नपुंसक लिङ्ग का प्रयोग न करके 'यकपूर्वायाः' इस स्त्रीलिङ्ग के प्रयोग का क्या तात्पर्य है ? ] 'यकपूर्वायाः' यह स्त्रीलिङ्ग का निर्देश—आ के स्त्रीप्रत्यय का ज्ञान कराने के लिये है । [ भाव यह है कि 'स्त्रियाम्' (४।१।३) इस अधिकार में जो प्रत्यय है उसी 'आ' का ज्ञान कराना उद्देश्य है । ] इस कारण यहाँ नहीं होता है—शुभं याति–शुभंयाः, शुभंयिका । [ क्विप् प्रत्यय, सर्वापहारी लोप, उपपद-समास—शुभंयाः, अज्ञाताद्यि अर्थों में 'क' प्रत्यय 'केऽणः' से ह्रस्व–शुभंयका–इसमें 'आ' होने पर भी स्त्रीप्रत्यय का नहीं अपितु धातु का है । अतः यह सूत्र न लगकर नित्य इत्व होता है । ] भद्रं याति—इस अर्थ में—भद्रंयाः, भद्रंयिका । [ प्रथमरूप में 'सु' का लोप नहीं होता है क्योंकि 'हल्ङ्याब्भ्यः' (६।१।६८) का लक्ष्य नहीं है । द्वितीय में लोप होता है । ]

❀ यकपूर्वायाः धात्वन्तप्रतिषेधः ❀ ( म० भा० )। धात्वन्तयोर्यकारककारयोरस्य प्रतिषेधस्य प्रतिषेधो वक्तव्यः । सुनयिका । सुशयिका । सुपाकिका । सुशोकिका[1] ।।

**३४४४. भस्त्रैषाजाज्ञाद्वास्वा नञ्पूर्वाणामपि ।। ४७ ।। (४६६)**

एषामातः स्थाने योऽकारस्तस्य इत्वं न भवति उदीचामाचार्याणां मतेन । भस्त्रा—भस्त्रका,

**न्यास**

**यकपूर्वाया इत्यादि** । ग्रहणवाक्यम् । तस्य **धात्वन्तयोर्यकारककारयोरित्यादि** । विवरणम् । **वक्तव्यमिति** । व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्—व्यवस्थितविभाषाविज्ञानाद्धात्वन्तयोरपि यकारवकारयोरनन्तरस्याकारस्येत्वप्रतिषेधः प्राप्नोति, स न भविष्यतीति । **सुनयिका, सुशयिकेति** । णीञ्शीङ्भ्याम् 'एरच्' इत्यच् । शोभनो नयोऽस्याः, शोभनः शयोऽस्याः—सुनया, सुशया, ततः 'प्रागिवात् कः', 'केऽणः' इति ह्रस्वत्वम् । **सुपाकिका, अशोकिकेति** । 'डुपचष् पाके', 'शुच शोके', भावे घञ् । शोभनः पाकोऽस्याः, अविद्यमानः शोकोऽस्या इति बहुव्रीहिः, 'शेषाद्विभाषा' इति कप्, 'आपोऽन्यतरस्याम्' इति ह्रस्वत्वम् ।। ४६ ।।

**भस्त्रैषाजाज्ञाद्वास्वा नञ्पूर्वाणामपि ।। भस्त्रका, भस्त्रिकेति** । पूर्ववत् कः । **अभस्त्रका, अभस्त्रिकेति** । पूर्ववत् कप्रत्ययः, बहुव्रीहिः, तत्पुरुषो वा ।

**पदमञ्जरी**

**शुभं याति, भद्रं यातीति** । क्विप् । शुभम्, भद्रमिति मकारान्तौ निपातितौ, पूर्ववत्कः' ह्रस्वत्वं च ।

**प्रतिषेध इति** । तेन विधिरेव भवति । **सुनयिका, सुशयिकेति** । नीशीभ्याम् 'एरच्', सुशब्देन बहुव्रीहिः, टाबादि पूर्ववत् । **सुपाकिका, सुशोकिकेति** । पचिशुचिभ्यां घञ्, 'चजोः कु घिण्ण्यतोः' इति कुत्वम् । शेषं पूर्ववत् ।। ४६ ।।

**भस्त्रैभाषाज्ञाद्वास्वा नञ्पूर्वाणामपि** ।। 'स्वा' इति षष्ठ्याः स्थाने प्रथमा । एषेति कृतषत्वनिर्देशस्तन्त्रम् । तथा च—एतिकाश्चरन्तीति जसि नित्यमित्त्वमुदाहृतम् ।

**भावबोधिनी**

❀ य तथा क जिसके पूर्व में उसके धात्वन्त का प्रतिषेध करना चाहिए ।❀ धातु के अन्त में जो यकार और ककार, इनके अकार के इत्व के विकल्प का प्रतिषेध कहना चाहिए, अर्थात् ऐसे अकार का नित्य 'इ' होता है । उदा० सुनयिका । सुशयिका । सुपाकिका । सुशोकिका । [ णीञ् तथा शीङ् से 'एरच्' सूत्र से अच् प्रत्यय, गुण, अय् आदेश—नय, शय । शोभनः नयः अस्याः सा, शोभनः शयः अस्याः सा—इस प्रकार बहुव्रीहि करके टाप्—सुनया, सुशया । पुनः अज्ञातादि अर्थ में 'क' प्रत्यय, 'केऽणः' से ह्रस्व, पुनः टाप् । यहाँ धातु का य् अन्त में है अतः यह विकल्प न होकर नित्य इत्व होता है । इसी प्रकार डुपचष् तथा शुच् धातुओं से भाव अर्थ में घञ् = प्रत्यय, 'चजोः कु घिण्ण्यतोः' सूत्र से च् का क्—उपधागुण, पच् में उपधावृद्धि—पाक, शोक । पूर्ववत् बहुव्रीहि —शोभनः पाकः अस्याः, शोभनः शोकः अस्याः—सुपाका, सुशोका । पुनः 'क' प्रत्यय, ह्रस्व, टाप् के बाद इससे विकल्प से इत्व न होकर नित्य ही इत्व होता है । अविद्यमानः शोकः अस्याः सा' यह उदा० न्यासकार ने दिया है । यह अधिक अच्छा है । ] ।। ४६ ।।

( भस्त्रा, एषा, अजा, ज्ञा, द्वा, स्वा— ) इन शब्दों के ( नञ् पूर्व वालों के भी ) अकार के स्थान पर जो अकार उसका इत्व नहीं होता है उदीच्य आचार्यों के मत में । [ पाणिनि के मत में होता है । अतः विकल्प फलित होता है । ] भस्त्रा-भस्त्रिका, भस्त्रका । [ न भस्त्रा अभस्त्रिका, अभस्त्रका । [ नञ् के साथ 'अविद्यमानः भस्त्रा यस्याः सा'—यह बहुव्रीहि अथवा 'न भस्त्रा' ऐसा नञ् तत्पुरुष समास, क प्रत्यय, ह्रस्व, टाप् के बाद ह्रस्व किये गये अकार का इत्व विकल्प से होता है । ] एषा—एषका, एषिका । [ एतत् से अकच्, टाप्, वैकल्पिक इत्व ] अजा—अजका, अजिका । [ अजा से 'क' प्रत्यय, ह्रस्व अजक + टाप्, विकल्प से इत्व । ] अनजका, अनजिका । [ न अजा इस

१. 'अशोकिका' इति पाठो न्यासे ।

-भस्त्रिका; अभस्त्रका, अभस्त्रिका । एषा—एषका, एषिका । अजा—अजका, अजिका; अनजका, अनजिका । ज्ञा—ज्ञका, ज्ञिका, अज्ञका, अज्ञिका । द्वा—द्वके, द्विके । स्वा—स्वका, स्विका; अस्वका, अस्विका ।

एषाद्वे नञ्पूर्वे न प्रयोजयतः, किं कारणम् ? तत्र हि सति यदि साकच्काभ्यां नञ्समासः, अथापि कृते नञ्समासे पश्चादकच्—उभयथापि समासाद् या विभक्तिरुत्पद्यते तस्यां सत्यां त्यदाद्यत्वे सति टापा

**न्यासः**

अथ कस्मादेषा-द्वे नञ्पूर्वे नोदाह्रियेते ? इत्याह—एषाद्वे नञ्पूर्वे न प्रयोजयत इति । प्रकृतत्वादित्त्वप्रतिषेधविकल्प इति विज्ञेयम् । किं कारणमिति । अनेन नञ्पूर्वयोरप्रयोजकत्वे कारणं पृच्छति । अत्र

**पदमञ्जरी**

अत्रातः स्थान इत्येतत् स्वशब्दस्य विशेषणम् ।
सम्भवव्यभिचारौ हि तत्र स्तः काकचोः सतोः ॥
द्व्येतदोः सम्भवो नास्ति, नान्यत्र व्यभिचारिता ।
सर्वनाम्नः स्वशब्दस्य तेन नायं विधिर्भवेत् ॥

द्वके इति । द्वकिशब्दाद् द्विवचने त्यदाद्यत्वे टापि औङः शीभावः । तस्यां सत्यामिति । समासार्थात्तु या विभक्तिस्तस्यां त्यदाद्यत्वं न भवति; 'अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते' इति वचनात् । सोऽन्तर्वर्त्तिन्या विभक्त्या सुबन्तात्पर इति । प्रत्ययलक्षणेन सुबन्तत्वम् ।

**भावबोधिनी**

तत्पुरुष से अथवा अविद्यमाना अजा यस्याः सा—इस बहुव्रीहि से 'क' प्रत्यय, टाप्, विकल्प से इत्व । ] ज्ञा—ज्ञिका, ज्ञका, अज्ञिका अज्ञका । [ जानाति अर्थ में 'ज्ञा' धातु से क = अ प्रत्यय आलोप, टाप् = ज्ञा । 'क' प्रत्यय, ह्रस्व, टाप् करने पर विकल्प से इत्व । नञ् समास में भी यही प्रक्रिया है । ] द्वा—द्वके, द्विके स्वा—स्वका, स्विका, अस्वका, अस्विका ।

**विमर्श**—द्वि + औ, अकच्—द्वकि + औ, उदाद्यत्व, पररूप, द्वक + टाप् = आ, दीर्घ, औ का शी = ई, गुण—द्वके, इत्व करने पर—द्विके ।

परन्तु यह प्रचलित प्रक्रिया की संगति कठिन है । सूत्र में कहा गया है—'आतः स्थाने योऽकारः तस्य इत्वं न भवति'''। अर्थात् जिस आ का ह्रस्व अ होता है उसी का इत्व किया जाता है । इसके अतिरिक्त यह भी ध्यान देने का विषय है कि 'एषा' के समान 'द्वा' ऐसा आकारान्त निर्देश किया गया है । इससे ऐसा प्रतीत होता है कि 'द्वि' का पहले 'द्वा' रूप बनाने के लिए टाप् करना चाहिए, इसके बाद अकच् करने पर—'द्वका' बनता है । यहाँ 'आ' के स्थान पर अकच् का अकार है । इसका इत्व विकल्प से होता है—द्विका + औ = शीङ् = ई, गुण । इत्व न होने पर द्वके । इस दूसरी प्रक्रिया का प्रतिपादन किसी ने नहीं किया है । परन्तु संगति बैठाने के लिए यह आवश्यक है । अथवा पदमञ्जरीकार का मत मानकर 'अकार के स्थान पर जो अकार' इस विशेषण को 'द्वि' और एतद् के साथ न जोड़ा जाय । ऐसा करने पर किसी भी अकार का इत्व हो जाता है वह अकच् का हो या आ के स्थान पर होने वाला हो । पदमञ्जरी की कारिकायें ध्यान से देखें । इसीलिये सिद्धान्तकौमुदी में भी लिखा है—"इह हि 'आतः स्थाने' 'इत्यनुवृत्तं स्वशब्दस्यातो विशेषणम्, न तु द्व्येषयोरसम्भवात् । 'नाप्यन्येषामव्यभिचारात् ।' ( सि० कौ० प्रस्तुतसूत्र पर ) ।

( अनु० ) 'एषा' तथा 'द्वे' ये नञ्पूर्व अर्थात् नञ् के साथ समास में इस सूत्र की प्रवृत्ति नहीं कराते हैं । क्या कारण है ? ऐसा मानने पर अर्थात् नञ् समास में भी इन दोनों विषय मान लेने पर यदि अकच् सहित इन दोनों का नञ् के साथ समास हो अथवा नञ् समास करने के बाद अकच् माना जाय—इन दोनों ही स्थितियों में समाससंज्ञक शब्द रूप से जो विभक्ति आती है उसके परे रहते 'त्यदादीनामः' सूत्र से अत्व, पररूप आदि कर लेने पर टाप् होता है, यह टाप् अन्तर्वर्तिनी विभक्ति के कारण सुबन्त से परे ही होता है, इसलिए इत्व

भवितव्यम्, सोऽन्तर्वर्तिन्या विभक्त्या सुबन्तात्पर इति इत्वस्य प्राप्तिरेव नास्ति। तेन अनेषका, अद्वके— इत्येव नित्यं भवितव्यम्।

स्वशब्दस्तु ज्ञातिधनाख्यायां नञ्पूर्वोऽपि प्रयोजयति।

'भस्त्रा'—इत्ययमभाषितपुंस्कः, तस्य 'अभाषितपुंस्काच्च' (७।३।४८) इत्येव सिद्धे यदिह ग्रहणं तदुपसर्जनार्थम्—अविद्यमाना भस्त्रा यस्या अभस्त्रा, साल्पा अभस्त्रका, अभस्त्रिका।

न्यासः

हीत्यादिना तत्कारणं दर्शयति। सोऽन्तर्वर्तिन्या विभक्त्येति। यासौ समासार्था विभक्तिस्तया लुप्तयापि प्रत्ययलक्षणेन स आप्सुबन्तादेवैतच्छब्दाद् द्विशब्दाच्च परः सम्पद्यते, तेनेत्वस्य प्राप्तिरेव नास्ति; 'असुपः' इति प्रतिषेधात्, तत् किं प्रतिषेधविकल्पेन ? तस्मादेषाद्वे नञ्पूर्वे न प्रयोजयतः।

यद्येवम्, अनयैव युक्त्या स्वशब्दोऽपि न प्रयोजयेत्। इत्यत आह—स्वशब्दस्त्वित्यादि। युक्तं यदेषाद्वे नञ्पूर्वे न प्रयोजयतः, अत्र व्यवधानाभावात् सुबन्तात् पर आब् भवतीति कृत्वा, न हि प्राक् टेर्भवन्नकज् व्यवधायको भवितुमर्हति; स्वशब्दस्तु 'स्वमज्ञातिधनाख्यायाम्' इति वचनाज्ज्ञातिधनयोरसर्वनामसंज्ञकः, तेन तस्मात् कप्रत्ययेनैव भवितव्यम्, नाकचा, तत्र यदि नञ्समासं कृत्वा कप्रत्ययः क्रियते, तदन्ताच्च टाप्, तदासौ सुबन्तात् परो न भवति; कप्रत्ययेन व्यवधानादिति असर्वनामसंज्ञकः स्वशब्दो नञ्पूर्वोऽपि विकल्पं प्रयोजयति।

भस्त्रेत्ययमभाषितपुंस्क इति। स्त्रियामेव सर्वदा वृत्तेः। यद्येवम्, 'अभाषितपुंस्काच्च' इत्यनेनैव

पदमञ्जरी

स्वशब्दोऽपि तह्यंनयैव युक्त्या नञ्पूर्वो न प्रयोजयेदित्यत आह—स्वशब्दस्त्विति। स्वशब्दो हि 'स्वमज्ञातिधनाख्यायाम्' इति वचनाज्ज्ञातिधनयोरसर्वनामसंज्ञकः, तेन तस्मात्कप्रत्ययेनैव भवितव्यम्, नाकचा। तत्र यदा नञ्समासे कप्रत्ययः क्रियते तदन्ताच्च टाप्, तदासौ सुपः परो न भवति; केन व्यवहितत्वात्। तेनासर्वनामसंज्ञकः स्वशब्दो नञ्पूर्वोऽपि भवत्येव प्रयोजकः।

अभस्त्रका, अभस्त्रिकेति। 'अल्पे' इति 'प्रागिवात्कः'। असति तु भस्त्राग्रहणे यथा न सिध्यति तथा दर्शयति—अत्रेति। बहुव्रीहिः पुंस्यपि वर्तते—अभस्त्रः पुरुष इति। विहितग्रहणेनैतद्दर्शयति—यद्यप्यभाषितपुंस्का-

भावबोधिनी

की प्राप्ति ही नहीं है। इस कारण—अनेषका, अद्वका—यही एक ( इत्वादेशरहित ) रूप बनना चाहिए। ] भाव यह है कि यदि पहले अकच् कर लें तो—नञ् सु एतकद्+सु इसका समास होता है अथवा नञ् सु एतद् औ—ऐसा समास करने के बाद अकच् करें—दोनों में त्यदाद्यत्व की प्रवृत्ति के पहले ही विभक्ति का लोप होता है क्योंकि परिभाषा 'अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते'। अब 'अनेकन्' तथा 'अद्वकि' इन समास संज्ञकों से क्रमशः सु तथा औ विभक्तियाँ होती है। विभक्ति-सम्बन्धी कार्य के बाद ही 'अजाद्यतष्टाप्' से टाप् होता है। टाप् के बाद पुनः सु तथा औ विभक्तियाँ क्रमशः आती हैं। टाप् करने के पहले जो विभक्तियाँ थीं, उनका लुक् हुआ है उन्हें 'प्रत्ययलोपे प्रत्ययलक्षणम्' से मान लेने पर टाप् प्रत्यय सुबन्त से परे हो जाता है। फलतः 'असुपः' (= सुबन्त से परे न हो)—यह प्रतिषेध लग जाता है। ]

[ उपर्युक्त रीति से तो 'स्व' का भी नञ् के साथ नहीं होना चाहिए ? ] 'स्व' शब्द तो ज्ञाति और धन की आख्या में नञ् पूर्वक होकर भी प्रस्तुत सूत्र को प्रवृत्त कराता है। [ भाव यह है कि 'स्वमज्ञातिधनाख्यायाम्' सूत्र से ज्ञाति = आत्मीय बन्धुबान्धव तथा धन अर्थ में 'स्व' की सर्वनाम संज्ञा नहीं होने से 'क' प्रत्यय ही होता है अकच् नहीं। जब नञ् समास में 'क' प्रत्यय और क प्रत्ययान्त से टाप् होता है। तब यह टाप् सुप् से परे नहीं होता है क्योंकि बीच में 'क' का व्यवधान हो जाता है। इसलिये उस सर्वनाम 'स्व' से नञ् समास में तथा अकेले में दोनों में प्रस्तुत सूत्र लगने से विकल्प से इत्व होता है।

'भस्त्रा' यह अभाषितपुंस्क है [ क्योंकि यह नित्य स्त्रीलिङ्ग है ], इसका तो [ अग्रिम ] 'अभाषितपुंस्काच्च' ( ७।३।४८ ) से ही सिद्ध रहने पर जो जो यहाँ ग्रहण किया गया है वह उपसर्जन का ग्रहण कराने के लिए है—अविद्यमान है भस्त्रा जिसकी वह—अभस्त्रा। अल्पा भस्त्रा अस्या—इस अर्थ में [ क' प्रत्यय करने पर ] अभस्त्रका,

**अत्रोपसर्जनह्रस्वत्वे कृते पुनर्बहुव्रीहौ कृते भाषितपुंस्काद् यष्टाबुत्पद्यते तस्य 'केऽणः' ( ७।४।१३ ) इति यो ह्रस्वः, नासावभाषितपुंस्काद्विहितस्यातः स्थाने भवति ।**

**'नञ्पूर्वाणामपि' इत्यपिशब्दादन्यपूर्वाणां केवलानां च विधिरयमिष्यते । निर्भस्त्रिका, निर्भस्त्रका । बहुभस्त्रिका, बहुभस्त्रका—इत्येवमनयोरपीष्यते ।**

**न्यासः**

विकल्पः सिद्धः, तत् किमर्थमिहोपादीयते ? इत्यत आह—**तस्येत्यादि** । उपसर्जनमर्थः = प्रयोजनं यस्य तत् तथोक्तम् । यदानुपसर्जनं भस्त्राशब्दो भवति, तदायमभाषितपुंस्क इति सत्यमुत्तरसूत्रेण सिद्धो विकल्पः, तत्रापि नञ्पूर्वाणामित्यनुवृत्तेः । यदा तूपसर्जनं भवति, तदा भाषितपुंस्कत्वं प्रतिपद्यत इति न सिध्यति । तस्मादुपसर्जनस्य भाषितपुंस्कस्यापि यथा स्यादित्येवमर्थमिह भस्त्राशब्दस्य ग्रहणम् । **अभस्त्रका, अभस्त्रिकेति** । 'अल्पे' इत्यर्थे 'प्रागिवात् कः' । **अत्रेति** । उपन्यस्त उदाहरणे । **उपसर्जनह्रस्वत्वे कृते इति** । अविद्यमाना भस्त्राऽस्या इति बहुव्रीहौ कृते 'गोस्त्रियोरुपसर्जनस्य' इत्यनेन । **पुनरित्यादि** । अभस्त्रशब्दो हि बहुव्रीहिः, स पुंस्यपि वर्त्तत इति भाषितपुंस्को भवति । तस्माद् यदा टाप् स भाषितपुंस्कशब्दादुत्पद्यते । तस्य भाषितपुंस्कादुत्पन्नस्यापि टापो यः 'केऽणः' इति ह्रस्वो भवति, नासावभाषितपुंस्काद्विहितस्यातः स्थाने भवति । तस्मादभाषितपुंस्कादित्यनेन न सिध्यति—इत्यभिप्रायः ।

**नञ्पूर्वाणामपीत्यपिशब्दादन्यपूर्वाणां केवलानाञ्च विधिरयमिष्यत इति** । तत्रोदाहरणमाह—**निर्भस्त्रिकेत्यादि** । निर्गता भस्त्रा यस्याः सा निर्भस्त्रिका । बह्वचो भस्त्रा यस्याः सा बहुभस्त्रिका । आदिशब्देन सुभस्त्रका, सुभस्त्रिका; भस्त्रका, भस्त्रिका—इत्येवमादीनां ग्रहणम् । यदि तर्ह्यन्यपूर्वाणां केवलानाञ्च विधिरिष्यते, तदा 'नञ्पूर्वाणाम्' इति वचनमनर्थकं स्यात् । नञादिपूर्वाणां तदन्तविधिना भविष्यति, केवलानाञ्च व्यपदेशिवद्भावेन; 'ग्रहणवता प्रातिपदिकेन तदन्तविधिर्न' इति । 'व्यपदेशिवद्भावोऽप्रातिपदिकेन' इति वचनान्न सिध्यतीत्येतच्च नाशङ्कनीयम्, उभे अपि ह्येते परिभाषे प्रत्ययविधिविषये एवेत्यत आह—

**पदमञ्जरी**

भस्त्राशब्दात्परो भवति, तथापि तस्माद्विहितो न भवति । विहितविशेषणं चोत्तरत्रापि भाषितपुंस्कग्रहणम्, अन्यथा न विद्यते खट्वा यस्याः साऽखट्वा, ततोऽखट्विका—इत्यादावपि प्रसङ्गादिति ।

अपिग्रहणेन केवलानामेव भस्त्रादीनां समुच्चयः, नान्यपूर्वाणामिति शङ्कमानं प्रत्याह—**नञ्पूर्वाणामपीत्यपिशब्दादिति । इष्यते इति** । अनेन नेयं स्वतः प्राप्तिरिति दर्शयति । यदि तर्हि सर्वत्रेष्येत, नञ्पूर्वाणाम्-

**भावबोधिनी**

**अभस्त्रिका** । यहाँ [ बहुव्रीहि समास में 'गोस्त्रियोरुपसर्जनस्य' सूत्र से ] उपसर्जन ( भस्त्रा ) का ह्रस्व करने पर पुनः बहुव्रीहि करने पर ( अभस्त्रः इस पुंल्लिङ्ग ) भाषितपुंस्क से जो टाप् होता है उसका 'केऽणः' सूत्र से जो ह्रस्व होता है वह अभाषितपुंस्क से विहित आकार के स्थान पर नहीं है । [ अविद्यमाना भस्त्रा यस्याः सा—इस अर्थ में समास करने पर 'गोस्त्रियोरुपसर्जनस्य' सूत्र से ह्रस्व करने के बाद टाप् करने पर—अभस्त्रा' बनता है । यह पुंल्लिङ्ग में 'अभस्त्रः पुरुषः' बनता है । इससे पुनः बहुव्रीहि करने पर स्त्रीलिङ्ग में जो टाप् किया जाता है और 'क' प्रत्यय करने के बाद 'केऽणः' सूत्र से जो ह्रस्व किया जाता है वह अभाषितपुंस्क से विहित आ के स्थान पर नहीं अपि तु भाषितपुंस्क से विहित आ के स्थान पर ही होता है । इसलिये अग्रिम सूत्र से निर्वाह नहीं होता है । ]

'नञ्पूर्व में जिनमें है 'उनका भी' यहाँ 'भी' ( अपि ) शब्द से—अन्य शब्द जिनके पूर्व में उनका तथा केवलों ( अकेले शब्दों ) का यह विधान इष्ट है । उदा० **निर्भस्त्रिका, निर्भस्त्रका । बहुभस्त्रिका, बहुभस्त्रका**—इनका भी विकल्प से इत्व, इष्ट है । भस्त्रायाः निष्क्रान्तः—अर्थ में 'निरादयः क्रान्ताद्यर्थे पञ्चम्या:" वचन से समास करने 'गोस्त्रियोरुपसर्जनस्य' से ह्रस्व, इसके बाद टाप् करने पर—निर्भस्त्रा, इस समास से सु प्रत्यय, स्वार्थिक 'क' प्रत्यय 'केऽणः' से ह्रस्व—निर्भस्त्रक शब्द से पुनः टाप्, सवर्णदीर्घ—निर्भस्त्रका । इसमें नित्य इत्व प्राप्त है, विकल्प से किया जाता है । बह्वचः भस्त्राः यस्याः सा—इस बहुव्रीहि में भी नित्य प्राप्त है, विकल्प से किया जाता है । भस्त्रा = पानी भरने का चमड़े का पात्रविशेष, मसक । ]

अत्र 'नञ्पूर्वाणाम्' इति वचनमनुवाद एव मन्दबुद्धिप्रतिपत्त्यर्थः ॥

**३४४५. अभाषितपुंस्काच्च ॥ ४८ ॥ ( ४६७ )**

अभाषितपुंस्काद्विहितस्यातः स्थाने योऽकारस्तस्योदीचामाचार्याणां मतेन इकारादेशो न भवति। खट्वका, खट्विका। अखट्वका, अखट्विका। परमखट्वका, परमखट्विका।

बहुव्रीहौ यदा कपि ह्रस्वः क्रियते तदा भवितव्यमनेन विधिना। अत्राप्यभाषितपुंस्काद्विहितस्यातः स्थाने भवत्यकार इति।

**न्यासः**

**अत्रेत्यादि**। तदन्तविधिना व्यपदेशिवद्भावेनात्र सिद्धस्यैव प्रकारविधेर्नञ्पूर्वाणामपीति वचनानुवादः। किमर्थः ? **मन्दबुद्धिप्रतिपत्त्यर्थः**। नञ्पूर्वाणामपीति वचनमन्तरेण यः प्रतिपत्तुर्यथा स्यादित्येवमर्थम् ॥ ४७ ॥

**अभाषितपुंस्काच्च** ॥ नञ्पूर्वाणामपीत्यनुकर्षणार्थश्चकारः। **खट्वका, खट्विकेति**। पूर्ववत् कः। खट्वाशब्दोऽयमाविष्टलिङ्गो नित्यं स्त्रियामेव वर्तत इति भाषितपुंस्को न भवति। **अखट्विकेति**। न खट्वा अखट्वेति नञ्समासः। **परमखट्वकेत्यादि**। 'सन्महत्' इत्यादिना समासः। सर्वत्र 'केऽणः इति ह्रस्वः।

बहुव्रीहेर्भाषितपुंस्कत्वादत्र न भवितव्यमनेन विकल्पेनेति कस्यचिद् भ्रान्तिः स्यात्, अतस्तां निराकर्तुमाह—**बहुव्रीहावित्यादि**। कथं पुनरभाषितपुंस्कादित्युच्यमाने बहुव्रीहौ भाषितपुंस्कादपि भवति ? इत्याह—**अत्राप्यभाषितपुंस्कादित्यादि**। इतिकरणो हेतौ। यद्यपि बहुव्रीहेर्भाषितपुंस्को भवति, तथापि यदा कपि 'आपोऽन्यतरस्याम्' इति ह्रस्वः क्रियते, तदाऽभाषितपुंस्कादेव विहितस्याकारस्य स्थाने यः स्यादकारस्तस्माद् भवत्येव विकल्पः। अविद्यमाना खट्वास्या इति बहुव्रीहिः, 'शेषाद्विभाषा' इति कप् ततो ह्रस्वः। स चाभाषितपुंस्कादेव विहितस्याकारस्य भवति। तेनाखट्वका, अखट्विकेति विकल्पो भवत्येव।

**पदमञ्जरी**

पीति न वक्तव्यम् 'अङ्गाधिकारे तस्य च तदुत्तरपदस्य च' इत्येव सर्वत्र भविष्यत्यत आह–**तत्रेति** ॥ ४७ ॥

**अभाषितपुंस्काच्च** ॥ अभाषितपुंस्कादिति विहितविशेषणमित्याह—**अभाषितपुंस्काद्विहितस्येति**। खट्वाशब्दः स्त्रियामेव नियत इत्यभाषितपुंस्कः, बहुव्रीहेरभिधेयलिङ्गत्वादभाषितपुंस्कत्वाभावादनेन विकल्पेन न भवितव्यमिति मन्यमानं प्रत्याह—**बहुव्रीहाविति**। कथं भवतीत्यत आह—**तत्रापीति**। इतिकरणो हेतौ।

**भावबोधिनी**

इसमें 'नञ् जिनके पूर्व में उनका'—यह वचन मन्द बुद्धिवालों के शीघ्र ज्ञान के लिए ही है। [ कारण यह है अङ्गाधिकार में उसका और वह है अन्त में जिसका—दोनों का ग्रहण होता है। इसलिये उच्चारित शब्दों का और ये जिसके अन्त में है–दोनों का ग्रहण सिद्ध है। इसी का अनुवादक 'नञ् पूर्वाणाम् है। ]॥ ४७ ॥

अभाषित पुंस्क शब्द से किये गये आकार के स्थान में जो अकार उसके स्थान पर उदीच्य आचार्यों के मत में इकार आदेश नहीं होता है। उदा० खट्वका, खट्विका [ खट्वा शब्द नित्य स्त्रीलिङ्ग होने से अभाषितपुंस्क है। 'क' प्रत्यय करने पर "केऽणः" सूत्र से ह्रस्व, पुनः टाप् करने पर विकल्प से इत्व करने पर दो रूप होते है। ] अखट्वा, अखट्विका। [ न खट्वा—इस विग्रह में नञ् समास के बाद 'क' प्रत्यय आदि कार्य होते हैं। ] परमखट्वका, परमखट्विका। परमा चासौ खट्वा च—यहाँ 'सन्महत्परमोत्तमोत्कृष्टा. पूज्यमानैः" ( २।१।६१ ) से समास तथा पूर्वोक्त प्रक्रिया होती है। ]

बहुव्रीहि में जब कप् प्रत्यय परे रहते [ 'आपोऽन्यतरस्याम्' सूत्र से ] ह्रस्व किया जाता है तब यह विधि = सूत्र लगना ही चाहिए। क्योंकि इसमें भी अभाषितपुंस्क से विहित आ के स्थान में अकार होता है। [ अविद्यमाना खट्वाऽस्याः—इस बहुव्रीहि में 'शेषाद् विभाषा' से कप् प्रत्यय, इसके बाद ह्रस्व होता है। यह ह्रस्व

यदा तु अविद्यमाना खट्वा अस्याः अखट्वा, अल्पा अखट्वा अखट्विकेति, तदा न भवति । तथा अतिक्रान्ता खट्वामतिखट्वा, अल्पा अतिखट्वा अतिखट्विका ॥

**३४४६. आदाचार्याणाम् ॥ ४९ ॥ ( ४६८ )**

अभाषितपुंस्कादातः स्थाने योऽकारस्तस्याचार्याणामाकारादेशो भवति । खट्वाका, अखट्वाका, परमखट्वाका ॥

**३४४७. ठस्येकः ॥ ५० ॥ ( ११७० )**

न्यासः

**यदा त्वित्यादि ।** अविद्यमाना खट्वास्या इति बहुव्रीहौ कृत उपसर्जनह्रस्वत्वम्, ततष्टाप् । अल्पा अखट्वेति 'प्रागिवात् कः'—**अखट्विकेति ।** अत्र विकल्पो न भविष्यति; भाषितपुंस्कत्वाद् बहुव्रीहेर्विहितस्यातः स्थानेऽकारस्य विहितत्वात् । प्रादिसमासेऽपि न भवतीति दर्शयन्नाह—**तथेत्यादि । अतिखट्विकेति ।** अत्रापि प्रादिसमासे कृते, उपसर्जनह्रस्वत्वे च, पुनस्तत्पुरुषाद्भाषितपुंस्काद् विहितस्यातः स्थाने विहितोऽकार इति न प्रवर्त्तते विकल्पः ॥ ४८ ॥

**आदाचार्याणाम् ॥** नञ्पूर्वाणामपीति निवृत्तम्; पूर्वसूत्रे चानुकृष्टत्वात् । इत्त्वापवादोऽयं योगः । 'केऽणः' इति ह्रस्वापवादश्च ।

आचार्यग्रहणं नित्यार्थम् । असति हि तस्मिन्, 'उदीचाम्' इत्यधिकाराद् विकल्पः स्यात् । आचार्यग्रहणे तु सति तेन 'उदीचाम्' इत्येतस्मिन्निवर्त्तिते नित्य एष विधिर्भवतीति ॥ ४९ ॥

**ठस्येकः ॥** अत्र यद्यविशेषेण ठस्य ग्रहणं स्यात्, पठिता, पठितुमित्यादौ धात्वन्तरस्यापि स्यात् । अत एतद्दोषपरिजिहीर्षया प्रत्ययस्य ठस्य ग्रहणम्, न तु ठमात्रस्येति दर्शयितुमाह—**अङ्गस्य निमित्तं यष्ठ**

पदमञ्जरी

**यदा त्विति ।** कबभावपक्ष एतत् । अखट्वा इति स्थिते उपसर्जनह्रस्वत्वम्, टाप्, पुनः 'केऽण' इति ह्रस्वः । स च समासाद्भाषितपुंस्कादुत्पन्नस्य टाप इति न भवत्ययं विकल्पः । 'अभाषितपुंस्कात्परस्यातः' इति विज्ञायमाने स्यादेवात्र विकल्पः । **अतिखट्विकेति ।** अत्रापि समासाद्भाषितपुंस्काट्टाबुत्पन्नः ॥ ४८ ॥

**आदाचार्याणाम् ॥** इत्त्वापवादोऽयं योगः । 'केऽणः' इति ह्रस्वापवादश्च । **आचार्याणामिति ।** उदीचामित्युक्तम्, ततोऽन्येषामाचार्याणामित्यर्थः । अपर आह—आचार्यस्य पाणिनेर्य आचार्यः स इहाचार्यः, गुरुत्वात्तु बहुवचनमिति । सर्वथा अभाषितपुंस्केषु त्रैरूप्यम्—अखट्वका, अखट्विका, अखट्वाकेति ॥ ४९ ॥

**ठस्येकः ।** अत्र द्वौ पक्षौ—ठेति व्यञ्जनमात्रं स्थानित्वेन निर्दिश्यते, अकारस्तूच्चारणार्थः, एवं ढगादिष्वपीत्येकः पक्षः; सङ्घातः प्रत्ययः, स्थान्यप्यत्र स एवेति द्वितीयः । तत्राद्ये पक्षे पठिता, पठितमित्यादौ

भावबोधिनी

अभाषितपुंस्क से ही विहित आकार का किया जाता है । अतः प्रस्तुत सूत्र लगने से वैकल्पिक इत्व होता है । ] परन्तु जब 'अविद्यमाना खट्वा अस्याः—अखट्वा, अल्पा अखट्वा—अखट्विका—यह होता है, तब यह विकल्प नहीं होता है । [ क्योंकि भाषितपुंस्क बहुव्रीहि से विहित आ के स्थान पर अकार होता है । इसी प्रकार—अतिक्रान्ता खट्वाम्, अतिखट्वा —अतिखट्विका । [ यहाँ भी भाषितपुंस्क से ही विहित आ के स्थान पर 'अ' है । अतः यह सूत्र न लगने से विकल्प न होकर सामान्य सूत्र से नित्य इत्व होता है । ] ॥ ४८ ॥

अभाषितपुंस्क से 'आ' के स्थान में जो अकार किया गया है, आचार्यों के मत में उसका आकार आदेश होता है । उदा० खट्वाका । अखट्वाका । परमखट्वाका । [ यह सूत्र इत्व आदेश का तथा "केऽणः" से होने वाले ह्रस्व का भी अपवाद है । यहाँ 'आचार्याणाम्' यह सामान्य निर्देश "उदीच्य" से भिन्न आचार्यों का ज्ञान कराने के लिये है । साथ ही नित्य आदेश का भी ज्ञान कराता है । ] ॥ ४९ ॥

अङ्ग ( संज्ञा ) का निमित्त जो ठ, और अङ्गसंज्ञा का निमित्त कौन है ? प्रत्यय, उस प्रत्यय 'ठ' का 'इक' यह आदेश होता है । उदा० 'प्राग्वहतेष्ठक्' ( से ठक् प्रत्यय, ठ का इक आदेश—) आक्षिकः, शालाकिकः । [ अक्षै-

**अङ्गस्य निमित्तं यष्ठः, कश्चाङ्गस्य निमित्तम् ? प्रत्ययः, तस्य प्रत्ययठस्य इक इत्ययमादेशो भवति । 'प्राग्वहतेष्ठक्' ( ४।४।१ ) आक्षिकः, शालाकिकः । 'लवणाट्ठञ्' ( ४।४।५२ ), लावणिकः ।**

**ठगादिषु यदि वर्णमात्रं प्रत्ययः, उच्चारणार्थोऽकारः; तदा इहाप्यकार उच्चारणार्थः, वर्णमात्रं तु स्थानित्वेनोपादीयते । सङ्घातग्रहणे तु प्रत्ययेऽत्रापि सङ्घातग्रहणमेव । तत्र 'कणेष्ठः' ( उ० १०८ ), कण्ठः—इत्येवमादीनामुणादीनाम् 'उणादयो बहुलम्' ( ३।३।१ ) इति न भवति ।**

**न्यासः**

**इति ।** अङ्गस्येति सम्बन्धलक्षणा षष्ठी । अत्र यद्यपि धात्ववयवो ह्यङ्गस्य सम्बन्धी भवति, तथापि यदा यतो ह्यङ्गस्यात्मलाभो यस्मिन्नङ्गमित्येतद् भवति, स एव प्रत्यासत्तेरङ्गस्य निमित्तीभूतः सम्बन्धी गृह्यते, न त्ववयवोऽपि । **कश्चाङ्गस्य निमित्तं भवतीति ।** एवं मन्यते—यदि सामान्येनाङ्गस्य निमित्तं यत्तदिह गृह्यते धात्वन्तस्य ठस्य स्यादेव, भवन्ति हि अवयवा अङ्गस्यावयविनो निमित्तम्, तैस्तस्यारम्यमाणत्वादित्याह—**प्रत्यय इति ।** अस्यायमभिप्रायः—सत्स्वप्यवयवेषु यावत्प्रत्ययो नोत्पद्यते तावत्तस्यावयविनोऽङ्गात्मलाभो न भवति, तस्मिंस्तूत्पन्ने सति भवति; तस्मात्प्रत्यय एवाङ्गस्य निमित्तम्, नावयव इति । **आक्षिकः, शालाकिक इति ।** अक्षैर्दीव्यतीत्यर्थे ठक् । **लावणिक इति ।** अत्रापि लवणं पण्यमस्येति 'लवणाट्ठञ्' ।

इह ठस्येति वर्णमात्रस्य ग्रहणं वा स्यात् ? सङ्घातस्य वा ? तत्र पूर्वस्मिन् पक्षे ठस्येति निर्देशो नोपपद्यते; इतरस्मिंस्त्वौणादिकेऽतिप्रसङ्गः—'कणेष्ठः' कण्ठ इत्यादौ । इह तु मथितं पण्यमस्येति माथितिक इति ठस्येकादेशे कृते प्रकृतेश्च 'यस्येति च' इत्यकारलोपे सति तान्ततायामुपजातायामिकादेशस्य स्थानिवद्भावाट्ठग्रहणेन ग्रहणाद् 'इसुसुक्तान्तात् कः' इति कादेशः प्रसज्येतेति यश्चोदयेत्, तं प्रत्याह—**ठगादिष्वित्यादि ।** आदिशब्देन ठञादीनां ग्रहणम्, यदि तेषु वर्णमात्रमनच्कप्रत्ययोऽकारस्तूच्चारणणार्थः, तदा 'ठस्येकः' इत्यत्राप्यकार उच्चारणार्थः । एवं वर्णमात्रं स्थानित्वेनोपादीयते । इहाप्यकार उच्चारणार्थ एवेति वर्णमात्रग्रहणेन यो दोषः परस्य चोदयिष्यतः स निराकृतः । सत्यपि वर्णमात्रस्य ग्रहणे, आगन्तुकेनोच्चार-

**पदमञ्जरी**

धात्वन्तस्यापि प्रसङ्गः; द्वितीये तु अठचि कर्मठ इत्यत्रापि प्राप्नोति । तत्र द्वयोरपि पक्षयोर्यथा दोषो न भवति तथा दर्शयन्नाह—**अङ्गस्य निमित्तं यष्ठ इति ।** सम्बन्धस्तत्र नावयवावयविभावलक्षणः, पठितेत्यादावपि प्रसङ्गात्; किं तर्हि ? निमित्तनिमित्तिभावलक्षणः । अङ्गस्य सम्बन्धीत्युक्ते तद्रूपसम्बन्ध्येव प्रतीयते; प्रत्ययश्च तद्रूप-सम्बन्धी, तदायत्तत्वादङ्गव्यपदेशस्य । तदेवमङ्गव्यपदेशनिमित्तस्य प्रत्ययस्य ग्रहणादुभयोरपि पक्षयोर्दोषाभावः । **किञ्च—सङ्घातपक्षे** अर्थवतष्ठशब्दस्य ग्रहणान्न भवति कर्मठः—इत्यत्र प्रसङ्गः । वर्णग्रहणे त्वर्थवत्परिभाषा न प्रवर्तते । तत्र सङ्घातपक्षे दोषान्तरमाशङ्क्य परिहरति—**तत्रेति ।** पुनरपि

**भावबोधिनी**

दीव्यति, शलाकाभिः दीव्यति—इस विग्रह में ठक् = ठ का इक, आदिवृद्धि, भसंज्ञा, अ तथा आ का लोप होने पर उक्तरूप बनते है । ] 'लवण से ठञ् होता है' ( ४।४।५२ ) लावणिकः । [ लवणं पण्यम् अस्य—इस अर्थ में ठञ् = ठ का इक, आदि वृद्धि, भसंज्ञा, आलोप होता है । ] ।

ठक् आदि में यदि ( ठ् आदि व्यजन = ) वर्णमात्र प्रत्यय है और अकार उच्चारण ( की सुविधा ) के लिये है, तब तो यहाँ ( 'इक' आदेश में ) भी अकार उच्चारणार्थ है, वर्णमात्र ( ठ् ) स्थानी के रूप में उपात्त है । ( ठ का अकार इक आदेश में मिला दिया जाता है । ) परन्तु संघात ( ठ् अ = ठ ) का ग्रहण करने पर यहाँ भी प्रत्यय में संघात का ग्रहण ही है ( अर्थात् केवल ठ् व्यंजन नहीं अपितु व्यंजन और स्वर का समूह = ठ लिया जाता है । इस संघातग्रहण पक्ष में सम्भावित दोष का निराकरण करने की रीति यह है—) संघात के ग्रहण में 'कणेष्ठः' ( उणादि० १०८, से 'ठ' प्रत्यय करने पर ) 'कण्ठः' आदि शब्दों के उण् आदि प्रत्ययों का 'उणादयो बहुलम्' ( ३।३।१ ) के अनुसार [ इक आदि आदेश ] नहीं होता है ।

मथितं पण्यमस्य माथितिकः—इत्यत्र तु 'यस्येति च' (६।४।१४८) इति लोपे कृते 'इसुसुक्तान्तात्कः' (७।३।५१) इति स्थानिवद्भावादिकस्य कादेशः प्राप्नोति; 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' (व्या० प० १२) इति न भवति। 'यस्येति च' (६।४।१४८) इति लोपस्य स्थानिवद्भावाद्वा। पूर्वस्मादपि हि विधौ स्थानिवद्भावः ॥

**न्यासः**

णार्थेनाकारेण ठस्येति निर्देशस्योपादानात्। सङ्घातग्रहणे त्वित्यादि। अथ ठगादिषु सङ्घातः साक्कष्ठशब्दः प्रत्ययः, एवं सत्यत्रापि सूत्रे सङ्घातस्येति स्थानित्वेन ग्रहणं युक्तम्। यस्त्वस्मिन् पक्षे प्रथमो दोषश्चोदयितुमिष्टः परस्य, तं जिहीर्षुराह—तत्रेत्यादि।

योऽप्यस्मिन् पक्षे द्वितीयो दोषस्तं मथितं पण्यमस्येत्यादिनाविष्कृत्य—सन्निपातलक्षणो विधिरित्यादिना परिहरति। अजादिसन्निपातेन तकारान्ततोपजाता, सा नोत्सहतेऽजादित्वं विहन्तुमिति न भवति कादेशः। यस्येतिचेति लोपस्य स्थानिवद्भावाद्वेति। न भवति कादेश इति प्रकृतेन सम्बन्धः; स्थानिवद्भावेन तकारान्तताया विहतत्वात्। स्थानिवद्भावः पुनः 'अचः परस्मिन्' इत्यादिना। पूर्वविधौ कर्तव्ये स्थानिवद्भवति, न चात्र पूर्वस्य विधिः, किं तर्हि? पूर्वस्मादुत्तरस्य, तत्कुतः स्थानिवद्भावः? इत्याह—पूर्वस्मादपीत्यादि। न केवलं पूर्वस्य विधिः पूर्वविधिरिति षष्ठीसमासोऽभिमतः, अपि तु पूर्वस्माद् विधिः पूर्वविधिरिति पञ्चमीसमासोऽपीत्यभिप्रायः ॥ ५० ॥

**पदमञ्जरी**

तस्मिन्नेव पक्षे चोदयति—मथितं पण्यमस्येति। वर्णग्रहणे तु 'अनल्विधौ' इति स्थानिवत्त्वनिषेधादिकस्य कादेशाप्रसङ्गः। कादेशः प्राप्नोतीति। ननु तान्तादङ्गादित्युच्यते, न चात्र तान्तमङ्गम्, ततः प्रत्ययस्याविधानात्? नैतदस्ति; एकदेशविकृतस्यानन्यत्वादङ्गं भवति, तान्तं च; ततश्च यथा—अनुकम्पितो भानुदत्त इति ठचि द्वितीयादच ऊर्ध्वस्य लोपे कादेशो भवति—भानुक इति, तथात्रापि प्रसङ्गः? परिहरति—सन्निपातेति। अजादिसन्निपातेन तान्तत्वमुपजायते, ततश्च तद्विघातस्य निमित्तं नोपपद्यते। परिहारान्तरमाह—यस्येतिलोपस्येति। स्थानिवद्भावस्तु 'अचः परस्मिन्पूर्वविधौ' इत्यनेन। ननु पूर्वस्य विधावित्युच्यते, परस्यायम्? तत्राह—पूर्वस्मादपि हीति। पञ्चमीसमासोऽपि तत्राश्रीयत इत्यर्थः। अन्ये त्वाहुः—वर्णग्रहणादेव तदन्तविधौ सिद्धे, अन्तग्रहणं प्रत्ययोपदेशकाले तान्तप्रतिपत्त्यर्थमिति ॥ ५० ॥

**भावबोधिनी**

मथितं पण्यम् अस्य इस अर्थ में [ मथित + इक, आदिवृद्धि ] माथितिकः = माथित + इक में 'यस्येति च' सूत्र से अ का लोप कर देने पर [ माथित् + इक में तकारान्त हो जाने से ] 'इसुसुक्तान्तात् कः' (७।३।५१) इस वक्ष्यमाण सूत्र से 'इक' के स्थानिवद्भाव से 'क' आदेश प्राप्त होता है अर्थात् ठ का इक आदेश हो जाने पर 'स्थानिवदादेशोऽनल्विधौ' से 'ठ' मानकर 'क' होना चाहिए? 'सन्निपातलक्षण विधि उसके विघात में निमित्त नहीं होती है' [ यहाँ अजादि = इक के सन्निपात को मानकर 'अलोप' होने से तकारान्तता बनी है, यह तकारान्तता अजादित्व = इक का विघात होने में कारण नहीं बन सकती। ] इसलिये 'क' नहीं होता है। अथवा 'यस्येति च' से किये गये लोप का [ 'अचः परस्मिन् पूर्वविधौ' सूत्र से ] स्थानिवद्भावः होने से [ तकारान्तता नहीं रहती है ] कारण यह है पूर्व से परवर्ती की विधि में भी स्थानिवद्भाव होता है। [ भाव यह है—'पूर्वविधौ' में षष्ठी समास—'पूर्वस्य विधौ' और पञ्चमी समास 'पूर्वस्माद् विधौ' दोनों अर्थ हैं। पदमंजरीकार ने यह भी समाधान लिखा है 'वर्णग्रहण में तदन्तविधि होती है फिर भी 'इसुसुक्तान्तात्' में अन्तग्रहण करने से प्रत्यय के उपदेशकाल में तान्त की प्रतीति कराने के लिए 'अन्त' ग्रहण है। अतः अलोप के बाद बना तकारान्त आदेश का आधार नहीं बन सकता। ] ॥ ५० ॥

**३४४८. इसुसुक्तान्तात् कः ॥ ५१ ॥ ( १२२१ )**

इस्, उस्—इत्येवमन्तानामुगन्तानां तान्तानां चाङ्गानामुत्तरस्य ठस्य 'क' इत्ययमादेशो भवति। इस्—सार्पिष्कः। उस्—धानुष्कः। याजुष्कः। उक्—नैषादकर्षुकः। शाबरजम्बुकः। मातृकम्। पैतृकम्। तान्तात्—औदश्वित्कः। शाकृत्कः। याकृत्कः।

इसुसोः प्रतिपदोक्तयोर्ग्रहणादिह न भवति—आशिषा चरति आशिषिकः। उषा चरति औषिकः।

❀ दोष उपसंख्यानम् ❀। दोर्भ्यां चरति दौष्कः॥

**न्यासः**

**इसुसुक्तान्तात् कः॥** पूर्वेणेकादेशे प्राप्त इसाद्यन्तात् कादेश उच्यते। **सार्पिष्क इति**। 'तदस्य पण्यम्' इति प्राग्वहीयष्ठक्, रुत्वविसर्जनीयौ, विसर्जनीयस्य 'इसुसोः सामर्थ्ये' इति षत्वम्। **धानुष्क इति**। 'तदस्य प्रहरणम्' इति ठक्। **याजुष्क इति**। 'तेन दीव्यति' इति ठक्। **नैषादकर्षुकः, शाबरजम्बूक इति**। निषादकर्ष्वां जातः, शाबरजम्बां जात इति 'ओर्देशे ठञ्', 'केऽणः' इति ह्रस्वः। **मातृकम्, पैतृकमिति**। मातुरागतम्, पितुरागतमिति—'ऋतष्ठञ्'। **औदश्वित्क इति**। 'उदश्वितोऽन्यतरस्याम्' इति ठक्। **शाकृत्कः, याकृत्क इति**। शकृता, यकृता संसृष्टे इति ठक्।

अथेह कस्मान्न भवति—आशिषा चरतीत्याशिषिकः, उषा चरतीत्यौषिकः? इत्याह—**इसुसोरित्यादि**। 'अर्चिसुचिहुसृपिछादिछर्दिभ्य इसिः', 'जनेरुसिः', 'अर्त्तिपृवपियजितनिधनितपिभ्यो नित्' इत्यादिना प्रकरणेन यौ विहितौ तयोर्लक्षणप्रतिपदोक्तपरिभाषया प्रतिपदोक्तयोरिसुसोर्ग्रहणम्। तेनाशिषिकः, औषिक इत्यत्रापि न भवति; लाक्षणिकत्वादिसुसोः। तथा ह्याङ्पूर्वात् 'शासु इच्छायाम्' इत्यस्माद्, 'वस निवासे' इत्येतस्माच्च केवलात् क्विपि कृते 'शास इदङ्हलोः' इत्यङ्, 'शासः क्वावुपसंख्यानम्' इति शास इत्त्वम्। वसेरपि वच्यादिसूत्रेण सम्प्रसारणे परपूर्वत्वे च कृत इसुसिति रूपं प्रतिपद्यते। **आशिषिकः, औषिक इति**। 'शासिवसिघसीनाञ्च' इति षत्वम्। तस्य त्वसिद्धत्वात् कादेशप्राप्तिराशङ्किता।

**पदमञ्जरी**

**इसुसुक्तान्तात्कः॥ सार्पिष्क इति**। 'तदस्य पण्यम्' इति ठक्, 'इणः षः' इति विसर्जनीयस्य षत्वम्। **धानुष्क इति**। प्रहरणमिति ठक्। **याजुष्क इति**। दीव्यत्यर्थे ठक्। **नैषादकर्षुकः शाबरजम्बुक इति**। भवादावर्थे 'ओर्देशे ठञ्,' कादेशे कृते 'केऽणः' इति ह्रस्वत्वम्। **मातृकम्, पैतृकमिति**। तत आगतः, 'ऋतष्ठञ्'। **औदश्वित्क इति**। 'संस्कृत भक्षाः', 'दध्नष्ठक्', 'उदश्वितोऽन्यतरस्याम्' इति सप्तम्यन्ताट्ठक्। **शाकृत्कः, याकृत्क इति**। 'संसृष्टे' इति ठञ्। **आशिषेति**। 'आङः शासु इच्छायाम्' इत्यस्मादाशासनमाशीरिति सम्पदादित्वाद् भावे क्विप्, 'आशासः क्वावुपसंख्यानम्' इतीत्वम्। **उषेति**। वसेः क्विप्,

**भावबोधिनी**

इस्, उस् जिनके अन्त में उनका तथा उक् ( उऋ ऌ ) जिस के अन्त में उनका तथा त जिनके अन्त में है उनका—अर्थात् पूर्वोक्त अङ्गसंज्ञकों से उत्तरवर्त्ती 'ठ' का 'क' यह आदेश होता है। उदा० इस् जिसके अन्त में है—सार्पिष्कः। उस् जिसके अन्त में है—धानुष्कः। याजुष्कः। [ सर्पिः पण्यम् अस्य—इसमें 'तदस्य पण्यम्' से ठक्। धनुः प्रहरणम् अस्य 'तदस्य प्रहरणम्' से ठक्। यजुषा दीव्यति में 'तेन दीव्यति-खनति-जयति-जितम्' से ठक्। सर्पिस्, धनुस्, यजुस् में 'इणः षः' से ष् होता है। मूल में स् ही है। स् का रुत्व, विसर्ग 'इसुसोः सामर्थ्ये' सूत्र से पुनः ष् होता है। 'ठ' का 'क' होने पर रूप बनते हैं। ] उगन्त के उदा० नैषादकर्षुकः। शाबरजम्बुकः। [ निषादकर्ष्वां जातः, भवो वा, शबरजम्बां जातः भवो वा—इनमें 'ओर्देशे ठञ्' सूत्र से ठञ्, आदिवृद्धि, प्रस्तुत सूत्र से 'ठ' का 'क' आदेश। ] मातृकम्। पैतृकम्। [ मातुः आगतम्, पितुः आगतम्—अर्थ में 'ऋतष्ठञ्' सूत्र से ठञ् आदिवृद्धि, ठ का 'क' आदेश। ] तकारान्त के उदा० औदश्वित्कः। शाकृत्कः। याकृत्कः। [ 'संस्कृतं भक्षाः' के अन्तर्गत 'उदश्वितोऽन्यतरस्याम्' से ठक्, आदिवृद्धि, ठ का क आदेश। शकृता संसृष्टम्, यकृता संसृष्टम्—इस अर्थ में ''संसृष्टे'' सूत्र से ठञ्, आदिवृद्धि, ठ का 'क' आदेश। ]

**३४४९. चजोः कु घिण्ण्यतोः ॥ ५२ ॥ ( १२२१ )**

चकारजकारयोः कवर्गादेशो भवति घिति ण्यति च प्रत्यये परतः। घिति–पाकः। त्यागः। रागः। ण्यति–पाक्यम्। वाक्यम्। रेक्यम् ॥

**३४५०. न्यङ्क्वादीनां च ॥ ५३ ॥ ( २८६४ )**

'न्यङ्कु'—इत्येवमादीनां कवर्गादेशो भवति। न्यङ्कुः—'नावञ्चेः' ( उ० १७ ) इति उप्रत्ययः।

**न्यासः**

**दोष उपसंख्यानमिति।** उपसंख्यानशब्दस्य प्रतिपादनमर्थः। तत्रेदं प्रतिपादनम्—'नञ्पूर्वाणामपि' इत्यतोऽपिग्रहणमनुवर्त्तते; स चानुक्तसमुच्चयार्थः, तेन दौषोऽपि भविष्यति ॥ ५१ ॥

**चजोः कु घिण्ण्यतोः ॥ पाकः, त्याग इति।** भावे घञ्। **पाक्यम्, वाक्यमिति।** 'ऋहलोर्ण्यत्'। ननु चात्र घिण्ण्यतोः कार्यिणोश्चजोः साम्याद् यथासंख्यं प्राप्नोति—चकारस्य घिति, जकारस्य ण्यति; तत् कथं त्यागः, राग इति घिति जकारस्य कुत्वं प्राप्नोति? नैतदस्ति; ज्ञापकादत्र यथासंख्यं न भवति। यद् 'भुजन्युब्जौ पाण्युपतापयोः', 'प्रयाजानुयाजौ यज्ञाङ्गे' इति घञि जकारस्य कुत्वाभावं निपातयति, 'तेन रक्तं रागात्' इति च निर्देशं करोति, तज्ज्ञापयति—यथासंख्यमिह न भवतीति ॥ ५२ ॥

**न्यङ्क्वादीनाञ्च ॥** अघिण्ण्यदर्थोऽयमारम्भः। **नावञ्चेरित्यु प्रत्यय इति।** तत्र 'भृमृशीतृचरित्स-

**पदमञ्जरी**

यजादित्वात्सम्प्रसारणे लाक्षणिकं रूपमिति। सर्पिरादौ तु 'अर्चिशुचिहुसृपिच्छादिभ्य इसिः', जनेरुसिः', 'अर्तिवपियजितनिधनिभ्यो नित्' इति प्रतिपदोक्तमिसुसोः रूपम्।

**दोष उपसंख्यानमिति।** वर्णैकदेशानां वर्णग्रहणेनाग्रहणादोकारे य उकारः, तस्य उकारग्रहणेनाग्रहणादुपसंख्यानम् ॥ ५१ ॥

**चजोः कु घिण्ण्यतोः ॥** पाक इत्यादौ भावे घञ्। **पाक्यमित्यादौ** कर्मणि 'ऋहलोर्ण्यत्'। यथासंख्यमत्र न भवति—घिति चकारस्य, ण्यति जकारस्येति; 'भुजन्युब्जौ पाण्युपतापयोः', 'प्रयाजानुयाजौ यज्ञाङ्गे', 'वचोऽशब्दसंज्ञायाम्' इत्यादेर्लिङ्गात्।

क्वचित्तु पठ्यते—**यथासंख्यमत्र नेष्यते, तेन रक्तं रागादिति लिङ्गादिति** ॥ ५२ ॥

**न्यङ्क्वादीनां च ॥ न्यङ्कुइत्येवमादीनां चेति।** 'सिद्धये' इति शेषः, कृतकुत्वानामेव गणे पाठात्।

**भावबोधिनी**

इस् तथा उस्—इन प्रतिपदोक्तों का ग्रहण होने से इनमें नहीं होता है—आशिषा चरति–आशिषिकः। उषा चरति–औषिकः। [ आशिष् तथा 'उष्' ये सूत्रों की प्रवृत्ति से बनने के कारण लाक्षणिक हैं। अतः 'क' न होकर 'इक' ही होता है। ]

'दोष् से परे ठ का 'क' कहना चाहिए।'* उदा० दोर्भ्यां चरति—इस अर्थ में [ दोष् से ठक् होने पर सूत्र से क आदेश प्राप्त नहीं है, यह वार्तिक करता है ]—दौष्कः। [ पूर्ववत् आदिवृद्धि, स् का रु, विसर्ग, षत्व होता है। ] ॥ ५१ ॥

घित् ( घ की इत्संज्ञावाला ) और ण्यत् प्रत्यय परे रहते चकार तथा जकार का क्रमशः कवर्ग = क और ग आदेश होता है। उदा० घित् प्रत्यय में—पाकः। त्यागः। रागः। [ पच् + घञ्, त्यज् + घञ्, रञ्ज् + घञ्, घञ् की इत्संज्ञा लोप, रञ्ज् के ञ् = न् का लोप, उपधावृद्धि, प्रस्तुत सूत्र से च् का क् और ज् का ग् आदेश करने पर रूप बनते हैं। ] ण्यत् में उदा० पाक्यम्। वाक्यम्। रेक्यम्। [ डुपचष्, वच्, रिच्—इनसे "ऋहलोर्ण्यत्" सूत्र से ण्यत् = य प्रत्यय, उपधावृद्धि, कुत्व = च् का क्। ] ॥ ५२ ]

न्यङ्कु—आदि का कवर्ग आदेश होता है। उदा० न्यङ्कुः, निपूर्वक 'अञ्चु' धातु से 'नावञ्चेः' (उणादि १।१७) से 'उ' प्रत्यय [ कुत्व से 'च्' का 'क्' इसके फलस्वरूप अनुस्वार का परसवर्ण ङ् हो जाता है—न्यङ्कुः ]।

मद्गुः—'मिमस्जिभ्य उः' ( उ० ७ ) इति मस्जेरुप्रत्ययः। भृगुः—'प्रथिम्रदिभ्रस्जां सम्प्रसारणं सलोपश्च' ( उ० २८ ) इत्युप्रत्ययः।

दूरेपाकः। फलेपाकः। दूरे पच्यते स्वयमेव, फले पच्यते स्वयमेव—पचाद्यच्, निपातनाद्वृद्धिः, 'तत्पुरुषे कृति बहुलम्' (६।३।१४) इति सप्तम्या अलुक्। क्षणेपाकः—इत्यपि हि केचित् पठन्ति। दूरेपाकाः, फलेपाकाः—इति टाबन्तमपरेऽधीयते। उकारान्तावपरे—दूरेपाकुः, फलेपाकुरिति। तेषामुप्रत्ययो निपातनादेव।

तक्रम्, वक्रमिति—तञ्चतेः, वञ्चतेश्च 'स्फायितञ्चिवञ्चि' ( उ० १०८ ) इत्यादिना सूत्रेण रक्।

**न्यासः**

रितनिधनिमिमस्जिभ्य उः' इत्यनुवृत्तेः। **मद्गुरिति**। 'टुमस्जो शुद्धौ', 'झलां जश् झशि' इति सकारस्य दकारः। **मिमस्जिभ्य उरिति**। अनेन 'भृमृशीतॄचरि' इत्यादिकमुपलक्षयति। **भृगुरिति**। 'भ्रस्ज पाके'। 'प्रथिम्रदि' इत्यादिके सूत्रेऽत एव सूत्रादुप्रत्ययोऽनुवर्त्तते।

**दूरेपाका इति**। कर्मकर्त्तरि पचाद्यच्। **उकारान्तावपर इति**। अधीयत इत्यपेक्ष्यते।

**तञ्चतेरिति**। 'तन्चु त्वन्चु गतौ' इति, 'वन्चु प्रलम्भने'। **'स्फायितञ्चिवञ्चि' इति** सूत्रैकदेशः 'स्फायितञ्चिवञ्चिशकिक्षिपिक्षुदिसृपितृपिदृपिवन्द्युन्दिश्विति-वृत्यजिनीपदिमुदिखिदिछिदिविदिभिदिमन्दिचन्दिदहिदसिदम्भिवसिवाशिशीङ्हसिसिधिशुभिभ्यो रक्'—इत्येतत् सूत्रमुपलक्षयति। **व्यतिषङ्ग इति**। 'षन्ज सङ्गे' **अवसर्ग इति**। 'सृज विसर्गे'। पचाद्यच्।

**पदमञ्जरी**

किमर्थं तर्हि सूत्रम्, यावता तथैव कुत्वादन्यदपि घत्वगुणदीर्घत्वादिकं निपातनाद्भवति, तथा कुत्वमपि भविष्यति ? सत्यम्; असति तस्मिन्, अनुवादे गणस्य क्वचिदप्यनुपयोगात्प्रमादपाठः शङ्क्येत। **पचाद्यचीति**। घञि कुत्वस्यासिद्धत्वात्।

**भावबोधिनी**

मद्गुः—'मृ-शीतॄ-चरित्सरितनिधनिमिमस्जिभ्य उः' (उणादि १।७) इस सूत्र से मस्जि धातु से 'उ' प्रत्यय, [ज् का क् (कुत्व), 'झलां जश् झशि' सूत्र से जश्त्व स् का द्—मद् ग्+उ]। भृगुः—भ्रस्ज धातु से 'प्रथिम्रदिभ्रस्जां सम्प्रसारणं सलोपश्च' (उणादि १।२८) सूत्र उ प्रत्यय [सम्प्रसारण रेफ का ऋ, स् का लोप, ज् का कुत्व—ग्—भृगुः।]

दूरेपाकः। फलेपाकः। दूरे पच्यते स्वयमेव, फले पच्यते स्वयमेव—इस अर्थ में 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' सूत्र से 'अच्' प्रत्यय, निपातन से उपधा की वृद्धि, 'तत्पुरुषे कृति बहुलम्' (३।१।१३४) से सप्तमी का अलुक्। [प्रस्तुत सूत्र से कुत्व=च् का क् होने पर रूप बनते हैं।] क्षणेपाकः—यह भी कुछ लोग पढ़ते हैं। 'दूरेपाकाः, फलेपाका।—ऐसा टाबन्त भी कुछ लोग पढ़ते हैं। अन्य लोग दोनों का उकारान्त पाठ करते हैं—दूरेपाकुः। फलेपाकुः। इनके मत में 'उ' प्रत्यय भी निपातन से ही होती है।

तक्रम्, वक्रम्—इनमें 'तञ्चु' और 'वञ्चु' धातुओं से 'स्फायितञ्चिवञ्चि०' (उणादि १।१७८) इत्यादि सूत्र से 'रक्' प्रत्यय होता है। [कित् होने से न् आनुनासिक लोप हो जाता है।] व्यतिषङ्गः—व्यतिषजति—इस अर्थ में 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' (३।१।१३४) सूत्र से अच् प्रत्यय [कुत्व से ज् का ग् परसवर्ण, वि+अति सङ्गम्+अ, षत्व यण्—व्यतिषङ्ग।] अवसर्गः। उपसर्ग। [अवसृज्+अच्, उपसृज्+अच् ऋ का गुण, रपर, कुत्व से ज् का ग्।] [मेघः। मिह+अच्, ह का कुत्व घ, उपधागुण। परन्तु यहाँ 'मेघः' का उल्लेख प्रामादिक है क्योंकि आगे 'संज्ञा अर्थ में ही 'मेघ' आदि शब्दों का कुत्व दिखाया गया है। साथ ही प्रकाशित गणपाठ में भी एक ही बार 'मेघ' का पाठ है।]

व्यतिषङ्गः । व्यतिषजतीति पचाद्यच् ( ३।१।१३४ ) । अनुषङ्गः । अवसर्गः । उपसर्गः । (मेघः) । श्वपाकः, मांसपाकः, कपोतपाकः, उलूकपाक इति—कर्मोपपदादण् ( ३।२।१ ) प्रत्ययः ।

संज्ञायाम्— मेघः । अर्घः । अवदाघः । निदाघः । अर्हतेर्घञ्—अर्घः । अवपूर्वस्य निपूर्वस्य च दहेः—अवदाघः । निदाघः ।

संज्ञाया अन्यत्र—अर्हः । अवदाहः । निदाहः । न्यग्रोधः, वीरुत्—इत्यत्र न्यक्पूर्वस्य रुहेः पचाद्यचि विपूर्वस्य क्विपि धकारो विधीयते । न्यग्रोहयतीति न्यग्रोधः । विरोहयतीति वीरुत् ॥

**३४५१. हो हन्तेर्ञ्णिन्नेषु ॥ ५४ ॥ ( ३५८ )**

हन्तेर्हकारस्य कवर्गादेशो भवति ञिति, णिति प्रत्यये परतो नकारे च । घातयति । घातकः । साधुघाती । घातङ्घातम् । घातो वर्तते । नकारे—घ्नन्ति । घ्नन्तु । अघ्नन् ।

**न्यासः**

मेघ इति । 'मिह सेचने' । अजेव । श्वपाक इति । कर्मोपपदादण्प्रत्ययः 'कर्मण्यण्' इत्यनेन । अर्हतेरिति । 'अर्ह पूजायाम्' । दहेरिति । 'दह भस्मीकरणे' । रुहेरिति । 'रुह बीजजन्मनि प्रादुर्भावे' ।

ननु च न्यङ्क्वादयः कृतकुत्वाः प्रातिपदिकगणे पठ्यन्ते, तत् किमर्थमिदम्, यथैव हि कुत्वादन्यत् कार्यं भवति निपातनात् तथा कुत्वमपि भविष्यति ? तस्यैव प्रातिपदिकपाठस्याभ्यनुज्ञानार्थमिदमुच्यते । असति ह्येतस्मिन् प्रमादपाठो विज्ञायेत ॥ ५३ ॥

हो हन्तेर्ञ्णिन्नेषु ॥ घातयतीत्याद्युदाहरणानि 'हनस्तोऽचिण्णलोः' इत्यत्र व्युत्पादितानि । घ्नन्तीति । लट् . झेरन्तादेशः, 'गमहन' इत्यादिनोपधालोपः । घ्नन्त्विति । लोट् । अघ्नन्निति । लङ्, 'इतश्च' इतीकारलोपः ।

**पदमञ्जरी**

संज्ञायां मेघ इत्यादि । मेघः = पयोधरः, निदाघः = घर्मः, अवदाघोऽपि स एव । अर्घः = विक्रीयमाणस्य धान्यादेरियत्ता, मूल्यमित्यन्ये । वीरुदिति । निपातनादुपसर्गस्य दीर्घत्वम् ॥ ५३ ॥

हो हन्तेर्ञ्णिन्नेषु ॥ ञश्च णश्च ञ्णौ, ताविती ययोस्तौ ञ्णितौ, तौ च नश्च ञ्णिन्नाः, तेषु ञ्णिन्नेषु । नकारेऽकार उच्चारणार्थः, तेन वृत्रघ्नि, वृत्रघ्नोरित्यादावपि भवति । घ्नन्तीत्यादौ 'गमहन' इत्युपधालोपः ।

**भावबोधिनी**

श्वपाकः । मांसपाकः । कपोतपाकः । उलूकपाकः—इनमें कर्मों को उपपद मान कर अण् प्रत्यय होता है । [ श्वानं, मांसं, कपोतम्, उलूकं—पचति–इस विग्रह में अण्, उपपद समास, वृद्धि, प्रस्तुत सूत्र से कुत्व । ]

संज्ञा अर्थ में ही—मेघ, निदाघ, अर्घ, अवदाघ—में कुत्व होता है—मेघः । [ मिह + अच्, उपधागुण, ह् का कुत्व घ् । ] अवदाघः । निदाघः । [ अव दह् + घञ्, दह + घञ्, उपधावृद्धि, कुत्व से ह् का घ् ] अर्ह + घञ् = अ, ( कुत्व )—अर्घः । अवपूर्वक दह् तथा निपूर्वक दह् से [ घञ् करने पर कुत्व ] अवदाघः । निदाघः । मेघ = बादल, निदाघ = ग्रीष्मऋतु या घाम है । अवदाघ भी घाम की संज्ञा है । अर्घ = मूल्य । ]

संज्ञा से अन्यत्र—अर्हः । अवदाहः । निदाहः । [ इनमें कुत्व नहीं होता है । क्योंकि इनका संज्ञा अर्थ न होकर धात्वर्थ की प्रतीति होती है । न्यग्रोधः । वीरुत्—यहाँ न्यक् ( = नि + अञ्च् ) पूर्वक 'रुह्' से पचाद्यच् प्रत्यय और विपूर्वक 'रुह्' से क्विप् प्रत्यय करने पर हकार का धकार किया जाता है—न्यग्रोहयति—इस अर्थ में न्यग्रोधः । विरोहयति—इस अर्थ में—वीरुत् । [ वीरुत् में उपसर्ग का दीर्घ निपातित होता है । न्यग्रोध् = बरगद है । क्योंकि इसकी जटायें जमीन में भी जाती हैं । वीरुत् = लता है क्योंकि लता ऊपर की ओर चढ़ती है ॥ ५३ ॥

हन् धातु के हकार का घकार आदेश ञित्, णित् प्रत्यय और नकार के परे रहते होता है । उदा० घातयति । घातकः । साधुघाती । घातं घातम् । घातो वर्तते । [ क्रमशः हन् + णिच् । हन् + ण्वुल् । हन् + णिनि । हन् + णमुल् । हन् + घञ् के रूप में है । इनमें उपधा अकार की वृद्धि और 'हनस्तोऽचिण्णलोः' सूत्र से 'न्' का 'त्'

१. अत्र 'मेघ' इत्यस्य पाठः प्रामादिकः, अग्रे पाठात् ।

ह इति किम् ? अलोऽन्त्यस्य मा भूत् । हन्तेरिति किम् ? प्रहारः । प्रहारकः ।

ञ्णित्प्रत्ययो[1] हन्तेर्विशेषणम् । नकारो हकारस्य—नकारे अनन्तरस्य हन्तिहकारस्येति । तच्चानन्तर्यं श्रुतिकृतं सन्निपातकृतमाश्रीयते । स्थानिवद्भावशास्त्रकृतं तु यदनानन्तर्यं तदविघातकम्; वचनसामर्थ्यात् ।

**न्यासः**

प्रहारः, प्रहारक इति । हरतेर्घञ्ण्वुलौ ।

इह णिन्नग्रहणं हन्तिविशेषणं वा स्यात्—ञ्णिन्नकारपरस्य हन्तेर्यो हकार इति, हकारविशेषणं वा—ञ्णिन्नकारपरस्य हकारस्येति स चेद्धन्तेरिति ? तत्र यदि पूर्वकः पक्ष आश्रीयेत, घ्नन्त्यादौ न स्यात्, न ह्यत्र नकारपरो हन्तिः; अवयवेन समुदायस्य पौर्वापर्यानुपपत्तेः, अन्यस्य नकारस्याभावात् । अथेतरः पक्ष आश्रीयेत, न क्वचित् स्यात्, न हि हकारस्य ञ्णिन्नकारपरता सम्भवति । असम्भवस्तु घ्नन्तीत्यादावकारलोपस्य पूर्वविधौ स्थानिवद्भावे सत्यकारेण व्यवधानात्, घातयतीत्यादावपि हकारात् परेण हन्त्यवयवेनानशब्देन व्यवधानात् । अथ वचनसामर्थ्याद्व्यवधानेऽपि कुत्वं स्यात्, एवमपि हननमिच्छतीति 'सुप आत्मनः क्यच्', 'क्यचि च' इतीत्वम्, क्यजन्ताण् ण्वुल्, 'अतो लोपः' इत्यकारलोपो हननीयक इत्यत्रापि स्यादिति यश्चोदयेत्, तं प्रति पक्षान्तरमाश्रित्याह—ञ्णित्प्रत्ययोऽत्र हन्तेर्विशेषणमित्यादि । न हि सर्वेषां ञ्णिन्नकाराणां हन्ति प्रति विशेषणत्वमुपपद्यते, नापि हकारं प्रति । तस्माद् यथासम्भवं किञ्चिदेव कस्यचिद्विशेषणम् । ञ्णित्प्रत्ययस्तु हन्तेः परत उपपद्यत इति तस्यासौ विशेषणम्—ञ्णिति प्रत्यये परतोऽनन्तरस्य हन्तेरिति । नकारस्तु हन्तेर्विशेषणं नोपपद्यते; पूर्वोक्तात् कारणात् । हकारस्य तूपपद्यत इति तस्यैव विशेषणम्—नकारे परतोऽनन्तरस्य हन्तिहकार-

**पदमञ्जरी**

किमिदं ञ्णिन्नग्रहणं हन्तिविशेषणम्—ञ्णिन्नपरस्य हन्तेर्यो हकार इति ? आहोस्विद्धकारविशेषणम्—ञ्णिन्नपरस्य हकारस्य स चेद्धन्तेरिति ? तत्राद्ये पक्षे ह्यत्रासिद्धिः—घ्नन्ति, घ्नन्तु; न हि स्वावयव एव स्वस्मात्परो भवति । द्वितीये तु न क्वचित् स्यात्, न हि ञ्णिन्नकारपरता हकारस्य क्वापि सम्भवति—घातयतीत्यादौ तावदकारेण तकारेण च व्यवधानम्, घ्नन्तीत्यादावुपधालोपस्य स्थानिवद्भावाद् व्यवधानमेव । अथ वचनाद्व्यवधानेऽपि भविष्यति ? इहापि तर्हि प्राप्नोति—हतमिच्छति हतीयति, हतीयतेर्ण्वुल्, हतायक इति, नकारेऽपि हन्त्वा, हननमित्यादावपि प्रसङ्गः । नकारग्रहणमिदानीं किमर्थं स्यात् ? यत्र नकारः श्रूयते तत्र यथा स्यात्, इह मा भूत्—हतः, हथ इति । तदेवं द्वयोरपि पक्षयोर्दोषं दृष्ट्वा पक्षान्तरं दर्शयति—ञ्णित्प्रत्यय इत्यादि । यद्यपि द्वन्द्वनिर्दिष्टानामेकयोगक्षेमता न्याय्या, तथापि सम्भवव्यभिचारौ

**भावबोधिनी**

और प्रस्तुत सूत्र से 'ह्' का 'घ्' करने पर रूप बनते हैं । ] नकार परे के उदा० घ्नन्ति । घ्नन्तु । अघ्नन् । [ हन्+लट्, लोट्, लुङ् में 'झि' = अन्ति = हन् + अन्ति, "गमहनजनखनघसां लोपः" सूत्र से उपधा के अकार का लोप होने पर हन् + अन्ति, में ह् का घ् करने पर रूप बन जाते हैं । लोट् में 'एरुः' से इ का उ—घ्नन्तु । लङ् में 'इ' का लोप 'इतश्च' सूत्र से, संयोगान्त त् का लोप । ]

'ह्' का—इसका क्या फल है ? 'अलोऽन्त्यस्य' सूत्र से अन्त्य = न् का घ् न होने लगे ।

हन् के हकार का—इसका क्या फल है ? प्रहारः । प्रहारकः । [ प्रहृ + घञ्, तथा ण्वुल् में हृ के ह् का घ् न होने लगे । ]

ञित्, णित् प्रत्यय 'हन्' का विशेषण है । नकार हकार का विशेषण है—नकार परे रहते अव्यवहित हन् के हकार का घकार होता है । और वह आनन्तर्य = अव्यवधान श्रुतिकृत = सन्निपात से किया गया आश्रित किया किया जाता है । स्थानिवद्भाव शास्त्र द्वारा किया गया जो अनानन्तर्य = व्यवधानाभाव है वह अविघातक है

१. 'ञिति णिति'—इति क्वचित्पाठः ।

यद्यपि सर्वैरेव ञ्णिन्नैर्हन्तिहकारो विशिष्यते, तथापि 'येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात्' ( व्या० प० ४६ ) इति ञ्णिति धात्ववयवेन व्यवहितेऽपि सति भवति। इह तु न भवति—हननमिच्छति हननीयति, हननीयतेर्ण्वुल्, हननीयक इति ॥

**न्यासः**

स्यानन्तर इति। अयं तु 'तस्मिन्निति निर्दिष्टे पूर्वस्य' इति निर्दिष्टग्रहणस्यानानन्तर्यार्थत्वाल्लभ्यते। आनन्तर्याश्रयणे तु—हन्ता, हन्तुमित्यत्राप्यतिप्रसङ्गो निरस्तः। ननु चानन्तर्यमेव हकारस्य णकारेण न सम्भवति, अकारलोपस्य स्थानिवद्भावे सत्यकारेण व्यवधानात्? इत्यत आह—**तच्चेत्यादि**। **सन्निपातकृतमिति**। श्रुतिकृतमित्यर्थः। ननु चाश्रितेऽपि सन्निपातकृतानन्तर्ये स्थानिवद्भावशास्त्रेण यत् कृतमनानन्तर्यं तद्विहन्यादेव कुत्वम्? इत्यत आह—**स्थानिवद्भावशास्त्रकृतं स्वित्यादि**। किं कारणमविघातकम्? इत्याह—**वचनसामर्थ्यादिति**। यदि स्थानिवद्भावशास्त्रकृतमनानन्तर्यं व्यवधायकं बाधकं स्यान्नकारवचनमनर्थकं स्यात्; निरवकाशत्वात्। तस्माद् वचनसामर्थ्यान्न विघातकम्।

**यद्यपीत्यादिना** यौ द्वौ पक्षावुपन्यस्तौ, तत्र द्वितीये पक्षे यो दोषस्तस्य परीहारः। तत्र नकारेण हकारे विशेष्यमाणे यो दोषः स पूर्वमेव परिहृतः। सम्प्रति तु ञ्णित्प्रत्ययेन हकारे विशेष्यमाणे यो दोषस्तं परिहरति। योऽयं हन्तेरवयवो हकारात् परोऽकारादिर्नकारान्तः, तेन सर्वत्र ञ्णित्प्रत्ययस्य व्यवधानात्। अननीयशब्देन तु व्यवधानं सम्भवति, न सम्भवति च 'तत्र येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात्' इति घातयतीत्यादौ कुत्वं भवति। येन त्वननीयशब्देन व्यवधानं न सम्भवति, सम्भवति च तेन व्यवधाने हननीयक इत्यत्र न भविष्यति। आद्ये तु पक्षे यो दोष उक्तः, स तस्यानभ्युपगमादेवानवसरः। **हन्तेः** श्तिपा निर्देशो धातुनिर्देशार्थ एव, न यङ्लुग्निवृत्त्यर्थः। तत्र हि 'अभ्यासाच्च' इति भवितव्यमेव कुत्वेन ॥५४॥

**पदमञ्जरी**

हि विशेषणविशेष्यभावस्याङ्गमित्ययमेव प्रकार आश्रीयते। ननु च 'स्थानिवद्भावादानन्तर्यं नकारस्य न सम्भवति' इत्युक्तम्? अत आह—**तच्चेति**। **सन्निपातकृतमिति**। श्रुतिकृतमित्यर्थः।

अथ वा—पुनरस्तु द्वितीयः पक्षः, तत्रापि दोषः सुप्रतिविधानः? इत्याह—**यदापीति**। धात्ववयवेन नकारेण व्यवधानमव्यभिचारीति तदेवाश्रीयते, न शब्दान्तरेणेति ञ्णित्ययं परिहारः। नकारे तूक्त एव ॥५४॥

**भावबोधिनी**

अर्थात् बाधक नहीं है, क्योंकि इस वचन का सामर्थ्य है। [ यदि स्थानिवद्भाव से आनन्तर्य का बाध माना जायगा तो कहीं भी यह सूत्र नहीं लग सकेगा, अव्यवहित नकार परे नहीं मिलेगा, घ् करना व्यर्थ होगा। अतः यह स्थानिवद्भाव बाधक नहीं होता है। ]

यद्यपि ञित् णित् नकार—सभी के द्वारा 'हन्' का हकार विशेषित होता है तथापि 'जिससे अवश्य व्यवधान रहता है उससे व्यवधान में भी सूत्र—प्रणयन के सामर्थ्य से प्रवृत्ति होती है—' इस परिभाषा से ञित् और णित् परे धातु के अवयव ( अन् ) के व्यवधान रहने पर भी ( घ् ) होता है। [ भाव यह है कि हन्+ण्वुल् आदि में ह् तथा अक प्रत्यय के बीच में अन् = धात्वयव का व्यवधान है, अव्यवहित परे नहीं है, घ नहीं होना चाहिए। समाधान यह है कि जिसका व्यवधान अनिवार्य है उस व्यवधान को नहीं माना जाता है, अन्यथा सूत्रप्रणयन व्यर्थ हो जायगा। ] परन्तु यहाँ नहीं होता है—हननम् इच्छति—हननीयति, 'हननीय' इस नामधातु से ण्वुल् करने पर—हननीयकः। [ भाव यह है कि मूलधातु के अवयव 'अन्' का व्यवधान सह्य होता है क्योंकि सूत्र का वैयर्थ्य सम्भावित है। किन्तु ह + अन् अनीय + ण्वुल् इतना व्यवधान सह्य नहीं है अर्थात् मूलधात्वयव के व्यवधान रहते घकार नहीं होता है ] ॥ ५४ ॥

## ३४५२. अभ्यासाच्च ॥ ५५ ॥ ( २४३० )

**अभ्यासादुत्तरस्य हन्तिहकारस्य कवर्गादेशो भवति । जिघांसति । जङ्घन्यते । अहं जघन ।**

**अभ्यासनिमित्ते प्रत्यये हन्तेरङ्गस्य योऽभ्यासस्तस्मादेवैतत् कुत्वम् । इह न भवति—हननीयितुमिच्छति जिहननीयिषति ॥**

**न्यासः**

**अभ्यासाच्च ॥ जिघांसतीति ।** सन्, 'अज्झनगमां सनि' इति दीर्घः, द्विर्वचनम्, 'कुहोश्चुः' इति चुत्वम्—झकारः, 'अभ्यासे चर्च' इति जश्त्वम्—जकारः, 'सन्यतः' इतीत्वम् । **जङ्घन्यत इति ।** 'नुगतोऽनुनासिकान्तस्य' इति नुक् । **जघनेति ।** उत्तमपुरुषे णलि यदा णित्त्वं नास्ति तदेतदुदाहरणम् । णित्त्वपक्षे तु पूर्वेणैव सिद्धम् । अथ हननशब्दात् क्यचि कृते तदन्तात् सनि जिहननीयिषतीत्यत्र कस्मान्न भवतीति, भवति ह्यत्राभ्यासात् परो हन्ति हकारः ? इत्याह—**इहाभ्यासनिमित्तप्रत्यय इत्यादि ।** इह 'हन्तेः' इत्यनुवर्तते, अङ्गस्येति च । अभ्यासेनाभ्यासनिमित्तं प्रत्ययः सन्निधापितः, तस्य प्रत्ययः विशेषनिमित्तत्वात्, तत्र तेनाभ्यासनिमित्तेन प्रत्ययेन हन्तेरङ्गं विशिष्यते ।

**अभ्यासनिमित्ते प्रत्यये यदङ्गं हन्तिरिति ।** तेनाप्येवंविधेन हन्तिनाभ्यासो विशिष्यते । यथोक्तविशेषणविशिष्टस्य हन्तेरङ्गस्य योऽभ्यासः—इत्येवं विशेषणविशेष्यभावे सत्यभ्यासनिमित्ते सनादौ प्रत्यये हन्तेरङ्गस्य योऽभ्यासस्तस्मादेव कुत्वेन भवितव्यम् । **तेनेह न भवति—जिहननीयिषतीति ।** न ह्यत्राभ्यासनिमित्ते प्रत्यये सनि हन्तिरङ्गम्, किं तर्हि ? हननीयशब्दः । यस्मिंस्तु हन्तिरङ्गम्, ल्युटि स नाभ्यासनिमित्तम् ॥ ५५ ॥

**पदमञ्जरी**

**अभ्यासाच्च ॥ अहं जघनेति ।** णित्त्वाभावे उदाहरणम् । णित्त्वपक्षे पूर्वेणैव सिद्धम् । एवं जघनिथ, जघन्थ, जघन्वानित्युदाहरणम् ।

**अभ्यासनिमित्ते प्रत्यय इत्यादि ।** अङ्गाधिकारेणाभ्यासेन च प्रत्ययस्याक्षेपादयमर्थो लभ्यते । **जिहननीयिषतीति ।** अत्र यस्मिन्हनिरङ्गं ल्युटि न तस्याभ्यासनिमित्तत्वम्, यश्चाभ्यासस्य निमित्तं सन् न तस्मिन् हन्तिरङ्गम् ॥ ५५ ॥

**भावबोधिनी**

अभ्याससंज्ञक से उत्तरवर्ती हन् के हकार का कवर्ग ( घ ) आदेश होता है । उदा० जिघांसति । [ हन् + सन् 'अच्हन्गमां सनि' से उपधादीर्घ हान् + स, द्वित्व अभ्यास कार्य 'कुहोश्चुः" से अभ्यास ( प्रथम ) हकार का चुत्व = झ, 'अभ्यासे चर्च' से जश्त्व से झ का ज, 'सन्यतः' से अभ्यास के 'अ' का 'ई' जिहान् + स, प्रस्तुत सूत्र से 'ह' का घ्, न का अनुस्वार—जिघांस + लट् = तिप् ] जङ्घन्यते । [ हन् + यङ्, द्वित्व आदि पूर्ववत्, 'नुगतोऽनुनासिकान्तस्य' सूत्र से नुक् = न् आगम्, अनुस्वार, परसवर्ण । ] अहं जघन । [ हन् + लिट् = मिप् = णल् 'णलुत्तमो वा' से णित् न होने के पक्ष में इस सूत्र से कुत्व होता है । णित् होने पर तो पूर्ववर्ती सूत्र ही कुत्व कर देता है । ]

अभ्यास ( संज्ञा ) के निमित्तभूत प्रत्यय के परे रहते हन् इस अङ्गसंज्ञक का जो अभ्यास होता है, उसी से परे रहने वाले ह का कुत्व = घ होता है । इस कारण यहाँ नहीं होता है—हननीयितुम् इच्छति—जिहननीयिषति । [ हननीय + सन् से अभ्यास का निमित्त सन् प्रत्यय परे रहते 'हन्' धातु अङ्गसंज्ञक नहीं है अपि तु 'हननीय' यह नामधातु ही अङ्ग है । हन् की अङ्गसंज्ञा तो ल्युट् = अन् प्रत्यय परे ही होती है । किन्तु इस प्रत्यय परे अभ्यास संज्ञा अर्थात् द्वित्व में परवर्ती आदि नहीं हो पाता है । फलतः ह का कुत्व घ नहीं होता है । ] ॥ ५५ ॥

## ३४५३. हेरचङि ॥ ५६ ॥ ( २४३० )

हिनोतेर्हकारस्याभ्यासादुत्तरस्य कवर्गादेशो भवति अचङि । प्रजिघीषति । प्रजेघीयते । प्रजिघाय ।

अचङीति किम् ? प्राजीहयद् दूतम् ।

अचङीति शक्यमकर्तुम् । कथम् ? चङ्यभ्यासनिमित्ते णौ हिनोतिरङ्गं भवति, तत्राभ्यासनिमित्ते प्रत्यये हेरङ्गस्येति विज्ञायमाने प्राप्तिरेव नास्ति ? तत्क्रियते[1] ज्ञापकार्थम् । एतज्ज्ञाप्यते—'हेरचङि' इति चङोऽन्यत्र हेर्ण्यधिकस्यापि कुत्वं भवतीति । तेन प्रजिघाययिषतीति सिद्धं भवति ॥

**न्यासः**

**हेरचङि ॥ प्रजिघीषतीति ।** 'हि गतौ', सन्, पूर्ववद्दीर्घत्वम् । **प्रजेघीयते इति ।** 'अकृत्सार्वधातुकयोः' इति दीर्घः, द्विर्वचनम्, 'गुणो यङ्लुकोः' इत्यभ्यासस्य गुणः । **प्रजिघायेति ।** णल्, वृद्ध्यायादेशौ ।

**प्राजीहयदिति ।** हेतुमण्णिच्, 'णिश्रि' इत्यादिना चङादेशः, 'णौ चङ्युपधायाः' इति ह्रस्वः, 'चङि' इति द्विर्वचनम् । तच्च 'णौ कृतं स्थानिवद्भवति' इति हिशब्दस्य 'दीर्घो लघोः' इति दीर्घः ।

**चङ्यभ्यासनिमित्त इत्यादि ।** प्राजीहयदित्यत्र चङ्यभ्यासनिमित्ते परतो यो णिच् तस्मिन् हिनोतिरङ्गम्, न तु तस्मिन्नेव चङ्यभ्यासनिमित्ते; इह सूत्रेऽभ्यासाधिकारात् । अभ्यासेनाक्षिप्तेऽभ्यासनिमित्ते प्रत्यये यदङ्गं हिनोतिरित्येवं विज्ञायते, एवञ्च विज्ञायमाने कः प्रसङ्गो यो ण्यधिकस्य चङि स्यात् ? नैवं प्राप्नोतीत्यतो नार्थोऽचङीति प्रतिषेधेन । एवं प्रत्याख्याय चङ्ग्रहणम्, तस्य प्रयोजनमाह—**तत् क्रियत इत्यादि ।** किं पुनरनेन ज्ञाप्यते ? इत्याह—**हेरचङीत्यादि ।** 'हेरचङि' इत्यनेन चङोऽन्यत्र सनादौ ण्यधिकस्यापि हिनोतेः कुत्वं भवतीत्येषोऽर्थो ज्ञाप्यते । **तेनेत्यादिना** ज्ञापकस्य प्रयोजनं दर्शयति । **प्रजिघाययिषतीति ।** प्रहाययितुमिच्छतीति ण्यन्तात् सन् ॥ ५६ ॥

**पदमञ्जरी**

**हेरचङि ॥ प्राजीहयदिति ।** ण्यन्तात्लुङ्, चङ्, णिलोपः, उपधाह्रस्वत्वम्, 'चङि' इति द्विर्वचनम्, 'कुहोश्चुः' इति कुत्वम्, 'दीर्घो लघोः' इति दीर्घः ।

'अचङि' इत्येतत्प्रत्याचष्टे-**अचङीति शक्यमकर्तुमिति ।** कथम् ? इत्यत आह—**चङ्यभ्यासेति ।** यथा पूर्वसूत्रे जिहननीयिषतीत्यत्र न भवति, एवं प्राजीहयदित्यत्रापि न भविष्यति, किमचङीत्यनेनेत्यर्थः । **तत्क्रियत** इत्यादिपरिहारः । किमेतस्य ज्ञापने प्रयोजनम् ? इत्यत आह—**तेनेति** ॥ ५६ ॥

**भावबोधिनी**

'हि' धातु के अभ्यास से उत्तरवर्ती हकार का कवर्ग होता है, किन्तु चङ् परे नहीं होता है । उदा० प्रजिघीषति । प्रजेघीयते । प्रजिघाय । [ प्र पूर्वक हि + सन्, 'अज्झनगमां सनि' से दीर्घ प्रही + स, द्वित्व आदि के के बाद प्रथम ह का चुत्व = झ, प्र जि ही + स, प्रस्तुत सूत्र से ह का घ—प्रजिघी + स, षत्व, लट् । इसी प्रकार प्र हि + यङ्, प्रहि + लिट्, तिप् = णल् में भी द्वित्वाभ्यास कार्य के बाद हकार का घकार किया जाता है । ]

चङ् परे नहीं—इसका क्या फल है ? प्राजीहयद् दूतम् । [ प्र हि + णिच् + लुङ् = तिप्, अट् 'णि श्रि-द्रु-स्रुभ्यः' सूत्र से च्लि का चङ् = अ, आदेश प्र, अहि + इ +, ति ह्रस्व, द्वित्व आदि होने पर यह कवर्ग नहीं होता है क्योंकि चङ् परे है । ]

'अचङि' यह नहीं भी किया जा सकता है । कैसे ? अभ्यास के निमित्त चङ् में 'णि' परे 'हि' यह अङ्ग-संज्ञक होता है, यहाँ अभ्यास के निमित्त प्रत्यय परे 'हि' इस अङ्ग का [ कुत्व होता है—] ऐसा ज्ञान कराने पर [ प्रस्तुत सूत्र की ] प्राप्ति ही नहीं है ( अर्थात् णिच् परे 'हि' धातु अङ्ग है, और णिजन्त—हि इ + चङ् में दूसरा

---

1. 'तर्हि वत्'—इति मुद्रितः पाठः ।

### ३४५४. सन्लिटोर्जेः ॥ ५७ ॥ (२३३१)

सनि लिटि च प्रत्यये जेरङ्गस्य योऽभ्यासस्तस्मादुत्तरस्य कवर्गादेशो भवति। जिगीषति। जिगाय। सन्लिटोरिति किम्? जेजीयते।

जिनातेः सम्प्रसारणे कृते यद्यपि जिर्भवति, तथापि लाक्षणिकत्वात्तस्य ग्रहणं न भवति। जिज्यतुः, जिज्युः—इत्येव भवति ॥

#### न्यासः

**सन्लिटोर्जेः ॥ जिगीषति, जिगायेति।** 'आदेः परस्य' इति परस्यादेर्जकारस्य कुत्वम्।

'ज्या वयोहानौ' इत्यस्य लिटि, ग्रहिज्यादिसूत्रेण सम्प्रसारणे कृते परपूर्वत्वे च जिरित्येष रूपविशेषो भवति। अतस्तस्यापि कुत्वं प्राप्नोति, जिग्रहणेन ग्रहणात्। न च शक्यते वक्तुम् 'हलः' इति दीर्घत्वे कृते जिग्रहणेन ग्रहणं न भविष्यति, एकदेशविकृतस्यानन्यत्वात्; अन्यथा हि जिगीषतीत्यत्रापि 'अज्झनगमां सनि' इति दीर्घत्वे कृते जिग्रहणेन ग्रहणं न भविष्यति। अथ वा—प्रागेव दीर्घात् परत्वात् कुत्वेन भवितव्यमिति यश्चोदयेत्, तं प्रत्याह—**जिनातेरित्यादि।** लक्षणप्रतिपदोक्तपरिभाषया 'जि जये' इति यः पठ्यते, तस्यैवेदं प्रतिपदोक्तस्य ग्रहणम्, न जिनातेः। सम्प्रसारणे कृते यज्जीरूपं सम्पद्यते, तस्य लाक्षणिकत्वात्। **जिज्यतुः, जिज्युरिति।** लिट्, अतुस्, उस्, 'एरनेकाचोऽसंयोगपूर्वस्य' इति यणादेशः ॥ ५७ ॥

#### पदमञ्जरी

**सन्लिटोर्जेः ॥** 'ज्या वयोहानौ'–इत्यस्य किति ग्रहिज्यादिसूत्रेण सम्प्रसारणे कृते पूर्वत्वे च जिरूपस्य भावाद् 'हलः' इति दीर्घत्वं बाधित्वा कुत्वं प्राप्नोति, कृतेऽपि वा दीर्घत्वे एकदेशविकृतस्यानन्यत्वात्कुत्वप्रसङ्गः, यथा–जिगीषतीत्यत्र, इत्यत आह–**जिनातेरित्यादि।** 'एरनेकाचः' इति यणादेशः ॥ ५७–५८ ॥ ५९ ॥

#### भावबोधिनी

अङ्गसंज्ञक बनता है। इस कारण चङ् परे प्राप्ति ही नहीं है), फिर भी यह 'अचङि' किया गया है—ज्ञापन के लिए। यह ज्ञापित होता है—चङ् से भिन्न स्थल (सनादि) में णि के सहित भी 'हि' का कुत्व होता है। इस कारण 'प्रजिघाययिषति' यह (कुत्व) सिद्ध होता है। [प्र हि + णिच् = इ वृद्धि ऐ, आय् आदेश—प्रहायि + सन् में द्वित्व आदि के बाद कुत्व हो जाता है। यदि 'अचङि' न होता तो णिजन्त धातु अंगसंज्ञक होती फलतः 'हि' का कुत्व नहीं हो पाता।] ॥ ५६ ॥

सन् और लिट् प्रत्यय परे 'जि' इस अङ्गसंज्ञक का जो अभ्यास उससे उत्तरवर्त्ती का कवर्ग आदेश होता है। उदा० जिगीषति। [जेतुम् इच्छति—इस अर्थ में जि + सन् 'अज्झनगमां सनि' से दीर्घ जी + स, द्वित्वादि के बाद द्वितीय 'ज्' का 'ग्' जिगी + स + लट् तिप्, स का ष। जि + लिट् तिप् = णल्, द्वित्व आदि के बाद द्वितीय 'ज' का 'ग्' आदेश—जिगाय।]

सन् तथा लिट् परे—इसका क्या फल है? जेजीयते। [यहाँ यङन्त में अभ्यास का कवर्ग आदेश नहीं होता है।]

जिनाति = 'ज्या वयोहानौ' इस धातु का [कित् लिट् परे "ग्रहिज्यावयि०" इस सूत्र से] सम्प्रसारण = य् का इ, [तथा आ का पूर्वरूप] करने पर यद्यपि 'जि' ऐसा हो जाता है तथापि यह रूप लाक्षणिक है [लक्षण = सूत्रों की प्रवृत्ति से बना है स्वाभाविक नहीं है] इसलिये इसका ग्रहण नहीं होता है—जिज्यतुः, जिज्युः–ऐसा ही रहता है।] ॥ ५७ ॥

**३४५५. विभाषा चेः ॥ ५८ ॥ (२५२५)**

**चिनोतेरङ्गस्य सन्लिटोरभ्यासादुत्तरस्य विभाषा कवर्गादेशो भवति। चिचीषति, चिकीषति। चिकाय, चिचाय।**

**'सन्लिटोः' इत्येव—चेचीयते ॥**

**३४५६. न क्वादेः ॥ ५९ ॥ (२८७५)**

**कवर्गादेर्धातोश्चजोः कवर्गादेशो न भवति। कूजो। वर्त्तते खर्जः। गर्जः। कूज्यं भावता, खर्ज्यं गर्ज्यं भवता ॥**

**३४५७. अजिव्रज्योश्च ॥ ६० ॥ (२८७८)**

**अजि, व्रजि—इत्येतयोश्च कवर्गादेशो न भवति। समाजः। उदाजः। व्रजि—परिव्राजः। परिव्राज्यम्।**

न्यासः

**विभाषा चेः ॥ ५८ ॥**

**न क्वादेः ॥** 'चजोः कु घिण्ण्यतोः' इति कुत्वे प्राप्ते प्रतिषेधोऽयमारभ्यते। **कूजः, खर्जः, गर्ज, इति।** 'कूज अव्यक्तशब्दे', 'खर्ज व्यथने', 'गर्ज शब्दे' ॥ ५९ ॥

**अजिव्रज्योश्च ॥ समाजः, उदाज इति।** 'अज गतिक्षेपणयोः'। 'समुदोरजःपशुषु' इति घञ्। **परिव्राजः, परिव्राज्यमिति।** 'वज व्रज गतौ'।

पदमञ्जरी

**न क्वादेः ॥ कूज इत्यादि।** 'कूजे अव्यक्ते शब्दे', 'खर्ज व्यथने', 'गर्ज शब्दे'। अत्र वार्त्तिकम्—'क्वाद्यजिव्रजियाचिरुचीनामप्रतिषेधो निष्ठायामनिटः कुत्ववचनात्' इति। अस्यार्थः—'चजोः कु घिण्ण्यतोर्निष्ठायामनिड्' इति सूत्रं कर्त्तव्यम्, तेनैव क्वाद्यजादीनां कुत्वनिवृत्तेः सिद्धत्वान्नार्थः प्रतिषेधवचनेनेति। नन्वेवं ग्रुचुग्लुचुकुजुखुजूनां निष्ठायामनिट्त्वात्कुत्वं प्राप्नोति, तथा अजिसजितर्जीनां निष्ठायां सेट्त्वात् कुत्वाप्रसङ्गः, यथा तु सूत्रं तथा विपर्ययः? उच्यते; 'यथोत्तरं मुनीनां प्रामाण्यम्' इति वार्त्तिकानुसारेण कुत्वस्य भावाभावौ व्यवस्थाप्यौ। नन्वसत्यजेः प्रतिषेधे निवीत इति निष्ठायामनिट्त्वात् समाज इति कुत्वप्रसङ्गः? नैतदस्ति; व्यादेशो निष्ठायामनिट्, न त्वजिः, स तु वलाद्यार्धधातुके विकल्पेनेष्यते इति वीभावाभावपक्षे अजित इति सेडेव।

भावबोधिनी

सन् और लिट् परे 'चि' इस अङ्ग के अभ्यास से उत्तरवर्त्ती (चकार) का विकल्प से कवर्ग आदेश होता है। उदा० चिचीषति, चिकीषति। चिकाय, चिचाय। [ चि + सन् द्वित्वादि के बाद चिची + स में अभ्यास = द्वितीय च् का क् होता है, चि + लिट् = तिप् = णल् में भी द्वित्वादि के बाद कुत्व होता है। वैकल्पिक होने से 'च' का रूप भी रहता है। ]

सन् और लिट् परे—इसका क्या फल है? चेचीयते। [ चि + यङ् में कुत्व नहीं होता है ] ॥ ५८ ॥

कवर्ग जिसके आदि में ऐसी धातु के च और ज का कवर्ग आदेश नहीं होता है। उदा० कूजो वर्तते। खर्जः। गर्जः। [ यहाँ घञ् प्रत्यय होने से 'चजोः कुः घिण्ण्यतोः' से कुत्व प्राप्त है, इस सूत्र से निषेध होता है। ] कूज्यं भवता। खर्ज्यं गर्ज्यं भवता। इनमें 'ऋहलोर्ण्यत्' से ण्यत् प्रत्यय है। प्राप्त कुत्व का निषेध हो जाता है। ] ॥ ५९ ॥

'अजि' और 'व्रजि' इनका कवर्ग आदेश नहीं होता है। उदा० समाजः। उदाजः। [ सम् तथा उद् उपसर्ग पूर्वक 'अज गतिक्षेपणयोः' धातु से घञ् प्रत्यय होता है। यह 'समुदोरजः पशुषु' सूत्र से पशु अर्थ में और इससे भिन्न अर्थ में सामान्य सूत्र 'हलश्च' से घञ् होता है। 'चजोः कु घिण्ण्यतोः' से प्राप्त कुत्व का निषेध होता है। ]

'अजेस्तु'—'अजेर्व्यघञपोः' ( २।४।५६ ) इति वीभावस्य विधानात् ण्यति नास्त्युदाहरणम् ॥

**३४५८. भुजन्युब्जौ पाण्युपतापयोः ॥ ६१ ॥ (२८७७)**

भुज, न्युब्ज—इत्येतौ शब्दौ निपात्येते पाणौ, उपतापे च । भुज्यतेऽनेनेति भुजः = पाणिः । 'हलश्च' ( ३।३।१२१ ) इति घञ् । तत्र कुत्वाभावः गुणाभावश्च निपात्यते । 'उब्ज आर्जवे' ( धा० पा० १३०४ ), न्युब्जिताः शेरतेऽस्मिन्निति न्युब्जः । उपतापः = रोगः, तथैव घञि कुत्वाभावो निपात्यते ।

पाण्युपतापयोरिति किम् ? भोगः, समुद्गः ॥

**न्यासः**

अथाजेर्ण्यति कस्मादुदाहरणं नोपन्यस्तम् ? इत्याह—**वीभावस्येत्यादि** । तत्र 'अजेर्व्यघञपोः' इति वीभावस्य विधानमिति तेन तस्योदाहरणं नोपपद्यते, ततो न दर्शितमित्यभिप्रायः । चकारोऽनुक्तसमुच्चयार्थः, तेन वजेरपि प्रतिषेधो भवति—वाजः, वाज्यमिति ॥ ६० ॥

**भुजन्युब्जोपतापयोः ॥ भुज इति** । 'भुज पालनाभ्यवहारयोः', 'हलश्च' इति घञ् । अत्र 'अवे तृस्त्रोर्घञ्' इत्यतो घञनुवर्त्तते । **न्युब्ज इति** । यदा दकारोपध उच्यते 'उद्ज आर्जवे' इति, तदा दकारस्य बकारो निपात्यते । अथ वा—'असिद्धे भ उद्जेः'[1] इत्यनयेष्ट्या दकारस्य भकारे कृते जश्त्वेन बकारो भवति । यदा तु बकारोपधः 'उब्ज आर्जवे' इति, तदा समुद्ग इत्यत्र बकारस्य दकारो वक्तव्यः ॥ ६१ ॥

**पदमञ्जरी**

कथं शोकः, समुद्ग इति, यावता शुच्युब्जी निष्ठायां सेटौ एवं तर्हि 'शुच्युब्ज्योर्घञि' इति वक्ष्यामि, तच्च यथान्यासेऽपि वक्तव्यम्—घञ्येव यथा स्याद् ण्यति मा भूदिति—अशोच्यानन्वशोचस्त्वमिति । तदेव **वार्त्तिककारपक्षे** विध्यर्थं भविष्यति ॥ ६० ॥

**अजिव्रज्योश्च ॥ समाजः, उदाज इति** । पशुभ्योऽन्यत्र 'हलश्च' इति घञ्, पशुषु तु 'समुदोरजः पशुषु' इत्यब्भवति ॥

**भुजन्युब्जौ पाण्युपतापयोः ॥** पाणिशब्देन तद्वाग्बाहुर्लक्ष्यते, न तु मणिबन्धस्याधः पञ्चशाखाप्रदेश उच्यते । लोकेऽपि बाहुपर्यायो भुजशब्दः । **भुज्यते इति** । 'भुज पालनाभ्यवहारयोः' । **न्युब्जिता इति** । अधोमुखाः, निश्चेष्टाः । वस्तुकथनं चैतत्, विग्रहस्तु न्युब्जन्त्यस्मिन्निति दर्शयितव्यः ।

न्युब्जोपतापग्रहणं शक्यमकर्त्तुम् । कथम् ? यस्मिन्व्याधौ न्युब्जिताः शेरते स तान् न्युब्जयति, तत्र ण्यन्तात्पचाद्यचि न्युब्ज इति सिद्धम्; न चात्र घञचोः स्वरे विशेषः, थाथादिसूत्रेण घञ्यप्यन्तोदात्तत्वविधानात् । भुजशब्दस्तु घञ्याद्युदात्तो भवति, इगुपधलक्षणे तु केऽन्तोदात्तः ॥ ६१ ॥

**भावबोधिनी**

व्रज—परिव्राजः । परिव्राज्यम् । [ यहाँ घञ् और ण्यत् प्रत्यय है । कुत्व नहीं होता है । ]

[ 'अच् का घञ् में उदा० क्यों नहीं दिया गया है ? ] 'अजेर्व्यघञपोः' ( २।४।५६ ) आर्धधातुक विषय में घञ् और अप् को छोड़ कर अन्य प्रत्यय में 'अज्' का 'वी' यह आदेश होता है ) इससे 'वी' आदेश करने के कारण ण्यत् परे उदा० होता ही नहीं है । [ इसीलिये नहीं दिखाया गया । ] ॥ ६० ॥

'भुज' और 'न्युब्ज'—ये दो शब्द क्रमशः पाणि और उपताप ( रोग ) अर्थों में निपातित होते हैं । उदा० भुज्यतेऽनेन—इस करण अर्थ में—भुजः । [ "हलश्च" (३।३।१२१) सूत्र से घञ् प्रत्यय होता है । यहाँ कुत्व ( ज् का क् ) का अभाव और उपधा गुण का अभाव निपातित होता है । 'उब्ज आर्जव = सीधा होना अर्थ में है' न्युब्जिताः शेरतेऽस्मिन् [न्युब्जित = नीचे मुख वाले, निश्चेष्ट जिसमें रहते हैं । विग्रह तो—'न्युब्जन्ति अस्मिन्' यही है । अधिकरण अर्थ में घञ् करने पर]—न्युब्जः । [ कुत्व का अभाव । ] उपताप = रोग । उसी ( भुजः ) के समान घञ् परे कुत्व का अभाव निपातित होता है ।

पाणि तथा उपताप—इन अर्थों में—इसका क्या फल है ? भोगः, समुद्गः । [ यहाँ कुत्व होता है क्योंकि उक्त अर्थ नहीं है । ] ॥ ६१ ॥

---

१. पञ्चम ( हयवरट् ) प्रत्याहारसूत्रस्थं भाष्यवचनमिदम् ।

**३४५९. प्रयाजानुयाजौ यज्ञाङ्गे ॥ ६२ ॥ (२८७८)**

**प्रयाज, अनुयाज—इत्येतौ निपात्येते यज्ञाङ्गे। पञ्च प्रयाजाः ( आश्व० श्रौ० १।४।२ । पञ्चानुयाजाः । त्वमग्ने प्रयाजानां पश्चात् त्वं पुरस्तात् ।**

**यज्ञाङ्गे इति किम् ? प्रयागः । अनुयागः ।**

**प्रयाजानुयाजग्रहणं प्रदर्शनार्थम्—अन्यत्राप्येवम्प्रकारे कुत्वं न भवति । एकादशोपयाजाः ( ऐ० ब्रा० २।१।८ ), उपांशुयाजमन्तरा यजति, अष्टौ पत्नीसंयाजा भवन्ति ( ऐ० ब्रा० ३।३।२ ) ऋतुयाजैश्चरन्ति ( ऐ० ब्रा० २।९।९ )—इत्येवमादि सिद्धं भवति ॥**

**३४६०. वञ्चेर्गतौ ॥ ६३ ॥ (२८७०)**

**वञ्चेरङ्गस्य गतौ वर्त्तमानस्य कवर्गादेशो न भवति । वञ्च्यं वञ्चयन्ति वणिजः ।**

**न्यासः**

**प्रयाजानुयाजौ यज्ञाङ्गे ॥ प्रयाजः, अनुयाज इति ।** प्रपूर्वादनुपूर्वाच्च यजेः 'अकर्त्तरि च कारके संज्ञायाम्' इति घञ्, तस्मिन्नकुत्वं निपात्यते ।

**प्रदर्शनार्थमिति ।** अन्यस्याप्येवम्प्रकारस्योपलक्षणमित्यर्थः । तेनान्यत्रापि प्रयाजानुयाजप्रकारे यज्ञाङ्गे कुत्वं न भवति । प्रदर्शनार्थता पुनः प्रयाजानुयाजशब्दयोर्यज्ञाङ्गग्रहणाद् वेदितव्या, तद्धयेवमर्थं क्रियते । कथं नाम प्रयाजानुयाजग्रहणस्योपलक्षणार्थता प्रतीयेत ! अन्यथा हि निपातनसामर्थ्यादेव यज्ञाङ्गविषयता विज्ञायत इति तन्न कर्त्तव्यमेव स्यात् ॥ ६२ ॥

**वञ्चेर्गतौ । वञ्चमिति ।** 'वन्चु चन्चु तन्चु त्वन्चु म्रुन्चु म्लुन्चु म्रुचु म्लुचु गत्यर्थाः' । कर्मणि घञ् ।

**पदमञ्जरी**

**प्रयाजानुयाजौ यज्ञाङ्गे । पञ्चानुयाजा इति ।** दर्शपूर्णमासयोस्त्रयोऽनुयाजाः, चातुर्मास्येषु नव, पशुष्वेकादश, पञ्चत्वं न क्वापि दृष्टम्, तस्मात् **त्रयोऽनुयाजा** इति पाठः ।[1]

**प्रदर्शनार्थमिति ।** एतच्च यज्ञग्रहणाल्लभ्यते, उपात्तयोर्हि यज्ञाङ्गविषयत्वं निपातनादेव सिद्धम्; उपांशुयागस्य ऋतुयाजानां च यज्ञसमुदायं प्रत्यवयवत्वाद् यज्ञाङ्गत्वम् । प्रधानयागा ह्येते; इतरेषां तु फलवत्सन्निधावफलं तदङ्गमित्यङ्गत्वम् ॥ ६२ ॥

**वञ्चेर्गतौ ॥ वञ्च्यं वञ्चन्तीति ।** गन्तव्यं गच्छन्तीत्यर्थः । **वङ्कमिति ।** गुणशब्दोऽयम्भावे घञ्,

**भावबोधिनी**

"प्रयाज तथा अनुयाज' ये शब्द यज्ञ के अङ्ग के रूप में होने पर निपातित होते हैं अर्थात् कुत्व का अभाव निपातित होता है । ] उदा० पञ्च प्रयाजाः । पञ्च अनुयाजाः । [ मुख्य याग के पहले किये जाने वाले 'प्रयाज' और बाद में किए जाने वाले अनुयाज होते हैं । प्र यज् + घञ्, अनुयाज् + घञ्, 'अकर्त्तरि च कारके संज्ञायाम्' सूत्र से घञ् होता है । कुत्व का अभाव निपातित होता है । ] 'त्वमग्ने प्रयाजानां पश्चात् त्वं पुरस्तात् ।"

यज्ञ का अङ्ग रहने पर—इसका क्या फल है । प्रयागः । अनुयागः । [ यहाँ कुत्वाभाव निपातित नहीं होता है । ]

प्रयाज—अनुयाज इनका ग्रहण प्रदर्शन के लिए है—अन्यत्र भी इसी प्रकार कुत्व नहीं होता है । उदा० "एकादशोपयाजाः, उपांशुयाजमन्तरा यजति, अष्टौ पत्नीसंयाजाः भवन्ति, ऋतुयाजैश्चरन्ति" [ उपयाज, उपांशुयाज, पत्नीसंयाज, ऋतुयाज— ] आदि शब्दरूप भी सिद्ध होते है अर्थात् इनमें भी कुत्वाभाव होता है ॥ ६२ ॥

'वञ्चु' धातुरूप अङ्ग जो गति अर्थ में है उसका कवर्ग आदेश नहीं होता है । उदा० वञ्च्यं वञ्चन्ति वणिजः । [ व्यापारी अपने गन्तव्य की ओर जाते हैं । यहाँ 'वञ्च' से कर्म में यक् और घञ् है । कुत्वनिषेध हो जाता है । ]

---

१. 'त्रयोऽनुयाजाः' इत्येव शास्त्रसम्मतः पाठः ।

गताविति किम् ? वङ्कुचं[1] काष्ठम् । कुटिलमित्यर्थः ॥

**३४६१. ओक उचः के ॥ ६४ ॥ (२८८०)**

उचेर्धातोः के प्रत्यये 'ओकः' इति निपात्यते । किं पुनरत्र निपात्यते ? कुत्वम्, गुणश्च । **न्योकः शकुन्तः । न्योको गृहम्**[2] ।

कर्त्तरि इगुपधलक्षणः कः प्रत्ययः ( ३।१।१३५ ) । अधिकरणादौ तु कारकान्तरे 'घञर्थे कविधानम्' ( वा० ) इति ।

किमर्थं पुनरयं घञ्येव न व्युत्पाद्यते ? स्वरार्थमन्तोदात्तोऽयमिष्यते, घञि सत्याद्युदात्तः स्यात् ।

दिवौकसः, जलौकसः—इत्येवमादावप्यसुनि प्रत्यये 'उणादयो बहुलम्' ( ३।३।१ ) इति कुत्वं द्रष्टव्यम् ॥

**न्यासः**

वञ्च्यं वञ्चन्ति गन्तव्यं गच्छन्तीत्यर्थः । **वङ्कमिति** । 'हलश्च' इति घञ् ॥ ६३ ॥

**ओक उचः के ॥ न्योक इति** । निपूर्वात् 'उच समवाय' इत्यस्मात् 'इगुपधज्ञाप्रीकिरः कः'—न्युचतीति न्योकः, निवसतीत्यर्थः । न्युचन्त्यस्मिन्निति 'घञर्थे कविधानम्' इति वा कः—न्योकः, निवसन्त्यस्मिन्नित्यर्थः ।

**किमर्थं पुनरित्यादि** । एवं मन्यते—रूढिशब्दोऽयम्, नात्र कश्चिदवयवार्थोऽस्ति, व्युत्पत्तिः केवलं कर्त्तव्या, सा च 'हलश्च' इति घञ्यपि कृते भवत्येव, ततो नार्थोऽनेन योगेनेति । **घञि सत्याद्युदात्तः स्यादिति** । 'ञ्नित्यादेर्नित्यम्' इत्यनेन ।

अथ दिवौकसः, जलौकस इत्यादौ कथं कुत्वम्, यावता नात्र कप्रत्ययोऽस्ति, नापि घिण्यतौ, किं तर्हि ? असुन्निति ? अत आह—**दिवौकस इत्यादि** । गतार्थम् ॥ ६४ ॥

**पदमञ्जरी**

अभेदोपचाराद् गुणिनि वृत्तिः ॥ ६३ ॥

**ओक उचः के** ॥ 'उच समवाये' । **न्योकः शकुन्त इति** । न्युचति = समवैति नीडादाविति कृत्वा । **न्योको गृहमिति** । न्युचन्ति = समवयन्ति वसन्ति तस्मिन् इति कृत्वा ।

**असुनि प्रत्यय इति** । अयमेव लोके साधीयः प्रयुज्यते ॥ ६४ ॥

**भावबोधिनी**

गति अर्थ में—इसका क्या फल है ? वङ्कुचं काष्ठम् । कुटिल = टेढ़ी लकड़ी—यह अर्थ है । [ यहाँ 'हलश्च' से भाव अर्थ में घञ्, कुत्व करने पर रूप बना है । ] ॥ ६३ ॥

'उच' धातु से 'क' प्रत्यय में 'ओकस्' यह निपातित होता है । तो यहाँ क्या निपातित होता है ? कुत्व और गुण । उदा० न्योकः शकुन्तः । न्योकः गृहम् । [ रहने वाला पक्षी । जिसमें लोग रहते हैं—घर । ]

कर्ता अर्थ में [ नि पूर्वक उच धातु से ] "इगुपधज्ञाप्रीकिरः कः" सूत्र से क = प्रत्यय होता है । अधिकरण आदि अर्थों में तो अन्य कारक अर्थ में 'घञर्थे कविधानम्' से 'क' होता है । [ नि उच् + क = अ, कुत्व से च् का क्, गुण नि ओक् + अ, उपसर्ग का यण् न्योकः । [ न्युचति = समवैति—इस प्रकार कर्ता अर्थ में ओकः = रहने वाला पक्षी । न्युचन्ति अस्मिन् लोकाः—इस अधिकरण अर्थ में 'जहाँ लोग रहते हैं अर्थात् घर । ]

[ क प्रत्यय में निपातित करने का क्या लाभ है ? ] क्यों नहीं यह घञ् प्रत्यय में ही निपातित = व्युत्पादित किया जाता है ? स्वर करने के लिए; यह ( ओकः ) अन्तोदात्त इष्ट है, परन्तु घञ् प्रत्यय करने पर [ "ञ्नित्यादिर्नित्यम्" सूत्र से ] आद्युदात्त होने लगेगा ।

दिवौकसः, जलौकसः—इत्यादि शब्दों में भी [ उच् धातु से ] 'असुन्' प्रत्यय करने पर 'उणादयो बहुलम्' के अनुसार कुत्व देखना चाहिये अर्थात् कुत्व निपातन समझना चाहिये । ] ॥ ६४ ॥

---

१. 'वङ्कम्' इति मुद्रितः पाठः । २. 'वृक्षः' इति मुद्रितः पाठः ।

**३४६२. ण्य आवश्यके ॥ ६५ ॥ (२८८१)**

**ण्ये परतः आवश्यकेऽर्थे कवर्गो न भवति । अवश्यपाच्यम् । अवश्यवाच्यम् । अवश्यरेच्यम् । आवश्यके इति किम् ? पाक्यम् । वाक्यम् । रेक्यम् ॥**

**३४६३. यजयाचरुचप्रवचर्चश्च ॥ ६६ ॥ (२८८२)**

**यज, याच, रुच, प्रवच, ऋच—इत्येतेषां ण्ये परतः कवर्गादेशो न भवति । यज—याज्यम् । याच—याच्यम् । रुच—रोच्यम् । प्रवच—प्रवाच्यम् । ऋच—अर्च्यम् । ऋदुपधादपि ऋचेरत एव निपातनाद् ण्यद्भवति ।**

**न्यासः**

**ण्य आवश्यके ॥ अवश्यपाच्यमित्यादि ।** 'डुपचष् पाके', 'आवश्यकाधमर्ण्ययोर्णिनिः' इत्यनुवृत्तौ 'कृत्याश्च' इत्यावश्यके ण्यत् । मयूरव्यंसकादित्वात् समासः, 'लुम्पेदवश्यमः कृत्ये तुम्काममनसोरपि' इत्यनयेष्टयाऽवश्यमो मकारलोपः ॥ ६५ ॥

**यजयाचरुचप्रवचर्चश्च ॥** 'ण्ये' इत्येव । अनावश्यकार्थमिदम् । **याज्यमित्यादि ।** 'यज देवपूजादौ', 'टुयाचृ याञ्चायाम्', 'रुच दीप्तौ', 'वच परिभाषणे' प्रपूर्वः' 'ऋच स्तुतौ' । कथं पुनर्ऋचेर्ण्यत्, यावता 'ऋदुपधाच्चावक्लृपि चतेः' इति ण्यदपवादेन क्यपा भवितव्यम् ? इत्याह—**ऋदुपधादित्यादि ।**

अथ प्रवचिग्रहणं किमर्थम्, यावता 'वचोऽशब्दसंज्ञायाम्' इत्यनेनैव प्रतिषेधो भविष्यति ? इत्याह—**प्रवचिग्रहणं शब्दसंज्ञार्थमिति ।** स्यादेतत् । नास्त्येव कश्चिच्छब्दो यस्य प्रवाच्यमिति नामधेयम् ? इत्याह—**प्रवाच्यो नामेत्यादि ।**

**अपरे पुनरित्यादिना** मतान्तरं दर्शयति—**एतत्त्विति ।** अविवाक्यमेतद्रूपम् । कः पुनरसौ विशेषः ? इत्याह—**दशरात्रस्येत्यादि ।** यस्मिन् याज्ञिका न विब्रुवते, तस्य दशरात्रस्य यद्दशममहस्तत्रैवैतच्छब्दरूपमिष्यते, नान्यत्र । यद्येवम्, अनर्थकं नियमार्थं प्रवचिग्रहणम्, अवश्यं तस्य विशिष्टविषये वृत्तिर्यथा स्यादित्येवमर्थो यत्नः कर्त्तव्यः, तत एव यत्नात् तत्र कुत्वमपि भविष्यति ? नैतदस्ति; नियमाद्धयन्योपसर्गस्य कुत्वप्रतिषेधो निवर्त्तते । अभिधेयव्यवस्था तु प्रसिद्धिवशादेव विज्ञास्यते ।

**पदमञ्जरी**

**ण्य आवश्यके ॥** उदाहरणेषु 'आवश्यकाधमर्ण्ययोर्णिनिः', 'कृत्याश्च' इति ण्यत्, मयूरव्यंसकादित्वात् समासः, 'लुम्पेदवश्यमः कृत्ये' इति मलोपः ॥ ६५ ॥

**यजयाचरुचप्रवचर्चश्च ॥ अर्च्यमिति ।** 'ऋज स्तुतौ' **प्रवाच्यो नामेति ।** प्रकर्षेणोच्यत इति । प्रवाच्यः = पाठविशेषोपलक्षितो ग्रन्थविशेषः । **अपरे पुनरिति ।** ते मन्यन्ते–प्रपूर्वो वचिरशब्दसंज्ञायामेव वर्त्तते, तत्र विधेयासम्भवान्नियम इति ।

**भावबोधिनी**

ण्य परे रहते आवश्यक अर्थ में कवर्ग नहीं होता है । उदा० अवश्यपाच्यम् । अवश्यवाच्यम् । अवश्यरेच्यम् । [ सभी में अवश्यम् उपपद पच्, वच्, रिच् धातु से ण्यत् प्रत्यय, 'मयूरव्यंसकादयश्च' से समास, "लुम्पेदवश्यमः कृत्ये तुम्काममनसोरपि" इस वचन से 'म्' का लोप अवश्य–पच्+य, उपधावृद्धि, कुत्व का अभाव । ]

आवश्यक अर्थ में—इसका क्या फल है ? पाक्यम् । वाक्यम् । रेक्यम् [ यहाँ सामान्य अर्थ है । अतः कुत्वाभाव न होकर कुत्व ही होता है । ] ॥ ६५ ॥

यज्, याच्, रुच् प्रवच् और ऋच्—इनको ण्य परे रहते कवर्ग आदेश नहीं होता है । उदा० यज्–याज्यम् याच्–याच्यम् । रुच्–रोच्यम् । प्रवच्–प्रवाच्यम् । ऋच्–अर्च्यम् । ऋकारोपध भी ऋच् धातु से इसी वचन के कारण ण्यत् प्रत्यय होता है ।

ण्यत् का ग्रहण शब्द संज्ञा अर्थ के लिए है । 'प्रवाच्य' इस नाम वाला पाठविशेष से उपलक्षित ग्रन्थविशेष है ।

दूसरे विद्वान् यह कहते हैं—'उपसर्गपूर्वक का नियम करने के लिए है—'प्र उपसर्गपूर्वक ही वच् धातु का

प्रवचग्रहणं शब्दसंज्ञार्थम्। प्रवाच्यो नाम पाठविशेषोपलक्षितो ग्रन्थोऽस्ति।

अपरे पुनराहुः—उपसर्गपूर्वस्य नियमार्थम्—प्रपूर्वस्यैव वचेरशब्दसंज्ञायां कुत्वप्रतिषेधो यथा स्यात्, अन्योपसर्गपूर्वस्य मा भूदिति। 'अविवाक्यमहः' इति पठन्ति, एतत्तु विशेष एवेष्यते—दशरात्रस्य यद् दशममहः। अन्यत्राविवाच्यमेव भवति।

❀ ण्यति प्रतिषेधे त्यजेरुपसंख्यानम् ❀ ( म० भा० )। त्याज्यम्॥

**३४६४. वचोऽशब्दसंज्ञायाम्॥ ६७॥ (२८८३)**

वचोऽशब्दसंज्ञायां ण्यति परतः कवर्गो न भवति। वाच्यमाह। अवाच्यमाह।

अशब्दसंज्ञायामिति किम्? अवघुषितं वाक्यमाह॥

**३४६५. प्रयोज्यनियोज्यौ शक्यार्थे॥ ६८॥ (२८८४)**

प्रयोज्य, नियोज्य—इत्येतौ शब्दौ शक्यार्थे निपात्येते। शक्यः प्रयोक्तुं प्रयोज्यः। शक्यो नियोक्तुं नियोज्यः।

### न्यासः

**ण्यति प्रतिषेध इत्यादि।** ण्यति प्रतिषेधेऽस्मिन् क्रियमाणे 'त्यज हानौ' इत्यस्योपसंख्यानं कर्त्तव्यम्। उपसंख्यानशब्दस्य प्रतिपादनमर्थः। तत्रेदं प्रतिपादनम्—चकारोऽनुक्तसमुच्चयार्थः, तेन त्यजेरपि प्रतिषेधो भविष्यतीति॥ ६६॥

**वचोऽशब्दसंज्ञायाम्॥ ६७॥**

**प्रयोज्यनियोज्यौ शक्यार्थे॥** प्रपूर्वस्य निपूर्वस्य च 'युजिर् योगे' इत्यस्य ण्यति कुत्वाभावो

### पदमञ्जरी

**एतच्चेति।** अविवाक्यमित्येतावच्छब्दरूपम्। कः पुनरसौ विशेषः? इत्यत आह—**दशरात्रस्येति।** द्वादशाहेऽभितो द्विरात्रो मध्ये दशरात्रः, तस्य दशममहः=अविवाक्यम्। **अन्यत्रेति।** तथा च नास्मिन्नहनि केनचित् कस्यचिद्विवाच्यम्, अविवाक्यमित्येतदाचक्षते। संशये बहिर्वेदिस्वाध्यायप्रयोगोऽन्तर्वेदीत्येके इत्यह-र्विशेषे कुत्वम्, अन्यत्र तदभावः प्रयुक्त **आश्वलायनेन।** एवमन्योपसर्गपूर्वस्यापि प्रतिषेध एवेष्यते, न नियमः।

एवञ्च कृत्वा प्रवचिग्रहणं शक्यमकर्त्तुम्; अहर्विशेषे पृषोदरादित्वात्कुत्वम्, अन्यत्र प्रतिषेध इति सिद्ध-मिष्टम्; अन्यथा नियमे हि बहु प्रतिविधेयं स्यात्॥ ६६॥ ६७॥

**प्रयोज्यनियोज्यौ शक्यार्थे॥** इह 'प्रयुजनियुजः शक्यार्थे' इति वक्तव्यम्, 'ण्ये' इत्येव, एवं सिद्धे

### भावबोधिनी

अ शब्द संज्ञा अर्थ में प्रतिषेध जिस प्रकार से हो सके, अन्य उपसर्गपूर्वक का प्रतिषेध न हो सके।' 'अविवाक्यमहः' ऐसा पाठ करते हैं। किन्तु ऐसा तो विशेष अर्थ में इष्ट होता है—दशरात्र का जो दशम् दिन होता है वहीं पर 'अविवाक्यम्' ऐसा इष्ट माना जाता है। अन्य स्थलों पर तो 'अविवाच्यम्' यही कुत्वरहित रूप होता है। [द्वादशाह कृत्य में द्विरात्र मध्य में 'दशरात्र' इसका दशम दिन 'अविवाक्य' होता है। इस दिन किसी-किसी से अप्रिय या प्रतिषिद्ध नहीं बोलना चाहिए।

❀ ण्यत् परे कुत्वप्रतिषेध में त्यज् का उपसंख्यान करना चाहिए। ❀ उदा० त्याज्यम्। [ त्यज् + ण्यत्, उपधावृद्धि, प्राप्त कुत्व का प्रतिषेध होता है। ]॥ ६६॥

शब्द की संज्ञा ( नाम ) न होने पर 'वच' धातु का ण्यत् परे कवर्ग ( च् का क् ) नहीं होता है। उदा० वाच्यम् आह। [ वच् + ण्यत्, कुत्व का निषेध उपधावृद्धि। कहने योग्य-यह अर्थ है। ] अवाच्यम् आह। [ वच् + ण्यत्, पूर्ववत् कार्य नञ् समास। ]

शब्द की संज्ञा न होने पर—इसका क्या अर्थ है-अवघुषितं वाक्यम् आह। [ यहाँ शब्द-समूह विशेष की संज्ञा है अतः निषेध न होकर कुत्व ही होता है। ]॥ ६७॥

प्रयोज्य और नियोज्य ये दोनों शक्य ( करने योग्य ) अर्थ में [ ण्यत् परे ] निपातित होते हैं अर्थात्

शक्यार्थ इति किम् ? प्रयोग्यः, नियोग्यः ॥

**३४६६. भोज्यं भक्ष्ये ॥ ६९ ॥ (२८८५)**

भोज्यं निपात्यते भक्ष्येऽभिधेये । भोज्य ओदनः । भोज्या यवागूः । इह भक्ष्यमभ्यवहार्यमात्रम् । भक्ष्य इति किम् ? भोग्यः कम्बलः ॥

**३४६७. घोर्लोपो लेटि वा ॥ ७० ॥ (३५८४)**

**न्यास**

निपात्यते, स चेण्ण्यच्छक्यार्थे भवति । शक्यार्थे पुनर्ण्यत् 'शकि लिङ् च' इत्यनेन वेदितव्यः । तत्र हि 'कृत्याश्च' इत्यनुवर्त्तते । अथ किमर्थं पुनर्निपातनम्, यावता 'ण्ये' इत्यनुवर्त्तत एव ? तत्र 'प्रयुजनियुजोः शक्यार्थे' इति वक्तव्ये निपातनं रूढ्यर्थम् । अगुणभूता यत्र शक्यार्थता तत्र यथा स्यात्—प्रयोज्यो भृत्यः, नियोज्यो दास इति । स्वामिनि प्रयोज्यो नियोज्य इति न भवति । न हि तत्र प्रयोज्यनियोज्यशब्दौ रूढौ, किं तर्हि ? गुणभूतावेव ॥६८॥

**भोज्यं भक्ष्ये ॥ भोज्यमिति ।** 'भुज पालनाभ्यवहारयोः' इत्यस्य ण्यति भक्ष्येऽभिधेये कुत्वाभावो निपात्यते । **भोज्या यवागूरिति ।** ननु च भक्षिरयं खरविशदेऽभ्यवहार्ये वर्त्तते, न तु द्रवद्रव्ये, यथा—'संस्कृतं भक्षाः' इत्यत्र, तत् कथम् 'भक्ष्ये' इत्युच्यमाने यावाग्वां भवति ? इत्याह—**इह भक्ष्यमित्यादि । नावश्यं** भक्षिः खरविशदे वर्त्तते । तथा हि—द्रवद्रव्येऽप्यस्य प्रयोगो दृश्यते । यथा—अब्भक्षः, वायुभक्ष इति । तस्मादभ्यवहार्यसामान्ये भक्षिर्वर्तत इति यवाग्वामपि भवति । 'भुजो भक्ष्ये' इति वक्तव्ये निपातनं रूढ्यर्थम् । अभ्यवहार्ये भक्ष्ये कर्मणि यथा स्यात्, परिपालनीये मा भूत्—भोग्या अपूपाः । पालनीया इत्यर्थः ॥ ६९ ॥

**घोर्लोपो लेटि वा ॥ ददन्निति** 'डुदाञ् दाने', लिङर्थे लेट्', झेरन्तादेशः, 'इतश्च लोपः परस्मैपदेषु'

**पदमञ्जरी**

निपातनाश्रयणं रूढ्यर्थम्—गुणभूत एवैतयोः प्रयोगो यथा स्यात्—प्रयोज्यो भृत्यः, नियोज्यो दास इति । स्वामिनि प्रयोज्यनियोज्यशब्दौ न भवतः ॥ ६८ ॥

**भोज्यं भक्ष्ये ॥ भोज्या यवागूरिति ।** ननु भक्षिरयं खरविशदेऽभ्यवहार्ये वर्तत इति 'संस्कृतं भक्षाः' इत्यत्रोक्तम्, तत्कथं द्रवद्रव्ये भवति—इत्यत आह—**इहेति ।** एवं मन्यते—नात्र भक्षिः खरविशद एव वर्त्तते; अब्भक्षः वायुभक्ष इत्यत्रापि दर्शनादिति शब्दान्तरसन्निधिबलादेतदेवं भवति । स्वभावस्तु भक्षिः खरविशद एव वर्त्तते' इति **वार्त्तिककारस्य** पक्षः, यदाह—'भोज्यमभ्यवहार्य इति वक्तव्यम्' इति ॥ ६९ ॥

**घोर्लोपो लेटि वा ॥ दधदिति ।** दधातेर्लेट्, तिप् 'इतश्च लोपः परस्मैपदेषु' इतीकारलोपः ! दाशुषे यजमानाय रत्नानि, दद्यादित्यर्थः । अन्ये त्वाहुः—दधदिति शत्रन्तमेतत्, ददिति दात्रो रूपम् ।

**भावबोधिनी**

कुत्व नहीं होता है । उदा० प्रयोक्तुं शक्यः—प्रयोज्यः । [ प्रपूर्वक युज्+ण्यत्, निपूर्वक युज्+ण्यत् में कुत्व का अभाव, उपधागुण होता है । सूत्र में 'प्रयोज्य और नियोज्य' के ग्रहण से यह समझना चाहिये कि जहाँ शक्यार्थता प्रधानरूप से प्रतीत होती है वहीं इनका प्रयोग होता है, जैसे—प्रयोज्यः भृत्यः, नियोज्यः दासः । स्वामी के लिये इन शब्दों का प्रयोग नहीं होता है । अब ये रूढ़ शब्द बन चुके हैं । ]

शक्यार्थ में—इसका क्या फल है ? प्रयोग्यः, नियोग्यः । [ यहाँ कर्म, अर्ह आदि अर्थ हैं । अतः कुत्व होता है । ] ॥ ६८ ॥

भक्ष्य = खाने योग्य—अर्थ में 'भोज्यम्' यह निपातित होता है अर्थात् कुत्व नहीं होता है । उदा० भोज्यः ओदन. । भोज्या यवागूः । [ भुज् + ण्यत्, कुत्व का निषेध, उपधा का गुण । ] यहाँ भक्ष्य से खाने योग्य मात्र का ग्रहण है । [ अतः सूखा, गीला जैसा भी खाने योग्य है वह 'भोज्य' है । ]

भक्ष्य अर्थ में—इसका फल है ? भोग्यः कम्बलः । [ यहाँ भक्षणीय नहीं अपि तु उपभोग योग्य अर्थ है । अतः कुत्व ही होता है । ] ॥ ६९ ॥

लेट् लकार परे रहते घुसंज्ञक का [ अन्त्य ] लोप विकल्प से होता है । उदा० दधद् रत्नानि । [ डुधाञ् से 'लिङर्थे लेट्' तिप्, शप् का श्लु, द्वित्व, अभ्यासकार्य 'लेटोऽडाटौ' सूत्र से अट् आगम 'इतश्च' से इकार का लोप—

घुसंज्ञकानां लेटि परतो वा लोपो भवति । 'दधद्रत्नानि दाशुषे' । सोमो[1] ददद् गन्धर्वाय (ऋ० १०।८५।४१) । न च भवति—यदग्निरग्नये ददात् ।

आडागमे सति लोपेऽपि ददादिति सिद्धं भवति । तत्र वावचनं विस्पष्टार्थम् । एषा हि कस्यचिदाशङ्का स्याद्—ददादित्येव नित्ये प्राप्ते लोप आरभ्यमाणो बाधत एवैतद्रूपमिति ॥

## ३४६८. ओतः श्यनि ॥ ७१ ॥ (२५१०)

ओकारान्तस्याङ्गस्य श्यनि परतो लोपो भवति । शो—निश्यति । छो—अवच्छ्यति । दो—

न्यासः

इतीकारलोपः, 'लेटोऽडाटौ' इत्यट्, शप्, तस्य जुहोत्यादित्वात्श्लुः, 'श्लौ' इति द्विर्वचनम्, संयोगान्तलोपः, 'ङमो ह्रस्वादचि ङमुण् नित्यम्' इति ङमुडागमः । **सोमो ददद् गन्धर्वायेति** । ददातेस्तिप्, शेषं पूर्ववत् । **यदग्निरग्नये ददादिति** । ददा + आदिति स्थितेऽकः सवर्णे दीर्घत्वम्, शेषं पूर्ववत् ।

यद्याडागमे कृते सत्यपि लोपे च ददादिति सिध्यति, किमर्थं तर्हि वेत्युच्यते ? इत्याह—**तत्रेत्यादि** । स्यादेतत्—विस्पष्टार्थं तर्हि वाग्रहणमयुक्तम्; ददादित्यस्य रूपस्यासिद्धि प्रत्याशङ्काया अभावात् ? इत्यत आह—**एषा हीत्यादि** । सुबोधम् ॥ ७० ॥

**ओतः श्यनि** ॥ **निश्यतीत्यादि** । 'शो तनूकरणे', [ छो छेदने ] 'दो अवखण्डने', 'षो अन्तकर्मणि' । अथ किमर्थं श्यनीत्युच्यते, न 'शिति' इत्येवोच्येत, एवं ह्युच्यमाने श्यन्येव लोपो भविष्यति, न ह्योकारान्ताच्छ्यनोऽन्यच्छित् सम्भवति, लघु चैवं सूत्रं भवति, यत्रायमप्यर्थः—ष्ठिवुक्लमुचमां शिति' इत्यत्र शिद्ग्रहणं न

पदमञ्जरी

वावचनं प्रत्याचिख्यासुराह—**आडागमे सतीति** । अस्त्वत्र लोपः; आटः श्रवणं भविष्यतीत्यर्थः ।

किमर्थं तर्हि वावचनम् ? इत्यत आह—**तत्रेति** । किमत्र विस्पष्टनीयम् ? अत आह—**एषा हीति** । अन्ये त्वाहुः—ज्ञापकार्थं वाग्रहणम्, एतज्ज्ञापयति—अनित्यमागमशासनमिति । अनित्यत्वे त्वाट्यसति ददादिति न स्यादिति तत्सिद्धये वाग्रहणं कर्त्तव्यमिति ॥ ७० ॥

**ओतः श्यनिः** ॥ **श्यतीत्यादि** । 'शो तनूकरणे', 'छो छेदने', 'दो अवखण्डने,' 'षो अन्तकर्मणि' ।

इह 'ओतः शिति' इति वक्तव्यम्, न च ओकारान्तानां श्यनोऽन्यः शित् सम्भवति, अर्धमात्रया च लाघवं भवति; तत्रायमप्यर्थः—'ष्ठिवुक्लमुचमां शिति' इति शिद्ग्रहणं न कर्त्तव्यं भवति, इदमेवानुवर्तिष्यते । ननु

भावबोधिनी

दधा अ + ति, प्रस्तुत सूत्र से घुसंज्ञक धातु के आ का लोप-दध् अत् = दधत् । ] सोमो ददद् गन्धर्वाय । [ 'डुदाञ् दाने' का लेट् का रूप है । दा + लेट् = तिप् । यहाँ भी पूर्ववत् प्रक्रिया होती है—ददा + अ + त्, धातु के आ का लोप । न्यासकार ने यहाँ 'ददन्निति' ऐसा प्रयोग उदा० में दिया है किन्तु भाष्य में प्रकाशित मन्त्र भाग ही प्राप्त होता है । अतः उसी का प्रतिपादन उचित है । ] और यह लोप नहीं भी होता है—"यदग्निरग्नये ददात् ।" [ ददा + आ + त् लोप नहीं होने पर सवर्णदीर्घ होता है । ]

[ लोप कर देने पर और आड् आगम कर देने पर 'ददात्' यह रूप बनता ही है तब सूत्र में 'वा' कथन का क्या औचित्य ? ] आट् आगम होने पर [ इस सूत्र से ] लोप हो जाने पर भी 'ददात्' यह रूप सिद्ध ही होता है ? 'वा' का ग्रहण विस्पष्टता के लिये है । क्योंकि किसी को यह शंका हो सकती है—'ददात्' ऐसा ही नित्य प्राप्त रहते लोप का विधान ( आरम्भ ) किया गया है, अतः लोप इस रूप का बाध ही करता है । [ फलतः 'ददात्' यह नहीं हो सकेगा । 'वा' ग्रहण से दोनों रूप सम्भव हैं । ] ॥ ७० ॥

ओकारान्त अङ्ग का लोप श्यन् परे रहते होता है । उदा० शो निश्यति । [ निपूर्वक 'शो तनूकरणे' से 'श्यन्' = य शो + य + ति, ओकार का लोप—श्यति । यही प्रक्रिया अन्यरूपों में भी समझनी चाहिए । ] छो-

---

१. 'दधद्' इति सर्वसम्मतः पाठः; न्यासस्त्व भाष्यविसंवादाच्चिन्त्यः, ङमुट्प्रयोगस्तु चिन्त्यतमः ।

अवद्यति । सो—अवस्यति ॥

**३४६९. क्सस्याचि ॥ ७२ ॥ (२३३७)**

**क्सस्याजादौ प्रत्यये लोपो भवति । अधुक्षाताम् । अधुक्षाथाम् । अधुक्षि ।**

**अचीति किम् ? अधुक्षत् । अधुक्षताम् । ककारवत उपादानं किम् ? इह मा भूत्—उत्सौ, उत्साः । वत्सौ, वत्साः ॥**

**न्यासः**

कर्त्तव्यं भवतीत्येतदेव तत्रानुवर्तिष्यते ? सत्यं सिद्ध्यत्येव, किन्तु प्रतिपत्तिगौरवं स्यात् । तस्मात् प्रतिपत्तिगौरवपरीहारार्थं श्यनीत्युक्तम् ।

'ओतः' इति तपरकरणं मुखसुखार्थम् । न ह्यन्यदस्य निवर्त्त्यं विधेयं वा सम्भवति ॥ ७१ ॥

**क्सस्याचि ॥ अधुक्षाताम्, अधुक्षाथामिति ।** दुहेर्लुङ्, च्लिः, 'स्वरितञितः' इत्यात्मनेपदम्, आताथाम्, 'शल इगुपधादनिटः क्सः' इति क्सादेशश्च्लेः, तस्यानेन 'अलोऽन्त्यस्य' लोपः, 'दादेर्धातोर्घः' इति हकारस्य घकारः, 'एकाचो बशो भष्' इत्यादिना भष्—धकारः, 'खरि च' इति चर्त्वम्—घकारस्य ककारः, 'इण्कोः' इति षत्वम् । **अधुक्षीति ।** उत्तमपुरुषैकवचनमिट् । **अधुक्षदिति ।** तिप्, 'इतश्च' इतीकारलोपः । **अधुक्षतामिति ।** 'तस्थस्थमिपाम्' इत्यादिना तसस्ताम् । ककारवत उपादानम्, इह मा भूत्—हंसौ हंसाः, वत्सौ वत्सा इति ॥ ७२ ॥

**पदमञ्जरी**

श्यन्ग्रहणमुत्तरार्थं कर्त्तव्यम्—'शमामष्टानाम्' इति ? तत्राप्यस्तु शितीत्येव; यदि शितीत्युच्यते, भ्रमे 'वा भ्राश' इति पक्षे शब् भ्रमति—अत्रापि प्राप्नोति ? शमादिभिः शितं विशेषयिष्यामः—शमादिभ्यो यो विहितः शिदिति, श्यन्नेव च सर्वेभ्यः शमादिभ्यो विहितः, एवमपि शिद्विशेषणत्वेन शमादीनामुपयोगात्कार्यनिर्देशाभावात् नश्यतीत्यादावपि प्रसङ्गः ? नैष दोषः; 'अष्टानाम्' इत्यनेन संख्येयाः कार्यिणो निर्दिश्यन्ते, ते च सन्निधानात् शमादय एव विज्ञास्यन्ते ॥ ७१ ॥

**क्सस्याचि ॥ अधुक्षातामिति ।** दुहेः स्वरितेत्त्वेनात्मनेपदम्, आताम्, अत्रासति लोपे 'आतो ङितः' इति इयादेशः प्राप्नोति । **अधुक्षीति ।** इटि लोपः ।

ककारवतः सशब्दस्य ग्रहणादिह न भवति—वत्सौ; 'तृणादिभ्यः सः,' तृणसौ, तृणसः ॥ ७२ ॥

**भावबोधिनी**

अवच्छ्यति । [ 'छो' छेदन अर्थवाली है । ] दो—अवद्यति । [ 'दो' अवखण्डन अर्थवाली है । ] सो—अवस्यति । [ षो अन्तकर्म = समाप्त करना अर्थ वाली है । 'धात्वादेः षः सः' से ष् का स् । ] ॥ ७१ ॥

क्स का अजादि प्रत्यय परे लोप होता है । [ यहाँ अन्त्य का लोप ही समझना चाहिए । ] उदा० अधुक्षाताम् । अधुक्षाथाम् । अधुक्षि । [ ये दुह धातु लुङ् लकार आत्मनेपद के रूप हैं । दुह् + लुङ् = आताम्, अट् "शल इगुपधादनिटः क्सः" सूत्र से च्लि का 'क्स' आदेश—अदुह् + स + आताम्, 'स' के अ का लोप, 'दादेर्धातोर्घः' से ह् का घ्, भष्भाव से द् का ध्—अधुघ् + स् आताम्, चर्त्व करने पर 'घ्' का क् । 'इण्कोः' से स् का ष्—अधुक्ष्+आताम्, क् + ष् = क्ष् । इसी प्रकार 'आथाम्' तथा उत्तमपुरुष एकवचन 'इट्' प्रत्यय में भी समझना चाहिए । ]

अजादि परे रहते—इसका क्या फल है ? अधुक्षत् । अधुक्षताम् । [ यहाँ परस्मैपद के रूपों में अजादि प्रत्यय नहीं अपितु ति = त् और तस् = ताम् हैं अतः अन्त्यलोप नहीं होता है । ] ककारयुक्त स के उपादान का क्या फल है ? इनमें लोप न होने लगे—उत्सौ, उत्साः । वत्सौ, वत्साः । [ यहाँ औ, जस् = अस् अजादि प्रत्यय परे हैं किन्तु क्स न होकर 'स' है अतः लोप नहीं होता है । ] ॥ ७२ ॥

### ३४७०. लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये ॥ ७३ ॥ (२३६५)

दुह, दिह, लिह, गुह—इत्येतेषामङ्गानामात्मनेपदे दन्त्यादौ परतः क्सस्य वा लुग्भवति । अदुग्ध, अधुक्षत । अदुग्धाः, अधुक्षथाः । अदुग्ध्वम्, अधुक्षध्वम् । अदुह्वहि, अधुक्षावहि—दिह—अदिग्ध, अधिक्षत । लिह—अलीढ, अलिक्षत । गुह—न्यगूढ, न्यघुक्षत ।

दुहादीनामिति किम् ? व्यत्यपुक्षत[1] ।

आत्मनेपदे इति किम् ? अधुक्षत् । दन्त्ये इति किम् ? अधुक्षामहि ।

**न्यासः**

**लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये** । 'दुह प्रपूरणे', 'दिह उपचये', 'लिह आस्वादने', 'गुहू संवरणे'—सर्वं एते स्वरितेतः । स्वरितेत्त्वात् 'स्वरितञितः कर्त्रभिप्राये क्रियाफले' इत्यात्मनेपदिनः । **अदुग्धेति** । पूर्ववद् घकारः, 'झषस्तथोर्धोऽधः' इति तकारस्य धकारः, 'झलां जश् झशि' इति घकारस्य गकारः । **अदुग्धामिति** । थास्, पूर्ववद् घत्वादि । **अधुग्ध्वमिति** । ध्वम् । **अदुह्वहीति** । वहिः । **अदिग्धेति** । पूर्ववद् घत्वादि । **अलीढेति** । हकारस्य 'हो ढः' इति ढकारः पूर्ववत्, तकारस्य धत्वं ष्टुत्वञ्च, 'ढो ढे लोपः', 'ढ्रलोपः पूर्वस्य' इत्यादिना दीर्घः । **न्यगूढेति** । एतदपि पूर्वेण तुल्यम् ।

**व्यत्यपुक्षतेति** । 'पुष पुष्टौ' व्यतिपूर्वः । 'कर्तरि कर्मव्यतिहारे' इत्यात्मनेपदम्, 'षढोः कः सि' इति षकारस्य ककारः ।

**पदमञ्जरी**

**लुग्वा दुहदिहलिहगुहामात्मनेपदे दन्त्ये ॥ एतेषामङ्गानां क्सस्येति** । एतेषां सम्बन्धी यो निमित्तत्वेन क्सः, तस्येत्यर्थः ।

**सर्वादेशार्थमिति** । लुक्सर्वापहारीति संज्ञाविधावुक्तम् । **बह्वर्थमिति** । पुरुषद्विवचनार्थमित्यर्थः । अथान्यार्थं कस्मान्न भवति ? तत्राह—**अन्यत्रेति** । **अलोऽन्त्यस्येति** । 'आदेः परस्य' इत्येतत्तु न भवति; पञ्चमीनिर्देशाभावात् । **झलो झलीति लोपेनेति** । 'धि सकारे सिचो लोपः' इति नाश्रीयते । च्ल्यादेशोपलक्षणं वा तत्र सिज्ग्रहणमिति भावः । **अकारस्येति** । अकारलोपस्येत्यर्थः । तथैव वा पाठः ।

**भावबोधिनी**

दुह, दिह, लिह, गुह—इन धात्वङ्गों के क्स का लोप विकल्प से दन्त्यादि आत्मनेपद प्रत्यय परे रहते होता है । उदा० अदुग्ध, अधुक्षत । [ दुह् + लुङ् = त, अट्, च्लि, 'शल इगुपधादनिटः क्सः' से च्लि को क्स—अदुह् + स + त, सम्पूर्ण क्स का लुक् होता है क्योंकि लोप ही अन्त्य का होता है । 'दादेर्धातोर्घः' से ह् का घ्, "एकाचो बशो भष" सूत्र से भष्भाव से द् का ध् अधुघ् + त् 'झषस्तथोर्धोऽधः' से त् का ध्, 'झलां जश् झशि' से जश्त्व घ् का द्—अदुग्ध । क्स का लुक् न होने पर अधुघ् + स + त में 'खरि च' से चर्त्व से घ् का क् 'इण्कोः' से स् का ष् अधुक् त, क्ष—अधुक्षत । इसी प्रकार अन्य रूपों में भी क्स का लोप तथा उसके अभाव में दो दो रूप होते हैं ]—अदुग्धाः अधुक्षथाः । [ थास् के रूप हैं । ] अदुग्ध्वम्, अधुक्षध्वम् । [ ध्वम् के रूप हैं । ] अदुह्वहि, अधुक्षावहि । [ लुक् के अभाव में 'अतो दीर्घो यञि' से दीर्घ होता है । ] दिह के उदा० अदिग्ध अधिक्षत । [ इसकी प्रक्रिया उपर्युक्त, अदुग्ध, अधुक्षत के समान समझनी चाहिए । ] लिह् त, च्लि का क्स और विकल्प से लुक्—अलिह् + त, 'होढः' से ह् का ढ, 'झषस्तथोर्धोऽधः" से त का ध, ष्टुत्व से ध् का ढ् अलिढ् + ढ, 'ढोढे लोपः' से प्रथम ढ् का लोप, 'ढ्लोपे' से दीर्घ—अलीढ । क्स के लुक् न होने पर ढत्व, कत्व, षत्व, क्ष—अलिक्षत । गुह् के उदा० न्यगूढ, न्यघुक्षत । [ नि गुह + लङ् = त, क्स के वैकल्पिक लोप के दो उदा० हैं । ]

दुह् आदि के क्स का—इसका क्या फल है ? व्यत्यपुक्षत । [ वि + अति + पुष् + क्स + लुङ् = त में क्स का लुक् नहीं होता है । ]

---

१. 'व्यत्यरुक्षत' इति मुद्रितः पाठः ।

**लोप इति वर्त्तमाने लुग्ग्रहणं सर्वदेशार्थम्, तच्च वह्यर्थम् । अन्यत्र ह्यन्त्यस्यैव लोपे कृते 'झलो झलि' ( ८।२।२६ ) इति सकारलोपेन सिद्धयति । स्थानिवद्भावोऽपि अकारलोपस्य नास्ति; 'पूर्वत्रासिद्धे न स्थानिवत्' ( पु० वृ० ११२ ) इति ।**

**दन्त्योष्ठ्योऽपि वकारो दन्त्य इति गृह्यते । यदि स न गृह्येत, ततस्तौग्रहणमेवात्र कृतं स्यात् ॥**

**न्यासः**

अघुक्षामहीति । महिङ् ।

अथ लुग्ग्रहणं किमर्थम्, यावता लोप इत्यनुवर्तत एव ? इत्याह—**लोप इति वर्त्तमान इत्यादि ।** यदि लोपग्रहणमनुवर्त्त्य लोपो विधीयते तद् 'अलोऽन्त्यस्य' इत्यन्त्यस्य स्यात् । लुकि तु सर्वस्यैव भवति, प्रत्ययादर्शनस्य लुक्संज्ञाविधानात् । तस्मात् सर्वस्य क्सस्य लोपो यथा स्यादित्येवमर्थं लुग्ग्रहणं कृतम् । **वह्यर्थमिति ।** उत्तमपुरुषद्विवचनार्थमित्यर्थः । वहिरर्थः प्रयोजनं यस्य तत् तथोक्तम् । **अथान्यार्थं कस्मान्न भवति ?** इत्याह—**अन्यत्र हित्यादि ।** यदात्मनेपदं दन्त्यादि तत् सर्वं झलाद्येव । तत्रान्त्यस्यैवाकारस्य लोपे कृते 'झलो झलि' इति सकारस्य लोपेनेष्टं सिध्यत्येव । स्यादेतत्—अन्यत्रापि लुका विना न सिध्यति, अकारलोपस्य सकारलोपे कर्तव्ये 'अचः परस्मिन् पूर्वविधौ' इति स्थानिवद्भावादिति ? अत आह—**स्थानिवद्भावोऽप्यकारलोपस्य नास्तीति ।** कस्मान्नास्ति ? इत्याह—**पूर्वत्रासिद्धे न स्थानिवदिति ।** तस्मान्नान्यार्थं लुग्ग्रहणम्, अपि तु वह्यर्थमेव । अत्र ह्यझलादित्वात् 'झलो झलि' इति सकारलोपो नास्तीति न सिध्यति ।

ननु च क्रियमाणेऽपि लुग्ग्रहणे वहौ लुका न भवितव्यमेव, अदन्त्यादित्वात्, न हि दन्त्योष्ठ्यो वकारो दन्त्यग्रहणेन गृह्यते ? इत्याह—**दन्त्योष्ठ्योऽपीत्यादि ।** अत्रैव हेतुमाह—**यदीत्यादि ।** यदि दन्त्योष्ठ्यो वकारो दन्त्यग्रहणेन न गृह्येत्, तदा तावित्येवं ब्रूयात्: न दन्त्य इति । तावप्युच्यमाने सर्वमिष्टं सिध्यत्येव । न हि तवर्गादन्यद् दन्त्यमात्मनेपदस्यास्ति । तस्माद् दन्त्योष्ठ्योऽपि वकारो दन्त्यग्रहणेन गृह्यते । तत्रेदं चोद्यते—"यदुक्तम्—अन्यत्र ह्यन्त्यस्यैव लोपे कृते 'झलो झलि' इति सकारलोपेनेष्टं सिद्धयत्येवेति, तदयुक्तम्; न हि 'झलो झलि' इत्यनेन सकारमात्रस्य लोपो विधीयते, किं तर्हि ? सिचः, तथा हि तत्रैवं वक्ष्यति—अयमपि सिच एव लोपः" इति । नैतदस्ति; सिज्ग्रहणस्य च्ल्यादेशस्योपलक्षणार्थत्वाच्च्लेर्य आदेशस्तत्सम्बन्धिन एव सकारस्य लोपो भवतीत्ययं तत्रार्थो वेदितव्यः ॥ ७३ ॥

**पदमञ्जरी**

ननु च क्रियमाणेऽपि लुग्ग्रहणे वहौ लुका न भवितव्यमेव, अदन्तत्वात्, दन्त्यौष्ठ्यो ह्यसौ ? अत आह—**दन्त्योष्ठ्योऽपीत्यादि ।** दन्तान्वयोऽत्र विवक्षितः, नेतरव्यावृत्तिरिति भावः । एवं न्यायसिद्धेऽप्यर्थे वचनसामर्थ्यमपि दर्शयति—**यदि चेति । तावितिं ।** तवर्गादावित्यर्थः । वहेरन्यानि हि दन्त्यादीनि सर्वाण्यात्मनेपदानि तवर्गादीनि ॥ ७३ ॥

**भावबोधिनी**

आत्मनेपद परे रहते—इसका क्या फल है ? अधुक्षत् । [ परस्मैपद 'ति' प्रत्यय में लुक् नहीं होता है । ] **दन्त्य** वर्ण परे रहते—इसका क्या फल है ? अघुक्षामहि । [ यहाँ 'वहि' प्रत्यय है । लुक् नहीं होता है । ]

पूर्व सूत्र से 'लोप' की अनुवृत्ति रहते हुये भी इसमें 'लुक्' का ग्रहण सम्पूर्ण 'स' के लोप के लिये है और यह 'वहि' में लुक् के लिये है । क्योंकि 'वहि' प्रत्यय से भिन्न में अन्त्य का ही लोप करने पर 'झलो झलि' से सकार का लोप करने से इष्ट सिद्ध हो जाता है । [ 'वहि' का वकार झल् में नहीं आता है । उसके परे लोप नहीं हो पाता । इसीलिये लुक् द्वारा सम्पूर्ण 'स' का लोप किया गया है । ] अकार लोप का स्थानिवद्भाव भी नहीं होता है—'पूर्वत्रासिद्ध के विषय में स्थानिवद्भाव नहीं होता है ।' [ 'संयोगान्तस्य लोपः' ८।२।२३ त्रिपादीस्थ है । 'अचः परस्मिन्' सपादसप्ताध्यायीस्थ है । अतः स्थानिवद्भाव शास्त्र की दृष्टि में लोपशास्त्र असिद्ध है । अतः स्थानिवद्भाव का प्रसङ्ग ही नहीं है । ]

दन्त्योष्ठ [ दाँत तथा ओष्ठ दोनों से उच्चार्यमाण ] भी वकार को दन्त्य रूप में मान लिया जाता है ।

यदि उस 'व' का दन्त्यरूप में ग्रहण नहीं होता तो तौ = तवर्गादौ ( तवर्ग है आदि में जिसके ऐसा ) ही ग्रहण यहाँ किया जाता । [ चूंकि तवर्ग से भिन्न कोई भी दन्त्य आत्मनेपद का प्रत्यय नहीं है । इससे यह माना जाता है कि दन्त्योष्ठ्य वकार को केवल दन्त्य मानकर लुक् करना चाहिए । ] ॥ ७३ ॥

**३४७१. शमामष्टानां दीर्घः श्यनि ॥ ७४ ॥ (२५१९)**

**शमादीनामष्टानां दीर्घो भवति श्यनि परतः । शम्—शाम्यति । तम्—ताम्यति । दम्—दाम्यति । [1]श्रम्—श्राम्यति । भ्रम्—भ्राम्यति । क्षम्—क्षाम्यति । क्लम्—क्लाम्यति । मदी—माद्यति ।**

**अष्टानामिति किम् ? अस्यति । श्यनीति किम् ? भ्रमति । बभ्राम । 'वा भ्राश' ( ३।१।७० ) इति श्यनो विकल्पः ॥**

**३४७२. ष्ठिवुक्लम्याचमां शिति ॥ ७५ ॥ (२३२०)**

**ष्ठिवु, क्लमि, आचम्—इत्येतेषां दीर्घो भवति शिति परतः । ष्ठीवति । क्लमु—क्लामति । आचामति ।**

**न्यासः**

**शमामष्टानां दीर्घः श्यनि ॥** बहुवचननिर्देशादष्टग्रहणाच्चाद्यर्थो गम्यत इत्याह—**शमादीनामित्यादि ।** 'शमु उपशमे', 'तमु काङ्क्षायाम्', 'दमु उपशमे', 'श्रमु तपसि खेदे च', 'क्षमु सहने', 'भ्रमु अनवस्थाने', 'क्लमु ग्लानौ', 'मदी हर्षे'—इत्येतेऽष्टौ शमादयः ।

**अस्यतीति ।** 'असु क्षेपणे' । अष्टाभ्यः परेणायं पठ्यते । **भ्रमतीति ।** 'वा भ्राश' इत्यादिना श्यन् यस्मिन् पक्षे नास्ति तत्रेदं प्रत्युदाहरणम् ।

श्यन्ग्रहणं स्पष्टार्थम् । शक्यते हि 'ओतः श्यनि' इति यत् प्रकृतं श्यन्ग्रहणं तल्लुग्ग्रहणेन व्यवहितमपि मण्डूकप्लुतिन्यायेनेहानुवर्त्तयितुम् ॥ ७४ ॥

**ष्ठिवुक्लम्याचमां शिति ॥** 'ष्ठिवु निरसने', 'क्लमु ग्लानौ', 'चमु छमु जमु झमु अदने' आङ्पूर्वः । **क्लामतीति ।** 'वा भ्राश' इत्यादिना श्यनोऽभावे शप् । **क्लमिग्रहणं शबर्थम् ।** न तु श्यनर्थम्, तत्र पूर्वेणैव सिद्धत्वात् ।

**पदमञ्जरी**

**शमामष्टानां दीर्घः श्यनि ॥**

शमुस्तमुः श्रमुदमू भ्रमुक्षमुमदक्लमः । शमादयोऽमी पठिता दिवादिष्वष्ट कृष्टिभिः ॥ ७४ ॥

**ष्ठिवुक्लम्याचमां शिति ॥ क्लामतीति ।** 'वा भ्राश' इत्यादिना शप् ।

**क्लमिग्रहणं शबर्थमिति ।** श्यति पूर्वेणैव सिद्धत्वात् । शमादिषु पाठश्चिन्त्यप्रयोजनः; श्यन्यप्यनेनैव सिद्धत्वात् ।

**भावबोधिनी**

श्यन् विकरण परे रहते शम् आदि आठ धातुओं का दीर्घ होता है । उदा० (१) शम्—शाम्यति । [ शम् + श्यन् = य + ति, दिवादिगणीय होने से श्यन् होता है । अकार का दीर्घ होने पर रूप बनता है । (२) तम्—ताम्यति । (३) दम्—दाम्यति । (४) भ्रम्—भ्राम्यति । (५) श्रम्—श्राम्यति । (६) क्षम्—क्षाम्यति । (७) क्लम्—क्लाम्यति । (८) मदी—माद्यति ।

आठ का—इसका क्या फल है ? अस्यति । [ 'असु' धातु आठ के अन्तर्गत नहीं है । ] श्यन् परे रहते—इसका क्या फल है ? भ्रमति, बभ्राम । 'भ्रम्' धातु से 'वा भ्राशम्लाश' से श्यन् विकल्प से होता है । [ श्यन् के अभाव में शप् में दीर्घ नहीं होता है ।

**विमर्श**—प्रकाशित काशिका संस्करणों में 'श्रम्—श्राम्यति' का उल्लेख न होना प्रामादिक ही है क्योंकि इसे मिलाकर ही आठ धातुओं में पूर्ण होती है । इसके अतिरिक्त प्रत्युदाहरण भी—'भ्रमति । बभ्राम ।' एक साथ होना ठीक है । दोनों में श्यन् नहीं हैं ॥ ७४ ॥

'ष्ठिवु, क्लमु, आ चमु—इनका शित् प्रत्यय परे रहते दीर्घ होता है । उदा० ष्ठीवति । क्लामति । आचामति [ सभी में दीर्घ होता है । लट् = तिप्, शप् के रूप है । ]

१. प्रकाशितसंस्करणेषु 'श्रम-श्राम्यति' इत्यस्यानुल्लेखः प्रामादिकः ।

**क्लमिग्रहणं शबर्थम् ।**

चमेराङ्पूर्वस्य ग्रहणम् । इह मा भूत्—**चमति, विचमति ॥**

**३४७३. क्रमः परस्मैपदेषु ॥ ७६ ॥ (२३२२)**

**क्रमः परस्मैपदपरे शिति परतो दीर्घो भवति । क्रामति, क्रामतः, क्रामन्ति ।**

**परस्मैपदेष्विति किम् ? आक्रमते आदित्यः ।**

इह उत्क्राम, **संक्राम—इति हेर्लुकि कृते 'न लुमताङ्गस्य' (१।१।६६) इति प्रत्ययलक्षणप्रतिषेधाद्दीर्घो न प्राप्नोति ?** नैष दोषः; लुमता शब्देन लुप्ते यदङ्गं तस्य कार्ये स प्रतिषेधः । न च हौ क्रमिरङ्गम्, **किं तर्हि ? शपि ॥**

**न्यासः**

**चमेराङ्पूर्वस्येत्यादिना ।** केवलस्यान्योपसर्गपूर्वस्या वा मा भूदित्येवमर्थं चमेराङ्पूर्वस्य ग्रहणमिति **दर्शयति** ॥ ७५ ॥

**क्रमः परस्मैपदेषु ॥ क्रामतीति ।** 'क्रमु पादविक्षेपे' । **आक्रमत इति ।** आङ्पूर्वः । 'आङ उद्गमने' इत्यात्मनेपदम् ।

**इहोत्क्राम संक्रामेत्यादिना** चोद्यम् । उत्पूर्वात् सम्पूर्वाच्च क्रमेर्लोट्, 'सेर्ह्यपिच्च' इति हिरादेशः, **तस्य** 'अतो हेः' इति हेर्लुकि **कृते** 'न लुमताङ्गस्य' इति प्रत्ययलक्षणनिषेधाद् उत्क्राम, संक्रामेत्यत्र दीर्घत्वं **न प्राप्नोति**; न ह्यसति प्रत्ययलक्षणे हौ लुप्ते क्रमः परस्मैपदपरता सम्भवति । **नैष दोष इत्यादि** परीहारः । **स्यादेतत्**—लुमता लुप्ते क्रमः प्रत्यये हावेव क्रमिरत्राङ्गमित्याह—**न च क्रमिरङ्गमिति ।** शपा व्यवहितत्वात् । **किं तर्हि ? शपीति ।** शप एव ततो व्यवहितस्य विद्यमानत्वात् ॥ ७६ ॥

**पदमञ्जरी**

तत्र सप्तग्रहणमेवास्तु, चमेराङ्पूर्वस्य ग्रहणं तन्त्रम्, न तूपेयिवानित्यादिवदविवक्षितम् ? इत्याह—**चमेराङिति ।** 'दीर्घत्वमाङि चमः' इति वार्त्तिकस्याप्ययमेवार्थः ॥ ७५ ॥

**क्रमः परस्मैपदेषु ॥ इहेत्यादि । चोद्यम् । हेर्लुकि कृत इति ।** 'अतो हे' इत्यनेन । **नैष दोष इत्यादि परिहारः ।** 'न लुमताङ्गस्य' इत्यत्र हि प्रत्यासत्तेरयमर्थो व्यवस्थापितः—लुमता लुप्ते प्रत्यये यदङ्गं तन्निबन्धनं **कार्यं न भवतीति ।** ततः किम् ? इत्यत्राह—**न चेति** ॥ ७६ ॥

**भावबोधिनी**

क्लम् का ग्रहण शप् के लिये है । [ क्योंकि श्यन् परे रहते तो पूर्ववर्ती सूत्र द्वारा ही दीर्घ हो जाता है । ] **चम्** धातु आङ्पूर्वक का ही ग्रहण होता है, अकेले का नहीं, जिससे इनमें न हो—चमति । विचमति । [ अकेली चम् का तथा 'आङ्' से भिन्न उपसर्ग के साथ भी 'चम्' का दीर्घ न हो इसीलिये सूत्र में 'आचम्' का उल्लेख है । ] ॥७५॥

परस्मैपद परे शित् प्रत्यय परे रहते 'क्रम्' धातु का दीर्घ होता है। उदा० क्रामति, क्रामतः, क्रामन्ति । [ क्रम् + शप् + लट् = तिप्, दीर्घ होता है । 'वा भ्राशभ्लाशभ्रमुक्रमुक्लमुत्रासित्रुटिलषः' ३।१।७० सूत्र से विकल्प से श्यन् होता है । किन्तु श्यन् भी शित् है अतः उसके परे भी दीर्घ होता है—क्राम्यति, क्राम्यतः, क्राम्यन्ति । काशिकाकार को श्यन् के उदाहरण भी देने चाहिये थे । ]

परस्मैपद परे रहते—इसका क्या फल है ? आक्रमते सूर्यः । [ यहाँ 'आङ उद्गमने' सूत्र से आत्मनेपद होने से दीर्घ नहीं होता है । ]

यहाँ—उत्क्राम, संक्राम ( लोट् मध्यमपुरुष एकवचन में सि का हि और ] 'अतो हेः' सूत्र से 'हि' का लुक् कर देने पर 'न लुमताङ्गस्य' सूत्र से प्रत्यय-लक्षण का प्रतिषेध हो जाने से दीर्घ नहीं प्राप्त होता है [ क्योंकि परस्मैपद परे नहीं होता है ] ? यह दोष नहीं है क्योंकि लुमान् ( लुक्, लुप्, श्लु—इन लु वाले ) शब्द से लुप्त होने पर जो अङ्ग है उसके कार्य में उस ( प्रत्यय-लक्षण ) का प्रतिषेध होता है। परन्तु 'हि' प्रत्यय को परे मानकर 'क्रम्' की अङ्ग संज्ञा नहीं होती है अपि तु शप् परे मानकर ही होती है । [ और वह शप् वर्तमान ही है । अतः प्रत्ययलक्षण में बाधा नहीं है । ] ॥ ७६ ॥

## ३४७४. इषुगमियमां छः ॥ ७७ ॥ (२४००)

**इषु, गमि, यम—इत्येतेषां शिति परतश्छकारादेशो भवति। इच्छति। गच्छति। यच्छति। इषेरुदितो ग्रहणम्, इह मा भूत्—इष्यति, इष्णातीति।**

**ये इषिमुदितं नाधीयते, इह च सूत्रे 'अचि'—इत्यनुवर्त्तयन्ति। तच्च प्रधानमज्ग्रहणं शितीत्यनेन**

**न्यासः**

**इषुगमियमां छः ॥ इच्छतीति।** 'तुदादिभ्यः शः'। **गच्छति, यच्छतीति।** 'कर्त्तरि शप्'।

अथ किमर्थम् 'इषु इच्छायाम्' इत्येतस्योदितो ग्रहणम्? इत्याह—**इषेरित्यादि।** 'इष गतौ' इत्यस्य दैवादिकस्येष्यतीत्यत्र मा भूत्। 'इष आभीक्ष्ये' इत्यस्य क्रैयादिकस्य इष्णातीत्यत्र च मा भूदित्येवमर्थमुकारानुबन्ध इषिरिह गृह्यते।

ये तर्हीषिमुदितमिह न पठन्ति, तेषामिष्यति, इष्णातीत्यत्रापि, प्राप्नोति? इत्यत आह—**ये त्विषिमुदितमित्यादि।** य इषिमुकारानुबन्धविशिष्टमिह न पठन्ति; त इष्यति, इष्णातीत्यत्र च्छत्वं मा भूदित्येवमर्थम् 'क्सस्याचि' इत्यतोऽज्ग्रहणमनुवर्त्तयन्ति। अनुवर्त्तमानेऽप्यस्मिन् यदि तेन शितीत्येतद् विशिष्यते—शितिच्छो भवति, किंविशिष्टे? अजादाविति, तदेष्णातेर्लोट्सिपो हीत्यादेशे कृते 'हलः श्नः शानज्झौ' इति श्नाप्रत्ययस्य शानजादेशे कृते सति इषाणेत्यत्र 'यस्मिन् विधिस्तदादावल्ग्रहणे' इति तदादिविधिना छत्वं स्यादेवेति मन्यमान आह—**तच्च प्रधानमज्ग्रहणं शितीत्यनेन विशिष्यत इति वर्णयन्तीति।** अचि च्छो भवति स चेच्छिद् भवति। प्राधान्यं पुनरज्ग्रहणस्य विशिष्यमाणत्वादेव। **तथा च सतीत्यादि।** एवमचीत्यस्मिन् प्रधाने शितीत्यनेन विशिष्यमाणे तदादिविधिर्न भवति। किं कारणं? इत्याह—**यस्मिन् विधिरित्यादि।** न केवलं 'येन विधिस्तदन्तस्य' इत्येतदेव तदन्तविधानं विशेषणेनेष्यते, अपि तु 'यस्मिन्विधिस्तदादावल्ग्रहणे' इत्येतदेव तदादिविधानं विशेषणेनैवेष्यते। तेन च तदादिविधेरभावादिषाणेत्यत्र छत्वं न भवति। असत्यपि तदादिविधौ शानजादेशस्य योऽयमादिराकारस्तत्र शिति परतश्छत्वं कस्मान्न भवति? इत्याह—

**पदमञ्जरी**

**इषुगमियमां छः ॥ इच्छतीति।** तुदादित्वाच्छः। **इष्यतीति।** 'इष गतौ'। **इष्णातीति।** 'इष **ये पुनरुदितमिषि नाधीयत इति।** धातुपाठे। **च सूत्रे अचीत्यनुवर्त्तयन्तीति।** 'क्सस्याचि' इत्यतः। नन्वचीत्यनुवृत्तावपि 'हलः श्नः शानज्झौ' इति शानजादेशे इषाणेत्यत्र छत्वं स्यादेव, अजादित्वात्? इत्यत आह—**तत्रेति।** स्यादेतदेवं यद्यचीत्येन शिद्विशेष्येत—शितिच्छो भवति, किंविशिष्टे? अचि—अजादाविति; इह तु शिता अज्विशेष्यते—अचि छो भवति, किंविशिष्टे? शितीति, तेन तदादिविधिर्न भवति। **किं** कारणम्? इत्यत आह—**यस्मिन्विधिरिति।** न केवलं तदन्तविधौ विशेषणत्वापेक्षा, अपि तर्हि ददादिविधा-

**भावबोधिनी**

इषु, गमि, यम्—इनको शित् परे रहते 'छ' आदेश होता है। [ यह 'अलोऽन्त्यस्य' के द्वारा अन्त्य वर्ण के स्थान पर होता है। ]

उदित् 'इष्' धातु का ही ग्रहण है जिससे यहाँ न हो—इष्यति, इष्णाति। [ 'इषु इच्छायाम्' का ही ग्रहण होता है 'इष गतौ' और 'इष आभीक्ष्ण्ये' का ग्रहण नहीं होता है। ]

जो लोग 'इष' धातु को उदित् नहीं पढ़ते हैं और इस सूत्र में 'अचि' ( अजादि परे ) इसकी अनुवृत्ति करते हैं। और उस प्रधान अज्ग्रहण को—'शित्' इसके ही द्वारा विशेषित होता है—'अच्' शित् परे छ होता है'—ऐसी व्याख्या करते हैं। तब तो तदादिविधि नहीं होती है, क्योंकि 'यस्मिन् विधिस्तदादावल्ग्रहणे' ( अल्ग्रहण में जिसके परे रहते जो विधि होती है वह तदादि को मानकर ही होती है। ) यह विशेषण के साथ ही इष्ट है [ विशेष्य =प्रधान के साथ नहीं। भाव यह है कि तदन्तविधि में ही विशेषण की अपेक्षा नहीं पड़ती है अपि तु तदादिविधि भी विशेषण से ही होती है। ] इस कारण 'इषाण' इसमें 'छ्' आदेश नहीं होता है। क्योंकि यह अच् ही शित् नहीं है। [ 'इष

विशेष्यते इति वर्णयन्ति। तथा च सति तदादिविधिर्न भवति। 'यस्मिन्विधिस्तदादावल्ग्रहणे' ( व्या० प० १२७ )—इत्येतदपि विशेषणेनैवेष्यते, तेन इषाणेत्यत्र छत्वं न भवति। न ह्ययमजेव शिदिति॥

## २४७५. पाघ्राध्मास्थाम्नादाण्दृश्यर्त्तिसर्त्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः॥ ७८॥ ( २३६० )

पा, घ्रा, ध्मा, स्था, म्ना, दाण्, दृशि, अर्ति, सर्त्ति, शद, सद—इत्येतेषां पिब, जिघ्र, धम, तिष्ठ, मन, यच्छ, पश्य, ऋच्छ, धौ, शीय, सीद-इत्येते आदेशा भवन्ति शिति परतः। पा-पिबति। घ्रा-जिघ्रति। ध्मा-धमति। स्था-तिष्ठति। म्ना-मनति। दाण्-यच्छति। दृशि-पश्यति। अर्त्ति-ऋच्छति। सर्ति-धावति। शद—शीयते। सद्-सीदति।

**न्यासः**

**न ह्ययमित्यादि।** शकारः समुदायानुबन्धः, नाकारस्याचः। तस्मान्नाजेव शिद्, अपि तु समुदाय एवेति न भवति च्छत्वम्॥ ७७॥

**पाघ्राध्मास्थाम्नादाण्दृश्यर्त्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः॥** 'पा पाने', 'घ्रा गन्धोपादाने', ध्मा शब्दाग्निसंयोगयोः', 'ष्ठा गतिनिवृत्तौ', म्ना अभ्यासे', 'दाण् दाने', दृशिर् प्रेक्षणे; 'ऋ सृ गतौ' च; 'शद्लृ शातने', 'षद्लृ विशरणे' तौदादिकः, षद्लृ विशरणगत्यवसादनेषु' भौवादिकः-एषां धातूनां स्थाने यथासंख्यं पिबादय आदेशा भवन्ति। ननु च द्वौ सदी, तत्र वैषम्याद् यथासंख्यं न प्राप्नोति? नैष दोषः; एक एव हि सदिर्विकरणद्वयार्थं द्विरुपदिश्यते। **शीयत इति।** 'शदेः शितः' इत्यात्मनेपदम्।

**पदमञ्जरी**

वपीत्यपिशब्दस्यार्थः। **इषाणेत्यत्रापीति।** न केवलमिष्यतीत्यत्रैव—इत्यपिशब्दस्यार्थः। **न ह्ययमजेवेति।** अज्मात्रस्यात्र शित्वं नास्तीत्यर्थः। इतिकरणो हेतौ॥ ७७॥

**पाघ्राध्मास्थाम्नादाण्दृश्यर्तिसर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छधौशीयसीदाः॥** 'पा पाने'। 'पा रक्षणे' इत्यस्य तु ग्रहणं न भवति; लुग्विकरणत्वात् शितश्चासम्भवात्। 'घ्रा गन्धोपादाने', 'ध्मा शब्दाग्निसंयोगयोः', 'ष्ठा गतिनिवृत्तौ', 'म्ना अभ्यासे', 'दाण् दाने', 'दृशिर् प्रेक्षणे', 'ऋ गतिप्रापणयोः', 'सृ गतौ', भौवादिकौ। 'ऋ सृ गतौ' इति जौहोत्यादिकयोस्तु ग्रहणं न भवति; शितोऽसम्भवात्। नन्वेशः सम्भव इति चेत्? उक्तमत्र—'वर्णे यत्स्यात्तच्च विद्यात्तदादौ' इति। शितीति हि कर्मधारयः-शश्चासाविच्चेति। 'शद्लृ शातने' भूवादिः, 'शद्लृ विशरणे' तुदादिः, 'षद्लृ विशरणगत्यवसादनेषु'।

**भावबोधिनी**

गतौ' इस क्र्यादि-गणीय धातु से लोट् मध्यम पुरुष एकवचन में इष् + श्ना + हि में 'हलः श्नः शानज्झौ' से शानच् = आन आदेश कर देने पर इष् + आन + हि, यहाँ अजादि शित् प्रत्यय 'आन' परे होने पर भी 'छ' नहीं होता है क्योंकि अच् रूप शित् परे ही 'छ' होगा, तदादिविधि विशेष्य = प्रधान अच् के साथ सम्भव नहीं होती है। अतः 'ष्' का छ् नहीं होता है। 'हि' का लुक् करने पर 'इषाण' बनता है। ]॥ ७७॥

(१) पा, (२) घ्रा, (३) ध्मा, (४) स्था, (५) म्ना, (६) दाण्, (७) दृशि, (८) अर्ति = ऋ, (९) सर्ति = सृ, (१०) शद, (११) सद = षद्लृ ( भौवादिक और तौदादिक दोनों )—इन ११ धातुओं के स्थान पर क्रमशः—(१) पिब, (२) जिघ्र, (३) धम, (४) तिष्ठ, (५) मन, (६) यच्छ, (७) पश्य, (८) ऋच्छ, (९) धौ, (१०) शीय, (११) सीद—ये ११ आदेश शित् प्रत्यय परे रहते होते हैं। क्रमशः उदा० पा—पिबति। [ पा + शप् + लट् = तिप्, पिब आदेश ]। घ्रा—जिघ्रति। [ घ्रा + शप् + लट् = तिप्, जिघ्र आदेश ] ध्मा—धमति [ ध्मा + शप् + लट् = तिप्, धम आदेश ] स्था—तिष्ठति। [ स्था + शप् + तिप्, तिष्ठ आदेश ] म्ना—मनति। [ म्ना + शप् + तिप्, मन आदेश ] दाण्—यच्छति। [ दाण् + शप् + लट् = तिप्, यच्छ आदेश करने पर रूप बनता है—यच्छति ]

पिबतेर्लघूपधगुणः प्राप्नोति, सः 'अङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्य' ( व्या० प० ३८ ) इति न भवति । अथ वा—अकारान्तोऽयमादेश आद्युदात्तो निपात्यते ।

सर्तेर्वेगितायां गतौ धावादेशमिच्छन्ति । अन्यत्र—सरति, अनुसरतीत्येव भवति ॥

**३४७६. ज्ञाजनोर्जा ॥ ७९ ॥ ( २५११ )**

ज्ञा, जन—इत्येतयोर्जादेशो भवति शिति परतः । जानाति । जायते । जनेर्दैवादिकस्य ग्रहणम् ॥

**न्यासः**

अथ वेत्यादि । 'पिबतेर्लघूपधगुणः प्राप्नोति' इत्यत्र परिहारान्तरम् । यद्याद्युदात्तो न निपात्येत, ततो धातुस्वरेणान्तोदात्तत्वे सति 'एकादेश उदात्तेनोदात्तः' इति शपा सहैकादेशे सति 'अतो गुणे' पररूपत्वे उदात्ते कृते पिबतीति मध्योदात्तं पदं स्यात्, आद्युदात्तञ्चेष्यते, तस्मादाद्युदात्तो निपात्यते । स निपातनस्वरो धातुस्वरस्य बाधको यथा स्यात् । सर्त्तेरित्यादि । वेगः=जवः; स यस्यास्ति स वेगी, तस्य भावो वेगिता, तस्यां गतौ सर्तेर्धावादेशमिच्छन्ति । स च 'लुग्वा दुहदिह' इत्यादेः सूत्राद्वाग्रहणानुवृत्तेर्व्यवस्थितविभाषात्वाल्लभ्यत इति वेदितव्यम् । अर्तिसर्तीति—श्तिपा निर्देशो धातुनिर्देशार्थ एव, न यङ्लुग्निवृत्त्यर्थः । न हि यङ्लुकि शित्परः सम्भवति; अदादित्वात् ततो विहितस्य शपो लुग्विधानात् । 'बहुलं छन्दसि' इति शपो लुग्न भविष्यतीति चेत् ? न; छन्दसि यथादृष्टानुविधानात् । अर्तिप्रभृतेश्छन्दसि यङ्लुकि शबन्तस्य प्रयोगादर्शनात् ॥ ७८ ॥

ज्ञाजनोर्जा ॥ जनेर्दैवादिकस्य ग्रहणमिति । द्वौ जना—दैवादिकः 'जनी प्रादुर्भावे', जौहोत्यादिकः 'जन जनने' इति । तत्रेह दैवादिकस्य ग्रहणम्, नेतरस्य । न हि ततः परः शित् सम्भवति, श्लुविधानात् । दीर्घोच्चारणस्य प्रयोजनमुत्तरत्र वक्ष्यति ॥ ७९ ॥

**पदमञ्जरी**

आद्युदात्तो निपात्यत इति । यदि न निपात्येत, ततः 'धातोः' इत्यन्तोदात्तत्वे सति शपा सहैकादेशे कृते 'एकादेश उदात्तेनोदात्तः' इति पिबतीति पदं मध्योदात्तमापद्येत, आद्युदात्तं चेष्यते ।

वेगितायामिति । सञ्जातवेगायामित्यर्थः । यद्वा—वेगिनो भावो वेगता, तस्यां च सत्यां गतौ वर्त्तमानस्येत्यर्थः ॥ ७८ ॥

ज्ञाजनोर्जा ॥ दैवादिकस्य ग्रहणमिति । न जौहोत्यादिकस्य, शितोऽसम्भवात् । दीर्घोच्चरणस्य प्रयोजनमुत्तरसूत्रे वक्ष्यते ॥ ७९ ॥

**भावबोधिनी**

दृश्—पश्यति । [ दृश् + शप् + तिप्, पश्य आदेश ] अर्त्ति = ऋ—ऋच्छति । [ ऋ + शप् + तिप्, ऋ का ऋच्छ सर्ति = सृ—धावति । [ सृ + शप् + ति, धौ आदेश, औ का आव् आदेश ] शद्—शीयते । [ शद् + शप् + लट् = त, शीय आदेश ] षद् = सद्—सीदति । [ षद्लृ, ष् का स्, सद् + शप् + ति, सीद आदेश ] ।

'पिब का 'पुगन्तलघूपधस्य च' सूत्र से गुण प्राप्त होता है किन्तु 'अङ्ग-सम्बन्धी कार्य हो जाने पर परिनिष्ठित की पुनः विधि नहीं होती है' इस वचन से गुण नहीं होता है । [ यदि गुण इष्ट होता तो 'पिब' न कहकर 'पेब' ऐसा कह दिया जाता । किन्तु न कहने से स्पष्ट है कि गुण नहीं होता है । ]

अथवा यह अकारान्त 'पिब' आदेश आद्युदात्त निपातित किया जाता है । [ 'पिब' धातु होने से अन्तोदात्त होनी चाहिए किन्तु इसे आद्युदात्त निपातित किया जाता है । अन्यथा 'पिब' इस अन्तोदात्त का शप् = अ के साथ पररूप एकादेश में उदात्त ही रहता । इससे 'पिबति' यह मध्योदात्त पद बनने लगता । इसीलिये आद्युदात्त निपातन किया गया है । इससे स्पष्ट है कि 'पिब' अकारान्त है । अतः उपधा में इकार न होने से गुण नहीं होता है । ]

सृ धातु का वेगयुक्त गति अर्थ होने पर 'धाव' आदेश इष्ट है । अन्यत्र ( सामान्य गमन में ) 'सरति' 'अनुसरति' यह [ 'सृ' का ] ही रूप रहता है ॥ ७८ ॥

शित् प्रत्यय परे रहते 'ज्ञा' और 'जन' का 'जा' यह आदेश होता है । उदा० जानाति । जायते । [ ज्ञा + श्ना + लट् = तिप्, 'जा' आदेश—जानाति ] जायते । यह दिवादिगणीय जनी प्रादुर्भावार्थक का ग्रहण है । [ जन् + श्यन् + त, 'जा' आदेश, त की टि का एत्व ] ॥ ७९ ॥

**३४७७. प्वादीनां ह्रस्वः ॥ ८० ॥ ( २५५८ )**

**'पू'—इत्येवमादीनां ह्रस्वो भवति शिति परतः।**

**प्वादयः क्र्यादिषु पठ्यन्ते। 'पूञ् पवने' ( धा० पा० १४८३ )—इत्यतः प्रभृति 'ल्ली गतौ वृत्' ( धा० पा० १५०४ ) इति यावत्केचिदिच्छन्ति, वृत्करणमेतल्ल्वादीनां प्वादीनां च परिसमाप्त्यर्थमिति। अपरे तु—ल्वादीनामेव परिसमाप्त्यर्थं वृत्करणमेतदिच्छन्ति, आगणान्ताः प्वादय इति।**

**पूञ्—पुनाति। लूञ्—लुनाति। स्तॄञ्-स्तृणाति।**

**येषामागणान्ताः प्वादयः, तेषां जानातीत्यत्र ह्रस्वः प्राप्नोति, 'ज्ञाजनोर्जा' ( ७।३।७९ ) इति**

**न्यासः**

**प्वादीनां ह्रस्वः ॥ ल्ली गतौ वृदिति यावत् केचिदिच्छन्तीति।** तेषां ततः परेण पठितयोः 'व्री वरणे', 'भ्री भये'—इत्येतयोर्ह्रस्वत्वेन न भवितव्यम्—व्रीणाति, भ्रीणातीति। ननु ल्वादीनां परिसमाप्त्यर्थं तद्वत्करणम्, अन्यथा आ गणान्तात् तेभ्यो निष्ठानत्वं स्यात्, ल्वादिपरिसमाप्त्यर्थं च तस्मिन्नागणान्ताः प्वादयो युक्ताः ? इत्यत आह—**वृत्करणमित्यादि। न ह्युभयगणपरिसमाप्त्यर्थता केनचिद् विरुध्यत इत्यभिप्रायः।**

**अपर इत्यादि।** ल्वादेर्गणस्यानन्तरत्वात् तत्परिसमाप्त्यर्थतैव वृत्करणस्य युक्तेति भावः। तेषामेव-मिच्छतां व्री वरणे, भ्री भये—इत्येतयोरपि भवितव्यं ह्रस्वत्वेन व्रिणाति, भ्रिणातीति; प्वादिषूभयोरन्त-र्भावात्। **जानातीत्यत्र ह्रस्वः प्राप्नोतीति।** तस्यापि प्वाद्यन्तर्भावादित्याह—**ज्ञाजनोर्जेत्यादि।** यदि 'जा' इत्यादेशे कृते ह्रस्वः स्यात् तदा दीर्घोच्चारणमनर्थकं स्यात्, 'ज' इत्येवं ब्रूयात्। तस्माद् दीर्घोच्चारणसामर्थ्याज् जानातीत्यत्र ह्रस्वो न भविष्यति। ननु च दीर्घोच्चारणं जन्यर्थं स्यात्, न हि जनेर्ज इत्यादेशे कृते जायत इति रूपं सिध्यति ? इत्यत आह—**ज इत्यपि ह्यादेशे कृत इत्यादि।** येषान्तूभयगणपरिसमाप्त्यर्थं वृत्करणं तेषां

**पदमञ्जरी**

**प्वादीनां ह्रस्वः ॥ प्वादयः क्र्यादौ पठ्यन्त इति।** ये तु भूवादौ पठ्यन्ते-'पूञ् पवने' इत्यादयः, तेषां ग्रहणं न भवति, कतिपये हि तत्र ह्रस्वभाविनः, तेषामपि शपि गुणेन भवितव्यम्। **किञ्च—क्रैयादिकस्य** जानातेर्ह्रस्वनिवृत्त्यर्थं पूर्वसूत्रे दीर्घोच्चारणम् तदपि क्रैयादिकानां ग्रहणे प्रमाणम्।

**वृत्करणमित्यादि।** न ह्युभयार्थत्वे वृत्करणस्य कश्चिद्धार इति भावः। **अपरे त्विति। ल्वादीनाम-**नन्तरत्वादिति भावः। तथा 'दॄ पूरणे', दॄ भये'—इत्येतयोरपि वृत्करणात् परस्तात्पठितयोरपि ह्रस्वो भवति—यः पृणाति स ह देवेषु गच्छति, पृणीयादिन्नाधमानाय, पृणन्तं च पपुरिं श्रस्यव, आदृणातीति। पूर्वस्मिन्पक्षे ह्रस्वान्तावेतौ पठन्ति।

चोदयति—**येषामिति।** आगता गणान्तमागणान्ता, परिहरति—**ज्ञाजनोर्जा इति।** यदि जानातीत्यत्र ह्रस्वत्वं स्यात्, ह्रस्वान्तमेवादेशं विदध्यात्। ननु चान्यार्थं दीर्घान्तादेशविधानं स्यात्, **न ह्यन्यथा—जायते इति**

**भावबोधिनी**

शित् प्रत्यय परे रहते 'पू' आदि का ह्रस्व हो जाता है। 'पू' आदि धातुयें क्र्यादिगण में पठित हैं। 'पूञ् पवने' से लेकर 'ल्ली गतौ' तक को कुछ लोग चाहते हैं 'वृत्' का प्रयोग इन 'लू' आदि की तथा 'पू' आदि की परिसमाप्ति के लिये है अर्थात् 'वृत् का तात्पर्य समाप्ति से है। दूसरे यह चाहते हैं—'लू' आदि की ही समाप्ति के लिये 'वृत्' का प्रयोग है 'पू' आदि तो गण की समाप्ति तक हैं।

पूञ्-पुनाति। लूञ्-लुनाति। स्तॄञ्-स्तृणाति। [ पू + श्ना + ति, ह्रस्व होने से पुनाति। इसी प्रकार सभी में ह्रस्व होता है। ]

जिनके मत में गण की समाप्ति तक 'पू' आदि हैं, उनके मत में 'जानाति' इसमें भी ह्रस्व प्राप्त होता है परन्तु 'ज्ञाजनोर्जा' सूत्र से दीर्घ 'जा' ऐसा आदेश-विधान करने के कारण ह्रस्व नहीं होता है। और 'जन्' धातु

दीर्घकरणसामर्थ्यान्न भवति । जनेरपि हि ज आदेशे सति 'अतो दीर्घो यञि' ( ७।३।१०१ ) इति दीर्घत्वेन—जायते इति सिद्ध्यति ॥

**३४७८. मीनातेर्निगमे ॥ ८१ ॥ ( २५८५ )**

मीनातेरङ्गस्य शिति प्रत्यये परतो ह्रस्वो भवति निगमविषये । प्रमिणन्ति व्रतानि ।
निगम इति किम् ? प्रमीणाति ॥

**३४७९. मिदेर्गुणः ॥ ८२ ॥ ( २३४६ )**

मिदेरङ्गस्येको गुणो भवति शिति प्रत्यये परतः । मेद्यति, मेद्यतः, मेद्यन्ति । शितीत्येव—मिद्यते ॥

**न्यासः**

किमर्थं जा इति दीर्घोच्चारणम् ? जानातीत्यत्र दीर्घो यथा स्यात् ? नैतदस्ति; 'अतो दीर्घो यञि' इति दीर्घो भविष्यति ? ननु च 'अङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्य' इति न प्राप्नोति ? नैतदस्ति; 'निष्ठितस्य' इत्युच्यते, न च ज इत्यादेशे कृते निष्ठितमङ्गं भवति; अप्रयोगार्हत्वात् । प्रतिपत्तिलाघवार्थं दीर्घोच्चारणम् ॥ ८० ॥

**मीनातेर्निगमे ॥ प्रमिणन्तीति** । 'हिनुमीना' इति णत्वम्, 'श्नाभ्यस्तयोरातः' इत्याकारलोपः । मीनातेरिह विकरणनिर्देशः 'मीञ् हिंसायाम्'—इत्यस्य क्रैयादिकस्य ग्रहणं यथा स्यात्, 'मीङ् हिंसायाम्'—इत्यस्य दैवादिकस्य ग्रहणं मा भूदित्येवर्थम्; 'मीञः' इति निर्देशो न कृतो वैचित्र्यार्थः ॥ ८१ ॥

**मिदेर्गुणः ॥** 'ञिमिदा स्नेहने' इति भौवादिको दैवादिकश्च, तत्र दिवादेरिह ग्रहणम्; इतरस्य ह्यङित्त्वाच्छपः 'पुगन्तलघूपधस्य च' इत्येवं गुणः सिद्धः । **मिद्यत इति** । 'भावकर्मणोः' इत्यात्मनेपदम्, 'सार्वधातुके यक्' ॥ ८२ ॥

**पदमञ्जरी**

सिद्ध्यति ? अत आह—**ज इत्यपीति** । ह्रस्वान्तादेशविधानेऽपि 'अतो दीर्घो यञि' इति दीर्घत्वे—जायते इति सिद्धम्, तत्र हि 'तुरुस्तुशम्यमः सार्वधातुके' इत्यतः सार्वधातुकग्रहणमनुवर्त्तते, न पुनः 'तङि' इति । अत एव 'आने मुक्' पूर्वान्तः कृतो न परादिः; दीर्घप्रसङ्गात् । ये तर्हि वृत्करणमुभयव्यावृत्त्यर्थं वर्णयन्ति, तेषां दीर्घोच्चारणं किमर्थम् ? जानातीत्यत्र दीर्घो यथा स्यात् । 'अतो दीर्घो यञि' इत्येव दीर्घो भविष्यति ? न सिध्यति; 'अङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्य' न जादेशमात्रेण निष्ठितमङ्गं भवति । तत्रेदं दीर्घोच्चारणमेव लिङ्गम्—आगणान्ताः प्वादय इति ॥ ८० ॥ ८१ ॥

**मिदेर्गुणः ॥ मेद्यतीति** । श्यन् । **मिद्यत इति** । भावे यक् ॥ ८२ ॥

**भावबोधिनी**

का भी 'ज' यह ह्रस्व आदेश करने पर 'अतो दीर्घो यञि' सूत्र से दीर्घ कर देने से 'जायते' यह सिद्ध हो जाता है । [ अतः 'जा' आदेश का फल ह्रस्वाभाव ही मानना चाहिए । ] ॥ ८० ॥

निगम = वेदविषय में शित् प्रत्यय परे रहते मीनाति अङ्ग का ह्रस्व आदेश हो जाता है । उदा० प्रमिणन्ति व्रतानि । [ प्र पूर्वक मी + श्ना + झि = अन्ति, ई का ह्रस्व आदेश, णत्व आदि होता है । ]

वेदविषय में--इसका क्या फल है ? प्रमीणाति । [ लौकिक प्रयोग में ह्रस्व नहीं होता है । ] ॥ ८१ ॥

'मिद्' अङ्ग के इक् का गुण शित् प्रत्यय परे रहते होता है । उदा० मेद्यति, मेद्यतः, मेद्यन्ति । [ मिद् + श्यन् + तिप् गुण होता है—मिद्यते । [ भाव या कर्म में यक् होने पर गुण नहीं होता है । यह दिवादिगणीय 'मिद्' का ही ग्रहण है क्योंकि वहाँ ङित् प्रत्यय परे मिलता है । भौवादिक में तो शप् परे होने से 'पुगन्तलघूपधस्य च' इसी से गुण सिद्ध है । ] ॥ ८२ ॥

## ३४६०. जुसि च ॥ ८३ ॥ ( २४८१ )

**जुसि च प्रत्यये परत इगन्तस्याङ्गस्य गुणो भवति । अजुहवुः । अबिभयुः । अबिभरुः ।**

**अथ चिनुयुः, सुनुयुरित्यत्र कस्मान्न भवति ? अत्र द्वे ङित्त्वे—सार्वधातुकाश्रयम्, यासुडाश्रयं च । तत्र नाप्राप्ते सार्वधातुकाश्रयङित्त्वनिमित्ते प्रतिषेधे जुसि गुण आरभ्यमाणस्तमेव बाधते । यासुडाश्रयङित्त्वनिमित्तं तु न बाधते, तत्र हि प्राप्ते चाप्राप्ते चारभ्यत इति ॥**

**न्यासः**

**जुसि च ॥** इकात्र सन्निहितेन प्रकृतमङ्गं विशिष्यते, विशेषणेन च तदन्तविधिर्भवतीत्यत आह—**इगन्तस्येत्यादि । अजुहवुरिति ।** लङ्, 'सिजभ्यस्तविदिभ्यश्च' इति झेर्जुस्, शपः श्लुः, 'श्लौ' इति द्विर्वचनम् । **अबिभयुरिति ।** 'ञिभी भये' । **अबिभरुरिति ।** 'डुभृञ् धारणपोषणयोः', भृञामित्' इत्यभ्यासस्येत्वम् ।

**चिनुयुः, सुनुयुरिति ।** लिङ्, यासुट्, झेर्जुस्, 'स्वादिभ्यः श्नुः', 'उस्यपदान्तात्' इति पररूपत्वम् । **तत्र नाप्राप्ते इत्यादि ।** सार्वधातुकमाश्रयो यस्य तत् सार्वधातुकाश्रयम् । ङित्त्वं निमित्तं यस्य प्रतिषेधस्य स तथोक्तः । स सर्वत्रैव जुसि प्राप्नोतीति तस्मिन्नाप्राप्तेऽयं गुण आरभ्यमाणस्तस्यैव बाधको भविष्यति; न तु तस्य यासुडाश्रयं ङित्त्वं निमित्तम्, तस्यापि । अत्र हि प्राप्ते चाप्राप्तेऽयमारभ्यते । चिनुयुरित्यादौ प्राप्ते, अजुहवुरित्यादावप्राप्ते । चकारः समुच्चये । नान्यत् समुच्चेतव्यमस्तीत्यस्यैव लक्षणस्य पुनरावृत्तिमाचष्टे । तेन प्रकृतलक्षणस्यापि प्रतिषेधविषये भवति । **अदीधयुरिति ।** 'दीधीङ् दीप्तिदेवनयोः', लङ्, व्यत्ययेन परस्मैपदम्, झिः, 'जक्षित्यादयः षट्' इत्यभ्यस्तसंज्ञा, 'सिजभ्यस्तविदिभ्यश्च' इति झेर्जुस्, अदादित्वाच्छपो लुक् । ततः 'सार्वधातुकार्धधातुकयोः' इति गुणः प्राप्तः, स 'क्ङिति च' इति प्रतिषिद्धः, सोऽप्यनेन पुनः प्राप्तौ 'दीधीवेवीटाम्' इति प्रतिषिद्धः समुच्चयार्थत्वाच्चकारस्य भवति ॥ ८३ ॥

**पदमञ्जरी**

**जुसि च ॥** उदाहरणेषु लङि शपः श्लुः, द्विर्वचनम्, अभ्यासकार्यम्, 'सिजभ्यस्तविदिभ्यश्च' इति झेर्जुस् ।

**अथेत्यादि ।** जुस्भक्तस्य यासुटस्तद्ग्रहणेन ग्रहणात्प्रसङ्गः । **सार्वधातुकाश्रयङित्त्वनिमित्त इति ।** सार्वधातुकमाश्रयो यस्य तत्सार्वधातुकाश्रयं तत् ङित्वं निमित्तं यस्य प्रतिषेधस्य स तथोक्तः । एतेन **यासुडाश्रयङित्त्वनिमित्तमिति** व्याख्यातम् । **तत्र हि प्राप्ते चाप्राप्ते चेति ।** चिनुयुरित्यादौ प्राप्ते, अजुहवुरित्यादावप्राप्ते । **'क्सस्याचीत्यनुवर्त्तते इति'** परिहारान्तरम्, जकारोच्चारणं तु चक्रुः–इत्यादौ लिटि मा भूत् ॥ ८३ ॥

**भावबोधिनी**

जुस् प्रत्यय परे रहते इगन्त अङ्ग का गुण होता है। उदा० अजुहवुः । अबिभयुः । अबिभरुः । [ हु + लङ् = झि, शप् का श्लु, धातु का द्वित्व अभ्यास कार्य करने पर 'सिजभ्यस्त-विदिभ्यश्च' सूत्र से झि का जुस् = उस् होने पर अजुहु + उस्, 'हु' के उकार का गुण, अव् आदेश, स् का रुत्व विसर्ग–अजहवुः । इसी प्रकार 'ञि भी भये' तथा 'डुभृञ् धारणपोषणयोः' के लङ् = झि = जुस् के रूप हैं । ]

प्रश्न है कि 'चिनुयुः, सुनुयुः' इनमें भी गुण क्यों नहीं होता है [ कारण यह है कि चि + विधिलिङ् = झि + जुस्, श्नु और यासुट् करने पर चिनु + यास् + उस् होने पर यास् जुस् का आगम होने से उसी का अङ्ग बन जाने से चिनु + यास् उस् में उस् परे मिल जाता है ] ? समाधान यह है कि इन लक्ष्यों में दो ङित्व हैं—एक सार्वधातुक प्रत्यय को आश्रित करने वाला और दूसरा यासुट् को आश्रित करने वाला । इनमें सार्वधातुक को आश्रित करने वाला ङित्व निमित्त है जिसका ऐसे प्रतिषेध की अवश्य प्राप्ति में अर्थात् यह ङित्व सर्वत्र मिलेगा ही—इस स्थिति में 'जुस् परे रहते आरम्भ किया जाने वाला गुण' इस सार्वधातुकाश्रय ङित्व-निमित्तक प्रतिषेध का ही बाध करता है [ अतः वहाँ गुण हो जाता है । ] किन्तु यासुट् पर आश्रित ङित्व को निमित्त मानने वाले गुण का बाध नहीं करता है क्योंकि [ ऐसे ङित्व में ] प्राप्त रहते और न प्राप्त रहते यह गुण आरम्भ किया जाता है । [ 'चिनुयुः' यहाँ प्राप्ति है और 'अजुहवुः' यहाँ अप्राप्त है क्योंकि इसमें यासुट् नहीं है । अतः यासुडाश्रित ङित्व-निमित्तक प्रतिषेध का बाध नहीं करता है, यहाँ ङित्व रहता ही है फलतः गुण नहीं होता है । ]

## ३४८१. सार्वधातुकार्धधातुकयोः ॥ ८४ ॥ ( २१६८ )

सार्वधातुके आर्धधातुके च प्रत्यये परत इगन्तस्याङ्गस्य गुणो भवति । तरति । नयति । भवति । आर्धधातुके- कर्ता, चेता, स्तोता ।

सार्वधातुकार्धधातुकयोरिति किम् ? अग्नित्वम् । अग्निकाम्यति । यदि हि प्रत्यये, सङीति वोच्येत, इहापि स्यात् ॥

### न्यास

**सार्वधातुकार्धधातुकयोः । चेता, स्तोतेति** । तृच् । 'ऋदुशनस्पुरोदंसोऽनेहसाञ्च' इत्यनङ्, 'सर्वनामस्थाने' इत्यादिना दीर्घः ।

**सार्वधातुकार्धधातुकयोरिति किमिति** । एवं मन्यते—प्रत्यय इति वक्तव्यम्, सङीति वा, एवं ह्युच्यमाने भवतीत्यादौ गुणः सिद्ध एव, सङीति प्रत्याहारग्रहणं सनः सकारादारभ्य महिङो ङकारेण । **अग्नित्वमिति** । 'तस्य भावस्त्वतलौ' इति त्वप्रत्ययः । **अग्निकाम्यतीति** । 'काम्यच्च' इति काम्यच् । **यदीत्यादि** । यदि प्रत्यय इत्युच्येत, त्वकाम्यचोरपि स्यात् । अथापि सङीत्युच्येत, काम्यचि स्यात्; तस्यापि प्रत्याहारेऽन्तर्भावात् ॥ ८४ ॥

### पदमञ्जरी

**सार्वधातुकार्धधातुकयोः ॥ सार्वधातुकयोरिति किमिति** । एवं मन्यते—प्रत्यय इति वक्तव्यम्, एवमपि ह्यीष्टे विषये सिद्धयतीति । सङिति प्रत्याहारः; सनः सशब्दादारभ्या महिङ्गो ङकारात् । **अग्नित्वमिति** । प्रत्यय इत्युच्यमाने, अत्रापि प्राप्नोति । **अग्निकाम्यतीति** । सङीत्युच्यमाने अत्रापि प्राप्नोति ॥ ८४ ॥

### भावबोधिनी

**विमर्श**—प्रस्तुत सूत्र के महाभाष्य में 'क्सस्याचि' सूत्र से 'अचि' की अनुवृत्ति मानकर अजादि जुस् प्रत्यय परे गुण का विधान मानकर 'चिनुयुः, सुनुयुः' में गुण का परिहार किया गया है । क्योंकि यासुट् करने पर अजादि जुस् नहीं रह पाता है । पदमञ्जरीकार ने इसका उल्लेख किया है । अधिकांश संस्करणों में पदमञ्जरी में "क्सस्याचीत्यनुवर्त्तते इति' यह प्रतीक लिख दिया गया है, जो कि प्रामादिक है । वास्तव में 'क्सस्याचीत्यनुवर्त्तते इति परिहारान्तरम्'''''' ऐसा पाठ ही शुद्ध है । यह प्रतीक नहीं है ।

न्यासकार ने 'अदीधयुरिति' इस प्रतीक से यह लिखा है कि 'जुसि च' सूत्र में चकार का ग्रहण समुच्चयार्थक है जिससे 'सार्वधातुक' सूत्र से प्राप्त गुण का प्रतिषेध 'क्ङिति च' से होता है, किन्तु 'क्ङिति च' को रोककर पुनः इससे प्राप्त होता और तब 'दीधीवेवीटाम्' से प्रतिषिद्ध होता हुआ भी, इसके द्वारा चकार के बल से कर दिया जाता है । अन्यथा 'अदीध्युः' यही होने लगता । वास्तव में दीङ् धातु का प्रयोग वेद में ही होता है और वहाँ दृष्टानुविधि है । अतः न्यासकार की कल्पना अनावश्यक प्रतीत होती है । काशिका के मूल में या प्रस्तुत सूत्र के महाभाष्य में ऐसा कोई उल्लेख नहीं है । 'दीधीवेवीटाम्' के भाष्य में छान्दस मानकर 'अदीधयुः' की उपपत्ति की गई है "अदीधयुर्दाशराज्ञे वृतासः ।' ( ऋक्० ७।३३।५ ) ॥ ८३ ॥

सार्वधातुक और आर्धधातुक प्रत्यय परे रहते इगन्त अङ्ग का गुण होता है । उदा० तरति । नयति । भवति [ तॄञ्, णीञ्, भू से लट् = तिप्, शप् = अ करने पर गुण होता है । ये सार्वधातुक शप् परे उदा० हैं । ] आर्धधातुक के उदा० कर्ता, चेता, स्तोता । [ कृ, चि, स्तु से लुट् = तिप् = डा = आ, तास्, आस् लोप के उदा० हैं । ]

सार्वधातुक और आर्धधातुक प्रत्यय परे रहते---इसका क्या फल है ? अग्नित्वम् । [ अग्नि से त्व प्रत्यय है । ] अग्निकाम्यति । [ इसमें काम्यच् प्रत्यय है । इनकी उक्त संज्ञायें नहीं है । अतः गुण नहीं होता है । ] यदि 'सार्वधातुकार्धधातुकयोः' के स्थान पर सामान्य रूप से 'प्रत्यय रहने' अथवा 'सङ् रहने पर' ऐसा कहा जाता तब यहाँ भी होने लगता । [ जब सार्वधातुकसंज्ञा वाले और आर्धधातुक संज्ञा वाले प्रत्यय विशेष परे रहते गुण माना जाता है तो कोई अनिष्ट नहीं होता है । 'सङ्' यह एक प्रत्याहार है जो 'सन्' ( ३।१।५ ) से लेकर महिङ् ( ३।४।७८ ) तक मिलाकर बनता है । ] ॥ ८४ ॥

## ३४८२. जाग्रोऽविचिण्णल्ङित्सु ॥ ८५ ॥ (२४८०)

**'जागृ'—इत्येतस्याङ्गस्य गुणो भवति अविचिण्णल्ङित्सु परतः। जागरयति। जागरकः। साधुजागरी। जागरंजागरम्। जागरो वर्त्तते। जागरितः। जागरितवान्।**

**वृद्धिविषये, प्रतिषेधविषये च यथा स्यात्—इति जागर्त्तेरयं गुण आरभ्यते। तस्मिन् कृते या 'अत उपधायाः' (७।२।११६) वृद्धिः प्राप्नोति, सा न भवति। यदि हि स्याद, अनर्थक एव गुणः स्यात्, चिण्णलोश्च प्रतिषेधवचनमनर्थकम्।**

**न्यासः**

**जाग्रोऽविचिण्णल्ङित्सु॥ जागरयतीति।** णिच्। **जागरक इति।** ण्वुल्। **साधु जागरीति।** ताच्छील्ये णिनिः। **जागरञ्जागरमिति।** 'आभीक्ष्ण्ये णमुल्', 'आभीक्ष्ण्ये द्वे भवतः' इति द्विर्वचनम्। **जागरो वर्त्तत इति।** भावे घञ्। एतानि वृद्धिविषय उदाहरणानि। **जागरितः**, जागरितवानिति प्रतिषेधविषये।

किं पुनः कारणं वृद्धिविषये प्रतिषेधविषये चैवोपन्यस्तान्युदाहरणानि? इत्यत आह—**वृद्धिविषये प्रतिषेधविषये चेत्यादि।** वृद्धिप्रतिषेधविषयादन्यत्र पूर्वसूत्रेण गुणः सिद्धो भवति। तस्माद्वृद्धिप्रतिषेधविषयेऽयं गुण आरभ्यते, तेन तद्विषयाणामेवोदाहरणानामुपन्यासः। जागरयतीत्यादौ गुणे कृते रपरत्वे च 'अत उपधायाः' इति वृद्ध्या भवितव्यमिति कस्यचिद् भ्रान्तिः स्यात्, अतस्तां निराकर्तुमाह—**तस्मिन् कृते इत्यादि।** किं पुनः कारणं तस्मिन् कृते न भवति? इत्याह—**यदि हीत्यादि।** यद्यस्मिन् कृतेऽपि गुणे 'अत उपधायाः' इति वृद्धिः स्यात्, जागरयतीत्यादिकं रूपं न स्यात्, तथा चानर्थको गुणः स्यात्; 'अचो ञ्णिति' इत्यनयैव वृद्ध्या सिद्धत्वात्। **चिण्णलोश्चेत्यादि।** चिण्णलोः प्रतिषेधस्यैतत् प्रयोजनम्—वृद्धेः श्रवणं यथा स्यात्। यदि तु कृतेऽपि गुणे 'अत उपधायाः' इति स्यात्, चिण्णलोः प्रतिषेधोऽनर्थकः स्यात्; अस्त्वत्र गुणः, सत्यपि तस्मिन् पुनरुपधाया इति वृद्ध्या भवितव्यम्, ततश्च वृद्धेः श्रवणं भविष्यतीति।

**पदमञ्जरी**

**जाग्रोऽविचिण्णल्ङित्सु॥ अविचिण्णल्ङित्सु परत इति।** विचिण्णल्ङिद्भ्योऽन्ये ये प्रत्ययास्तेषु परत इत्यर्थः। **जागरयतीत्यादीनि** वृद्धिविषये उदाहरणानि। **जागरितः, जागरितवानिति** प्रतिषेधविषये।

किं पुनः कारणं वृद्धिप्रतिषेधविषयाण्येवोदाहरणानि उपन्यस्तानि? तत्राह—**वृद्धिविषये, प्रतिषेधविषये चेति।** अन्यत्र पूर्वेणैव गुणस्य सिद्धत्वादेतद्विषय एवायं गुणः, तत्राप्युभयविषयः, कथम्? चिण्णलोः प्रतिषेधात् वृद्धिविषये तावद्भवति, ङित्प्रतिषेधात् प्रतिषेधविषयेऽपीति। **तस्मिन्कृते इति।** 'अङ्गवृत्ते पुनर्वृत्तौ' इत्येतदनाश्रित्योच्यते। **सा न भवतीति।** किं कारणम्? इत्याह—**यदि हीति।** यद्यपि जागरितः, जागरितवानित्यत्र गुणविधिश्चरितार्थः, तथापि वृद्धिविषयेऽप्येतद्विधानमित्युक्तम्, तत्रास्यानर्थक्यमुच्यते। किञ्चेत्याह—**चिण्णलोश्चेति।** यदि गुणे कृते 'अत उपधाया' इति वृद्धिः स्याच्चिण्णलोर्गुणप्रतिषेधोऽनर्थकः स्यात्। अस्तु तत्रापि गुणः; वृद्धौ सत्यामजागारि, जजागारेति सिद्धम्।

**भावबोधिनी**

'जागृ' इस अङ्ग का गुण वि, चिण्, णल् तथा ङित् प्रत्ययों को छोड़कर [ अन्य के ] परे रहते होता है। उदा० जागरयति। [ जागृ + णिच् ] जागरकः। [ जागृ + ण्वुल् ] साधुजागरी। [ साधु उपपद जागृ + णिनि ] जागरं जागरम्। [ जागृ + णमुल्, द्वित्व ]। जागरो वर्तते। [ जागृ + घञ्। इन सभी में वृद्धि के विषय में गुण होता है। ] जागरितः। [ जागृ + क्त, इट्, गुण ] जागरितवान्। [ जागृ + क्तवतु, इट् गुण। इनमें कित् परे रहते गुण का प्रतिषेध प्राप्त है। यह सूत्र गुण करता है। ]

वृद्धि के विषय में तथा प्रतिषेध के विषय में जिस प्रकार हो—'जागृ' का यह गुण आरम्भ किया जाता है। इस गुण के कर देने पर 'अत उपधायाः' सूत्र से जो वृद्धि प्राप्त होती है वह नहीं होती है। कारण यह है कि यदि वह वृद्धि हो जाय तो यह गुण करना अनर्थक होने लगेगा और चिण् तथा णल् में [ गुण का ] प्रतिषेध वचन

**अविचिण्णल्ङित्स्विति किम् । 'जॄशॄस्तजागृभ्यः क्विन्' ( उ० ५०२ )—जागृविः । चिण्—अजागारि । णल—अजागार । ङित्—जागृतः, जागृथः ।**

**'वि' इति केचिदिकारमुच्चारणार्थं वर्णयन्ति । क्वसावपि वकारादौ गुणो न भवति—जजागृवान् । कथमजागरुः, अहं जजागर इति, अत्र प्रतिषेधः प्राप्नोति ? न; अप्रतिषेधात् । अविचिण्णल्ङित्स्विति**

**न्यासः**

**अजागारीति ।** लुङ्, च्लिः, 'चिण्भावकर्मणोः' इति च्लेश्चिण्, 'चिणो लुक्' इति तकारस्य लुक् । **जागृतः, जागृथ इति ।** लट्, तस्थसौ, तयोः 'सार्वधातुकमपित्' इति ङित्त्वम्, अदादित्वाच्छपो लुक् ।

**वीति केचिदिकारमुच्चारणार्थं वर्णयन्तीति ।** किं पुनरेवं सतीष्टं सिध्यति, यत एवं व्याचक्षते ? इत्यत आह—**क्वसावपीत्यादि ।** यदि समुदायस्य वेः प्रत्ययस्येदं ग्रहणं स्यात्, क्वसौ गुणप्रतिषेधो न स्यात् । यदि त्विकार उच्चारणार्थो वर्णमात्रस्यैवेदं ग्रहणम्, तदा 'यस्मिन् विधिस्तदादावल्ग्रहणे' इति तदादिविधिना क्वसावपि गुणप्रतिषेधः सिद्धो भवति । **जजागृवानिति ।** 'लिटः क्वसुश्च' इति क्वसुरादेशः' 'उगिदचाम्' इति नुम्, 'सान्तमहतः संयोगस्य' इति दीर्घः, हल्ङ्यादिसंयोगान्तलोपौ । **केचिदिति** वचनाद्—अपर उच्चारणार्थं न वर्णयन्तीत्युक्तं भवति । त एवं मन्यन्ते—छान्दसः क्वसुः, लिट् च छन्दसि सार्वधातुकमपि भवति; 'छन्दस्युभयथा' इति वचनात्, ततः 'सार्वधातुकमपित्' इति ङित्त्वादेव पर्युदासो भविष्यतीति । **अजागरुरित्यादि ।** एवं मन्यते—'अविचिण्णल्ङित्सु' इति प्रसज्यप्रतिषेधोऽयम्—विचिण्णल्ङित्सु न भवतीति, ततश्चाजागरुरित्यत्रापि 'जुसि च' इत्यनेनापि प्राप्तस्य गुणस्य प्रतिषेधः प्राप्नोति । एवमहं जजागरेत्यत्र 'णलुत्तमो वा' इति वचनाण्णित्त्वं यदा नास्ति तदा 'सार्वधातुकार्धधातुकयोः' इति गुण इष्यते, सोऽस्मात् प्रतिषेधान्न प्राप्नोतीति । **नाप्रतिषेधादिति** परिहारः । नायं दोषः; कुतः ? अप्रतिषेधात् । अप्रसज्यप्रतिषेधादित्यर्थः । यदि प्रसज्यप्रतिषेधो न भवति, कस्तर्ह्ययम् ? इत्याह—**अविचिण्णल्ङित्स्विति पर्युदासोऽयमिति ।** प्रसज्यप्रतिषेधे हि लक्षणान्तरेणापि

**पदमञ्जरी**

**जागृत इति ।** लट्, तस्, अदादित्वाच्छपो लुक्, 'सार्वधातुकमपित्' इति ङित्त्वम् ।

**अत्र वीति केचिदिति ।** 'अविचिण्णल्ङित्सु' इत्यत्र यो वकारात्पर इकारस्तमुच्चारणार्थं वर्णयन्ति, तत्र 'यस्मिन्विधिः' इति वकारादौ प्रतिषेधः । किमर्थं पुनस्त एवं वर्णयन्ति ? इत्यत आह—**क्वसावपीति । जजागृवानिति ।** 'नेड्वशि कृति' इति इट्प्रतिषेधः । तत्र क्रादिनियमादिट् प्राप्तः 'वस्वेकाजाद्घसाम्' इति नियमान्न भवति । ये तु क्विपो लोपाद्वर्णाश्रये प्रत्ययलक्षणप्रतिषेधाच्च पर्युदासं नेच्छन्ति, तेषां जागरिति गुणो भवत्येव । अन्ये त्वाहुः—यथा अतृणेडिति प्रत्ययलक्षणेनेमागमो भवति, वर्णस्य प्रत्ययविशेषणत्वात्; एवं क्विपोऽपि पर्युदासः, ततस्तु जागृदिति भवति ।

चोदयति—**कथमजागरुरिति ।** एवं मन्यते—प्रसज्यप्रतिषेधोऽयं विचिण्णल्ङित्सु न भवतीति, ततश्च 'जुसि च' इत्यस्यापि गुणस्य प्रतिषेधः स्यात्, तथोत्तमे णलि णित्वाभावपक्षे गुण इष्यते—'सार्वधातुकार्धधातुकयोः' इति, तस्यापि प्रतिषेधः प्राप्नोतीति । परिहरति—**नाप्रतिषेधादिति ।** नायं दोषः, कुतः ? अप्रतिषेधात् । नायं प्रसज्यप्रतिषेधः, कस्तर्ह्ययम् ? इत्याह—**अविचिण्णल्ङित्स्विति पर्युदासोऽयमिति ।**

**भावबोधिनी**

अनर्थक हो जायगा । [ क्योंकि गुण के बाद पुनः वृद्धि कर देने पर गुण का कोई फल ही नहीं रहता है । तब गुण के प्रतिषेध का भी कोई फल नहीं रह जायगा । अतः गुण के बाद वृद्धि नहीं होती है—यही मानना चाहिए । ]

वि, चिण्, णल्, ङित्-परे नहीं—इसका क्या फल है ? ''जॄ-शॄ-स्तजागृभ्यः क्विन्'' ( उणादि० ) से [ जागृ से क्विन्=वि ] जागृविः । चिण् परे—अजागारि । णल् में—जजागार । ङित् में—जागृतः, जागृथः । [ इनमें गुण नहीं होता है । वास्तव में 'जागृविः' इसमें क्विन् प्रत्यय मानने पर तो कित्त्व से ही गुण निषेध हो जाता है । अतः कैयटीय प्रदीप के अनुसार ''वृदृजागृभ्यो विन्' ऐसा सूत्रपाठ मानकर गुणप्राप्ति और अभाव का उपपादन करना चाहिए । विशेष प्रदीप में देखना चाहिए । ]

'वि' इसमें इकार को कुछ विद्वान् केवल उच्चारणार्थं मानते हैं । [ इसी लिये ] क्वसु में भी वकारादि

**पर्युदासोऽयम् ।**

**अथ वा—'जाग्रः' इति प्राप्तिरसावानन्तर्याद् विचिण्णल्ङित्सु प्रतिषिध्यते; या तु 'जुसि च' ( ७।३।८३ ), 'सार्वधातुकार्धधातुकयोः' ( ७।३।८४ ) इति च प्राप्तिः, सा न प्रतिषिध्यते ॥**

**३४८३. पुगन्तलघूपधस्य च ॥ ८६ ॥ (२१८९)**

**पुगन्तस्याङ्गस्य लघूपधस्य च सार्वधातुकार्धधातुकयोर्गुणो भवति । पुगन्तस्य—ब्लेपयति, ह्रेपयति, क्नोपयति । लघूपधस्य—भेदनम्, छेदनम्, भेत्ता, छेत्ता ।**

**न्यासः**

प्रसक्तस्य प्रतिषेधः स्यात्, न पर्युदासे । तथाहि पर्युदासे विचिण्णल्ङिद्भ्योऽन्यत्र गुणो विधीयते, न तेषु विचिण्णलादिषु प्रतिषिध्यते । पर्युदासश्चायम् । तस्माज्जुसि णलि च गुणो भवत्येव ।

अभ्युपेत्यापि प्रसज्यप्रतिषेधम्, परिहारान्तरमाह—**अथ वेत्यादि ।** 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इत्यानन्तर्याद् जाग्र इति या प्राप्तिस्तस्या अयं प्रतिषेधः, या तु 'जुसि च' इत्यादिना लक्षणान्तरेण प्राप्तिः सा न प्रतिषिध्यते । **अजागरुरिति ।** लङ्, 'जक्षित्यादयः षट्' इत्यभ्यस्तसंज्ञा, 'सिजभ्यस्तविदिभ्यश्च' इति झेर्जुस् ॥ ८५ ॥

**पुगन्तलघूपधस्य च ॥** पुगन्तस्याङ्गस्य, लघूपधस्य चेत्युभावपि बहुव्रीही—पुगन्तो यस्य तत् तथोक्तम्, लघ्वी उपधा यस्य तल्लघूपधम् । **भेत्ता, छेत्तेति ।**

**पदमञ्जरी**

पर्युदासे हि विचिण्णल्ङित्सु न विधिर्न प्रतिषेधः, ततोऽन्यत्र विधानम्, तेन जुसि णलि च लक्षणान्तरेण प्राप्तो गुणो भवत्येव ।

प्रसज्यप्रतिषेधेऽप्याह—**अथ वेति ।** 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति भावः । केचिद्दर्विरित्यत्र गुणदर्शनादौणादिकं विच्प्रत्ययं वर्णयन्ति, तेषां जागृविरित्यत्र गुणः प्राप्नोति । न च वेः प्रतिषेधवैयर्थ्यम्; क्विपि क्वसौ च चरितार्थत्वात् । तस्माज्जागर्तेः किद्वक्तव्यः ॥ ८५ ॥

**पुगन्तलघूपधस्य च ॥ भेत्ता, छेत्तेति ।** कथं पुनरत्र गुणः, यावता धात्वन्तप्रत्ययाद्योर्हलोरानन्तर्ये 'संयोगे गुरु' इति गुरुसंज्ञया लघुसंज्ञाया बाधनान्न प्राप्नोति, भेदनमित्यादौ सावकाशो गुणः ? अत आह—

**भावबोधिनी**

परे गुण नहीं होता है—जजागृवान् । तो 'अजागरुः' 'अहं जजागर' इनमें ( गुण ) कैसे होता है, इनमें तो प्रतिषेध प्राप्त होता है ? नहीं, प्रतिषेध नहीं होता है । क्योंकि 'अ-विचिण्णल्ङित्सु' यह पर्युदास है । [ यदि प्रसज्यप्रतिषेध होता तो—वि-चिण्-णल् ङित् में गुण नहीं होता । फलतः लङ् और लिट् के झि और णल् में भी नहीं हो पाता । परन्तु पर्युदास मान लेने पर—वि चिण् णल् ङित् में न विधि है और न प्रतिषेध, इनसे भिन्न स्थलों पर विधान होता है । फलस्वरूप जुस् और णल् में यदि किसी अन्य से गुण प्राप्त है तो होता ही है । ]

अथवा 'जागृः' यह प्राप्ति आनन्तर्य से 'वि चिण् णल् ङित्' में प्रतिषिद्ध होती है परन्तु [ इस सूत्र से पूर्ववर्ती सूत्रों ] 'जुसि च' तथा 'सार्वधातुकार्धधातुकयोः' इनसे जो गुण की प्राप्ति है, उसका प्रतिषेध नहीं होता है, उनसे गुण होता ही है । [ कारण यह है 'अनन्तर = अव्यवहित को ही विधि या प्रतिषेध होता है' ऐसी परिभाषा है । अतः प्रसज्य-प्रतिषेध मान लेने पर भी दोष नहीं है । ] ॥ ८५ ॥

पुगन्त लघूपध अङ्ग का सार्वधातुक तथा आर्धधातुक प्रत्यय परे रहते गुण होता है । पुगन्त का उदा० ब्लेपयति, ह्रेपयति, क्नोपयति । [ ब्ली, ह्री क्नूयी धातुओं से णिच् = इ करने पर 'अर्तिह्री-ब्लीरी-क्नूयीक्ष्माय्यातां पुङ्णौ" सूत्र से पुक् आगम कित् होने से धातु के अन्त में होता है—ब्लीप् इ, ह्री प् इ, क्नूय् प्+इ, गुण के बाद लडादि कार्य होते हैं । इनमें उपधा में दीर्घ ई ऊ हैं । ] लघु उपधावाले के उदा० भेदनम्, छेदनम्, भेत्ता, छेत्ता । [ भिद्+ल्युट्=अन, उपधाका गुण होता है । ]

**प्रत्ययादेरङ्गावयवस्य च हलोरानन्तर्ये सति लघूपधगुणो न व्यावर्त्यते—इति ज्ञापितमेतत् क्नुसनोः कित्करणेन। त्रसिगृधिधृषिक्षिपेः क्नुः' ( ३।२।१४० )। 'हलन्ताच्च' ( १।२।१० ) इति।**

**संयोगे[1] गुरुसंज्ञायां गुणो भेत्तुर्न सिध्यति।**
**विध्यपेक्षं लघोश्चासौ कथं कुण्डिर्न दुष्यति ॥**

**न्यास।**

ननु च प्रत्ययादेर्हलोऽङ्गावयवस्य चानन्तर्ये सति 'संयोगे गुरु' इति गुरुसंज्ञया लघुसंज्ञायां बाधितायां गुणेनात्र न भवितव्यम्? इत्यत आह—**प्रत्ययादेरित्यादि**। 'त्रसिगृधिधृषिक्षिपेः क्नुः', 'हलन्ताच्च' इति क्नुसनोः कित्करणस्यैतदेव प्रयोजनम्—गृध्नुः, बिभित्सतीत्यादौ गुणो मा भूदिति। यदि प्रत्ययादेर्हलोऽङ्गावयवस्य चानन्तर्ये सति लघूपधगुणो न स्यात् तयोः कित्त्वं न कुर्यात्, कृतञ्च, तस्मात् क्नुसनोः कित्त्वं कुर्वता—प्रत्ययाङ्गावयवयोर्हलोरानन्तर्येऽपि लघूपधगुणो न व्यावर्त्यत इति ज्ञापितमेतत्। ननु च सनः कित्त्वं सिसृक्षतीत्यत्रामागमो मा भूदित्येवमर्थं स्यात्? नैतदस्ति; यदि ह्येतत् प्रयोजनमभिमतं स्यात् तत्रैव प्रतिषेधं कुर्यात्—सृजिदृशोर्झल्यमकित्सनोरिति। तस्मात् सनः कित्करणं ज्ञापकमेव यदि लघूपधस्यानेन गुणो विधीयते। एवं सति 'इको गुणवृद्धी' इत्यस्या उपस्थाने सति यत्र तत्र स्थितस्येको गुणः प्रसज्येत, ततश्चेहापि प्राप्नोति—भिनत्तीति, भवति ह्यत्र लघूपधमङ्गम्। न च शक्यते वक्तुम्—'हलोऽनन्तराः संयोगः' इति संयोगसंज्ञायां

**पदमञ्जरी**

**प्रत्ययादेरिति। क्नुसनोः कित्करणेनेति।** 'त्रसिगृधिधृषिक्षिपेः क्नुः' इति क्नोः कित्करणस्यैतत्प्रयोजनम्—गृध्नुरित्यादौ गुणो मा भूदिति। यदि चैवंविधे विषये गुरूपधत्वाद् गुणो न स्यात्, क्नोः कित्करणमनर्थकं स्यात्। तथा 'हलन्ताच्च' इति सनः कित्त्वविधानस्यैतत्प्रयोजनम्—पित्सतीत्यादौ गुणो मा भूदिति, तदपि ज्ञापकमुक्तार्थस्य। इदं तु ज्ञापकं नोपपद्यते; दिदृक्षते इत्यत्र 'सृजिदृशोः' इत्यमागमो मा भूदित्येवमर्थमेतत्स्यात्, तथा धिप्सतीत्यत्र नलोपार्थं तत्स्यात्। तस्मात् क्नोरेव कित्करणं ज्ञापकम्। भिनत्ति, छिनत्तीत्यत्र

**भावबोधिनी**

प्रत्यय के आदि वर्ण का और अङ्ग के अवयव के अर्थात् इन दोनों के हलों के आनन्तर्य ( अव्यवधान ) रहने पर लघूपध गुण की व्यावृत्ति नहीं होती है—यह क्नु तथा सन् के कित् करने से ज्ञापित होता है। 'त्रसिगृधिधृषिक्षिपेः क्नुः' ( ३।२।१४० ) तथा 'हलन्ताच्च' ( १।२।१० )।

**विमर्श**—भाव यह है कि 'क्नु' प्रत्यय और सन् प्रत्यय को कित् करने का यही प्रयोजन है कि 'गृध्नुः' 'बिभित्सति' आदि में गुण न हो सके। यदि प्रत्यय के आदि हल् तथा अङ्गावयव के अन्त्य हल् दोनों का आनन्तर्य ( संयोग ) मान लिया जाय तो उस से पूर्व ( उपधा का ) वर्ण दीर्घ ( गुरु ) होने लगेगा, फलतः लघूपध सम्भव न होने से गुण की प्राप्ति ही नहीं है। तब क्नु प्रत्यय और सन् का कित् करना व्यर्थ हो जाता है। अतः उस कित्करण से यह ज्ञापित होता है कि अङ्गावयव हल् और प्रत्ययादि हल् का आनन्तर्य लघूपध गुण का निवर्त्तक नहीं होता है, तभी 'क्नु' और सन् का कित्करण सार्थक होता है। ] इस विषय में काशिकाकार ने भाष्योक्त कारिकायें उद्धृत की हैं—]

[ धातुरूप अङ्ग का अन्त्य अवयव हल् और प्रत्यय का आदि हल् इन दोनों के ] संयोग में [ पूर्ववर्ती उपधा वर्ण ] की गुरु संज्ञा हो जाने पर 'भेत्ता में उपधागुण नहीं सिद्ध होता है अर्थात् भिद् = भित्ता में संयोग से पूर्व 'इ' गुरु = दीर्घ हो जाने से लघूपध गुण सिद्ध नहीं हो सकता। ] यह गुणविधान लघु का है अर्थात् लघूपध से जो सार्वधातुक और आर्धधातुक किये गये हैं, उनके परे रहते अङ्ग का गुण होता है। [ अतः लघूपध का गुण होने में बाधा नहीं है। ] क्योंकि प्रत्यय तो लघूपध से ही विहित है। [कारिका में लघोः = लघूपधात्, असौ = तृच् प्रत्ययः। छन्दोभङ्ग के भय से ऐसा लिखा गया है। ]

'कुण्डि' यह क्यों नहीं दूषित होता है [ अर्थात् 'इदितो नुम्धातोः' यह सूत्र अङ्गाधिकार में नुम् का

१. भाष्यस्थ-संग्रहश्लोकत्रयमिदम्, न्यासकृता न व्याख्यातमिति प्रक्षिप्तमत्र मन्यामहे। अत एव पदमञ्जरीकृतापि 'क्वचित्' इत्युक्त्वा व्याख्यातम्।

धातोर्नुमः कथं रञ्जेः स्यन्दिश्रन्थ्योर्निपातनात् ।
अनल्लोपशिदीर्घत्वे विध्यपेक्षे न सिध्यतः ॥
अभ्यस्तस्य यदाहाचि लङर्थं तत्कृतं भवेत् ।
क्नुसनोर्यत्कृतं कित्त्वं ज्ञापकं स्याल्लघोर्गुणे ॥ [ म० भा० ]

**न्यासः**

सत्यां लघूपधमेतन्न भवतीति गुणो न भविष्यतीति । यज्ज्ञापितमेतदिदानीमेव—प्रत्ययादेरङ्गावयवस्य च हलोरानन्तर्ये सति लघूपधगुणो न व्यावर्त्यत इति ? अत आह—उपधा चात्रेत्यादि । इक्परिभाषया ह्यत्रेकः सन्निधापितत्वादिगेवोपधा गृह्यते, तेन भिनत्तीत्यत्र गुणो न भवति; न ह्यत्राङ्गस्येगुपधा, किं तर्हि ? अकारः ।

**पदमञ्जरी**

श्नमोऽकारेण लघूपधमङ्गम्, तत्र धातोरिकारस्य गुणः प्राप्नोति, अत आह—उपधात्रेति । न ह्यत्र या काचिदुपधा गृह्यते, किं तर्हि ? 'इको गुणवृद्धी' इत्यस्योपस्थानात् स्थानित्वेन सन्निहित इगेव ।

**भावबोधिनी**

विधान करता है अतः पहले नुम् न करके प्रत्यय ही किया जाता है । अतः प्रत्यय लघूपध से ही होने के कारण 'कुण्डिता' आदि में गुण को प्रसक्ति होती है ? इसका समाधान यह है ] धातु से नुम् का विधान है । [ 'इदितो नुम् धातोः' में धातुग्रहण का यही प्रयोजन है कि उपदेशावस्था में ही पहले नुम् हो जाता है, उसके बाद अन्य प्रत्यय होने से संयुक्त से पूर्व हो जाता है और उपधा में इक् नहीं मिल पाता है । ] तो 'रञ्ज' की उपधावृद्धि कैसे होती है ? [ क्योंकि पूर्वोक्त रीति से पहले नुम् होने से उपधावृद्धि सम्भव नहीं है ? समाधान यह है ] 'स्यन्दि और श्रन्थि के ( वृद्धि का अभाव ) निपातन से [ वृद्धि हो जाती है । भाव यह है—'स्यदो जवे' तथा 'अवोदैधोद्मप्रश्रथहिमश्रथाः' ( ६।४।२९ ) सूत्रों से 'स्यन्दः' और 'श्रथः' में वृद्धि का अभाव निपातित किया गया है । परन्तु पूर्वोक्त तर्क मानें तो वृद्धि की प्राप्ति ही नहीं है तब अभाव के निपातन की क्या आवश्यकता । अतः वही ज्ञापित करता है कि—इस प्रकार के लक्ष्यों में वृद्धि होती है । अतः 'रञ्जू' से 'रागः' आदि बन जाते हैं । ]

[ विहितविशेषण मान लेने पर, षष्ठीनिर्देश मान लेने पर होने वाले दोष और उनका समाधान दिया जा रहा है—] विध्यपेक्ष ( गुण-विधान ) मान लेने पर अनल्लोप तथा शिदीर्घत्व सिद्ध नहीं होते हैं । [ अन्नन्त का लोप = अनल्लोपः, शी परे दीर्घत्व=शिदीर्घत्वम् । भाव यह है कि 'लघोः' यहाँ षष्ठीनिर्देश मान कर विधान को विशेषित किया जायगा तो 'राज्ञः' आदि में ही 'अल्लोपोऽनः' से अलोप हो सकेगा, दघ्ना, अस्थ्ना आदि में अनङ् के अ का लोप नहीं हो सकेगा । क्योंकि अनङ् बाद में होने वाला है । इसी प्रकार शि = सर्वनामस्थान परे होने वाला दीर्घ भी 'सामानि' आदि का ही होगा, 'कुण्डानि' आदि का नहीं क्योंकि इनमें नुम् बाद में होता है । और ऐसा मानने पर 'भेत्ता' में गुण नहीं हो सकता ? इसका समाधान यह है ]—'नाभ्यस्तस्याचि' ( ७।३।८७ ) अभ्यस्त-संज्ञक अङ्ग जो लघूपध है उसका अजादि पित् सार्वधातुक परे गुण नहीं होता है । ) इस सूत्र में 'अचि' इसका ग्रहण है । [ वह यह ज्ञापित करता है ऐसे विषय में भी गुण होता है । इसमें 'अच्' के ग्रहण का यही प्रयोजन है कि 'नेनेक्ति' आदि लक्ष्यों में हलादि प्रत्यय परे गुण का निषेध न हो । यदि 'भिद्ता' में गुण प्राप्त नहीं होगा तो ने निज् + ति में भी गुणप्राप्ति नहीं । तब 'अचि = अजादि परे' यह कथन व्यर्थ होने लगेगा । अतः ज्ञापक मान कर गुणप्राप्ति और उसका निषेध करना चाहिए । पुनः शङ्का की जाती है ]—लङ् लकार के 'अनेनेक्' आदि के लिये वह 'अचि' किया गया है । यहाँ अजादि हलादि कोई नहीं है । गुणप्रतिषेध हो जाता है । क्योंकि प्रत्ययलक्षण से हलादि है । अतः ज्ञापक नहीं माना जा सकता । पुनः उपपत्ति करते हैं—] 'क्नु' प्रत्यय और 'सन्' प्रत्यय का किया गया 'कित्व'—लघु उपधा के गुण में ज्ञापक हो सकता है । [ भाव यह है 'त्रसिगृधिधृषिक्षिपेः क्नु' इन धातुओं से 'क्नु' कित् प्रत्यय करने का यही प्रयोजन है कि 'त्रस्नुः, गृध्नु' आदि में लघूपध गुण न हो सके । इसी प्रकार 'हलन्ताच्च' से हलन्त धातु से परे

**उपधा चात्र इगेव गृह्यते, ततो भिनत्तीति गुणो न भवति ।**

**न्यासः**

**अपरे त्वित्यादि ॥** सूत्रार्थं वर्णयन्तीति वक्ष्यमाणेन सम्बन्धः। पुकि अन्तः पुगन्तः—'सप्तमी' इति योगविभागात् समासः। अन्तशब्दोऽयमवयववचनः, पुकि परतोऽवयव इत्यर्थः। कस्यावयवः? 'अङ्गस्य' इत्यनुवृत्तेः पुगिति वचनात् पुगागमवतोऽङ्गस्य। स पुनः पुगन्त इक्परिभाषोपस्थानादिगेव वेदितव्यः। **लघ्वी उपधा लघूपधेति ।** विशेषणसमासः। **पुगन्तलघूपधमिति ।** समाहारद्वन्द्वोऽयम्। **सूत्रार्थमिति ।** सूत्रार्थैकदेशे सूत्रार्थशब्दो वर्त्तते, न ह्येतवानेव सूत्रार्थः, अपरिसमाप्तत्वात्। अपरिसमाप्तिस्तु तस्य पुगन्तस्य तस्याश्च लघूपधाया गुणो भवतीत्यस्य सूत्रार्थस्यैकदेशस्यानभिधानात्। **वर्णयन्तीति ।** व्याचक्षत इति। भिनत्तीत्यत्र गुणो मा भूदित्येवमर्थम्। न ह्यत्र सूत्रार्थे भिनत्तीत्यत्र गुणः प्रसज्येत। बहुव्रीहौ ह्याश्रीयमाणेऽङ्गस्यान्यपदार्थस्य यो नाम कश्चिदिक् तस्य यत्र तत्रावस्थितस्य गुणः प्रसज्येत। तत्पुरुषे तु नायं दोषः, तत्र हि लघूपधाभ्यामङ्गं विशिष्यते, अतस्तस्या एव गुणो विधीयते—अङ्गस्य या लघूपधा इक् तस्या गुणो भवतीति। भिनत्तीत्यत्र याङ्गस्य लघूपधा नासाविक्, यश्चेक् स यद्यपि लघुर्भवति न त्वस्योपधा। तस्मात् तत्पुरुष आश्रीयमाणे नेह गुणस्य प्रसङ्गः।

**पदमञ्जरी**

**अपरे त्विति ।** वर्णयन्तीति सम्बन्धः। **पुकि अन्त इति ।** अन्तशब्दः समीपवचनः। यद्यपि 'पुगन्त' इत्यत्र बहुव्रीहावपि न दोषः, तथाप्यैकरूप्येण विशेषणार्थमयमपि तत्पुरुष एव व्याख्यातः। **लघ्वी उपधेति ।** कर्मधारयः। अत्र पक्षे शाब्द एवोपधाया इका सम्बन्धः—लघ्व्या उपधाया इक इति। **पुगन्तलघूपधमिति ।** समाहारद्वन्द्वः।

क्वचिद् 'उपधात्र' इत्यादेर्ग्रन्थस्य पुरस्तात् **संयोगे गुरुसंज्ञायामिति** श्लोकत्रयं पठ्यते। धात्वन्तप्रत्ययाद्योर्हलोरानन्तर्ये सति गुरुसंज्ञायां सत्यां गुणो भेत्तुर्भेशब्दस्य न सिध्यति। परिहरति—**विध्यपेक्षमिति ।** इदं विधानमिति शेषः लघूपधाद्ये विहिते सार्वधातुकार्धधातुके, तयोरङ्गस्य गुण इत्यर्थः। ननु पञ्चम्यभावात् कथं विधानमुपपद्यते? उच्यते; षष्ठीपक्षेऽपि विशेष्यत इति चेत्को दोषः—लघूपधस्य ये सार्वधातुधार्धधातुके के च ते? ये तस्माद्विहिते इत्युपपद्यते। **लघोश्चासाविति** पाठे लघूपधाच्चासौ तृजिविहित इत्यर्थः। उपधाशब्दस्तु वृत्तभङ्गभयान्न प्रयुक्तः। **कथं कुण्डिरिति ।** अङ्गाधिकारे नुमो विधानादकृत एव नुमि प्रत्ययो लघूपधाद्विहितः, तत्र परतो निमित्ते स्थिते कुण्डितेत्यादौ गुणः प्राप्नोति, यदि विधानं विशेष्यत इत्यर्थः। परिहरति—**धातोर्नुम इति ।** हेतौ पञ्चमी, यस्मात्तत्र धातोर्नुमङ्गस्य तस्मादित्यर्थः। उक्तं हि तत्र—'धातुग्रहणस्य प्रयोजनम्—धातूपदेशावस्थायामेव नुम् यथा स्यात्' इति, ततश्च प्रागेव नुम्, पश्चात्प्रत्ययः; न न चासौ लघूपधाद्विहितो भवति। **कथं रञ्जेरिति ।** यदि षष्ठीनिर्देशेऽपि विधानं विशेष्यते, तदान्यत्रापि

**भावबोधिनी**

सन् प्रत्यय कित् करने का यही फल है कि लघूपध गुण न हो सके। यदि प्रकृति = अङ्ग का अन्त्यावयव तथा प्रत्यय का आदि अवयव मिला देने पर होने वाले संयोग को मान कर पूर्व = उपधा का गुरु = दीर्घ मान लिया जायगा, तो 'गृध्नुः सिसृक्षति' आदि में गुणप्राप्ति ही नहीं होती, कित् करना व्यर्थ होगा। वही ज्ञापित करता है कि ऐसा संयोग मान कर लघूपध गुण नहीं रोका जाता। ]

**विमर्श**—सामान्यतया काशिका में कारिकाओं का कम उल्लेख हैं। प्रस्तुत सूत्र के महाभाष्य में ये सभी कारिकायें हैं। न्यासकार के सामने काशिका में ये कारिकायें नहीं सम्मिलित थीं। पदमञ्जरीकार के समक्ष कहीं-कहीं इनका भी उल्लेख था। अतएव इन्होंने इनकी व्याख्या कर दी है। महाभाष्य में 'अनङ्लोप शिदीर्घत्वे' ऐसे पाठान्तर भी हैं। उद्योतकार नागेश ने दोनों पाठों की व्याख्या की है—"वार्तिकेऽनलोप' इति पाठे अनन्तस्य यो लोपः सोऽनलोप इत्यर्थः। अनङ्लोपः—इति पाठे अनङो लोपोऽर्थात् तत्सम्बन्ध्यकारस्येत्यर्थः।"

( अनु० ) और उपधा यहाँ पर इग् रूप ही ली जाती हैं। इस कारण 'भिनत्ति' आदि में गुण नहीं होता है। [ क्योंकि उपधा इक् नहीं है। ]

अपरे—पुकि अन्तः पुगन्तः; लघ्वी उपधा लघूपधा; पुगन्तश्च लघूपधा च पुगन्तलघूपधमिति सूत्रार्थं वर्णयन्ति ॥

**३४८४. नाभ्यस्तस्याचि पिति सार्वधातुके ॥ ८७ ॥ (२५०३)**

अभ्यस्तसंज्ञकस्याङ्गस्य लघूपधस्याजादौ पिति सार्वधातुके गुणो न भवति । नेनिजानि[1], वेविजानि, परिवेविषाणि । अनेनिजम्, अवेविजम्, पर्यवेविषम्[1] ।

**न्यासः**

सार्वधातुकार्धधातुकयोरित्येव—**अग्निचित्त्वम्, अग्निचित्काम्यति** । पुगन्तग्रहणं लघूपधार्थम् ॥ ८६ ॥

**नाभ्यस्तस्याचि पिति सार्वधातुके ॥ नेनिजानि, वेविजानि, परिवेविषाणीति** । 'णिजिर् शौचपोषणयोः' 'विजिर् पृथग्भावे' 'विषु व्याप्तौ'—एभ्यो लोट्, मिप्, 'मेर्निः', 'आडुत्तमस्य पिच्च' इत्याट्,

**पदमञ्जरी**

प्रसङ्गः, ततश्च 'अत उपधायाः' इत्यकारोपधाद्विहिते प्रत्यये विधीयमाना वृद्धी रञ्जेर्न स्यात्; प्राक् प्रत्ययोत्पत्तेर्नकारोपधत्वात्—राग इति, 'घञि च भावकरणयोः' इति नकारलोपः । यद्यप्युपधाया अकारस्य वृद्धिरुच्यते, न च ततः प्रत्ययस्य विधानं सम्भवति, तथाप्यकारोपधाद्विधानं तदेवोपधाया विधानं मन्यते । **स्यन्दिश्रन्थ्योरिति** । यदयम् 'स्यदो जवे', 'अवोदैधोद्मप्रश्रथहिमश्रथाः' इति स्यन्दिश्रन्थ्योर्वृद्ध्यभावं निपातयति, तज्ज्ञापयति—भवत्येवञ्जातीयकानां वृद्धिरिति । तत्र हि नलोपार्थम्, वृद्ध्यभावार्थं च निपातनमाश्रयणीयम् । यदि च वृद्धिविषये विधानं विशेष्येत, ततो वृद्धिप्रसङ्गाभावान्निपातनाश्रयणमनर्थकं स्यात् । नलोपस्य सिद्धये विधिरेवाश्रयणीयः, अनेकप्रयोजनसिद्धये हि निपातनाश्रयणम् । **अनल्लोपेति** । अनन्तस्य योऽल्लोपः सोऽनल्लोपः; शौ दीर्घत्वम्, शिदीर्घत्वम्—तयोर्द्वन्द्वः, अनल्लोपशिदीर्घत्वे विध्यपेक्षे न सिद्ध्यतः । यदि च षष्ठीनिर्देशेऽपि विधानं विशेष्येत, अल्लोपो राज्ञ इत्यादावेव स्यात्; अस्थ्ना, अस्थ्ने, दध्ना, दध्ने—इत्यादौ न स्यात् । शौ दीर्घत्वं च सामानि इत्यादावेव स्यात्, कुण्डानीत्यादौ तु न स्यात् । तस्मात्षष्ठीनिर्देशेषु विहितविशेषणग्रहणे दोषप्रसङ्गाद् गुणो भेत्तुर्न सिध्यतीति । एवं तर्हि ज्ञापकात्सिद्धम्, यदयम् 'नाभ्यस्तस्याचि' इत्यज्ग्रहणं करोति, तज्ज्ञापयति—भवत्येवञ्जातीयके विषये गुण इति । तस्य हि प्रयोजनम्—नेनेक्तीत्यादौ हलादौ गुणप्रतिषेधो मा भूदिति । यदि च हलादावलघूपधत्वाद् गुणो न स्यात्, तदा गुणस्य प्राप्त्यभावात्किं तन्निवारणार्थेनाज्ग्रहणेन ! नैतदस्ति ज्ञापकम्; **अभ्यस्तस्य यदाहाचि लङर्थं तत्कृतं भवेत्** । अभ्यस्तस्याजादौ प्रतिषेधमाहेति यत् तल्लङर्थं कृतं भवेत्, यत्र हलादिर्लुप्यते—अनेनेगिति, तस्मान्न ज्ञापकम् । एवं तर्हि—**क्नुसनोर्यत्कृतं कित्त्वं ज्ञापकं स्याल्लघोर्गुणे** । व्याख्यातमेतत् ॥ ८६ ॥

**नाभ्यस्तस्याचि पिति सार्वधातुके ॥ नेनिजानीत्यादि** । लोट्, 'मेर्निः', 'आडुत्तमस्य पिच्च', शपः श्लुः, द्विर्वचनम्, 'णिजां त्रयाणां गुणः श्लौ' । **अनेनिजमित्यादि** । लङ्, मिपोऽम्भावः ।

**भावबोधिनी**

दूसरे व्याख्याकार—पुक् परे रहते जो अन्त, और लघुरूप जो उपधा—इन दोनों—'पुगन्तश्च लघूपधा च' का समाहारद्वन्द्व करके 'पुगन्त-लघूपधम्'—ऐसा सूत्रार्थ ( सूत्रघटक एक पद का अर्थ ) कहते हैं । [ ऐसे पुगन्त का और लघूपध का गुण होता है । गुण के साथ इक् का सम्बन्ध होने से उपधा के इक् का गुण—यह अर्थ ज्ञात होता है । इस अर्थ में 'भिनत्ति' आदि में गुण प्रसक्ति ही नहीं है ] ॥ ८६ ॥

अभ्यस्तसंज्ञक लघूपध अङ्ग का अजादि पित् सार्वधातुक प्रत्यय परे गुण नहीं होता है । उदा० नेनिजानि, वेविजानि, परिवेविषाणि । [ 'णिजिर् शौचपोषणयोः' 'विजिर् पृथग्भावे' और 'विषु व्याप्तौ' इन तीन जौहोत्यादिक धातुओं से लोट्, मिप् = मि का 'नि' 'आडुत्तमस्य पिच्च' से आट् आगम निज् आ + नि, शप् का श्लु, 'श्लौ' से

१–१. नेनिजानि, अनेनिजम्, परिवेविषाणि, पर्यवेविषम्—इति मुद्रितः पाठः ।

**अभ्यस्तस्येति किम् ? वेदानि । अचीति किम् ? नेनेक्ति ।**
**पिद्ग्रहणमुत्तरार्थम् । सार्वधातुक इति किम् ? निनेज ।**
**लघूपधस्येत्येव—जुहवानि । अजुहवम् ।**
**❀ बहुलं छन्दसीति वक्तव्यम् ❀ ( म० भा० ) जुजोषदिति यथा स्यात् ( म० भा० ) ।**

**न्यासः**

'जुहोत्यादिभ्यः श्लुः' इति शपः श्लुः, 'श्लौ' इति द्विर्वचनम्, 'णिजां त्रयाणां गुणः श्लौ' इत्यभ्यासस्य गुणः। **अनेनिजम्, अवेविजम्, पर्यवेविषमिति ।** लङ्, 'तस्थस्थमिपां तान्तन्तामः' इति मिपोऽम्भावः।

**वेदानीति ।** 'विद ज्ञाने'। पूर्ववल्लोडादि यथायोगम्, अदादित्वाच्छपो लुक्। **नेनेक्तीति ।** लट्, तिप्, 'चोः कुः' इति कुत्वम्।

अथ पिद्ग्रहणं किमर्थम्, यावताऽपिति सार्वधातुके 'सार्वधातुकमपित्' इति ङित्त्वे सति 'क्ङिति च' इति निषेधेन भवितव्यमिति, न चानयोः प्रतिषेधयोः कश्चिद् विशेषोऽस्ति ? इत्यत आह—**पिद्ग्रहणमित्यादि ।** 'तृणह इम्' इतीमं वक्ष्यति, स पिति यथा स्यात्, अपिति मा भूदित्येवमर्थं पिद्ग्रहणम्। **निनेजेति ।** लिट्, स च 'लिट् च' इत्यार्धधातुकसंज्ञकः।

**जुहवानीति ।** 'हु दाने'। पूर्ववल्लोडादि। **अजुहवमिति ।** पूर्ववल्लङादि। अत्र 'लघूपधस्य' इत्यनुवृत्तेः 'सार्वधातुकयोः' इतीगन्तस्य यो गुणो विहितस्तस्य प्रतिषेधो न भवति।

**बहुलं छन्दसीति वक्तव्यमिति ।** छन्दसि विषये बहुलं गुणप्रतिषेधो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः। तत्रेदं व्याख्यानम्—इहेदं सूत्रं विभज्य द्वौ योगौ क्रियेते, तत्र 'न' इत्येको योगः; 'अभ्यस्तस्याचि पिति सार्वधातुके' इति द्वितीयः, तत्र च नेत्यनुवर्त्तते, अयञ्च योगः पूर्वयोगस्यासर्वविषयत्वज्ञापनार्थः। तेन छन्दसि 'बहुलं प्रतिषेधो भविष्यति। **जुजोषदिति ।** 'जुषी प्रीतिसेवनयोः' लेट्,

**पदमञ्जरी**

**वेदानीति ।** 'विद ज्ञाने', लोडादि यथायोगं पूर्ववत्, शपो लुक्। **नेनेक्तीति ।** लट्, तिप्, कुत्वम्। **पिद्ग्रहणमुत्तरार्थमिति ।** 'तृणह इम्' पिति यथा स्यात्, इह तु पितोऽन्यत्रापि 'सार्वधातुकमपित्' इति ङित्त्वाद्भवितव्यमेव प्रतिषेधेन। **निनेजेति ।** णल्, स च 'लिट् च' इत्यार्द्धधातुकसंज्ञः।

**जुजोषदिति ।** 'जुषी प्रीतिसेवनयोः', लेट्, व्यत्ययेन परस्मैपदम्, तिप्, 'इतश्च लोपः परस्मैपदेषु', 'लेटोऽडाटौ' इत्यट्, व्यत्ययेन शपः श्लुः, द्विर्वचनम्। यद्यत्र गुणप्रतिषेध इष्यते, पस्पशाते इत्यादौ उपधा-

**भावबोधिनी**

धातु का द्वित्व, अभ्यासादिकार्य के बाद निनिज् आ+नि, 'णिजां त्रयाणां गुणः श्लौ' सूत्र से अभ्यास ( = प्रथम ) का गुण करने के बाद लघूपध गुण प्राप्त होने पर प्रस्तुत सूत्र निषेध कर देता है—नेनिजानि। इसी प्रकार अन्यों में भी समझें। ] अनेनिजम्, अवेविजम्, पर्यवेविषम्। [ उपर्युक्त तीनों धातुओं के लङ् = मिप् = अम् आदेश के रूप हैं। उपधागुण का निषेध होता है। ]

अभ्यस्तसंज्ञक धातु का—इसका क्या फल है ? वेदानि। [ विद् + लोट् = मिप् = नि आदि में द्वित्व न होने से अभ्यस्त संज्ञा नहीं होती है। ]

अजादि प्रत्यय परे रहते—इसका क्या फल है ? नेनेक्ति। [ निज् + लट् = तिप् आदि में हलादि प्रत्यय होने से निषेध नहीं होता है, उपधागुण होता है। ]

पित् का ग्रहण उत्तरसूत्र में अनुवृत्ति के लिये है।

सार्वधातुक परे—इसका क्या फल है ? निनेज। [ यहाँ लिट् आर्धधातुक है। अतः निषेध नहीं होता है। ]

लघूपध का ही निषेध होता है—जुहवानि। अजुहवम्। [ 'हु' इस धातु के लोट् तथा लङ् के रूप हैं ] यहाँ द्वित्वादि के बाद जुहु आ नि, जुहु अ अम् में 'सार्वधातुकार्धधातुकयोः' से जो इगन्त अङ्ग का गुण किया गया है उसका प्रतिषेध नहीं होता है, गुण होता ही है। यहाँ केवल 'लघु' का सन्दर्भ समझना चाहिए। ]

❀ वेद में बहुलरूप से होता है ऐसा कहना चाहिये। ❀ उदा० जिससे 'जुजोषत्' इसमें हो सके।

पस्पशाते। चाकशीति। वावशीति। **यङ्लुकि छान्दसमुपधाह्रस्वत्वं द्रष्टव्यम्। पस्पशाते—इत्यत्राभ्यासह्रस्वत्वं च।**

**प्रकृत्यन्तराणां वा स्पशिकशिवशीनामेतानि रूपाणि॥**

**न्यासः**

तिप्, 'लेटोऽडाटौ' इत्यट्, तुदादित्वाच्छः, तस्य 'बहुलं छन्दसि' इति श्लुः, 'श्लौ' इति द्विर्वचनम्। लघूपधगुणः। यदभ्यस्तस्याचि पिति सार्वधातुके गुणप्रतिषेध इष्यते, पस्पशाते, चाकशीति, वावशीतीत्यत्रोपधाह्रस्वत्वमिष्यते, तन्न प्राप्नोति; तस्मादभ्यस्तानामुपधाह्रस्वत्वमेव वक्तव्यम्, न गुणप्रतिषेधः; ह्रस्वत्वे हि नेनिजानीत्येवमादि सिध्यति, पस्पशाते इत्यादि च ?—इति यश्चोदयेत्, तं प्रत्याह—**पस्पशाते इत्यादि।** स्पशिरिति गणपरिपठितो धात्वन्तरमस्त्येव, तस्माद् यङ्, तस्य 'यङोऽचि च' इति लुक्, द्विर्वचनम् 'शपूर्वाः खयः' इति खयः शेषः, अभ्यासस्य ह्रस्वत्वे कृते 'दीर्घोऽकितः' इति दीर्घः, 'व्यत्ययो बहुलम्' इति वर्णव्यत्ययेनोपधाया अभ्यासस्य च ह्रस्वः, लेट्, व्यत्ययेनैवात्मनेपदम्, आट्। **चाकशीतीति**। 'काशृ दीप्तौ', 'कुहोश्चुः' इत्यभ्यासस्य चुत्वम्, तिप्, 'यङो वा' इतीट्। **वावशीतीति।** 'वाशृ शब्दे', शेषं यथायोगं पूर्ववत्। **पस्पशाते इत्यत्राभ्यासह्रस्वत्वं चेति।** चकारादुपधाह्रस्वत्वञ्च। इतरत्र तूपधाह्रस्वत्वमेव, नाभ्यासस्य ह्रस्वत्वम्।

**प्रकृत्यन्तराणां वेति।** 'स्पश बाधनस्पर्शनयोः,' 'कश गतिशासनयोः,' **'वशकान्तौ'**—एतानि प्रकृत्यन्तराणि ह्रस्वोपधानि सन्तीति, अत एषामेवैतानि रूपाणि। तस्माद् यथान्यासमेवास्तु॥ ८७॥

**पदमञ्जरी**

ह्रस्वत्वमिष्यते, तन्न प्राप्नोति। तस्मादभ्यस्तानामुपधाया ह्रस्वत्वमेव विधेयम्, न गुणप्रतिषेधः कथं नेनिजानित्यादि, गुणे कृते उपधाह्रस्वत्वम्, 'एच इग्घ्रस्वादेशे', सिद्धमिष्टम्? अत आह—**पस्पशाते इत्यादि।** स्पशि**र्वार्तिककारवचनाद**पठितोऽपि धातुः, तस्माल्लेट्, व्यत्ययेनात्मनेपदम्, टेरेत्वे 'लेटोऽडाटौ' इत्याट्, शपः 'बहुलं छन्दसि' इति श्लुः, निर्वचनम्। अथ वा—यङ्लुकि छान्दसमभ्यासस्य ह्रस्वत्वम्। **चाकशीतीति।** 'काशृ दीप्तौ', यङ्लुक्, लट्, तिप्, 'यङो वा' इतीडागमः। **वावशीतीरिति।** 'वाशृ दीप्तौ', यङ्लुक्, लट्, शत्रादेशः, ङीप्, शस्। **छान्दसं ह्रस्वत्वमिति।** यदि तु गुणनिषेधं प्रत्याख्यायोपधाह्रस्वत्वमुच्येत, तदा नर्नृतीतीत्यादौ ऋदुपधे रपरे गुणे कृते ह्रस्वभाविन्युपधा नास्तीति रूपं न सिद्ध्येत। तस्माच्छान्दसमेव ह्रस्वत्वमेष्टव्यमिति भावः। **प्रकृत्यन्तराणामेवेति।** 'स्पश बाधनस्पर्शनयोः', 'कश गतिशासनयोः', **'वश कान्तौ'**॥ ८७॥

**भावबोधिनी**

'पस्पशाते' 'चाकशीति' 'वावशीति' इनमें * यङ् लुक् में छान्दस उपधाह्रस्वत्व अजादि परे देखना चाहिए। * 'पस्पशाते' इसमें अभ्यास का ह्रस्वत्व भी देखना चाहिये।

अथवा स्पशि, कशि, वशि—इन दूसरी ही प्रकृतियों के ये रूप हैं। [ 'काशृ दीप्तौ' 'वाशृ दीप्तौ' तथा अपठित 'स्पशि' धातु के रूप नहीं है। ]

**विमर्श**—प्रस्तुत सूत्र गुण का निषेध करता है। इस पर वार्तिककार ने तीन धातुओं में उपधा के ह्रस्वत्व का विधान माना है। वे धातुयें हैं—'स्पशि' [ यह वार्तिककार द्वारा स्वीकृत है ], 'काशृ दीप्तौ' 'वाशृ शब्दे'। यङ्लुक् में दो अन्त्य के उदा० लट् में हैं और 'पस्पशाते' यह लट् का रूप है। इनमें यङ् लुक् की सारी प्रक्रिया द्वित्व, अभ्यास लोप आदि के बाद 'दीर्घोऽकितः' से अभ्यास का दीर्घ कर देने पर 'पा स्पृश् आ ते' में अभ्यास का और उपधा का ह्रस्व निपातित होता है। अन्य दोनों में केवल उपधा का ह्रस्वत्व ही होता है।

जब 'स्पश', 'कश' और 'वश' धातुओं के रूप माने जाते हैं तब उपधा में ह्रस्व ही है। निपातन की आवश्यकता नहीं है केवल 'स्पश' के अभ्यास का ह्रस्वत्व करना चाहिए॥ ८७॥

## ३४८५. भूसुवोस्तिङि ॥ ८८ ॥ (२२२४)

**भू, सू—इत्येतयोस्तिङि सार्वधातुके गुणो न भवति । अभूत्, अभूः, अभूवम् । सुवै, सुवावहै, सुवामहै । । सूतेर्लुग्विकरणस्येदं ग्रहणम् ।**

**सुवति—सूयत्योर्विकरणेन तिङो व्यवधानम् । विकरणस्यैव ङित्वाद् गुणाभावः सिद्धः ।**

**तिङीति किम् ? भवति ।**

**'सार्वधातुके' इत्येव—व्यतिभविषीष्ट ।**

### न्यास

**भूसुवोस्तिङि ॥ अभूदिति ।** लुङ्, 'गतिस्था' इत्यादिना सिचो लुक् । **सुवावहै, सुवामहै इति ।** 'षूङ् प्राणिगर्भविमोचने,' लोट्, वहिमहिङो, टेरेत्वम्, 'एत ऐ', अदादित्वाच्छपो लुक्, 'आडुत्तमस्य पिच्च' इत्याट्, 'अचि श्नुधातु' इत्यादिनोवङ् । अथ कस्मात् सूतेरादादिकस्योपन्यासः कृतः, न सुवतिसूयत्योस्तौदादिकदैवादिकयोः ? इत्यत आह—**सूतेर्लुग्विकरणस्येत्यादि ।**

ननु च लुग्विकरणपरिभाषया 'षू प्रेरणे' इत्येतस्य शविकरणस्य तौदादिकस्य, 'षूङ् प्राणिप्रसवे' इत्यस्य दैवादिकस्य च ग्रहणं युक्तम् ? इत्यत आह—**सुवतिसूयत्योरित्यादि** तिङीति सप्तमीनिर्देशादनन्तरे तिङि प्रतिषेधेन भवितव्यम् । न च सुवतिसूयतिभ्यामनन्तरस्तिङ् सम्भवति, विकरणेन व्यवधानात् । तस्मान्न तयोर्ग्रहणमिति सूतेरेव ग्रहणं युक्तमित्यभिप्रायः । स्यादेतत्—वचनप्रामाण्याद्विकरणेन व्यवधानेऽपि प्रतिषेधो भविष्यतीत्यतस्तयोरेव ग्रहणं युक्तमिति ? अत आह—**विकरणस्यैवेत्यादि ।** तयोर्हि 'सार्वधातुकमपित्' इति विकरणङित्वम्, तत्र 'क्ङिति च' इत्यनेनैव सिद्धः प्रतिषेध इति निरर्थकं तयोर्ग्रहणं स्यात्, अतो न ताविह गृह्येते । **भवतीति ।** तिङीति वचनादिहातिङि शपि परतो निषेधो न भवति । **व्यतिभविषीष्टेति ।** आशिषि लिङ् । स च 'लिङाशिषि' इत्यार्धधातुकसंज्ञकः, सीयुट्, 'कर्त्तरि कर्मव्यतीहारे' इत्यात्मनेपदम्, सुट्, षत्वम्, ष्टुत्वम् ।

### पदमञ्जरी

**भूसुवोस्तिङि ॥ अभूदिति ।** 'लुङ्, 'गातिस्था' इत्यादिना सिचो लुक् । **सुवै, सुवावहै, सुवामहै इति ।** 'षूङ् प्राणिगर्भविमोचने', लोट्, टेरेत्वम्, 'एत ऐ', 'आडुत्तमस्य पिच्च', शपो लुक्, उवङादेशः ।

**सुवतिसूयत्योस्त्विति ।** 'षू प्रेरणे' तुदादिः, 'षूङ् प्राणिप्रसवे' दिवादिः । **भवतीति ।** शपि गुणः ।

**व्यतिभविषीष्टेति ।** आशिषि लिङ्, 'लिङाशिषि' इत्यार्धधातुकसंज्ञा, 'कर्तरि कर्मव्यतिहारे' इत्यात्मनेपदम् ।

### भावबोधिनी

'भू' तथा 'सू' का सार्वधातुक तिङ् परे गुण नहीं होता है । उदा० आभूत, अभूः, अभूवम् । [ भू धातु लुङ् लकार प्रथम, मध्यम, उत्तम पुरुषों के एकवचन में सिच् लोप करने पर प्राप्त गुण का प्रतिषेध होता है । ] सुवै, सुवावहै, सुवामहै । 'सू' विकरण के लोप वाली अर्थात् आदादिक का रूप है । [ लोट् आत्मनेपद उत्तमपुरुष एकवचन में आट् स् + आ + इ, में गुण निषेध के बाद उवङ् होता है—स् उव् आ + ए, टि का एत्व, "एत ऐ" से ए का 'ऐ' होने पर रूप बनता है । वहि तथा महिङ् में भी यही प्रक्रिया है । ]

'षू' प्रेरणार्थक तथा 'षूङ् प्राणि-प्रसवार्थक में विकरण ( तौदादिक श और दैवादिक श्यन् ) का व्यवधान है । [ यह अव्यवहित तिङ् परे ही निषेध करता है । इन दोनों में तो ] विकरण के ही ङित् होने के कारण गुण का अभाव सिद्ध है ।

तिङ् परे—इसका क्या लाभ है ? भवति । [ भू + शप् + तिप् में शप् का व्यवधान होने से निषेध नहीं होता है । ]

सार्वधातुक में ही—व्यतिभविषीष्ट । [ आशीर्लिङ् में कर्मव्यतिहार में आत्मनेपद है । सार्वधातुक न होने से निषेध नहीं होता है । ]

अथ बोभवीतीति यङ्लुकि गुणप्रतिषेधः कस्मान्न भवति ? ज्ञापकात् । यदयं बोभूत्विति गुणाभावार्थं निपातनं करोति ॥

## २४८६. उतो वृद्धिर्लुकि हलि ॥ ८९ ॥ (२४४३)

'सार्वधातुके', 'पिति' इति वर्त्तते । उकारान्तस्याङ्गस्य वृद्धिर्भवति लुकि सति हलादौ पिति सार्वधातुके । यौति, यौषि, यौमि । नौति, नौषि, नौमि । स्तौति, स्तौषि, स्तौमि ।

उत इति किम् ? एति, एषि, एमि । लुकीति किम् ? सुनोति, सुनोषि, सुनोमि । हलीति किम् ? यवानि, रवाणि ।

'पिति' इत्येव—युतः, रुतः ।

अपि स्तुयाद्राजानम्—इत्यत्र हि 'ङिच्च पिन्न भवति' इति पित्त्वप्रतिषेधाद् वृद्धेरभावः ।

**न्यासः**

अथेत्यादि । प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणं भवतीति यङ्लुकोऽपि ग्रहणे सति तत्रापि प्रतिषेधेन भवितव्यमिति भावः । बोभवीतीति । 'गुणो यङ्लुकोः' इत्यभ्यासस्य गुणः । ज्ञापकादित्यादि । यदि यङ्लुक्यपि प्रतिषेधः स्यात्, गुणाभावार्थं निपातनं न कुर्यात्, कृतञ्च, तस्मादेव ज्ञापयति—यङ्लुक्ययं प्रतिषेधो न भवतीति ॥ ८८ ॥

उतो वृद्धिर्लुकि हलि ॥ गुणे प्राप्त उतो वृद्धिरारभ्यते । यौतीत्यादौ पूर्ववच्छपो लुक् ।

सुनोतीति । श्नुः । यवानीति लोट् । उत्तमपुरुषैकवचनम् । युतः, रुत इति । लट्, तस् । तपरकरणं सूतीत्यत्र मा भूदिति ।

अथ अपि स्तुयाद् स्तुयाद् राजानमित्यत्र कस्मान्न भवति, अस्ति ह्यत्रापि यासुटस्तिङ्भक्तत्वात् तिङ्ग्रहणेन ग्रहणमिति प्राप्तिः, न च शक्यते वक्तुम्—'क्ङिति च' इति प्रतिषेधो भविष्यतीति; यस्मादिग्ल-

**पदमञ्जरी**

अथेति । प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणात्प्रसङ्गः । ज्ञापकादिति । सूतेस्तु निपातनाभावाद् गुणनिषेधो भवत्येव—सोषुवीतीति ॥ ८८ ॥

उतो वृद्धिर्लुकि हलि ॥ यवानीति । लोडुत्तमैकवचनम् ।

अपि स्तुयादिति । अपिः सम्भावने कर्मप्रवचनीय इति 'उपसर्गात्सुनोति' इत्यादिना षत्वं न भवति । ङिच्च पिन्न भवतीति । यासुडादेः सार्वधातुकस्य साक्षाच्छिष्टं ङित्त्वमनवकाशम्, तिबादीनां तु पित्त्वं

**भावबोधिनी**

प्रश्न है कि 'बोभवीति' इस ( भू के ) यङ्लुक् में गुण का प्रतिषेध क्यों नहीं होता है ? ज्ञापक के कारण [ गुणनिषेध नहीं होता है ] । जो कि ये आचार्य 'बोभूतु' इस [ वैदिक प्रयोग में ] गुण के अभाव के लिये "दाधर्तिदर्धर्तिदर्धर्षि-"बोभूतुतेतिक्ते०" (७।४।६५) सूत्र द्वारा ] निपातन करते हैं । [ इससे ज्ञात होता है गुण प्राप्त है । उसका अभाव निपातन करने से लौकिक प्रयोग में गुण निषेध होता है । ] ॥ ८८ ॥

'सार्वधातुक' 'पित् परे' इनकी अनुवृत्ति होती है । उकारान्त अङ्ग की वृद्धि लुक् होने पर हलादि पित् सार्वधातुक परे रहते होती है । उदा०—यौति, यौषि, यौमि । नौति, नौषि, नौमि । स्तौति, स्तौषि, स्तौमि । [ 'यु मिश्रणामिश्रणयोः' 'णु स्तुतौ' धातुओं के प्रथम, मध्यम, उत्तम पुरुषों के एकवचन में शप् का 'अदिप्रभृतिभ्यः' से लुक् करने पर वृद्धि होती है । ]

ह्रस्व उकार की—इसका क्या फल है ? एति, एषि, एमि । [ इण् के रूपों में वृद्धि नहीं होती हैं । ] लुक् में—इसका क्या फल है ? सुनोति, सुनोषि, सुनोमि । [यहाँ 'श्नु' विकरण है लुक् नहीं है । अतः वृद्धि नहीं होती है ।]

हलादि में—इसका क्या फल है ? यवानि, रवणि । [ लोट् उत्तम पुरुष एकवचन में मि = नि, आट् आगम होने से व्यवधान है । अतः गुण ही होता है वृद्धि नहीं । ]

'नाभ्यस्तस्य' ( ७।३।८७ ) इत्येतदिहानुवर्त्तते—योयोति, रोरोति—इत्येवमाद्यर्थम् ॥

**३४८७. ऊर्णोतेर्विभाषा ॥ ९० ॥ (२५४५)**

**ऊर्णोतेर्विभाषा वृद्धिर्भवति हलादौ पिति सार्वधातुके । प्रोर्णौति, प्रोर्णोति । प्रोर्णौषि, प्रोर्णोषि । प्रोर्णौमि, प्रोर्णोमि ।**

**'हलि' इत्येव—प्रोर्णवानि ॥**

**३४८८. गुणोऽपृक्ते ॥ ९१ ॥ (२४४८)**

**ऊर्णोतेर्धातोरपृक्ते हलि पिति सार्वधातुके गुणो भवति । प्रोर्णोत् । प्रोर्णोः ।**

**न्यासः**

क्षगाया वृद्धेः प्रतिषेधोऽसौ, न चेयमिग्लक्षणा; साक्षान्निर्दिष्टस्थानिकत्वात्, 'यस्या हि वृद्धेः स्थानो न निर्दिश्यते सेग्लक्षणा' इत्युक्तम् ? इत्याह—**अपि स्तुयादित्यादि ।** अत्र हि 'यासुट् परस्मैपदेषूदात्तो ङिच्च' इति सार्वधातुकं ङित्; 'ङिच्च पिन्न भवति' इति ङित्त्वेन पित्त्वस्य बाधितत्वात् । तस्मात् पित्युच्यमाना वृद्धिरिहापि न भवति । अथ योयोति, रोरोतीत्यत्र कस्मान्न भवति, लुकि सति भवति ह्येतदङ्गद्वयमुकारान्तम् ? इत्याह—**नाभ्यस्तस्येत्यादि ।** गतार्थम् । आदिशब्देन[1] नोनोतीत्येवमादीनां ग्रहणम् ॥ ८९ ॥

**ऊर्णोतेर्विभाषा ॥** पूर्वेण नित्यायां वृद्धौ प्राप्तायां विकल्पार्थोऽयमुच्यते । **प्रोर्णोतीति ।** पूर्ववच्छपो लुक् । **प्रोर्णवानीति ।** लोडुत्तमपुरुषैकवचनम् ॥ ९० ॥

**गुणोऽपृक्ते ॥** विभाषेति निवृत्तम् । पूर्वेण प्राप्तायाः पाक्षिक्या वृद्धेरयमपवादः । ननु हलीत्यनुवर्त्तत एव, तत्र सामर्थ्यादपृक्त एव भविष्यतीति न तदादौ, न हि हलादिसमुदायो हल् भवति, तत् किमपृक्तग्रहणेन ?

**पदमञ्जरी**

लकारान्तेषु सावकाशम्, तेन 'ङिच्च पिन्न भवति' इति 'पिच्च ङिन्न भवति' इति वचनद्वयसद्भावेऽपि 'ङिच्च पिन्न भवति' इत्येतदेवात्र प्रवर्त्तत इति भावः । 'क्ङिति च' इति प्रतिषेधस्त्वत्र न लभ्यते, किं कारणम् ? इक इत्येवमिक्संशब्दनेन या वृद्धिस्तस्याः स प्रतिषेधः, इह तु 'उतः' इति निर्दिष्टस्थानिकत्वादिक्परिभाषा नोपतिष्ठते ॥ ८९,९० ॥

**गुणोऽपृक्ते ॥** ननु च 'हलि' इति वर्त्तते, 'पिति' इति च, अङ्गेन च प्रत्यय उपस्थाप्यते; **तत्र** हलात्मके प्रत्यये पिति विधीयमानो गुणोऽपृक्त एव भविष्यति, नार्थोऽपृक्तग्रहणेन ? इत्यत आह—**हलीति**

**भावबोधिनी**

पित् परे ही—युत , रुतः । [यहाँ अपित् है । अतः वृद्धि नहीं होती है ।] 'अपि स्तुयाद् राजानम्' यहाँ 'ङित् पित् नहीं होता है' इस नियम से [ यासुट् होने के कारण तिप् के भी ङित् हो जाने से ] पित्त्व का प्रतिषेध होने से वृद्धि का अभाव है । [भाव यह है कि 'यासुट् परस्मैपदेषूदात्तो ङिच्च' इस सूत्र से होने वाला यासुट् ङित् होता है अतः सार्वधातुक तिप् आदि भी ङित् हो जाते हैं और 'जो ङित् होता है वह पित् नहीं होता है' इसलिये वृद्धि का वारण हो जाता है । ]

'नाभ्यस्तस्य' ( अभ्यस्त की नहीं होती है )—इसकी इस सूत्र में भी अनुवृत्ति होती है—'योयोति, रोरोति—आदि के [वृद्धि के अभाव के] लिये । [अतः यङ्लुक् में द्वित्व=अभ्यस्तसंज्ञा के कारण वृद्धि नहीं होती है । ] ॥८९॥

हलादि पित् सार्वधातुक परे रहते 'ऊर्णुञ्' की वृद्धि विकल्प से होती है । उदा० प्रोर्णौति, प्रोर्णोति । प्रोर्णौषि, प्रोर्णोषि । प्रोर्णौमि, प्रोर्णोमि ।

हलादि परे ही होती है—प्रोर्णवानि । [ उत्तम पुरुष लोट् में मिप् के पूर्व आट् आगम होने से वैकल्पिक वृद्धि अथवा पूर्वसूत्र से नित्य वृद्धि नहीं होती है । ] ॥ ९० ॥

अपृक्त ( एक अल् रूप प्रत्यय ) हल् पित् सार्वधातुक प्रत्यय परे रहते 'ऊर्णुञ्' का गुण होता है । उदा० प्रोर्णोत् प्रोर्णोः । [ प्र + ऊर्णु + लङ् = तिप्, शप् का लुक्, 'इतश्च' से इकार का लोप प्र ऊर्णु + त् उपसर्ग और

१. चोकोति—इति पाठा० ।

'हलि' इति वर्तमाने यदपृक्तग्रहणं क्रियते, तेनैव ज्ञाप्यते—भवत्येषा परिभाषा 'यस्मिन्विधिस्तदादावल्ग्रहणे' ( व्या० प० १२७ ) इति ॥

**३४८९. तृणह इम् ॥ ९२ ॥**

'तृणह्' इत्येतस्याङ्गस्य इमागमो भवति हलि पिति सार्वधातुके । तृणेढि । तृणेक्षि । तृणेह्मि । अतृणेट् ।

**न्यासः**

इत्यत आह—**हलीत्यनुवर्तमान इत्यादि** । अपृक्तग्रहणं ह्येवमर्थं क्रियते—हलीत्यनुवृत्तेस्तदादौ मा भूदिति । यदि चेयं परिभाषा न स्यात्, अपृक्तग्रहणमनर्थकत्वान्न कुर्यात् । हल्युच्यमानो गुणः कः प्रसङ्गो यस्तदादावपि स्यात् ? नैव प्राप्नोति; तस्या हलात्मकत्वात् । कृतञ्चेदमपृक्तग्रहणम्, अतस्तेनास्तीयं परिभाषेति ज्ञाप्यते । अथ 'नापृक्ते' इत्येवं कस्मान्नोक्तम्, किं गुणग्रहणेन, वृद्धौ प्रतिषिद्धायामुत्सर्गेण गुणेनैव सिध्यति ? नैतदस्ति; अनन्तरोक्ताया विभाषायाः प्रतिषेधो विज्ञायेत, तथा च नित्यं वृद्धिः स्यात् ॥ ९१ ॥

**तृणह इम्** ॥ 'तृह हिंसायाम्' इति रुधादिः, 'तृहू तृम्हू हिंसार्थाः' इति तुदादौ—तयोराद्यस्येदं ग्रहणम्, नेतरस्य । तस्य विकरणेन व्यवधानादनन्तरो हल् न सम्भवतीति । **तृणेढीति** । 'हो ढः', 'झषस्तथोर्धोऽधः' इति धत्वम्, 'ष्टुना ष्टुः' इति ष्टुत्वम्, 'ढो ढे लोपः', तस्येमागमः, 'आद्गुणः' । **तृणेक्षीति** । 'षढोः कः सि' इति कत्वम् । **अतृणेडिति** । लङ्, तिप्, हल्ङ्यादिलोपः, ढत्वे कृते 'झलां जशोऽन्ते' इति जश्त्वम्—ढकारस्य डकारः, तस्य 'वावसाने' इति चर्त्वम्–टकारः ।

**पदमञ्जरी**

**वर्त्तमान इति** । अपृक्तग्रहणं ह्येवमर्थं क्रियते—हलादौ मा भूदिति, यदि चेयं परिभाषा न स्याद्, अपृक्तग्रहणं न कुर्यात्, कृतं तु, ज्ञापयति—भवत्येषा परिभाषेति । इदं त्वत्र वक्तव्यम्—तदन्तविधिनिवृत्त्यर्थमपृक्तग्रहणं कस्मान्न भवतीति, तदन्तविधौ हि लङि मिपोऽम्भावेऽपि प्रसङ्गः स्यात् । ननु भवत्येव तत्र गुणः, कथं भवति ? यदा पूर्वत्र वृद्धिविधावपि तदन्तविधिरेव भवति । तदेतदपृक्तग्रहणं कथं तदादिविधेर्ज्ञापकमिति चिन्त्यम् । 'नापृक्ते' इत्युच्यमानेऽनन्तराया विभाषिताया वृद्धेः प्रतिषेधः स्यात्, नित्या तु वृद्धिः स्यादेव । तस्माद् गुणग्रहणम् ॥ ९१ ॥

**तृणह इम्** ॥ **तृणेढीति** । इमि कृते श्नमोऽकारेण सह 'आद्गुणः', 'हो ढः', 'झषस्तथोर्धोऽधः', ष्टुत्वम्, ढलोपः । **तृणेक्षीति** । 'षढोः कः सि' । **अतृणेडिति** । 'लङ्, तिप्सिपोरन्यतरः, हल्ङ्यादिलोपः, ढत्वजश्चचर्त्वानि ।

**भावबोधिनी**

धातु का आद्गुणः' से गुण एकादेश, पूर्वसूत्र से प्राप्त होने वाली वैकल्पिक वृद्धि का अपवाद गुण—प्रोर्णोत् । 'सि' के इ का लोप, स् का रुत्व विसर्ग—प्रोर्णोः । ]

'हलि' इसकी अनुवृत्ति रहते हुए जो 'अपृक्त' का ग्रहण किया है, उसी से ज्ञापित होता है—यह परिभाषा है—अल्ग्रहण में जिसके परे रहते विधि होती है वह तदादि (= वह आदि में है जिसमें उस)में मानी जाती है ।" [ यदि हल् से केवल हल् ही लिया जाता तो प्रस्तुत सूत्र में 'अपृक्त' ग्रहण की आवश्यकता नहीं क्योंकि "अपृक्त एकाल् प्रत्यय" सूत्र से एक अल् रूप प्रत्यय की ही अपृक्त संज्ञा होती । हल् भी अल् के अन्तर्गत आता है । फलतः वह अपृक्त होता ही है । यही 'अपृक्त होता है । यही 'अपृक्त' ग्रहण यह ज्ञापित करता है कि अल् का ग्रहण जहाँ है वहाँ अलादि मानकर विधि करनी चाहिए । फलतः यहाँ भी हलादि में विधि प्रसक्त होती, उसके निवारणार्थ 'अपृक्त' का ग्रहण चरितार्थ होता है । ] ॥ ९१ ॥

हलादि पित् सार्वधातुक परे रहते 'तृणह' इस अङ्ग को इम् आगम होता है । उदा०—तृणेढि । तृणेक्षि । तृणेह्मि । अतृणेट् । [ 'तृह हिंसायाम्' इस रुधादिगणीय धातु से लट्, तिप्, शप् को श्नम् = न, मित् होने से अच् के बाद आगम होता है—तृ न ह् ति, प्रस्तुत सूत्र से इम् आगम भी मित् होने से अन्त्य अच् 'न' के बाद ही होता है—

**वर्णाश्रयेऽप्यत्र प्रत्ययलक्षणमिष्यते ।**
**हलीति किम् ? तृणहानि ।**
**'पिति' इत्येव—तृण्ढः**[1] **।**
**'तृणह्'—इत्यागतश्नम्को गृह्यते, श्नमि कृते इमागमो यथा स्यादिति ।।**

**न्यासः**

ननु चात्र लुप्तत्वात् सार्वधातुकस्येमागमेन न भवितव्यम्, लुप्तोऽपि तत्र प्रत्ययलक्षणेन भविष्यतीति चेत् ? न; वर्णाश्रये प्रत्ययलक्षणं नास्तीत्यत आह—**वर्णाश्रय इत्यादि** । एवं मन्यते—'वर्णाश्रये नास्ति प्रत्ययलक्षणम्' इति नानेन सर्वथा वर्णाश्रयस्य प्रत्ययलक्षणस्य प्रतिषेधः क्रियते, किं तर्हि ? 'प्रत्ययलोपे प्रत्ययलक्षणम्' इत्यत्र प्रत्ययग्रहणस्य प्रयोजनं व्याख्यायते । प्रत्यये लुप्ते द्विविधं कार्यं विज्ञायते—प्रत्ययनिमित्तम्, अप्रत्ययनिमित्तञ्च । तत्र यत् प्रत्ययनिमित्तं तत् प्रत्ययलोपे यथा स्यात्, इतरन्मा भूदित्येवमर्थम् । तेन गवे हितं गोहितमित्यत्र लुप्तायां विभक्तावृवादेशो न भवति । अवादेशस्य ह्यचीत्यधिकाराद् वर्णो निमित्तम्, न प्रत्यय एव । इह त्वङ्गाधिकारात् प्रत्यय एव हलादिराश्रीयत इतीमागमस्य प्रत्ययनिमित्तता । तेनासौ प्रत्ययलक्षणेन भवत्येव । यदि ह्यसौ प्रत्ययनिमित्तस्तत् कथं वर्णाश्रयेऽप्यत्रेत्युक्तम् ? अतृणेडित्यत्रोदाहरणे प्रत्ययस्य वर्णमात्रत्वात् प्रत्ययविशेषणत्वेन वा वर्णस्याश्रयणादेवमुक्तम्, न त्वप्रत्ययनिमित्तत्वात्, वर्णस्यापि तकारस्य प्रत्ययत्वापरित्यागात् । **तृणहानीत्यत्र** तदेव लोडुत्तमपुरुषैकवचनम् । **तृण्ढ इति** । तस्, श्नसोरल्लोपः', पूर्ववड्ढत्वादि, 'नश्चापदान्तस्य झलि' इत्यनुस्वारः, 'अनुस्वारस्य ययि परसवर्णः इति परसवर्णो णकारः ।

अथ किमर्थमिह तृहिरागतश्नम्को गृह्यते, न तृह इत्येवोच्येत ? इत्यत आह—**तृणह इत्यादि** । यद्यागतश्नम्कस्य ग्रहणं न क्रियेत, ततो नाप्राप्ते श्नम्ययमारभ्यते, देशहेतुकश्च तयोर्विरोधोऽस्तीति श्नम इमा

**पदमञ्जरी**

ननु च 'हलादौ' इत्युच्यते, न चात्र हलादिं पश्यामः ? प्रत्ययलक्षणेन । 'वर्णाश्रये नास्ति प्रत्ययलक्षणम्' ? अत आह—**वर्णाश्रयेऽप्यत्रेति** । यत्र केवलो वर्ण एव निमित्तं यस्य स वर्णाश्रयः, यथा—गवे हितं गोहितमित्यवादेशः । इह तु पिति सार्वधातुक इति प्रत्यय एव निमित्तम्, हल् तस्य विशेषणम्, तेनासौ प्रत्ययनिमित्तत्वाद्भवत्येवेत्यर्थः । **तृणहानीति** । लोट्, 'मेनिः' । **तृण्ढ इति** । तस् ढत्वादि पूर्ववत्, 'श्नसोरल्लोपः', अनुस्वारपरसवर्णौ ।

अथ किमर्थं तृहिरागतश्नम्को गृह्यते ? रौधादिकस्य 'तृह हिंसायाम्' इत्यस्य ग्रहणं यथा स्यात्, 'तृहि हिंसायाम्' इत्यस्य तौदादिकस्य ग्रहणं मा भूत् । नास्य पिद्धलादिसार्वधातुकमनन्तरं सम्भवति; विकरणेन व्यवधानात् । ननु चास्यापि यङ्लुगन्तस्य सम्भवति, एवं तर्हि सानुबन्धकत्वात् तस्य ग्रहणं न भविष्यति ? अत आह—**तृणह इतीत्यादि** । यद्यागतश्नम्को न गृह्येत, ततो नाप्राप्ते श्नम्यारभ्यमाण इम् तस्य बाधकः स्यात् । अथापि न बाधकः, एवमपि श्नमि कृते इमितीष्टव्यवस्था न स्यात् । विपर्ययोऽपि स्यात्—

**भावबोधिनी**

तृन इह् + ति, 'आद्गुणः' से गुण, 'हो ढः' से ह् का ढ्, 'झषस्तथोर्धोऽधः' त का ध, ष्टुत्व से ध का ढ—तृनेढ् ढि, 'ढो ढे लोपः' से प्रथम ढ् का लोप, ऋ से परे न् का ण—तृणेढि । तृणेढ् + सि, 'षढोः कः सि' से ढ् का क्, प्रत्यय स् का ष्, क् + ष् का क्ष्—तृणेक्षि । अतृणेह् + तिप्, इलोप, हल्ङ्यादि से 'त्' लोप, ह् का ढ्, जश्त्व से ड्, चर्त्व से ट् । ]

[ अतृणेट् में 'ति' = सार्वधातुक का लोप हो जाने से 'इम्' आगम नहीं होना चाहिये ? ] 'वर्णाश्रित विधि में भी यहाँ प्रत्ययलक्षण इष्ट है ।' [ अतः लोप कर देने पर भी उसे मानकर 'इम्' होता है । ]

हलादि परे—इसका क्या फल है ? तृणहानि । [ लोट् में मिप् से पूर्व आट् आगम है । ]

पित् परे—इसका क्या फल है ? तृण्ढः । [ तृह + तस् का रूप है । केवल श्नम् होता है । ]

---

१. 'तृणु' इति मुद्रितः पाठः ।

**३४९०. ब्रुव ईट् ॥ ९३ ॥ (२४५२)**

'ब्रू'—इत्येतस्मादुत्तरस्य हलादेः पितः सार्वधातुकस्य ईडागमो भवति। ब्रवीति। ब्रवीषि। ब्रवीमि। अब्रवीत्।

हलीत्येव—ब्रवाणि। पितीत्येव—ब्रूतः॥

**३४९१. यङो वा ॥ ९४ ॥ (२६५१)**

यङ उत्तरस्य हलादेः पितः सार्वधातुकस्य ईडागमो भवति वा। शाकुनिको लालपीति। दुन्दुभि-

**न्यासः**

बाधा स्यात्। असत्यामपि बाधायामनिष्टा व्यवस्था स्यात्—पूर्वमिम्, पश्चात् श्नम्; ततश्चानिष्टं रूपं स्यात्। आगतश्नम्कस्य ग्रहणे सश्नम्कस्य तृहेरिमि विधीयमाने समावेशस्तयोर्भवति, इष्टा च व्यवस्था सम्पद्यते—पूर्वं श्नम्, पश्चादिम्; तस्मात् श्नमि कृते सतीमागमो भवेदित्येवमर्थमागतश्नम्कस्तृहिर्गृह्यते॥ ९२॥

**ब्रुव ईट्** ॥ 'ब्रुवः' इत्येषा पञ्चम्यकृतार्था पूर्वत्र कृतार्थायाः 'सार्वधातुके' इत्यस्याः सप्तम्याः षष्ठीत्वं प्रकल्पयिष्यति, 'तस्मादित्युत्तरस्य' इति वचनात्। तेन हलादेः पितः सार्वधातुकस्यैवायमीड् विज्ञायत इत्यत आह—**ब्रू इत्येतस्मादुत्तरस्य हलादेरित्यादि**। कथं पुनर्हल आगमित्वेन तदादिर्लभ्यते, 'यस्मिन् विधिस्तदादावल्ग्रहणे' इत्युच्यते, न तु यस्य विधिरिति, असति हि तदादिविधाब्रवीदित्यादावेव स्यात्, ब्रवीतीत्यादौ न स्यात्? नैष दोषः; उत्तरत्र ह्यपृक्तग्रहणात् तदादिविधेः सम्भवो गम्यते, अन्यथा ह्यसति तदादिविधौ विनाप्यपृक्तग्रहणेनापृक्त एव भविष्यति, अपृक्तग्रहणमनर्थकं स्यात्। **ब्रवीतीति**। पूर्ववच्छपो लुक्। **ब्रवाणीति**। तदेव लोडुत्तमपुरुषैकवचनम्। **ब्रूत इति**। लट्, तस्॥ ९३॥

**यङो वा** ॥ **लालपीतीत्यादि**। लपिवदिरौतिभ्यो यङ्; पूर्वयोः 'दीर्घोऽकितः' इत्यभ्यासस्य दीर्घः,

**पदमञ्जरी**

पूर्वमिमागमः, पश्चात् श्नमिति। सश्नम्कनिर्देशे तु न श्नमो निवृत्तिर्भवति, इष्टा च व्यवस्था सिध्यति—पूर्वं श्नम्, पश्चादिमिति। अतस्तदर्थमागतश्नम्को गृह्यते। किञ्च—रौधादिकस्यापि यङ्लुगन्तस्य ग्रहणं भवति सश्नम्कनिर्देशादेव॥ ९२॥

**ब्रुव ईट्** ॥ 'ब्रुवः' इति पञ्चमी, न षष्ठी; व्याख्यानात्। तयाऽचरितार्थया पूर्वत्र कृतार्थायाः सार्वधातुक इति सप्तम्याः षष्ठी प्रकल्प्यते। तदाह—**ब्रुव इत्येतस्मादुत्तरस्येति**। इह ब्रूताद्भवानिति तातङ औपदेशिकेन ङित्त्वेन स्थानिवद्भावकृतं पित्त्वं बाध्यते—'ङिच्च पिन्न भवति' इति; तेनेड् न भवति॥ ९३॥

**यङो वा** ॥ **लालपीतीत्यादि**। लपिवदिरौतिभ्यो यङ्लुक्, द्विर्वचनम्। रौतेरभ्यासस्य गुणः।

**भावबोधिनी**

'तृणह' यह आये हुए श्नम् के साथ का ग्रहण किया जाता है, जिससे कि श्नम् करने के बाद ही 'इम्' का आगम हो सके, [ पहले न हो ]॥ ९२॥

'ब्रू' इस धातु से उत्तरवर्त्ती हलादि पित् सार्वधातुक को ईट् का आगम होता है। उदा० ब्रवीति। ब्रवीषि। ब्रवीमि। [ ब्रू + लट्, शप् का लुक्, ईट् ब्रू ई ति, ऊ का गुण, अव् आदेश। ] अब्रवीत्। [ ब्रू + लङ् = तिप्, अट् और ईट् आगम अ ब्रू ई ति, शप् का लुक्, 'ति' के इ का लोप, ऊ का गुण, अव् आदेश। ]

हलादि परे ही होता है—ब्रवाणि। [ ब्रू + लोट् = मि = नि, आट् आगम होने से हलादि परे नहीं है।] पित् परे ही होता है—ब्रूतः। [ ब्रू + तस्, ङित् है। ]॥ ९३॥

यङ् से उत्तरवर्त्ती हलादि पित् सार्वधातुक को विकल्प से ईट् आगम होता है। उदा०—शाकुनिको लालपीति। दुन्दुभिः वावदीति। त्रिधा बद्धो वृषभो रोरवीति, महो देवो मर्त्यां आविवेश। [ पुनः पुनः अतिशयेन वा लपति, पुनः पुनः अतिशयेन वा वदति, पुनः पुनः अतिशयेन वा रौति—इन अर्थों में क्रमशः लप्, वद्, रु—धातुओं से यङ् प्रत्यय और उसका लुक्, प्रत्यय-लक्षण से द्वित्वादि के बाद अभ्यास कार्य, 'दीर्घोऽकितः' से अभ्यास का दीर्घ, रु

र्वावदीति । त्रिधा बद्धो वृषभो रोरवीति । महो देवो मर्त्यां आविवेश । ( ऋ० ४।५८।३ ) ।

न च भवति—वर्वर्ति, चर्कर्ति चक्रम् ।

हलादेः पितः सार्वधातुकस्य यङन्तादभाव इति यङ्लुगन्तस्योदाहरणम् ॥

**३४६२. तुरुस्तुशम्यमः सार्वधातुके ॥ ९५ ॥ (२४४४)**

'तु' इति सौत्रोऽयं धातुः, 'रु शब्दे', ( धा० पा० १०३५ ) 'ष्टुञ् स्तुतौ', ( धा० पा० १०४४ ) 'शम उपशमे', ( धा० पा० १२०२ ) 'अम गत्यादिषु' ( धा० पा० ४६५ )—इत्येतेभ्यः परस्य सार्वधातुकस्य हलादेर्वा ईडागमो भवति । उत्तौति, उत्तवीति । उपरौति, उपरवीति । उपस्तौति, उपस्तवीति । शाम्यध्वम्, शमीध्वम्[1] । अभ्यमति, अभ्यमीति ।

**न्यासः**

रौतेस्तु 'गुणो यङ्लुकोः' इति गुणः, 'यङोऽचि च' इति यङो लुक् । **वर्वर्ति, चर्कर्तीति** । वृञ्कृञोर्यङ्लुकि 'ऋतश्च' इत्यभ्यासस्य रुगागमः ।

किं पुनः कारणं यङ्लुक्येवोदाह्रियते, न यङन्ते ? इत्याह—हलादेरित्यादि । यङन्ते हि ङित्वादात्मनेपदम्, न चात्मनेपदं हलादि पिदस्ति । हलादेः पितः परस्य सार्वधातुकस्याभावान्नेह यङन्तस्योदाहरणम्, किं तर्हि ? यङ्लुगन्तस्य । तत्र हि हलादि पित् सार्वधातुकं सम्भवति, यङ्लुगन्तस्यादादौ 'चर्करीतञ्च परस्मैभाषम्' इति पाठे सति परस्मैपदित्वात्, तेन यङ्लुक्येवोदाह्रियते । चर्करीतमिति यङ्लुगन्तस्य पूर्वाचार्यसंज्ञा ॥ ९४ ॥

**तुरुस्तुशम्यमः सार्वधातुके** ॥ 'तु' इति सौत्रो धातुर्वृद्ध्यर्थे इत्येके, हिंसार्थे इत्यपरे । अस्य च लुग्विकरणत्वं स्मर्यते, तच्च 'बहुलं छन्दसि' इति बहुलग्रहणेन भाषायामपि लुक्सम्पादनाल्लभ्यते । **शमीध्वमिति** । लोट् । **अशमीध्वमिति** । लङ् । **अभ्यमीतीति** । 'अम गत्यादिषु', लट्, तिप् । कथं पुनः शम्यमिभ्यामनन्तरं हलादि सार्वधातुकं सम्भवति, यावता शमेर्व्यवधायकेनैव श्यना भवितव्यम् । अमेरपि शप् क्रियते ? इत्याह—**शम्यमोरित्यादि** । विकरणस्यात्र लुग् 'बहुलं छन्दसि' इत्यनेन ।

**पदमञ्जरी**

इतरयोर्दीर्घत्वम् । **वर्वर्तीति** । वृतेः रूपम् 'रुग्रिकौ च लुकि' इत्यभ्यासस्य रुक् । किं पुनः कारणं यङ्लुगन्तमेवोदाहृतम्, न पुनर्यङन्तम् ? तत्राह—**हलादेरिति** । यङन्ते हि शपा भवितव्यम्, स च हलादिर्न भवति ॥९४॥

**तुरुस्तुशम्यमः सार्वधातुके ॥ तु इति सौत्रोऽयं धातुरिति** । स च वृद्धौ वर्त्तते, गत्यर्थं इत्यन्ये, हिंसार्थं इत्यपरे । **उत्तवीतीति** । 'बहुलं छन्दसि' इति शपो लुक् । **शमीध्वमिति** । शमेरन्तर्भावितण्यर्थात्प्रैषे लोट्, व्यत्ययेनात्मनेपदम्, शप्, तस्य 'बहुलं छन्दसि' इति लुक् ।

**भावबोधिनी**

धातु के अभ्यास का गुण 'गुणो यङ्लुकोः' सूत्र से—लालप् + लट् = ति, वावद् + ति, रोरु + ति, ईट् आगम, 'उ' का गुण, अव् आदेश—लालप् ईति, वावद् ई ति, रो र् अव् ई ति । ]

ईट् नहीं भी होता है—वर्वर्ति । चर्कर्ति चक्रम् । [ वृत् तथा कृञ् के यङ् लुक् के रूप हैं । इनमें अभ्यास को रुक् का आगम होने से प्रथम रेफ सुनाई देता है । ]

[ प्रश्न है कि यङन्त का उदाहरण न देकर यङ्लुगन्त का क्यों दिया गया ? ] यङन्त [ आत्मनेपदी हो जाने के कारण उस ] से हलादि पित् सार्वधातुक ( अर्थात् परस्मैपद तिप् सिप् मिप् ) का अभाव रहता है, इसलिये यङ्लुगन्त का उदा० दिया गया ॥ ९४ ॥

'तु' यह सौत्र धातु है, [ इसका अर्थ वृद्धि, गति, या हिंसा है । ] 'रु' शब्द करना अर्थ में है' 'ष्टुञ्' स्तुति करना अर्थ में है' 'शम' उपशमन करना अर्थ में, 'अम्' गति आदि अर्थों में है'—इन (पाँच) धातुओं से परे हलादि सार्वधातुक को विकल्प से ईट् आगम होता है । [इसमें पित् का सम्बन्ध नहीं है ।] उदा० उत्तौति, उत्तवीति । [उत् तु+लट्

---

१–१. इतोऽग्रे 'अशमीध्वम्' इत्यधिकं पठ्यते न्यासे ।

शम्यमोः 'बहुलं छन्दसि' ( २।४।७३ ) इति विकरणलुकि सति हलादिसार्वधातुकमनन्तरं सम्भवति ।

**आपिशलाः—'तुरुस्तुशम्यमः सार्वधातुकासुच्छन्दसि' इति पठन्ति । तत्र सर्वेषामेव छन्दसि विषये विधिरयं भवति ।**

**'सार्वधातुके'—इत्यनुवर्त्तमाने पुनः सार्वधातुकग्रहणमपिदर्थम् । स्तुवीत, शमीध्वमित्यत्रापि यथा स्यात् इति ॥**

**न्यासः**

**सार्वधातुकास्विति ।** स्त्रीलिङ्गनिर्देशः, स्त्रीलिङ्गस्य सार्वधातुकाशब्दस्यापिशालिना संज्ञात्वेन प्रणीतत्वात् ।

अथ सार्वधातुकग्रहणं किमर्थम्, यावता 'नाभ्यस्तस्याचि पिति सार्वधातुके' इत्यतः सूत्रात् सार्वधातुकग्रहणमनुवर्त्तते ? इत्याह—**सार्वधातुक इत्यनुवर्त्तमान इत्यादि ।** तद्धि सार्वधातुकग्रहणं पितीत्यनेन सम्बद्धम् । अतस्तदनुवृत्तौ पिद्ग्रहणमप्यनुवर्तेत, तथा चापिति न स्यात् । तस्मादपित्यपि यथा स्यादित्येवमर्थं सार्वधातुकग्रहणं क्रियते ॥ ९५ ॥

**पदमञ्जरी**

**आपिशला इति ।** आपिशलेः शिष्याः । **सार्वधातुकास्विति ।** टाबन्तम् । तत्र संज्ञात्वेन विनियुक्तं सार्वधातुकग्रहणमनर्थकम्, 'नाभ्यस्तस्य' इत्यादेः सूत्रादनुवृत्तेः ? अत आह—**सार्वधातुके इति वर्तमान इति ।** तद्धि सार्वधातुकग्रहणं पितीत्यनेन सम्बद्धम्, अतस्तदनुवृत्तौ तदप्यनुवर्तेत, तन्मानुवृतदित्येवमर्थं पुनः सार्वधातुकग्रहणमिति । 'हलि' इत्येतत्त्वनुवर्त्तत एव; न हि तत्सार्वधातुकग्रहणेन सम्बद्धम् ॥ ९५ ॥

**भावबोधिनी**

= तिप्, विकल्प से ईट्, 'उ' का गुण अव् आदेश उत् त् अत् ई ति । पक्ष में 'उतो वृद्धिर्लुकि हलि' सूत्र से 'उ' की वृद्धि होती है—उत् तौ ति । इसी प्रकार 'रु' 'स्तु' में भी समझना चाहिए । ] उपरौति, उपरवीति । शाम्यध्वम्, शमीध्वम् । [ अन्तर्भावितण्यर्थं मानकर लोट् = ध्वम् व्यत्यय से आत्मनेपद, शप्, इसका 'बहुलं छन्दसि' से लुक् कर देने पर प्रस्तुत सूत्र से ईट्-शम् ई ध्वम् । जब आत्मनेपद नहीं होता है तो दिवादिगणीय होने से श्यन् विकरण होने पर शम् य + ध्वम् यहाँ 'शमामष्टानाम्' से दीर्घ हो जाने पर 'शाम् यध्वम्' रूप बनता है । कहीं-कहीं 'शम्ध्वम्' यह प्रकाशित है जो प्रामादिक है । क्योंकि ईट् के अभाव में श्यन् विकरण वाला रूप होता है ।] अभ्यमति, अभ्यमीति । [ अभि + अम् + तिप्, शप् का लुक् ईट् आगम, उपसर्ग इ का यण् अभ्यम् ई ति । विकरण का लुक् न होने पर अभि अम् अति, यण्—अभ्यमति । [ यहाँ भी अभ्यन्ति यह रूप प्रामादिक है क्योंकि वैदिक प्रयोग यथादृष्ट ही शुद्ध होते हैं । काशिकाकार ने वैदिक लक्ष्य दिये हैं । ]

'शम्' तथा 'अम्' धातुओं के विकरण ( श्यन्, शप् ) का 'बहुलं छन्दसि' ( २।४।७३ ) से लुक् कर देने पर हलादि सार्वधातुक प्रत्यय अव्यवहित परे मिलना सम्भव होता है । [ अतः लुक् करना आवश्यक है । पक्ष में विकरण वाला रूप भी होता है । अतः विकरण वाला रूप न मानना भ्रान्ति है । ]

आपिशलि के अनुयायी—'तु, रु, स्तु, शम्, अम् धातुओं से सार्वधातुका ( सार्वधातुक ) प्रत्यय परे रहते वेद में ईट् विकल्प से होता है'—ऐसा पढ़ते हैं । इसमें सभी धातुओं की वेदविषय में यह ईट् विधि होती है । [ इससे ऐसा प्रतीत होता है कि काशिकाकार इस सूत्र का प्रयोग वैदिक शब्दरूपों की सिद्धि में मानते हैं' । ]

'सार्वधातुके' इसकी अनुवृत्ति रहते हुए भी पुनः इसमें 'सार्वधातुके' का ग्रहण 'अपित्' प्रत्यय के लिये है । जिससे 'स्तुवीत' 'शमीध्वम्' इनमें भी ईट् हो सके । [ भाव यह है कि 'नाभ्यस्तस्याचि पिति सार्वधातुके' ७।३।८७ में सार्वधातुक और पित् परस्पर सम्बद्ध हैं । अतः अनुवृत्ति मानने पर दोनों अनुवृत्त होने लगते जब कि यहाँ केवल सार्वधातुक ही अभीष्ट है । इसीलिये दुबारा 'सार्वधातुके' का ग्रहण करके पित् अपित् सभी सार्वधातुक प्रत्यय परे ईट् आगम सिद्ध होता है । ] ॥ ९५ ॥

## ३४९३. अस्तिसिचोऽपृक्ते ॥ ९६ ॥ (२२२५)

अस्तेरङ्गात् सिजन्ताच्च परस्यापृक्तस्य सार्वधातुकस्य ईडागमो भवति। अस्तेः—आसीत्। आसीः। सिजन्तात्—अकार्षीत्। असावीत्[1], अलावीत्। अपावीत्[1]।

अपृक्ते इति किम्? अस्ति। अकार्षम्।

'आहिभुवोरीटि प्रतिषेधः' इति स्थानिवद्भावप्रतिषेधः, तेनेह न भवति—आत्थ। अभूदिति॥

**न्यासः**

अस्तिसिचोऽपृक्ते॥ अपृक्त इति। सुब्व्यत्ययेन षष्ठ्यर्थे सप्तमी, तेनायमपृक्तस्यैवेट्। अस्तिग्रहणं लङर्थम्। आसीदिति। 'अस भुवि', लङ्, अदादित्वाच्छपो लुक्, 'आडजादीनाम्', इत्याट्, 'आटश्च' इति वृद्धिः। अकार्षीदिति। सिचि वृद्धिः। अलावीत्, अपावीदिति। 'इट ईटि' इति सिचो लोपः। आत्थेति। अत्र ब्रुव उत्तरस्य सिपः 'ब्रुवः पञ्चानामादित आहो ब्रुवः' इति थलि कृते ब्रुवाश्चाहादेशे कृते तस्य स्थानिवद्भावे सति ब्रूञ्ग्रहणेन ग्रहणात् थलोऽपि सार्वधातुकग्रहणेन ग्रहणादीट् प्राप्नोति। अभूदिति। अस्तेः सिच्, 'अस्तेर्भूः' इति भूभावे तस्य स्थानिवद्भावे सत्यस्तिग्रहणेन ग्रहणादीट् प्राप्नोति, स कस्मान्न भवति? इत्याह—आहिभुवोरित्यादि। इटि प्रतिषेध इति। आहेर्भुवश्चेटि कर्त्तव्ये स्थानिवद्भावस्य प्रतिषेधः। तेनेह न भवति—आत्थेति। 'आहस्थः' इति हकारस्य थकारः, तस्य 'खरि च' इति तकारः। अभूदिति। 'गातिस्था' इति सिचो लुक्॥९६॥

**पदमञ्जरी**

अस्तिसिचोऽपृक्ते॥ 'अपृक्ते' इति षष्ठ्यर्थे सप्तमी, तेनापृक्तस्यैवायमागमः। आसीदिति। 'अस् भुवि', शपो लुक्, तिप ईट्। अलावीदीति। 'लुङ्', 'इट ईटि' इति सिचो लोपः।

[2]आहिभुवोरीट्प्रतिषेध इत्यादि। स्थानिवत्सूत्र एतद्वार्त्तिकम्। आहिभुवोः स्थानिवद्भावस्य प्रतिषेधो वक्तव्यः, ईट्प्रतिषेधः प्रयोजनमित्यर्थः। आत्थेति। 'ब्रुवः पञ्चानाम्' इत्यादिना सिपस्थल्, ब्रुव आहादेशः, 'आहस्थः' इति हकारस्य थत्वम्, तस्य 'खरि च' इति चर्त्वम्—तकारः। अभूदिति। लुङ्, 'अस्तेर्भूः' 'गातिस्था' इत्यादिना सिचो लुक्। अत्र स्थानिवद्भावप्रतिषेधादस्त्याश्रयस्तावदीण्न भवति। सिजाश्रयोऽपि न भवति, स्थानिवद्भावप्रतिषेधसामर्थ्यात्। अस्त्वेवमस्त्यादेशे भुवि, शुद्धे तु भवतौ सिजाश्रय ईट् प्राप्नोति, तस्मादोडेवात्र प्रतिषेध्यः। आहिविषये परिहारान्तरं ज्ञापकात्सिद्धम्, यदयं झलादिप्रकरणे 'आहस्थः' इति थत्वं शास्ति। ननु च भूतपूर्वगत्यर्थमेतत्स्यात्—झलादिर्यो भूतपूर्वस्तत्रेति? नैतदस्ति; एवं तर्हि पञ्चानामपि तिबादीनां भूतपूर्वंझलादित्वमिति सर्वत्र थत्वप्रसङ्गः, ततश्चाथमेव विदध्यात्॥ ९६॥

**भावबोधिनी**

अस् इस अङ्ग ( धातु ) से और सिच् प्रत्ययान्त से परवर्त्ती अपृक्त सार्वधातुक को ईट् आगम होता है। अस् का उदा० आसीत्। आसीः। [ अस् + लङ् = तिप्, आट् आगम, वृद्धि, शप् का लुक् आस् + ति, 'इतश्च' से इकार का लोप, प्रस्तुत सूत्र से 'त्' के पूर्व ईट् आगम—आस् ईत्। ] सिजन्त के उदा० अकार्षीत्। [ कृ+लुङ्=तिप्, अट्, च्लि, सिच्, इलोप अ कृ स् त्, ईट् आगम, ऋ की वृद्धि रपर, स् का ष्—अकार् ष् ईत् ] असावीत्। अलावीत्। अपावीत्। [ सु + लुङ्, तिप्, अट्, च्लि = सिच्, इट् असु इस् ति, ति के इ का लोप, ईट् आगम 'इट ईटि' सूत्र से सिच् लोप, सवर्णदीर्घ असू ईत्, ऊ की वृद्धि आव् आदेश—असावीत्। इसी प्रकार 'लू' 'पू' के रूप भी समझें। ]

अपृक्त = एक अल्रूप प्रत्यय—इसका क्या फल है? अस्ति। अकार्षम्। [ तिप्, अम् दो अल्वाले हैं। अतः ईट् नहीं होता हैं। ]

* 'आह तथा भू के ईट् में स्थानिवद्भाव का प्रतिषेध होता है।' * इस वचन से स्थानिवद्भाव का प्रतिषेध होता है, इसलिये इनमें ( ईट् ) नहीं होता है—आत्थ। अभूत् [ 'ब्रुवः पञ्चानामादित आहो ब्रुवः' से थल् में 'ब्रू' का 'आह' आदेश करने पर स्थानिवद्भाव से 'ब्रू' मानकर 'ईट्' प्राप्त है "ब्रुव ईट्" सूत्र से, इसी प्रकार अस् का लुङ् परे 'भू' आदेश करने पर सिच् लुक्, इलोप के बाद स्थानिवद्भाव से 'अस्' मानकर ईट् प्राप्त होता है। परन्तु प्रस्तुत वचन से स्थानिवद्भाव का प्रतिषेध हो जाने से दोनों में ईट् नहीं होता है। ]॥ ९६॥

---

१-१. मुद्रितपुस्तके नास्ति। २. पाठान्तरम्।

**३४९४. बहुलं छन्दसि ॥ ९७ ॥ (३५८६)**

अस्तिसिचोरपृक्तस्य सार्वधातुकस्य ईडागमो भवति बहुलं छन्दसि विषये। आप एवेदं सलिलं सर्वमाः। आसीदिति स्थाने आः क्रियापदम्। अहरेवासीन्न रात्रिः। ( मै० १।५।१२ )

सिचः खल्वपि—गोभिरक्षाः ( ऋ० ९।१०७।९ ) प्रत्यञ्चमत्साः ( ऋ० १०।२८।४ )।

अभैषीर्मा पुत्रकेति च भवति; छान्दसत्वात्। माङ्योगेऽप्यडागमो भवति। अक्षाः, अत्सा इति। सिच इडभावश्च ॥

**३४९५. रुदश्च पञ्चभ्यः ॥ ९८ ॥ (२४७५)**

रुदादिभ्यः परस्य सार्वधातुकस्य हलादेरपृक्तस्य ईडागमो भवति। अरोदीत्, अरोदीः। अस्वपीत्, अस्वपीः। अश्वसीत्, अश्वसीः। प्राणीत्, प्राणीः। अजक्षीत्, अजक्षीः।

**न्यासः**

बहुलं छन्दसि ॥ सर्वमा इति। अस्तेर्लङ्, पूर्ववदाट्, सिपो (तिपो) हल्ङ्यादिलोपः, सकारस्य रुत्वविसर्जनीयौ।

गोभिरक्षाः, प्रत्यञ्चमत्सा इति। 'क्षर सञ्चलने', 'त्सर छद्मगतौ', हल्ङ्यादिना सिपो लोपः, 'अतो लरान्तस्य' इति वृद्धिः, पूर्ववद्विसर्जनीयः। अभैषीरिति। 'ञिभी भये', सिचि वृद्धिः।

अथाभैषीर्मा पुत्रकेत्यत्र कथमडागमः, यावता 'न माङ्योगे' इति प्रतिषिद्धोऽसौ, इह चाक्षाः, अत्सा इत्यत्र सिच ईडागमः कस्मान्न भवति ? इत्याह—छान्दसत्वादित्यादि। अक्षाः, अत्सा इत्यत्र चेडागमाभाव इति च्छान्दसत्वादिति प्रकृतेन सम्बन्धः।

'वा छन्दसि' इति वक्तव्ये बहुलग्रहणमुत्तरार्थम्। उत्तरार्थतां चास्योत्तरत्र प्रतिपादयिष्यामः ॥ ९७ ॥

रुदश्च पञ्चभ्यः ॥ 'रुद' इति सुब्व्यत्ययेन बहुवचनस्यैकवचनम्। एतच्च 'पञ्चभ्यः' इति बहुवचनाद् विज्ञायते। 'रुदादिभ्यः सार्वधातुके' इतीटि प्राप्ते तदपवाद ईडागमो विधीयते। 'रुदिर् अश्रुविमोचने',

**पदमञ्जरी**

बहुलं छन्दसि ॥ आ इति। अस्तेर्लङ्, तिप्, शपो लुप्, रुत्वविसर्जनीयौ। अक्षाः, अत्सा इति। 'क्षर सञ्चलने', 'त्सर छद्मगतौ', लुङ्, तिपो हल्ङ्यादिलोपः, 'रात्सस्य' इति सिचो लोपः, धातुरेफस्य विसर्जनीयः। छान्दसत्वादिति। 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यनेन न केवलममाङ्योगेडाटोरभावः क्रियते, किं तर्हि ? माङ्योगे तत्सद्भावोऽपीति भावः। इडभावश्च सिच इति। छान्दसत्वादित्यपेक्षते ॥ ९७ ॥

रुदश्च पञ्चभ्यः ॥

**भावबोधिनी**

अस् धातु और सिजन्त के अपृक्त सार्वधातुक को ईट् का आगम वेदविषय में बहुल् रूप से होता है, अर्थात् होता भी है और नहीं भी होता है। उदा० "आप एवेदं सलिलं सर्वमाः।" 'आसीत्' के स्थान पर 'आः' यह क्रियापद हैं। [ आ अस् + लुङ् = तिप्, वृद्धि, इलोप, ईट् नहीं—'आस् त्' "हल्ङ्याभ्यः" से त् का लोप, स् का रुत्व, विसर्ग। ] "अहरेवासीन्न रात्रिः।" [ यहाँ ईट् होने से 'आसीत्' बना। ]

सिजन्त को भी—गोभिरक्षाः। [ यहाँ 'अक्षरीत्' के स्थान पर 'अक्षाः' है। ] प्रत्यञ्चमत्साः। [ 'त्सर' के लुङ् का रूप है ईट् नहीं होता है। ]

'अभैषीर्मा पुत्रक' यह प्रयोग भी वैदिक होने से होता है। माङ् के योग में भी अट् का निषेध नहीं होता है अट् आगम होता है। 'अक्षाः' 'अत्साः' यहाँ सिच् को इट् आगम नहीं होता है ॥ ९७ ॥

'रुद्' आदि ( पाँच ) धातुओं से परे सार्वधातुक हलादि अपृक्त को ईट् आगम होता है। उदा० अरोदीत् अरोदीः। [ रुद् + लङ् = तिप्, अट् शप् का लुक्, इ का लोप, ईट् का आगम—अरुद् ईत्, उपधागुण अरोदीत्। इसी प्रकार आगे भी ईट् आगम समझना चाहिए। ] अस्वपीत्, अस्वपीः। [ स्वप् + लङ् ] अश्वसीत्, अश्वसीः।

पञ्चभ्य इति किम् ? अजागर्भवान् ।

'अपृक्तस्य' इत्येव—रोदिति ॥

**३४९६. अड् गार्ग्यगालवयोः ॥ ९९ ॥ (२४७६)**

रुदादिभ्यः पञ्चभ्यः परस्य अपृक्तस्य सार्वधातुकस्याडागमो भवति गार्ग्यगालवयोर्मतेन । अरोदत्, अरोदः । अस्वपत्, अस्वपः । अश्वसत्, अश्वसः । प्राणत्, प्राणः । अजक्षत्, अजक्षः ।

गार्ग्यगालवयोर्ग्रहणं पूजार्थम् ॥

**३४९७. अदः सर्वेषाम् ॥ १०० ॥ (२४२६)**

'अद भक्षणे' ( धा० पा० १०१२ )—अस्मादुत्तरस्यापृक्तस्य सार्वधातुकस्याडागमो भवति सर्वेषामाचार्याणां मतेन । आदत् । आदः ।

'अपृक्तस्य' इत्येव—अत्ति । अत्सि ॥

**न्यासः**

'ञिष्वप् शये', 'श्वस प्राणने', 'अन च', 'जक्ष भक्षहसनयोः'—इत्येते रुदादय आदादिकाः। **अरोदीदिति** । लङ् । **प्राणीदिति** । 'अनितेः' इति णत्वम् । **अजागर्भवानिति** । जागर्त्तिः पञ्चभ्यः परेणायं पठ्यते । गुणे रपरत्वे च कृते हल्ङ्यादिलोपः ॥ ९८ ॥

**अड् गार्ग्यगालवयोः ॥** पूर्वेणेटि प्राप्तेऽडागमो विधीयते । गार्ग्यगालवग्रहणं पूजार्थम्, न तु विकल्पार्थम् । अडीटोरादिलिङ्गत्वादेकविषयत्वाच्च न सम्भवति; समुच्चय इत्यन्तरेणाप्याचार्यग्रहणं विकल्पस्य सिद्धत्वात् ॥ ९९ ॥

**अदः सर्वेषाम् ॥** सर्वेषां ग्रहणं पूजार्थम्, न तु नित्यार्थम्; गार्ग्यगालवग्रहणस्याविकल्पार्थत्वात् ॥१००॥

**पदमञ्जरी**

'रुदिः स्वपिः श्वसिरनिर्जक्षिः पञ्च रुदादयः' ।

रुदः इति बहुवचनस्थाने एकवचनम् 'पञ्चभ्यः' इति निर्देशादाद्यर्थावगतिः ॥ ९८ ॥

**अड् गार्ग्यगालवयोः ॥ गार्ग्यगालवयोर्ग्रहणं पूजार्थमिति** । न विकल्पार्थम्; विधानसामर्थ्यादेवाडीटोविकल्पस्य सिद्धत्वात् । अनेकाचार्यग्रहणमप्यत एव ॥ ९९ ॥

**अदः सर्वेषाम् ॥** सर्वेषांग्रहणं नित्यार्थम्, अन्यथा गार्ग्यगालवग्रहणमिह विकल्पार्थं सम्भाव्येत ॥१००॥

**भावबोधिनी**

[ श्वस् + लङ् ] प्राणीत्, प्राणीः । [ प्र अन् + लङ् ] अजक्षीत्, अजक्षीः । [ जक्ष् + लङ् ] पाँच से ही—इसका क्या फल है ? अजागर् भवान् [ 'जागृ' को ईट् नहीं होता है । ]

अपृक्त को ही—रोदिति । [ यहाँ दो अल् है । अतः ईट् न होकर इट् होता है—'रुदादिभ्य सार्वधातुके' सूत्र से ] ॥ ९८ ॥

'रुद' आदि पाँच धातुओं से परे अपृक्त सार्वधातुक को अट् का आगम गार्ग्य एवं गालव के मत से होता है। ( दूसरों के मत से भी होता है, क्योंकि गार्ग्य-गालव का ग्रहण सम्मानार्थ ही है । ) उदा० अरोदत्, अरोदः । [ रुद् + लङ्, अट् आगम, ति के इ का लोप अरुद् + त् प्रस्तुत सूत्र से 'त्' अपृक्त के पूर्व अट् आगम, उपधागुण—अरोदत् । इसी प्रकार आगे के उदा० में समझना चाहिए । 'सिप्' के इ का लोप, स् का रुत्वविसर्ग करना चाहिए—अरोदः । अस्वपत्, अस्वपः । अश्वसत् अश्वसः । प्राणत् प्राणः । अजक्षत्, अजक्षः । [ यद्यपि शप् का लुक् हो जाता है किन्तु अड् आगम के कारण अकार बीच में रहता है । ]

गार्ग्य और गालव का ग्रहण पूजा = सम्मान-प्रदर्शन के लिए है । [ क्योंकि ईट् के बाद अट् के विधान से ही इनका वैकल्पिकत्व सिद्ध है । ] ॥ ९९ ॥

'अद् भक्षणे' इससे उत्तरवर्ती अपृक्त सार्वधातुक को अट् का आगम सभी आचार्यों के मत से होता है । उदा० आदत् । आदः । [अद्+लङ्, आट् आगम, वृद्धि, ति के इ का लुक्, शप् का लुक् आद् त् अट् आगम–आदत् । ]

अपृक्त को ही होता है—अत्ति । अत्सि । [ अद् + ति, सि में दो अल् है । ] ॥ १०० ॥

### ३४९८. अतो दीर्घो यञि ॥ १०१ ॥ (२१७०)

अकारान्तस्याङ्गस्य दीर्घो भवति यञादौ सार्वधातुके परतः । पचामि, पचावः, पचामः । पक्ष्यामि, पक्ष्यावः, पक्ष्यामः ।

अत इति किम् ? चिनुवः, चिनुमः । यञीति किम् ? पचतः । पचथः ।

'सार्वधातुके' इत्येव—अङ्गना, केशवः ।

केचिदत्र 'तिङि' इत्यनुवर्त्तयन्ति, तेषां भववानिति क्वसौ सार्वधातुकदीर्घो न भवति ॥

**न्यासः**

अतो दीर्घो यञि ॥ तपकरणमुत्तरार्थम् । खट्वाभिरित्यत्र 'बहुवचने झल्येत्' इत्येत्त्वं मा भूदित्येवमर्थम् ।

अङ्गनेति । प्रशस्तान्यङ्गान्यस्याः सन्तीति लोमादिना नप्रत्ययः । केशव इति । केशा यस्य सन्तीति 'केशाद् वोऽन्यतरस्याम्' मिति वप्रत्ययः ।

केचिदत्र तिङीत्यनुवर्त्तयन्तीति । 'भूसुवोस्तिङि' इत्यतः । तेषां भववानिति क्वसौ सार्वधातुके दीर्घत्वेन न भवितव्यमिति; क्वसोरतिङन्तत्वात् । भववानिति । भवतेर्लिट्, क्वसुः, 'छन्दस्युभयथा' इति तस्य पक्षे सार्वधातुकत्वम्, तेन 'कर्त्तरि शप्' भवति, 'सान्तमहतः संयोगस्य' इति दीर्घः, हल्ङ्यादिसंयोगान्तलोपौ ।

आदिति वक्तव्ये दीर्घग्रहणम्—दीर्घ एव यथा स्याद् यदन्यत् प्राप्नोति, तन्मा भूदिति । किञ्चान्यत् प्राप्नोति ? 'विचार्यमाणानाम्', 'अनन्तरस्याप्येकैकस्य प्राचाम्' 'प्रश्नाख्यानयोः' इति प्लुतः । अथ प्रकृतो अडागमः कस्मान्न विधीयते ? तत्राप्यकः सवर्णे दीर्घत्वेन सिद्ध्यत्येव । न च 'अतो गुणे' पररूपत्वं प्राप्नोतीत्याशङ्कनीयम्, अड्विधानसामर्थ्यात् । इहाधुक्षावहीति 'क्सस्याचि' इति लोपः स्यात्, अतिजराभ्यामित्यत्राचीति जरस्भावः स्यात्, तन्निवृत्यर्थं दीर्घग्रहणं कृतम् । स चात्र प्लुतः प्रसज्ये ॥ १०१ ॥

**पदमञ्जरी**

अतो दीर्घो यञि ॥ केचिदत्र तिङित्यनुवर्त्तयन्तीति । 'भूसुवोस्तिङि' इत्यतः । भववानिति । भवतेः क्वसुः, तस्य 'छन्दस्युभयथा' इति सार्वधातुकत्वाच्छप्, 'लिटि धातोः' इत्यत्र धातुग्रहणाच्छबन्तस्य द्विर्वचनाभावः । ये तु 'सार्वधातुके' इत्येवानुवर्त्तयन्ति, तेषां छान्दसत्वाद्दीर्घाभावः । अथ प्रकृतोऽडागम एव कस्मान्न विधीयते—'अतो यञि' इति, अकारान्तादङ्गादुत्तरस्य यञादेस्तिङोऽडागमो भवति, पच अवस्, सवर्णदीर्घत्वे पचाव इति सिद्धम्, विधानसामर्थ्याच्च 'अतो गुणे' इति पररूपत्वं न भविष्यति ? नैवं शक्यम्; इह ह्यधुक्षावहि, अधुक्षामहीति 'क्सस्याचि' इति लोपः प्रसज्येत । इह चातिजराभ्यामिति जरस्भावः । एवमपि दीर्घग्रहणमनर्थकम्, आदित्याकार एव विधेयः ? इह तर्हि प्रयोजनम्—अपाक्षीरोदनं देवदत्त ! ननु पचामि भोरित्यत्रापि 'अनन्त्यस्यापि प्रश्नाख्यानयोः' इति प्लुतः प्राप्नोति ? स मा भूद्दीर्घ एव यथा स्यादिति दीर्घग्रहणम् ।

अत इति तपरकरणमुत्तरार्थम्, 'बहुवचने झल्येत्' इत्येत्वं खट्वाभिरित्यत्र मा भूत् ॥ १०१ ॥

**भावबोधिनी**

यञादि सार्वधातुक परे रहते अकारान्त अङ्ग का दीर्घ होता है । उदा० पचामि, पचावः, पचामः । [ पच्+लट् = मिप् शप्—पच् अ+मि, दीर्घ करने पर—पचामि ] पक्ष्यामि, पक्ष्यावः, पक्ष्यामः । [ पच्+लट् = मिप्, स्य, च् का क्, स् का ष् पक् ष्य मि क्+ष् का क्ष्, अ का दीर्घ—पक्ष्यामि । ]

अकार का दीर्घ—इसका क्या फल है ? चिनुवः, चिनुमः । [ यहाँ उकार है । ]

यञादि परे रहते—इसका क्या फल है ? पचतः, पचथः । [ यहाँ यञ् प्रत्याहार का वर्ण नहीं है । ]

सार्वधातुक संज्ञकप्रत्यय परे ही—अङ्गना । केशवः । [ यहाँ 'न' तथा 'व' प्रत्यय है किन्तु सार्वधातुक नहीं है । ]

कुछ विद्वान् इस सूत्र में 'तिङ् परे' इसकी अनुवृत्ति करते हैं, इनके मत में 'भववान्' इस क्वसु प्रत्यय में सार्वधातुक का दीर्घ नहीं होता है । [ भू + लिट् = क्वसु, 'छन्दस्युभयथा' सूत्र से पाक्षिक सार्वधातुक संज्ञा होने से शप् भी होता है भू + शप् + वस्, गुण, नुम्, दीर्घ आदि होने के बाद 'तिङ्' परे न होने से 'भव' के अ का दीर्घ नहीं होता है—भववान् । ] ॥ १०१ ॥

**३४९९. सुपि च ॥ १०२ ॥ (२०२)**

'अतो दीर्घो यञि' ( ७।३।१०१ ) इत्यनुवर्त्तते। सुपि च यञादौ परतोऽकारान्तस्याङ्गस्य दीर्घो भवति। वृक्षाय। प्लक्षाय। वृक्षाभ्याम्। प्लक्षाभ्याम्।

'अतः' इत्येव—अग्निभ्याम्[1]।

'यञि' इत्येव—वृक्षस्य। प्लक्षस्य ॥

**३५००. बहुवचने झल्येत् ॥ १०३ ॥ (२०५)**

बहुवचने झलादौ सुपि परतोऽकारान्तस्याङ्गस्य एकारादेशो भवति। वृक्षेभ्यः। प्लक्षेभ्यः। वृक्षेषु। प्लक्षेषु।

बहुवचन इति किम्? वृक्षाभ्याम्। प्लक्षाभ्याम्। झलीति किम्? वृक्षाणाम्। सुपीत्येव–यजध्वम्। पचध्वम् ॥

**३५०१. ओसि च ॥ १०४ ॥ (२०७)**

ओसि परतोऽकारान्तस्याङ्गस्य एकारादेशो भवति। वृक्षयोः स्वम्। प्लक्षयोः स्वम्। वृक्षयोर्निधेहि। प्लक्षयोर्निधेहि ॥

**न्यासः**

**सुपि च ॥ १०२ ॥**

**बहुवचने झल्येत् ॥** ननु च वृक्षाणामित्यत्र 'नामि' इति दीर्घत्वं बाधकं भविष्यति, तत् किं तन्निवृत्त्यर्थेन झल्ग्रहणेन? नैतदस्ति; 'नामि' इति ह्यग्नीनामित्यत्र सावकाशम्, तत्रासति झल्ग्रहणे दीर्घत्वं बाधित्वा परत्वादेत्वमेव स्यात्।

**पचध्वम्, यजध्वमिति।** लोट्, टेरेत्वम्, 'सवाभ्यां वामौ' इत्यामादेशः ॥ १०३ ॥

**ओसि च ॥ १०४ ॥**

**पदमञ्जरी**

**सुपि च ॥ वृक्षायेति।** सन्निपातपरिभाषाया अनित्यत्वादत्र दीर्घत्वम्। अनित्यत्वं च **'कष्टाय'** इति निर्देशादवसितम् ॥ १०२ ॥

**बहुवचने झल्येत् ॥ वृक्षाणामिति।** 'झलि' इत्यनुच्यमानेऽग्नीनामित्यादौ सावकाशम् 'नामि' इति दीर्घत्वं बाधित्वेदमेत्वमकारान्तेषु स्यादिति भावः ॥ १०३ ॥ १०४ ॥

**भावबोधिनी**

'यञादि परे अ का दीर्घ होता है'—इसकी अनुवृत्ति होती है। यञादि सुप् प्रत्यय परे रहते अकारान्त अङ्ग का दीर्घ होता है। उदा० वृक्षाय। प्लक्षाय। [ वृक्ष + ङे, 'ङेर्यः' सूत्र से 'य' आदेश। स्थानिवद्भाव से सुप्त्व मानकर अ का दीर्घ होता है। इसी प्रकार आगे भी समझना चाहिए। ] वृक्षाभ्याम्। प्लक्षाभ्याम्।

अकार का ही होता है—अग्निभ्याम्। [ इ का नहीं होता है। ]

यञादि परे ही—वृक्षस्य। प्लक्षस्य [ यहाँ स् यञ् में नहीं आता है। ] ॥ १०२ ॥

बहुवचन में झलादि सुप् परे रहते अकारान्त अङ्ग का एकार आदेश होता है। उदा० वृक्षेभ्यः। प्लक्षेभ्यः। [ वृक्ष + भ्यस्, अ का ए, स् का रुत्व विसर्ग। ] वृक्षेषु, प्लक्षेषु। [ वृक्ष + सुप्, प्लक्ष + सुप्, अ का एत्व, स् का ष् 'आदेशप्रत्यययोः' सूत्र से। ]

बहुवचन में ही—इसका क्या फल है? वृक्षाभ्याम्। प्लक्षाभ्याम्। [ द्विवचन परे है। ए नहीं होता है। ]

झलादि परे—इसका क्या फल है? वृक्षाणाम्। [ वृक्ष + आम्, नुट् करने पर भी झलादि नहीं होता है। ]

सुप् परे ही—यजध्वम्। पचध्वम्। [ ये तिङ् हैं। अतः दीर्घ नहीं होता है। ] ॥ १०३ ॥

'ओस्' ( सुप् ) परे रहते अकारान्त का एकार आदेश होता है। उदा० वृक्षयोः स्वम्। प्लक्षयोः स्वम्। वृक्षयोः निधेहि। प्लक्षयोः निधेहि। [ ओस् प्रत्यय षष्ठी और सप्तमी के द्विवचन में होता है। इसीलिये दो उदा० दिये गये हैं। वृक्ष + ओस्, अ का ए वृक्षे + ओस्, ए का अय्, स् का रुत्व विसर्ग—वृक्षयोः। ] ॥ १०४ ॥

---

१. 'वायुभ्याम्' इत्यधिकं पुस्तकान्तरे ॥

### ३५०२. आङि चापः ॥ १०५ ॥ (२८९)

'आङ्' इति पूर्वाचार्यनिर्देशेन तृतीयैकवचनं गृह्यते। तस्मिन्नाङि परतश्चकारादोसि च आबन्तस्याङ्गस्यैकारादेशो भवति। खट्वया, मालया। खट्वयोः, मालयोः। बहुराजया, कारीषगन्ध्यया। बहुराजयोः, कारीषगन्ध्ययोः।

आप इति पितो ग्रहणं किम्? कीलालपा ब्राह्मणेन। कीलालपोर्ब्राह्मणकुलयोः।

'ङ्याब्ग्रहणेऽदीर्घग्रहणम्' इति वचनादिह न भवति—अतिखट्वेन ब्राह्मणकुलेन ॥

**न्यासः**

आङि चापः ॥ आङिति पूर्वाचार्यनिर्देशेनेत्यादि। आचार्या हि पूर्वं आङिति तृतीयैकवचननिर्देशं कुर्वन्ति स्म। तस्मात् तदीयेनाङिति निर्देशेन तृतीयैकवचनं गृह्यते। खट्वयेति। टाबन्तस्योदाहरणम्। बहुराजयेति। डाबन्तस्योदाहरणम्। 'डाबुभाभ्यामन्यतरस्याम्' इति डाप्। कारीषगन्ध्ययेति। चाबन्तस्य। करीषस्येव गन्धोऽस्य 'उपमानाच्च' इतीत्—करीषगन्धिः, 'तस्यापत्यम्' इत्यण्, तस्य 'अणिञोरनार्षयोः' इत्यादिना ष्यङ्, तदन्तात् 'यङश्चाप्' इति चाप्।

कीलालपेति। कीलालं पिबतीति 'आतो मनिन्क्वनिब्वनिपश्च' इति विच्, तदन्तात् तृतीयैकवचनम्, 'आतो धातोः' इत्याकारलोपः।

अथेह कस्मान्न भवति—खट्वामतिक्रान्तेनातिखट्वेनेति, उपसर्जनह्रस्वत्वे कृते स्थानिवद्भावात् तस्य प्राप्नोति? इत्याह-ङ्याब्ग्रहणमित्यादि। केचिदाहुः-ङ्याब्ग्रहणे दीर्घग्रहणमित्येतद् वचनं कर्त्तव्यम्, तेन ह्रस्वत्वे कृते न भवति। अपरे त्वाहुः—'हल्ङ्याब्भ्यो दीर्घात्' इति योगविभागः कर्तव्यः, यावच्छास्त्रे ङ्यापोः कार्यं तत् सर्वं दीर्घयोर्यथा स्यात्, ह्रस्वयोर्मा भूदितिः; ततः 'सुतिस्यपृक्तम्' इति द्वितीयो योगः, तत्र 'हल्ङ्याब्भ्यः' इत्यनुवर्त्तत इति।

चकारः 'ओसि च' इत्यनुकर्षणार्थः ॥ १०५ ॥

**पदमञ्जरी**

आङि चापः ॥ खट्वया, खट्वयोरित्यादीनि टाब्डाप्चापां क्रमेणोदाहरणानि। कीलालपेति। कीलालं पिबति 'आतो मनिन्क्वनिब्वनिपश्च' इति विच्, तृतीयैकवचने 'आतो धातोः' इत्यालोपः, असति तु पिद्विशिष्टस्य ग्रहणे कीलालपः पश्येत्यादौ चरितार्थं लोपं बाधित्वा परत्वादाङोसोरिदमेवैत्वं स्यात्।

ङ्याब्ग्रहणेऽदीर्घग्रहणादिति। यत्र ङ्यापौ गृह्येते तत्र दीर्घयोर्ग्रहणम्, न ह्रस्वयोः। स्थानिवद्भावे

**भावबोधिनी**

'आङ्' यह पूर्व आचार्यों के निर्देश से तृतीया का एकवचन लिया जाता है। उस आङ् ( टा ) के परे रहते और 'च' के बल से 'ओस्' के परे रहते आबन्त अङ्ग का एकार आदेश होता है। उदा० खट्वया, मालया। [ खट्वा + टा = आ, आकार का ए खट्वे + आ, माले + आ, ए का अय् आदेश—खट्वया, मालया। ] खट्वयोः, मालयोः [ खट्वा + ओस्, आ का ए, ए का अय् आदेश खट्वयोस्, स् का रुत्व, विसर्ग। ] बहुराजया, कारीषगन्ध्यया। [ बहुराजा यह डाप् प्रत्ययान्त और कारीषगन्ध्या यह चाप् प्रत्ययान्त है। आ का ए, ए का अय् आदेश। ] बहुराजयोः, कारीषगन्ध्ययोः। [ ओस् परे रहते आ का ए। ]

'आपः' यह पित् ( पकारेत्संज्ञक ) का ग्रहण किस लिये है? कीलालपा ब्राह्मणेन। [ कीलालं पिबति—अर्थ में विच् प्रत्ययान्त—कीलालपा शब्द के तृतीया एकवचन में 'टा = आ' परे रहते 'आतो धातोः' से आ का लोप करने पर कीलालप् आ बनता है। यहाँ आ है किन्तु वह पित् नहीं है। अतः एत्व न होकर लोप होता है।] कीलालपोः ब्राह्मणयोः। [ कीलालपा + ओस् में भी ए न होकर आ का लोप होता है। ]

"ङी तथा आप् के ग्रहण में अदीर्घ का ग्रहण नहीं होता है।" इस वचन से यहाँ एत्व नहीं होता है—अतिखट्वेन ब्राह्मणेन। [ खट्वाम् अतिक्रान्तः—इस अर्थ में समास के बाद ह्रस्व होने से प्रस्तुत सूत्र नहीं लगता है। अकारान्त से परे 'टा' का 'इन' गुण होता है। ] ॥ १०५ ॥

**३५०३. सम्बुद्धौ च ॥ १०६ ॥ (२८८)**

'आपः' इति वर्त्तते। सम्बुद्धौ च परत आबन्तस्याङ्गस्य एत्वं भवति। हे खट्वे! हे बहुराजे! हे कारीषगन्ध्ये!॥

**३५०४. अम्बार्थनद्योर्ह्रस्वः ॥ १०७ ॥ (२६७)**

'सम्बुद्धौ' इति वर्त्तते। अम्बार्थानामङ्गानां नद्यन्तानां (च) ह्रस्वो भवति सम्बुद्धौ परतः। हे अम्ब! हे अक्क! हे अल्ल!

नद्याः खल्वपि—हे कुमारि! हे शार्ङ्गरवि! हे ब्रह्मबन्धु! हे वीरबन्धु!

❀ डलकवतीनां प्रतिषेधो वक्तव्यः ❀ [ म० भा० ]। हे अम्बाडे! हे अम्बाले! हे अम्बिके!

❀ छन्दसि वेति वक्तव्यम् ❀। हे अम्बाड, हे अम्बाडे! हे अम्बाल, हे अम्बाले! हे अम्बिक, हे अम्बिके!

❀ तलो ह्रस्वो वा ङिसम्बुद्धयोरिति वक्तव्यम् ❀। देवते भक्तिः, देवतायां भक्तिः। हे देवत, हे देवते!। छन्दस्येव ह्रस्वत्वमिष्यते।

**न्यासः**

**सम्बुद्धौ च** ॥ १०६ ॥

**अम्बार्थनद्योर्ह्रस्वः** ॥ पूर्वस्यायमपवादः। अम्बार्थाः=मात्रर्थाः।

**डलकवतीनामित्यादि**। डलका यासां श्रुतीनां सन्तीति ता डलकवत्यः। असंयोगावयवभूता डलका इह गृह्यन्ते। अन्यथा हे अक्क, हे अल्ल—इत्यत्रापि स्यात्। वक्तव्यशब्दस्य व्याख्येय इत्येषोऽर्थः। उत्तरयोरपि वक्तव्यशब्दयोरयमेवार्थो वेदितव्यः। तत्रेदं व्याख्यानम्—'बहुलं छन्दसि' इत्यतो बहुलग्रहणं मण्डूकप्लुतिन्ययेनानुवर्त्तते, तेन सर्वं प्रतिषेधादिकं कार्यमपि भविष्यतीति।

**पदमञ्जरी**

तु प्रसङ्गः, तत्र स्थानिवत्प्रतिषेधसूत्रप्रस्तावे वार्त्तिकम्—'ङ्याब्ग्रहणेऽदीर्घः' इति ङ्यापोर्ग्रहणेऽदीर्घं आदेशो न स्थानिवदिति। तत्रार्थादिदमुक्तं भवति—ङ्यापोर्ग्रहणमिति, तदिदं **वृत्तिकारेण** दर्शितम् ॥ १०५ ॥ १०६ ॥

**अम्बार्थनद्योर्ह्रस्वः** ॥ अम्बार्थाः = मात्रर्थाः।

**डलकवतीनामिति**। अर्थगतेन स्त्रीत्वेनाम्बार्थाः शब्दा निर्दिष्टाः, श्रुत्यपेक्षो वा स्त्रीलिङ्गनिर्देशः—'डलकवतीनां श्रुतीनामित्यर्थः' इति। असंयुक्ताश्च डलका गृह्यन्ते; तेनाक्क, अल्लेति ह्रस्वो भवत्येव।

**देवते भक्तिरिति**। ह्रस्वत्वे कृते, 'ङ्याब्ग्रहणेऽदीर्घः' इति स्थानिवत्वनिषेधाद्याडागमो ङेरामपि न भवतः।

**भावबोधिनी**

'आपः' ( आबन्त का ) इसकी अनुवृत्ति होती है। सम्बुद्धि = सम्बोधन एकवचन परे रहते भी आबन्त अङ्ग का एत्व होता है। उदा० हे खट्वे!। हे बहुराजे!। हे कारीषगन्ध्ये!। [ हे खट्वा + सु, आ का एत्व, 'एङ् ह्रस्वात् सम्बद्धेः' से सु का लुक् होता है। ] ॥ १०६ ॥

'सम्बुद्धि परे रहते' इसकी अनुवृत्ति होती है। अम्बा = माता अर्थ वाले अङ्गों का तथा नदीसंज्ञक वर्ण जिनके अन्त में हैं उनका ह्रस्व होता है सम्बुद्धि परे रहते। उदा० हे अम्ब! हे अक्क! हे अल्ल! [ हे अम्बा + सु आदि में ह्रस्व करने के बाद "एङ्ह्रस्वात् सम्बुद्धेः" से सम्बुद्धि = सु का लोप हो जाता है। ]

नदीसंज्ञक का भी ह्रस्व होता है—हे कुमारि! हे शार्ङ्गरवि! हे ब्रह्मबन्धु! हे वीरबन्धु!। [ हे राजकुमारी + सु, ह्रस्व करने के बाद सम्बुद्धि का लोप होता है। ]

❀ ड, ल, क—वाले नदीसंज्ञकों का प्रतिषेध कहना चाहिए। ❀ उदा० हे अम्बाडे! हे अम्बाले! हे अम्बिके! [ अम्बाडा, अम्बाला, अम्बिका के ह्रस्व का प्रतिषेध करने पर 'सम्बुद्धौ च' सूत्र से 'आ' का एत्व होता है। एङन्त से सु का लोप होता है। ]

❀ मातॄणां मातच् पुत्रार्थमर्हते ❀ [ म० भा० ] । मातॄणां मातजादेशो वक्तव्यः सम्बुद्धौ, पुत्राय पुत्रमभिधातुम्, कीदृशाय ? अर्हते । मात्राव्यपदेशमर्हति श्लाघनीयत्वाद् यः पुत्रस्तदर्थम् । हे गार्गीमात ! 'नद्यृतश्च' ( ५।४।१५३ ) इति समासान्तापवादो मातजादेशः । चित्करणमन्तोदात्तार्थम् ॥

**३५०५. ह्रस्वस्य गुणः ॥ १०८ ॥ (२४२)**

'सम्बुद्धौ' इति वर्तते । ह्रस्वान्तस्याङ्गस्य गुणो भवति सम्बुद्धौ परतः । हे अग्ने ! हे वायो ! हे पटो ।

**न्यासः**

अर्हत इति । प्रशंसाभाजनभूतायेत्यर्थः । गार्गीमातेति । यो गार्ग्या मात्रा व्यपदेशेन प्रशंसामर्हति स एवमुच्यते ॥ १०७ ॥

**ह्रस्वस्य गुणः** ॥ ह्रस्वग्रहणं प्रकृताङ्गविशेषणम्, विशेषणेन च तदन्तविधिर्भवतीत्याह— **ह्रस्वान्तस्येत्यादि** । एवमुत्तरत्रापि तदन्तविधिर्वेदितव्यः ।

हे कुमारि, हे ब्रह्मबन्ध्वित्येवमादीनां कस्मान्न भवति ? इत्याह— **हे कुमारीत्यादि** । यदि ह्रस्वत्वे

**पदमञ्जरी**

**मातॄणामिति** । पूर्वपदभेदेन बहवो मातृशब्दा इति बहुवचनम् । **पुत्रार्थमिति** । पुत्रमभिधातुं यो मातृशब्द उपादीयत इत्यर्थः । बहुव्रीहौ च वर्त्तिपदैरन्यपदार्थोऽभिधीयत इति तत्रैवयमादेशः । **कीदृशाय पुत्रायेति** । समासे गुणीभूतस्यापि पुत्रस्य बुद्ध्या प्रविभज्य निर्देशः, यथा—'अथ शब्दानुशासनम्, केषां शब्दानाम्' इति । **मात्रा व्यपदेशमर्हतीति** । यः पुत्रः श्लाघ्यगुणत्वात्कुलसम्भूतया मात्रा व्यपदेशमर्हतीत्यर्थः । यत्र तु पितुरसंविज्ञानेन मात्रा व्यपदेशस्तत्र न भवति, एतच्चार्हत इति प्रशंसायां लटः शत्रादेशविधानाल्लभते । **समासान्तापवाद इति** । नाप्राप्ते तस्मिन्नस्यारम्भात् ॥ १०७ ॥

**ह्रस्वस्य गुणः** ॥ **ह्रस्वविधानसामर्थ्यादिति** । ननु ह्रस्वविधानं तस्य गुणविधानार्थमेव स्यात्, अन्यथा ह्रस्वत्वाभावाद् गुणो न स्यादत आह— **यदीति** । ह्रस्वं विधाय गुणे विधीयमाने प्रक्रियागौरवं

**भावबोधिनी**

❋ वेद में विकल्प से कहना चाहिए । ❋ [ अतः एक ह्रस्व का और दूसरा एत्व का रूप बनता है । ] उदा० हे अम्बाड ! हे अम्बाडे ! हे अम्बाल ! हे अम्बाले !, हे अम्बिक !, हे अम्बिके ! ।

❋ ङि और सम्बुद्धि में तल् प्रत्ययान्त का विकल्प से ह्रस्व कहना चाहिए । ❋उदा० देवते भक्तिः, देवतायां भक्तिः । हे देवत ! हे देवते । [ देवता + ङि = इ, ह्रस्व करने पर गुण होता है । ] ❋ यह ह्रस्वत्व वेद में ही इष्ट है [ लोक में नहीं ] ।❋ [ स्थानिवद्भावनिषेध के कारण 'याट्' आगम और ङि का आम् ये दोनों नहीं होते हैं । ]

❋ माता का मातच् आदेश होता है पुत्रार्थ अर्ह के लिये । ❋ सम्बुद्धि परे रहते माता का मातच् आदेश कहना चाहिए पुत्र के लिये = पुत्र को कहने के लिये, किस प्रकार के लिये ? अर्ह के लिये । [ माता के ] श्लाघनीय होने के कारण जो पुत्र माता से अपना नाम रखने योग्य है उसके लिये, [ मातच् आदेश करना चाहिए । जब किसी अत्यन्त प्रशंसनीय माता के नाम से किसी पुत्र का नाम व्यवहृत होता है वहाँ मातृ का मातच् हो जाता है । ] उदा० हे गार्गीमात ! [गार्गी माता यस्य स तत्सम्बुद्धौ रूपम् । यहाँ गार्गी माता की प्रतिष्ठा से पुत्र का नाम प्रचलित है । अतः मातच् आदेश, सु का लोप ] 'नद्यृतश्च' से समासान्त क प्रत्यय का अपवाद यह मातच् आदेश है । [ अतः 'क' प्रत्यय नहीं होता है । ] चित् आदेश [ "चितः" सूत्र से अन्तोदात्त करने के लिये है । ] ॥ १०७ ॥

'सम्बुद्धि परे' इसकी अनुवृत्ति होती है । सम्बुद्धि परे रहते ह्रस्वान्त अङ्ग का गुण होता है । उदा० हे अग्ने ! हे वायो ! हे पटो ! [ गुण होने से इ, उ का ए, ओ हो जाता है । 'एङ्ह्रस्वात् सम्बुद्धेः' से 'सु' का लोप हो जाता है । ]

'हे कुमारि ! हे ब्रह्मबन्धु !—इस प्रकार इन शब्दों का [ 'अम्बार्थनद्योर्ह्रस्वः' से ] ह्रस्व-विधान के

हे कुमारि, हे ब्रह्मबन्धु—इत्येवमादीनां ह्रस्वविधानसामर्थ्याद् गुणो न भवति। यदि गुण इष्टः स्यात्, 'अम्बार्थानां ह्रस्वः' इत्युक्त्वा 'नदीह्रस्वयोर्गुणः' इत्येवं ब्रूयात् ॥

**३५०९. जसि च ॥ १०९ ॥ (२४१)**

**जसि परतो ह्रस्वान्तस्याङ्गस्य गुणो भवति। अग्नयः। वायवः। पटवः। धेनवः। बुद्धयः।**

**❀ जसादिषु छन्दसि वावचनं प्राङ्णौ चङ्युपधाया ह्रस्व इत्येतस्मात् ❀ (म० भा०)। इतः प्रकरणात् प्रभृति छन्दसि वेति वक्तव्यम्। किं प्रयोजनम्? अम्बे, दर्वि, शतक्रत्वः, पश्वे[1] नृभ्यः, किकिदीव्या। अम्बे, अम्ब। पूर्णा दर्वि, पूर्णा दर्वे[2]। अधा शतक्रत्वः, शतक्रतवः। पश्वे नृभ्यः, पशवे नृभ्यः। किकिदिव्या, किकिदीविना ॥**

न्यासः

कृते गुणः स्यात्, ह्रस्वकरणमनर्थकं स्यात्। ननु च गुणार्थमेतत् स्यात्, असति हि तस्मिन् 'ह्रस्वस्य गुणः' इति गुणो न स्यात्, अह्रस्वान्तत्वात्? इत्याह—यदीत्यादि। एवं प्रक्रियागौरवं परिहृतं भवतीति भावः ॥१०८॥

**जसि च ॥ जसादिष्वित्यादि।** आदिशब्दः प्रकारे। जस्प्रकारेषु प्रत्ययेष्वित्यर्थः। **इतः प्रकरणादिति।** 'अम्बार्थनद्योर्ह्रस्वः' इत्येवमादिकात्। **छन्दसीति वक्तव्यमिति।** छन्दसि विषये वा कार्यं भवतीत्येत-

पदमञ्जरी

भवतीति लाघवार्थं साक्षादेव गुणं विदध्यादित्यर्थः। ननु 'नदीह्रस्वयोर्गुणः' इत्युच्यमाने 'जसि च' इत्यत्र नद्या अप्यनुवृत्तिः स्यात्, एकसमासनिर्दिष्टत्वात्? नैष दोषः; एकसमासनिर्दिष्टयोरप्येकदेशोऽनुवर्त्तते, तद्यथा—'संख्याव्ययादेर्ङीप्', 'दामहायनान्ताच्च' इत्यत्र संख्याग्रहणमनुवर्त्तते, नाव्ययग्रहणम् ॥ १०८ ॥

**जसि च ॥ जसादिष्विति।** आदिशब्दः प्रकारे, तेन पूर्वयोगनिर्दिष्टानामपि ग्रहणम्। **दर्वीति।** 'कृदिकारादक्तिनः' इति ङीष्विकल्पमनपेक्ष्यैतदुक्तम्, तत एव तु सिद्धं रूपद्वयम्। **शतक्रत्व इति।** 'जसि च'

भावबोधिनी

सामर्थ्य से गुण नहीं होता है। कारण यह है कि यदि गुण इष्ट होता तो 'अम्बार्थकों का ह्रस्व होता है' ऐसा कहकर 'नदीसंज्ञकों और ह्रस्वों का गुण होता है' ऐसा कहते। [ किन्तु नहीं कहा है इससे स्पष्ट है कि इनका ह्रस्व करने के बाद गुण नहीं होता है। ] ॥ १०८ ॥

जस् परे रहते ह्रस्वान्त अङ्ग का गुण होता है। उदा० अग्नयः। वायवः। पटवः। धेनवः। बुद्धयः। [ अग्नि + जस् = अस्, इकार का गुण ए, ए का अय् आदेश, स् का रुत्व विसर्ग। इसी प्रकार वायु, पटु, धेनु, बुद्धि से भी जस् में गुण, अय् अथवा अव् आदेश करना चाहिए। ]

❀ जस् आदि प्रत्यय परे रहते वेद में 'वा' कहना चाहिए 'णौ चङ्युपधायाः ह्रस्वः" सूत्र से पहले तक।❀ इस प्रकरण से लेकर 'वेद में विकल्प से' ऐसा कहना चाहिए। क्या प्रयोजन है? अम्बे, दर्वि, शतक्रत्वः, पश्वे नृभ्यः, किकिदीव्या [ इनके लिये ]। अम्बे, अम्ब। [ यहाँ विकल्प से ह्रस्व और पक्ष में एत्व होता है। ] पूर्णा दर्वि, पूर्णा दर्वे। [ विकल्प से ह्रस्व का गुण होता है। ] अधा शतक्रत्वः, शतक्रतवः। [ विकल्प से गुण होता है। पक्ष में यण् होता है। ] पश्वे नृभ्यः, पशवे नृभ्यः। [ 'घेर्ङिति' से विकल्प से गुण, अवादेश, पक्ष में यण्। ] किकिदीव्या किकिदीविना। [ 'आङो नाऽस्त्रियाम्' से 'ना' आदेश विकल्प से होता है। पक्ष में किकिदीवि + आ, यण् होता है। ]

**विमर्श**—उपर्युक्त वार्तिक की व्याख्या और लक्ष्य बहुत स्पष्ट नहीं हैं। न्यासकार के अनुसार प्रकरण का प्रारम्भ "अम्बार्थनद्योर्ह्रस्वः" से होकर इस पाद की समाप्ति तक समझना चाहिये। इसमें जो कार्य बताये गये हैं वे विकल्प से होते हैं वेदविषय में। भाष्य में जो उदा० हैं वे ही काशिका में भी हैं। किन्तु कुछ प्रकाशित

१. १. १. भृत्यः—इति प्रकाशितपाठो भाष्यविरुद्धः। २. 'दर्वी' इति पाठान्तरम्।

## ३५०७. ऋतो ङिसर्वनामस्थानयोः ॥ ११० ॥ (२७५)

'गुणः' इति वर्त्तते। ऋकारान्तस्याङ्गस्य ङौ परतः सर्वनामस्थाने च गुणो भवति। ङौ—मातरि, पितरि, भ्रातरि, कर्तरि। सर्वनामस्थाने—कर्तारौ, कर्तारः। मातरौ, पितरौ, भ्रातरौ।

तपरकरणं[1] मुखसुखार्थम्[1] ॥

**न्यासः**

दर्व्यरूपं व्याख्येयमित्यर्थः। व्याख्यानं तु तदेव बहुवचनमाश्रित्य कर्त्तव्यम्। अम्बे इत्यादि। 'अम्बार्थनद्योर्ह्रस्वः' इति ह्रस्वो न भवति। दर्वीत्यत्र 'ह्रस्वस्य गुणः'। शतक्रत्व इत्यत्रापि 'जसि च' इति। पश्वे इति। 'घेर्ङिति' इति गुणः। किकिदिव्या इति। अत्र 'आङो नास्त्रियाम्' इति नाभावः ॥ १०९ ॥

ऋतो ङिसर्वनामस्थानयोः ॥ तपरकरणं मुखसुखार्थमिति। न हि ङिसर्वनामस्थानयोर्दीर्घ ऋकारः सम्भवति यस्तपरेण निवर्त्त्येत ॥ ११० ॥

**पदमञ्जरी**

इति गुणाभावपक्षे 'प्रथमयोः' इति पूर्वसवर्णदीर्घोऽपि 'वा छन्दसि' इति वचनान्न भवतीति यणादेशः प्रवर्त्तते। किकिदीव्येति। 'आङो नास्त्रियाम्' इति नाभावो न भवति। किकिदीविशब्दः 'कृविघृष्वि' इत्युणादिषु निपातितः ॥ १०९ ॥

ऋतो ङिसर्वनामस्थानयोः ॥ तपरकरणं मुखसुखार्थमिति। ङिसर्वनामस्थानयोर्दीर्घान्तस्यासम्भवात्। धात्वनुकरणमपि न सम्भवति, 'ॠत इद्धातोः' इतीत्वविधानात्। कर्तॄणीत्यादावपि नुमः पूर्वान्तत्वादसम्भवः ॥ ११० ॥

**भावबोधिनी**

संस्करणों में अशुद्ध पाठ प्रकाशित हैं, जैसे—'पश्वे भृत्यः' और 'पूर्णा दर्वी'। इनके स्थान पर शुद्ध पाठ हैं—'पश्वे नृभ्यः' और 'पूर्णा दर्वे'। क्रमशः (१) 'अम्बे, अम्ब' इसमें 'अम्बा' शब्द का 'अम्बार्थनद्योर्ह्रस्वः' से होने वाला ह्रस्व विकल्प से होता है—अम्ब। पक्ष में 'सम्बुद्धौ च' सूत्र से सामान्यरूप में होनेवाला एत्व होता है—अम्बे। (२) दर्वि—न्यासकार के अनुसार यह ह्रस्व इकारान्त है अतः 'ह्रस्वस्य गुणः' इस सूत्र से विकल्प से गुण होता है—'पूर्णा दर्वे'। पक्ष में गुणरहित—'पूर्णा दर्वि' यह रूप भी होता है। कैयट तथा पदमञ्जरीकार ने 'दर्वि' शब्द से 'कृदिकारादक्तिनः' इस वचन से ङीष्—विकल्प की अनपेक्षा मानते हुए ह्रस्वविकल्प माना है। उनके अनुसार—'दर्वी' का विकल्प से ह्रस्व होने से—'दर्वि और दर्वी' दो रूप होते हैं। किन्तु भाष्य में 'दर्वे, दर्वि' यही पाठ है। अतः गुणविकल्प ही उचित है। (३) शतक्रतु + जस् में प्रस्तुत 'जसि च' सूत्र से विकल्प से गुण होता है उ का ओ—शतक्रतो + अस्, अव् आदेश, स् का रुत्व विसर्ग—'अधा शतक्रतवः।' पक्ष में यण् होता है—'अधा शतक्रत्वः।' (४) 'पशु' शब्द घिसंज्ञक है। अतः पशु + ङे में 'घेर्ङिति (७।३।१११) से विकल्प से उ का गुण ओ, अव् आदेश होता है—'पशवे नृभ्यः। पक्ष में यण् होता है—पश्वे नृभ्यः। 'भृत्यः' पाठ भाष्यविरुद्ध है। (५) किकिदीवि + टा में घिसंज्ञक से परे 'टा' का 'ना' आदेश 'आङो नाऽस्त्रियाम्' (७।३।१२०) से विकल्प से होता है—'किकिदीविना' पक्ष में यण् होने से—'किकिदीव्या' रूप होता है।

ध्यान रहे यह विकल्प केवल वैदिक शब्दों में ही है क्योंकि उनमें दृष्टानुविधि होती है ॥ १०९ ॥

'गुण' इसकी अनुवृत्ति होती है। ङि प्रत्यय और सर्वनामसंज्ञक प्रत्यय परे रहते ऋकारान्त अङ्ग का गुण होता है। उदा० ङि परे—मातरि, पितरि, भ्रातरि, कर्त्तरि। [ मातृ, पितृ, भ्रातृ, कर्तृ—से सप्तमी एकवचन में ङि = इ प्रत्यय है, 'ऋ' का गुण रपर होने पर रूप बनते हैं। ] सर्वनामस्थानसंज्ञक परे—उदा० कर्त्तारौ, कर्तारः। मातरौ, पितरौ, भ्रातरौ। [ कर्तृ, मातृ, पितृ भ्रातृ से 'औ' तथा जस् प्रत्यय परे हैं। गुण रपर होता है। ]

ऋत् का तपरकरण मुखसुख ( उच्चारणसौविध्य ) लिये है। [ क्योंकि ङि तथा सर्वनामस्थान-संज्ञक परे रहते कहीं भी दीर्घ ऋकारान्त शब्द सम्भव नहीं है। ] ॥ ११० ॥

---

१–१. पाठोऽयं मुद्रितपुस्तके टिप्पण्यां स्थापितम्।

३५०८. घेर्ङिति ॥ १११ ॥

घ्यन्तस्याङ्गस्य ङिति प्रत्यये परतो गुणो भवति । अग्नये वायवे । अग्नेरागच्छति, वायोरागच्छति । अग्नेः स्वम् । वायोः स्वम् ।

घेरिति किम् ? सख्ये, पत्ये । ङितीति किम् ? अग्निभ्याम् ॥

'सुपि' इत्येव—पट्वी । कुरुतः ॥

३५०९. आण्नद्याः ॥ ११२ ॥ (२६८)

न्यासः

घेर्ङिति ॥ सख्ये, पत्ये इति । सखिपतिशब्दौ घिसंज्ञकौ न भवतः; 'शेषो घ्यसखि' इति पर्युदासात्, 'पतिः समास एव' इति नियमाच्च । पट्वीति । 'वोतो गुणवचनात्' इति ङीष् । अत्र गुणो न भवति; 'सुपि च' इत्यतः सुपीत्यनुवृत्तेः । कुरुत इति । करोतेस्तस्, उप्रत्ययः, धातोर्गुणः, रपरत्वम्, 'अत उत् सार्वधातुके' इत्युत्वम् । अत्रापि सुपीत्यनुवृत्तेस्तसि परतो विकरणान्तस्य न भवति गुणः ॥ १११ ॥

आण्नद्याः ॥ 'नद्याः' इति पञ्चमी, सा चाकृतार्था पूर्वत्र कृतार्थाया ङितीत्यस्याः सप्तम्याः षष्ठीत्वं प्रकल्पयिष्यति । तेन ङित एवायमाडागमो विज्ञायते, इत्याह—नद्यन्तादङ्गादुत्तरस्येत्यादि । कुमार्यै इत्येवमादौ 'आटश्च' इति वृद्धिः ।

अथ दीर्घोच्चारणं किमर्थम्, न अडेवोच्येत, 'वृद्धिरेचि' इति वृद्ध्या सवर्णदीर्घत्वेन सिद्ध्यत्येव; कुमार्यै, कुमार्या इत्यत्र 'अतो गुणे' पररूपत्वं प्राप्नोतीत्येतच्च नाशङ्कनीयम्, पररूपत्वं ह्यत्र वचनसामर्थ्यान्न

पदमञ्जरी

घेर्ङिति ॥ घ्यन्तस्याङ्गस्येति । 'वर्णमात्रस्य घिसंज्ञा' इत्याश्रित्येदमुक्तम् । 'तदन्तस्य संज्ञा' इत्यत्र तु पक्षे घ्येकदेशे वर्णे घिशब्दो द्रष्टव्यः । एतेन नद्यन्तादिति व्याख्यातम् ।

सुपीत्येवेति । 'सुपि च' इत्यतः । पट्वीति । 'वोतो गुणवचनात्' इति । कुरुत इति । यस्य नदीसंज्ञा नास्ति स सर्वोऽपि घिसंज्ञः, न लिङ्गवदेवेति कुरुशब्दस्य घिसंज्ञा, तस्य ङसि ङिति गुणो न भवति । एतच्च ङिच्छब्दे बहुव्रीहिमाश्रित्योच्यते । यदि तु ङश्चासाविच्चेति कर्मधारयस्तदा नैवात्र प्रसङ्गः, 'सार्वधातुकमपित्' इत्यनेन हि बहुव्रीहौ ङितो यत्कार्यं तदातदिश्यते, न चैतावता तसेर्ङकार आदिर्भवति ॥ १११ ॥

आण्नद्याः ॥ 'नद्याः' इति पञ्चम्यकृतार्था ङितीति सप्तम्याः षष्ठीं प्रकल्पयति, तेन ङित एवाय-

भावबोधिनी

घिसंज्ञक जिसके अन्त में हैं ऐसे अङ्ग का गुण ङित् प्रत्यय परे रहते होता है । उदा० अग्नये, वायवे । [ अग्नि + ङे=ए, वायु + ङे = ए, 'इ' गुण ए, उ का ओ, अय्, अव् आदेश ] अग्नेः आगच्छति, वायोः आगच्छति । [ अग्नि + ङसि = अस् वायु + ङसि = अस्, गुण और पूर्वरूप होता है । ] अग्नेः स्वम् । वायोः स्वम् । [ अग्नि + ङस् = अस्, वायु + ङस् = अस्, यहाँ भी गुण, पूर्वरूप होता है । ]

'घि' संज्ञक का—इसका क्या फल है ? सख्ये । पत्ये । [ 'शेषो घ्यसखि' सूत्र सखि को छोड़कर घिसंज्ञा करता है । 'पतिः समास एव' सूत्र समास में ही 'पति' की घिसंज्ञा करता है । अतः 'घि' न होने से इनमें गुण नहीं होता है । ]

ङित् परे—इसका क्या फल है ? अग्निभ्याम् [ यहाँ गुण नहीं होता है । ]

सुप् प्रत्यय परे ही होता है—पट्वी । [ पटु + ङीष् ] । कुरुतः । [ कृ + तस्, ये ङित् प्रत्यय हैं किन्तु सुप् नहीं है । अतः इनसे गुण नहीं होता है । ] ॥ १११ ॥

नदीसंज्ञक वर्ण जिसके अन्त में है ऐसे अङ्ग से उत्तरवर्ती ङित् प्रत्यय को आट् आगम होता है । उदा० कुमार्यै, ब्रह्मबन्ध्वै । कुमार्याः, ब्रह्मबन्ध्वाः । [ कुमारी + ङे = ए, प्रत्यय के पूर्व आट् आगम, 'आटश्च' सूत्र से

नद्यन्तादङ्गादुत्तरस्य ङितः प्रत्ययस्याडागमो भवति । कुमार्यै, ब्रह्मबन्ध्वै । कुमार्याः, ब्रह्मबन्ध्वाः ॥

**३५१०. याडापः ॥ ११३ ॥ (२९०)**

**आबन्तादङ्गादुत्तरस्य ङितः प्रत्ययस्य याडागमो भवति । खट्वायै । बहुराजायै । कारीषगन्ध्यायै । खट्वायाः । कारीषगन्ध्यायाः । बहुराजायाः ।**

**न्यासः**

भविष्यति ? नैष दोषः; अस्ति ह्यन्यद्वचनस्य प्रयोजनम् । किं तत् ? श्रियै, श्रिया इत्यत्र 'सावेकाचस्तृतीयादिर्विभक्तिः' इत्युदात्तत्वं मा भूत् । आगमा आद्युदात्ता भवन्तीत्यनुदात्तत्वं यथा स्यादिति । शक्यते ह्येकादेशोऽन्तादिवद्भावादागमग्रहणेन ग्रहीतुम् । आगमानुदात्तत्वञ्च यथा प्रत्ययस्वरम्—लविता, लवितुमित्यादौ बाधते, तथा विभक्तिस्वरमपि बाधेत । तस्माद् 'आटश्च' इति वृद्ध्यर्थमेतत् ॥ ११२ ॥

**याडापः ॥ खट्वायामिति ।** 'वृद्धिरेचि' इति वृद्धिः । खट्वाया इत्यत्राकः सवर्णे दीर्घत्वम् । दीर्घोच्चारणम्—वृद्धिसवर्णदीर्घत्वे यथा स्याताम्, पररूपत्वं मा भूदित्येवमर्थम् । अकारोच्चारणसामर्थ्यान्न भविष्यतीति चेत् ? न; अस्ति ह्यन्यदकारोच्चारणस्य प्रयोजनम् । किं तत् ? ज्ञायै, ज्ञाया इत्यत्र 'सावेकाचस्तृतीयादिर्विभक्तिः' इत्यनेनोदात्तत्वं मा भूत्, आगमानुदात्तत्वं यथा स्यादिति ।

अथ खट्वामतिक्रान्तायातिखट्वायेत्यत्र कस्मान्न भवति, उपसर्जनह्रस्वत्वे कृते तस्य स्थानिवद्भा-

**पदमञ्जरी**

मागमो विज्ञायत इत्याह—**नद्यन्तादङ्गादुत्तरस्येति । कुमार्या इति ।** 'आटश्च' इति वृद्धिः । अथ दीर्घोच्चारणं किमर्थम्, अडेवोच्येत, 'वृद्धिरेचि' इति वृद्ध्या सवर्णदीर्घत्वेन च कुमार्यै, कुमार्या इति सिद्धम् ? न सिद्ध्यति; 'अतो गुणे' पररूपत्वं प्राप्नोति । अड्वचनसामर्थ्यान्न भविष्यति ? अस्त्यड्वचने प्रयोजनम्, किम् ? श्रियै, श्रिया इत्यत्र 'सावेकाचः' इत्याद्युदात्तत्वं मा भूत्, आगमानुदात्तत्वं यथा स्यादिति । आगमानुदात्तत्वं हि प्रत्ययस्वरमिव विभक्तिस्वरमपि बाधते, विशेषतोऽत्राड्वचनसाम्र्थ्यात् ॥ ११२ ॥

**याडापः ॥** दीर्घोच्चारणं किमर्थम्, न यडेवोच्येत, वृद्धौ कृतायां सवर्णदीर्घत्वे च खट्वायै, खट्वाया इति सिद्धम् ? न सिध्यति; 'अतो गुणे' पररूपत्वं प्राप्नोति, अकारोच्चारणसामर्थ्यान्न भविष्यति । अस्त्यन्यदकारोच्चारणस्य प्रयोजनम्—ज्ञायै, ज्ञाया इत्यत्र 'सावेकाचः' इत्याद्युदात्तत्वं मा भूत्, आगमानुदात्तत्वं यथा स्यादिति । किञ्च—उच्चारणार्थोऽप्यकारः सम्भाव्येत, इह खट्वामतिक्रान्त इति प्रादिसमासे ह्रस्वत्वे च तस्य स्थानिवद्भावात्ततः परस्य चतुर्थ्येकवचनस्य 'ङेर्यः' इति यादेशं बाधित्वानेन याट् प्राप्नोति, तत्र

**भावबोधिनी**

वृद्धि—कुमारी + ऐ, यण् आदेश । ब्रह्मबन्धु + ङे = ए, आट्, वृद्धि, यण् आदेश । कुमारी + ङस् = अस्, आट्, वृद्धि, कुमारी + आस्, यण् ] ॥ ११२ ॥

आबन्त अङ्ग से उत्तरवर्त्ती ङित् प्रत्यय को याट् आगम होता है । उदा० खट्वायै । [ खट्वा + ङे = ए, याट् आगम, 'वृद्धिरेचि' से वृद्धि—यै । खट्वा + यै । ] बहुराजायै । कारीषगन्ध्यायै । [ टाप्, डाप्, चाप् इनमें आप् बचता है । ऐसे आबन्त से परे 'ङे = ए' को याट् आगम होता है । ] खट्वायाः । कारीषगन्ध्यायाः । बहुराजायाः । [ खट्वा + ङस् = अस्, याट् आगम, सवर्णदीर्घ—खट्वा यास्, रुत्वविसर्ग । ]

[ खट्वाम् अतिक्रान्तः—इस अर्थ में समास और उपसर्जन का ह्रस्व करने पर 'अतिखट्व' बनाने के बाद अतिखट्व + ए में स्थानिवद्भाव से आबन्त मानकर याट् आगम क्यों नहीं होता है ? ] अतिखट्वाय' यहाँ 'अतिखट्व + य' में [ 'सुपि च' से ] दीर्घ न कर लेने पर 'ङी तथा आप् के ग्रहण में अदीर्घ का ग्रहण नहीं होता है' इस वचन से याट् आगम नहीं होता है । और [ 'सुपि च' से ] दीर्घ कर लिये जाने पर लाक्षणिक ( सूत्र द्वारा बनाया

अतिखट्वाय—इत्यत्राकृते दीर्घे 'ङ्याब्ग्रहणे अदीर्घः' इति वचनाद्याडागमो न भवति, कृते तु लाक्षणिकत्वात् ॥

## ३५११. सर्वनाम्नः स्याड्ढ्रस्वश्च ॥ ११४ ॥ (२९१)

सर्वनाम्न आबदन्तादङ्गादुत्तरस्य ङितः प्रत्ययस्य स्याडागमो ह्रस्वश्च भवति। सर्वस्यै, विश्वस्यै, यस्यै, तस्यै, कस्यै, अन्यस्यै। सर्वस्याः, विश्वस्याः, यस्याः, तस्याः, कस्याः, अन्यस्याः।

'आपः' इत्येव—भवति। भवते ॥

## ३५१२. विभाषा द्वितीयातृतीयाभ्याम् ॥ ११५ ॥ (२९३)

न्यासः

वादाब्ग्रहणेन ग्रहणे सति प्राप्नोति ? इत्यत आह—**अतिखट्वायेत्यादि**। यदा तावत् 'सुपि च' इति दीर्घत्वं न क्रियते, तदा ङ्याब्ग्रहणेन दीर्घग्रहणमित्येतद्वचनान्न भवति। यदा दीर्घत्वं तदा लाक्षणिकत्वान्न भवति; 'लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम्' इति वचनात् ॥ ११३ ॥

**सर्वनाम्नः स्याड्ढ्रस्वश्च ॥** याटोऽपवादः। आकारोच्चारणं सर्वस्या इत्यत्र यथा स्याद्; अन्यथा पररूपत्वं प्रसज्येत। अकारोच्चारणसामर्थ्यान्न प्रसज्येत्—इत्येतच्च नाशङ्कनीयम्, तद्धि तस्यामित्यत्र 'ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः' इति विभक्त्युदात्तत्वं मा भूत्, आगमानुदात्तत्वं यथा स्यादित्येवमर्थम् ॥ ११४ ॥

**विभाषा द्वितीयातृतीयाभ्याम् ॥** असर्वनामार्थं वचनम्। ये तु 'वाप्रकरणे तीयस्य ङित्सूपसंख्यानम्' इति सर्वनामसंज्ञां तीयस्योपसञ्चक्षते त इदं सूत्रं प्रत्याचक्षते, तेनैव सिद्धत्वात्। तच्चोपसंख्यानमवश्यं

पदमञ्जरी

कृते दीर्घत्वे चातिखट्वायै देवदत्तायेति प्रसङ्गः, तत्राह—**अतिखट्वायेत्यत्रेति। अकृते दीर्घत्व इति।** यादेशात् प्रागवस्थायामिदमुक्तम्। कृते तर्हि यादेशे दीर्घत्वे च ङिच्चासौ भूतपूर्व इति याट् प्राप्नोति ? अत आह—**कृते च लाक्षणिकत्वादिति** ॥ ११३ ॥

**सर्वनाम्नः स्याड्ढ्रस्वश्च ॥** दीर्घोच्चारणं सर्वस्या इत्यत्र वृद्धिर्यथा स्याद्, 'अतो गुणे' पररूपत्वं मा भूत्। अकारोच्चारणं तु 'अस्या' इत्यत्र 'ऊडिदम्पदादि' इति विभक्तेराद्युदात्तत्वं मा भूत्, आगमनानुदात्तत्वं यथा स्यादेवमर्थं स्यात्। किञ्च उच्चारणार्थोऽप्यकारः सम्भाव्येत ॥ ११४ ॥

**विभाषा द्वितीयातृतीयाभ्याम् ॥** अप्राप्तविभाषेयम्; असर्वनामत्वात्। ननु च 'तीयस्य वा ङित्सू-

भावबोधिनी

गया ) होने के कारण याट् आगम नहीं होता है। [ क्योंकि लाक्षणिक और प्रतिपदोक्त में प्रतिपदोक्त का ही ग्रहण होता है। अतः किसी भी स्थिति में याट् आगम सम्भव नहीं है ] ॥ ११३ ॥

सर्वनामसंज्ञक आबन्त अङ्ग से उत्तरवर्त्ती ङित् प्रत्यय को 'स्याट्' का आगम तथा ( पूर्व का ) ह्रस्व होता है। उदा० सर्वस्यै, विश्वस्यै, यस्यै, तस्यै, कस्यै, अन्यस्यै। [ सर्वा + ङे = ए, स्याट् = स्या आगम, आ का ह्रस्व—सर्व स्या ए, वृद्धि करने पर—सर्वस्यै। इसी प्रकार अन्य शब्दों में भी समझना चाहिए। ] सर्वस्याः, विश्वस्याः, यस्याः, तस्याः, कस्याः अन्यस्याः। [ सर्वा + ङस् = अस्, स्याट् आगम, पूर्व का ह्रस्व—सर्व स्या + अस्, सवर्णदीर्घ आदि ]।

आबन्त से ही होता है—भवति। भवते। [ यहाँ भवत् + ङि, भवत् + ङे में आबन्त से परे नहीं है। कहीं-कहीं 'भवत्यै, भवत्याः, पाठ भी है। भवती + ए, भवती + ङस् में भी आबन्त न होने से स्याट् और ह्रस्व नहीं होता है ] ॥ ११४ ॥

द्वितीया और तृतीया—इन शब्दों से उत्तरवर्त्ती ङित् प्रत्यय को विकल्प से 'स्याट्' आगम होता है तथा 'द्वितीया' 'तृतीया' का ह्रस्व भी होता है। [ स्याट् और ह्रस्व एक साथ होते हैं। अतः 'याट्' में ह्रस्व नहीं होता

द्वितीया, तृतीया—इत्येताभ्यामुत्तरस्य ङितः प्रत्ययस्य विभाषा स्याडागमो भवति, द्वितीयातृतीययोश्च ह्रस्वो भवति। द्वितीयस्यै, द्वितीयायै। तृतीयस्यै, तृतीयायै॥

**३५१३. ङेराम्नद्याम्नीभ्यः॥ ११६॥ (२७०)**

नद्यन्तादाबन्तान्नीत्येतस्माच्चोत्तरस्य ङेरामित्ययमादेशो भवति। कुमार्याम्। गौर्याम्। ब्रह्मबन्ध्वाम्। धीबन्ध्वाम्।

आपः—खट्वायाम्। बहुराजायां। कारीषगन्ध्यायाम्।

नी—राजन्याम्। सेनान्याम्[1]॥

**न्यासः**

कर्त्तव्यम्, स्मायादयो ङिति विकल्पेन यथा स्युरिति—द्वितीयस्मै, द्वितीयाय; द्वितीयस्मिन्, द्वितीय इति। अन्ये त्वनेनैव स्मायादयः सिध्यन्तीत्युपसंख्यानमेव प्रत्याचक्षते। कथम्? 'सर्वनाम्नः' इत्येतदिहानुवर्तते, स्याडिति निवृत्तम्, तेनैवमभिसम्बन्धः क्रियते—सर्वनाम्नो ङिति यदुक्तं तद्विभाषा द्वितीया-तृतीयाभ्यां भवतीति? तेन स्मायादयोऽप्यनेनैव भविष्यन्तीति नार्थं उपसंख्यानेन॥ ११५॥

ङेराम्नद्याम्नीभ्यः॥ 'ङेः' इति सप्तम्येकवचनस्य ग्रहणम्। एतच्च 'स्त्रियाम्'—इत्येवमादिनिर्देशाद्विज्ञायते। ग्रामण्यामिति। ग्रामं नयतीति 'सत्सूद्विष' इत्यादिना क्विप्, 'अग्रग्रामाभ्याञ्च' इति णत्वम्। 'एरनेकाचः' इति यणादेशः। अथ कुमार्याम्, खट्वायाम्, सर्वस्यामिति कथं सिध्यति, आमि कृते 'ह्रस्वनद्यापो नुट्' इति नुडागमेन भवितव्यम्? नैष दोष; नुटः परत्वादाट्-याट्-स्याटो भवन्ति। तेषु कृतेषु नुटः प्राप्तिरेव नास्तीति, न हि द्वयोरादिलिङ्गयोः समुच्चय उपपद्यते॥ ११६॥

**पदमञ्जरी**

पसंख्यानम्' इत्यनेनैव सिद्धत्वान्नार्थ एतेन, तच्चावश्यं वक्तव्यं लिङ्गान्तरेऽपि स्मायादयो विकल्पेन यथा स्युरिति? नैतद्युक्तमुच्यते; यद्धि सूत्रेणासिद्धं तदुपसंख्यानेन साधनीयम्, न पुनरुपसंख्यानाश्रयणेन सूत्रस्य प्रत्याख्यानं युज्यते।

यदि पुनरत्र ह्रस्वयोर्ग्रहणं कृत्वा स्याड्ग्रहणं च निवर्त्य 'सर्वनाम्नः' इत्येवानुवर्त्यातिदेश आश्रीयते—सर्वनाम्नो यदुक्तं तद्विभाषा भवति द्वितीयातृतीययोरिति, तदोपसंख्यानं शक्यमकर्त्तुम्॥ ११५॥

ङेराम्नद्याम्नीभ्यः॥ 'ङे' इति सप्तम्येकवचनग्रहणम्; इच्छायाम्, स्त्रियामित्यादिनिर्देशात्। ग्रामण्यामिति। 'सत्सूद्विष' इत्यादिना क्विप्, 'अग्रग्रामाभ्याम्'[2] इति णत्वम्, 'एरनेकाचः' इति यण्॥ ११६॥

**भावबोधिनी**

है।] उदा० द्वितीयस्यै, द्वितीयायै। तृतीयस्यै, तृतीयायै। [द्वितीया + ङे = ए, विकल्प से स्याट् आगम और पूर्व का ह्रस्व आदेश द्वितीय स्या ए, वृद्धि—'द्वितीयस्यै'। इसी प्रकार तृतीय + स्या + ए, वृद्धि—तृतीयस्यै, स्याट् न होने पर 'याडापः' सूत्र से याट् आगम और वृद्धि—द्वितीयायै, तृतीयायै।]॥ ११५॥

नद्यन्त, आबन्त तथा 'नी' इनसे उत्तरवर्त्ती 'ङि' के स्थान पर 'आम्' यह आदेश होता है। नद्यन्त के उदा० कुमार्याम्। गौर्याम्। ब्रह्मबन्ध्वाम्। धीबन्ध्वाम्। [कुमारी + ङि, ङि का आम्, यण्—कुमार्य् आम्। इसी प्रकार अन्य में भी आम् होता है।]

आबन्त के उदा० खट्वायाम्। बहुराजायाम्। कारीषगन्ध्यायाम्। [खट्वा + ङि = आम्, 'याडापः' से याट् आगम खट्वा या आम् दीर्घ आदि होता है।]

'नी' शब्द के उदा० राजन्याम्। सेनान्याम्। [राजनी + ङि = आम्, सेनानी + ङि = आम, यण् होता है।]॥ ११६॥

---

१. ग्रामण्यामिति पुस्तकान्तरेऽधिकम्।

२. नेदं कात्यायनस्य वाक्यम्, न वा भाष्यकारस्य, अन्यैरेव तु वार्त्तिकरूपेण प्रक्षिप्तम्। 'ग्रामणीः' इत्यस्य सिद्धिस्तु पूर्वं ३.२.६१ सूत्रे द्रष्टव्या।

३५१४. इदुद्भ्याम् ॥ ११७ ॥ (२९७)

इकारोकाराभ्यां नदीसंज्ञकाभ्यामुत्तरस्य ङेरामादेशो भवति । कृत्याम् । धेन्वाम् ॥

३५१५. औत् ॥ ११८ ॥ (२५६)

इदुद्भ्यामुत्तरस्य ङेरौकारादेशो भवति । यन्न नदीसंज्ञं नापि घिसंज्ञमिकारान्तम्, तदिहोदाहरणम् । सख्यौ । पत्यौ ॥

३५१६. अच्च घेः ॥ ११९ ॥ ( २४७ )

'औत्' इति वर्तते । घिसंज्ञकादुत्तरस्य ङेरौकारादेशो भवति, तस्य च घेरकारादेशो भवति । अग्नौ । वायौ । कृतौ । धेनौ । पटौ ।

**न्यासः**

इदुद्भ्याम् ॥ नदीग्रहणमिहानुवर्त्तते । तेन चेदुतौ विशिष्येते नदीसंज्ञकौ याविदुताविति । यद्येवम्, अनर्थकमिदम्, पूर्वेणैव सिद्धत्वात् ? नैतदस्ति; ओकारो हि परत्वादुत्तरसूत्रेण स्यात्, अस्मिंश्च सत्यामेव भवति ॥ ११७ ॥

औत् ॥ नदीसंज्ञकात् परस्य ङेराम् पूर्वेण विहितः, घिसंज्ञकादुत्तरेणात्वसन्नियुक्तमौकारं वक्ष्यति, तस्मात् पारिशेष्यात् ताभ्यां यदन्यदिकारोकारान्तं तदिहोदाहरणं विज्ञायत इत्याह— यन्न नदीसंज्ञमित्यादि । अत्र च सखिपतिशब्दावस्त्र्याख्यत्वान्नदीसंज्ञकावपि न भवतः । घिसंज्ञकौ यथा न भवतस्तथा पूर्वमेव प्रतिपादितम् ॥ ११८ ॥

अच्च घेः ॥ अथात्त्वे कृते 'अजाद्यतष्टाप्' इति—कृतौ, धेनावित्येवमादौ टाप् कस्मान्न भवति ? इत्याह—अदिति तपरकरणमित्यादि । यस्मात् तपरकरणं टाब्निवृत्त्यर्थं क्रियते, तस्मात् कृतेऽप्यत्त्वे टाब्न भवतीति भावः । तपरकरणं हि तत्कालावधारणार्थम् । न चात्र भाव्यमानत्वादणो मात्रिकत्वाच्च स्थानिनो

**पदमञ्जरी**

इदुद्भ्याम् । नदीग्रहणमिहानुवर्त्तते । यद्येवम्, अपार्थकमिदम्, पूर्वेणैव सिद्धत्वात्, ततश्च 'इदुद्भ्यामौत्' इत्येकयोग एव कर्त्तव्यः ? नैवं शक्यम्; औकारो हि स्यात्, नदीलक्षणस्यामोऽवकाशः—कुमार्यामिति, औत्वस्यावकाशः—पत्यौ, सख्याविति; कृत्यामित्यत्र यदा नदीसंज्ञा तदा परत्वादौत्त्वं प्राप्नोति ॥११७॥

औत् ॥ यन्न नदीसंज्ञमित्यादि । नदीसंज्ञके पूर्वेणाम् विहितः, घिसंज्ञेऽप्युत्तरेणात्वसंयुक्तमौत्वं वक्ष्यति, तस्मादाभ्यामन्यदेवोदाहरणम् । तत्र पूर्वत्र 'घ्यन्तान्नद्यन्तात्' इत्युक्तम्, इह त्विकारोकारान्तमित्युक्तम्, संज्ञाविधौ च पक्षद्वयं दर्शितम्—वर्णमात्रस्य संज्ञा, तदन्तस्य वेति; तेन नास्ति विरोधः ॥ ११८ ॥

अच्च घेः ॥ कृतौ, धेनाविति । अथात्रात्वे कृते 'अजाद्यतष्टाप्' इति टाप्कस्मान्न भवति, अस्तु को दोषः ? 'ङेराम्नद्याम्नीभ्यः', 'याडापः' इत्येतौ विधी प्राप्नुतः, औत्वविधानं तु पुंसि चरितार्थम् ?

**भावबोधिनी**

नदीसंज्ञक इकार और उकार से उत्तरवर्त्ती ङि का आम् आदेश होता है । उदा० कृत्याम् । धेन्वाम् । [ कृति + ङि, धेनु + ङि 'ङिति ह्रस्वश्च' ( १।४।६ ) सूत्र से विकल्प से नदी संज्ञा होती है । प्रस्तुत सूत्र से ङि का आम् कृति + आम्, धेनु + आम्, यण् । नदी संज्ञा के अभाव में घिसंज्ञा होने से 'अच्च घेः' सूत्र से 'ङि' का औत् तथा 'इ' और 'उ' का अ होता है, वृद्धि करने पर—कृतौ, धेनौ रूप बनते है । ] ॥ ११७ ॥

इत् उत् ( इ, उ ) से उत्तरवर्त्ती ङि का 'औ' आदेश होता है । जो न नदीसंज्ञक है और न घिसंज्ञक इकारान्त, वह इस सूत्र में उदाहरण बनता है । उदा० सख्यौ । पत्यौ । [ सखि + ङि, पति + ङि, दोनों की न नदी संज्ञा सम्भव है और न घि संज्ञा, किन्तु इकारान्त है । अतः इस सूत्र से 'ङि' का 'औ' आदेश होता है—सखि + औ, पति + औ, यण् होता है—सख्यौ, पत्यौ । ] ॥ ११८ ॥

'औत्' इसकी अनुवृत्ति होती है । घिसंज्ञक से उत्तरवर्त्ती 'ङि' का औकार आदेश होता है और उस घि संज्ञक ( इ, उ ) का अकार आदेश होता है । उदा० अग्नौ । वायौ । कृतौ । धेनौ । पटौ । [ अग्नि + ङि, प्रस्तुत सूत्र से

**अदिति तपरकरणं स्त्रियां टापो निवृत्त्यर्थम् ।**

'औदच्च घेः' इति येषामेकमेवेदं सूत्रम्, ते प्रधानशिष्टमिदुद्भ्यामौत्वं वर्णयन्ति—अन्वाचयशिष्टं घेरकारमिति ॥

## ३५१७. आङो नाऽस्त्रियाम् ॥ १२० ॥ (२४४)

**न्यासः**

दीर्घत्वस्य प्राप्तिरस्ति । अतोऽन्येनापि हेतुना यद्दीर्घत्वमापद्यते तत्प्रतिषेधार्थमुपजायमानं तट्टापोऽभावमापादयति । टापि हि सत्यकः सवर्णे दीर्घत्वं स्यात् । तथा चानर्थकं तपरकरणं स्यात् । तस्मान्मा भूदनर्थकमिति कृतेऽप्यत्त्वे टापा न भवितव्यमिति ।

**औदच्च घेरिति येषामित्यादि ।** इह केचिद् 'औदच्च घेः' इत्येकं योगं कुर्वन्ति, तथा च सत्यौत्वात्त्वयोः सन्नियोगशिष्टत्वाद् यत्रात्त्वं तत्रैवौत्त्वेन भवितव्यम् । घेश्चात्त्वमिति सख्यौ, पत्यावित्यत्रात्त्वाभावादौत्त्वमपि न स्यात् । अतस्तस्य दोषस्य परीहाराय येषामेक एवायं योगस्ते प्रधानशिष्टमौत्त्वमाचक्षते । यथा 'कर्तुः क्यङ् सलोपश्च' इत्यत्र प्रधानशिष्टमाचक्षते क्यङम्, अन्वाचयशिष्टं सलोपम् । यथा तत्रैव—तत्रासत्यपि सलोपे यथा क्यङ् भवति श्येनायते—इत्यादौ; एवमसत्यप्यत्त्वे सख्यौ, पत्यावित्यत्रौत्त्वं भवतीति तेषामभिप्रायः ॥ ११९ ॥

**पदमञ्जरी**

**अत आह—तपरकरणं स्त्रियामापो निवृत्त्यर्थमिति ।** इह हि स्थानिनो मात्रिकत्वाद्भाव्यमानत्वाच्चाणो दीर्घस्य प्रसङ्गो नास्ति यस्य निवृत्त्यर्थं तपरकरणं स्यात् । तस्मात्कालान्तरेणापि दीर्घो मा भूदित्येवमर्थं तपरकरणं क्रियते, एतच्च सन्निपातपरिभाषामनाश्रित्योक्तम् । ङिसन्निपातकृतं ह्यत्वं तद्विघातकस्य टापो निमित्तं न भवति ।

**औदच्च घेरिति येषामित्यादि ।** इह केचित् 'औदच्च घेः' इत्येकयोगमेवाधीयते, तत्र यदि समुच्चये चशब्दः स्यात्, यत्रात्वं तत्रैवौत्वं स्यात्—धेनाविति, घेश्चात्वमित्यघौ सख्यौ, पत्यावित्यत्रौत्वमपि न स्यात्, अस्य दोषस्य निवृत्तये प्रधानशिष्टमौत्वमन्वाचयशिष्टमत्वमिति वर्णयन्ति । तत्र यथा 'कर्तुः क्यङ् सलोपश्च' इत्यत्र सलोपस्यान्वाचयशिष्टस्याभावेऽपि श्येनायत इत्यादौ क्यङ् भवति, तथा अत्रापि सख्यौ, पत्यावित्यत्वाभावेऽपि औत्वं भवतीत्यर्थः ॥ ११९ ॥

**भावबोधिनी**

सूत्र से ङि का औ, इ का अ आदेश अग्न + औ, वृद्धि—अग्नौ । इसी प्रकार वायु + ङि = वाय + औ, वृद्धि—वायौ आदि में भी समझना चाहिए । ]

'अत्' यह तपकरण स्त्रीलिङ्ग में टाप् की निवृत्ति के लिये है । [ इसलिये अत्व कर देने पर भी टाप् नहीं होता है । ]

जिनके मत में 'औदच्च घेः' ऐसा [ दोनों सूत्र मिलाकर ] एक ही सूत्र है वे इकार, उकार से उत्तरवर्ती प्रधानशिष्ट औत्व को कहते हैं और चकार = अन्वाचय से शिष्ट—घि का अकार कहते हैं ।

**विमर्श**—काशिकाकार ने दो सूत्र अलग-अलग मानकर व्याख्या की है । भाष्य में मिलाकर एक व्याख्या की गई है । एक साथ व्याख्या में एक समस्या आती है कि सन्नियोगशिष्ट होने से जहाँ अत्व होगा वहीं औत्व भी होगा । इसलिये अलग-अलग दो सूत्र मानना उचित प्रतीत होता है । यदि एक ही सूत्र 'औदच्च घेः' मानने का आग्रह है तो इससे मुख्य कार्य इकार-उकार से उत्तरवर्ती 'ङि' का 'औकार' करना चाहिये । इसलिये जहाँ अत्व की आवश्यकता नहीं है वहाँ केवल यह 'औ' ही होता है, जैसे सख्यौ, पत्यौ । क्योंकि इन दोनों की 'घि' संज्ञा नहीं होती है । यह उसी प्रकार मानना सम्भव है जिस प्रकार "कर्तुः क्यङ् सलोपश्च" सूत्र से क्यङ् प्रत्यय का प्रधानरूप से विधान है और अन्वाचय (अप्रधान) रूप से स् लोप का । जहाँ सम्भव है वहाँ दोनों होते हैं । क्यङ् सर्वत्र होता है । उसी प्रकार 'ङि' का 'औत्' आदेश सभी में होता है किन्तु 'घि' संज्ञक (इ, उ) का अत्व अन्वाचय (अप्रधान रूप से चकार द्वारा) शिष्ट है । अतः होता भी है और नहीं भी होता है । इस प्रकार एक योग मानने पर भी कोई दोष नहीं है ॥ ११९ ॥

घेरुत्तरस्याङो नाभावो भवति अस्त्रियाम् । अग्निना । वायुना । पटुना ।

'पुंसि' इति नोक्तम्; अमुना ब्राह्मणकुलेन । अस्त्रियामिति किम् ? कृत्या । धेन्वा ॥

॥ इत्युपाध्यायश्रीवामनकृतायां काशिकावृत्तौ सप्तमाध्यायस्य तृतीयः पादः ॥

●

न्यासः

आङो नाऽस्त्रियाम् ॥ आङ इति स्थान्यन्तरनिर्देशादिहार्थाद् विभक्तिविपरिणामो भवतीति षष्ठ्यन्तं यद् घेरिति प्रकृतं तदिह पञ्चम्यन्तमुपजायत इत्याह—घेरुत्तरस्येत्यादि । अथ किमर्थम् 'अस्त्रियाम्' इत्युच्यते, 'आङो ना पुंसि' इत्येवोच्येत; एवमुच्यमाने त्रपुणा, जतुनेत्येतन्न सिध्यतीत्येतच्च नाशङ्कनीयम्; 'इकोऽचि विभक्तौ' इति नुमैव सिद्धत्वात् ?—इति यो मन्येत, तं निराकर्तुम्—अमुना ब्राह्मणकुलेनेत्यस्योपन्यासः । अत्र हि त्यदाद्यत्वे कृते 'अदसोऽसेर्दादु दो मः' इत्युत्वमत्वे च । तत्र यदि पुंसीत्युच्येत, ततोऽमुनेति नपुंसके न सिध्येत्; मुभावस्यासिद्धत्वात् । नुमोऽभावात् 'अस्त्रियाम्' इत्युच्यमाने नपुंसकेऽपि नाभावो भवतीत्यमुनेति सिद्धं भवति । न हि नाभावे कर्त्तव्ये मुभावस्यासिद्धत्वम्; 'न मु ने' इति वचनादित्यभिप्रायः ॥ १२० ॥

॥ इति बोधिसत्त्वदेशीयाचार्यश्रीजिनेन्द्रबुद्धिपादविरचितायां काशिकाविवरण-पञ्जिकायां सप्तमाध्यायस्य तृतीयः पादः ॥

●

पदमञ्जरी

आङो नाऽस्त्रियाम् ॥ 'आङः' इति स्थान्यन्तरस्योपादानाद् घेरिति षष्ठी पञ्चम्या विपरिणम्यत इत्याह—घेरुत्तरस्येति । अथ किमर्थमस्त्रियामित्युच्यते, 'आङो ना पुंसि' इत्येवोच्येत, एवं हि मात्रया लाघवं भवति, इष्टं च सिध्यति ? एवमुच्यमाने त्रपुणा, जतुनेत्यत्र नपुंसके न प्राप्नोति । मा भून्नाभावः, 'इकोचि विभक्तौ' इति नुमि कृते सिद्धमिष्टम् ? अत आह—पुंसीति नोक्तमित्यादि । अमुना ब्राह्मणकुलेनेति । 'पुंसि' इत्युच्यमाने नाभावो न स्यात् । नुमपीग्लक्षणो नास्ति; मुत्वस्यासिद्धत्वात् । 'अस्त्रियाम्' इत्युच्यमाने नपुंसकेऽपि नाभावो भवति । नाभावे कर्त्तव्ये मुत्वस्यासिद्धत्वं नास्ति । 'न मुने' इति प्रतिषेधादिति 'नपुंसके' इत्युच्यमानेऽपि न सिध्यति । तस्मादस्त्रियामित्येव वक्तव्यमिति ॥ १२० ॥

॥ इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां सप्तमस्याध्यायस्य तृतीयः पादः समाप्तः ॥

●

भावबोधिनी

'घि' संज्ञक से उत्तरवर्त्ती आङ् = टा का 'ना' आदेश स्त्रीलिङ्ग को छोड़कर होता है अर्थात् पुंल्लिङ्ग और नपुंसक में होता है । उदा० अग्निना । वायुना । पटुना । [ अग्नि + टा, 'ना' आदेश होता है । ]

'पुंल्लिङ्ग में' ऐसा नहीं कहा गया क्योंकि 'अमुना ब्राह्मणकुलेन' [ इस नपुंसक में नहीं हो पाता । ]

स्त्रीलिङ्ग में नहीं—इसका क्या फल है ? कृत्या । धेन्वा । [ कृति + टा = आ, धेनु + टा = आ, स्त्रीलिङ्ग होने से 'ना' आदेश नहीं होता है ।

**विमर्श**—यद्यपि 'अस्त्रियाम्' न कह कर 'पुंसि' कहने से भी नपुंसक लिङ्ग के रूप बन सकते हैं क्योंकि त्रपु + आ, जतु + आ आदि में 'इकोऽचि विभक्तौ' सूत्र से नुम् आगम करके त्रपु न् आ = णत्व—'त्रपुणा, जतुना' हो सकते हैं । किन्तु 'अमुना' नहीं बन सकता । कारण यह है कि अमु + टा यहाँ इग्लक्षण नुम् नहीं किया जा सकता क्योंकि 'अदसोऽसेर्दादु दो मः ( ८।२।८० ) है और 'इकोऽचि विभक्तौ ( ७।१।७३ ) है । नुम् विधायक की दृष्टि में मुत्वविधायक असिद्ध है । किन्तु 'ना' करने में मुत्व असिद्ध नहीं होता है क्योंकि 'न मु ने' (८।२।३) सूत्र असिद्धता रोक देता है । इसीलिये 'अस्त्रियाम्' यह रखा गया है ॥ १२० ॥

॥ इस प्रकार उपाध्याय श्रीवामन द्वारा विरचित काशिकावृत्ति में सप्तमाध्याय का तृतीयपाद समाप्त हुआ ॥

॥ इस प्रकार जयशङ्करलाल त्रिपाठि-विरचित 'भावबोधिनी' हिन्दी-व्याख्या में काशिकावृत्ति के सप्तम अध्याय का तृतीय पाद समाप्त हुआ ॥

आशीर्भिः गुरुपादानां देवपितृप्रसादतः । सप्तमेऽपि तृतीयाङ्घ्रिं व्याचष्ट जयशङ्करः ॥

●

# अथ सप्तमाध्याये चतुर्थः पादः

## ३५१८. णौ चङ्युपधाया ह्रस्वः ॥ १ ॥ (२३१४)

'अङ्गस्य' ( ६।४।१ ) इति वर्त्तते। चङ्परे णौ यदङ्गं तस्योपधाया ह्रस्वो भवति। अचीकरत्। अजीहरत्। अलीलवत्। अपीपवत्।

अत्र द्विर्वचनोपधाह्रस्वत्वयोः प्राप्तयोः परत्वादुपधाह्रस्वत्वम्, तत्र कृते द्विर्वचनम्। इह तु—

**न्यासः**

**णौ चङ्युपधाया ह्रस्वः ॥ चङ्परे णौ परत इति।** चङ् परो यस्माण्णेरिति स तथोक्तः। **अचीकरदित्यादि।** कृञ् हृञ् लूञ् पूञित्येतेभ्यो हेतुमण्णिच्, ततो लुङ्, च्लिः, 'णिश्री' इत्यादिना च्लेश्चङ्, 'णेरनिटि' इति णिलोपः। अत्र द्विर्वचनोपधाह्रस्वत्वयोः प्राप्तयोः परत्वादुपधाह्रस्वत्वम्, ततो द्विर्वचनम्, ततश्च णौ कृतं स्थानिवद्भवतीति कृ, हृ—इत्यादिकमविकृतधातुरूपमेव द्विरुच्यते। अत्र कृ, हृ—इत्येतयोरभ्यासस्य 'उरत्' इत्यत्वे कृते रपरत्वे हलादिशेषे च ततश्च 'सन्वल्लघुनि' इत्यादिना सन्वद्भावादित्वम्। पू, लू—इत्येतयोरपि ह्रस्वत्वे च कृते 'ओः पुयण्ज्यपरे' इतीत्वम्। सर्वत्र 'दीर्घो लघोः' इति दीर्घत्वम्। **अत्र द्विर्वचनोपधाह्रस्वत्वयोः प्राप्तयोरित्यादि।** अचीकरदित्यादिषूदाहरणेषु कृताकृतप्रसङ्गित्वाद् द्विर्वचनं नित्यमुपधाह्रस्वत्वमपि, तयोरुभयोः **परत्वादुपधाह्रस्वत्वं भवति, तत्र कृते द्विर्वचनम्**—इत्येष कार्याणां

**पदमञ्जरी**

**णौ चङ्युपधाया ह्रस्वः ॥** 'णौ' इत्यङ्गापेक्षया परसप्तमी, 'चङि' इति ण्यपेक्षया। उदाहरणेषु कृहृलूपूभ्यो णिच्, लुङ्, चङ्, णिलोपः, ह्रस्वत्वम्, द्विर्वचनम्। तत्र णौ कृतं स्थानिवद्भवतीति कृ इत्यादि धातुरूपं द्विरुच्यते, कृ हृ इत्येतयोरुरदत्वम्, सन्वल्लघुनि' इति सन्वद्भावादित्वम्। इतरयोरपि 'ओः पुयण्ज्यपरे' इतीत्वम्। सर्वत्र 'दीर्घो लघोः' इति दीर्घः। **अत्रेति।** अनन्तरोदाहृतेषु। **परत्वादिति।** चङीति द्विर्वचनस्याशिश्रयदित्यादिरवकाशः, ह्रस्वस्य तु कृतद्विर्वचनमवकाशः; अकृते तु द्विर्वचने विप्रतिषेधः। **तत्र कृते द्विर्वचनमिति।** ततश्च सन्वद्भावे कर्त्तव्ये ह्रस्वत्वं न स्थानिवद्भवति; अभ्यासस्यादिष्टादचः पूर्वत्वादिति

**भावबोधिनी**

गणाधिपं प्रणम्यादौ विश्वनाथं तथाम्बिकाम्।
सप्तमे तुर्यकं पादं व्याचष्टे 'जयशङ्करः' ॥

'अङ्गस्य' ( अङ्ग का ) इसकी अनुवृत्ति होती है। चङ्परक णि ( चङ् है परे जिससे ऐसे णि ) के परे रहते जो अङ्गसंज्ञक शब्दरूप उसकी उपधा का ह्रस्व होता है। उदा० अचीकरत्। अजीहरत्। अलीलवत्। अपीपवत्। [ इनमें कृञ्, हृञ्, लूञ्, पूञ्—इन धातुओं से प्रेरणा अर्थ में 'हेतुमति च' इस सूत्र से णिच् प्रत्यय होता है। वृद्धि, रपर कारि + लुङ् = तिप्, अट्, च्लि का चङ् "णिश्रिद्रुस्रुभ्यः कर्तरि चङ्" सूत्र से करने पर 'णेरनिटि' से णिलोप। द्वित्व और उपधाह्रस्व दोनों की प्राप्ति में परवर्त्ती होने से पहले उपधाह्रस्व अकर् + अ + त्। द्वित्व में "णौ कृतं स्थानिवद्भवति' वचन से पुनः कृ—अ कृ कर्। अ त्, 'उरत्' से अभ्यास का अत्व, रपर, हलादि शेष, चुत्व—अच कर् अत्, 'सन्वल्लघुनि चङ्परेऽनग्लोपे' सूत्र से सन्वद्भाव, 'सन्यतः' सूत्र से अभ्यास का इत्व—अ चि कर अत्, 'दीर्घो लघोः' सूत्र से दीर्घ—अचीकरत्। इसी प्रकार अजीहरत् होता है। 'अपीपवत्, अलीलवत्—इनमें 'ओः पुयण् ज्यपरे' इस सूत्र से 'उ' का इत्व तथा 'दीर्घो लघोः' से दीर्घ करने पर रूप बनते है। ]

इन उपर्युक्त लक्ष्यों में द्विर्वचन ( द्वित्व ) तथा उपधाह्रस्वत्व के प्राप्त रहने पर परवर्ती होने से पहले उपधा का ह्रस्व ही होता है, ह्रस्व करने के बाद द्वित्व होता है। परन्तु 'मा भवान् अटिटत्' यहाँ तो नित्य होने

**मा भवानटिटदिति नित्यत्वाद् द्वितीयस्य द्विर्वचनं प्राप्नोति, तथा सति ह्रस्वभाविनोऽङ्गस्याकारस्योपधात्वं विहतमिति ह्रस्वो न स्यात्? नैष दोषः; ओणेर्ऋदित्करणं ज्ञापकम्—नित्यमपि द्विर्वचनमुपधाह्रस्वत्वेन बाध्यत इति।**

**णाविति किम्? 'चङ्युपधाया ह्रस्वः' इत्युच्यमाने, अलीलवदित्यत्र वचनसामर्थ्यादन्तरङ्गामपि**

**न्यासः**

प्रवृत्तिक्रमः। मा भवानटिटदित्यत्र तु द्विर्वचनमेव नित्यम्, न ह्रस्वत्वम्, तथा हि 'अजादेर्द्वितीयस्य' इति द्विर्वचनं कृतेऽपि ह्रस्वत्वे प्राप्नोत्यकृतेऽपि। ह्रस्वत्वं तु द्वितीयस्यैकाचो द्विर्वचने कृते न प्राप्नोति; परेण टिशब्दरूपेण व्यवधानात्। तस्मान्मा भवानटिटदित्यत्र नित्यत्वाद् द्वितीयस्यैकाचो द्विर्वचनं प्राप्नोति। द्विर्वचने हि सति को दोषः स्यात्? इत्यत आह—**तथा च सतीत्यादि।** एवञ्च द्विर्वचने हि सति तेन ह्रस्वभाविन अकारस्योपधात्वं विहतमिति ह्रस्वो न स्यात्। न हि द्वितीयस्यैकाचो द्विर्वचने कृते चङ्परे णौ यदङ्गं तस्य ह्रस्वभाव्याकार उपधा भवति। असति च ह्रस्वत्वेन मा भवानटिटदिति रूपं न सिध्यति। मायोग आण्निवृत्त्यर्थः। आटि तु सति नास्ति विशेषः। सत्यसति वा ह्रस्वत्वे 'आटश्च' इति वृद्धया भवितव्यमिति। भवच्छब्दः सन्देहनिरासार्थः। **नैष दोष इति।** योऽनन्तरोक्तः स कथं लभ्यते? इत्याह—**ओणेर्ऋदित्करणमित्यादि।** 'ओणृ अपनयने'—इत्येतस्य ऋदित्करणस्यैतत्प्रयोजनम्—ऋदित्त्वाग्नाग्लोपीत्यादिना ह्रस्वप्रतिषेधो यथा स्यादिति। यदि च नित्यमपि द्विर्वचनमुपधाह्रस्वत्वेन न बाध्यते, तदौणेर्ऋदित्करणमनर्थकं स्यात्। द्विर्वचने हि कृते परेण णिशब्दरूपेण व्यवधानादेव ह्रस्वो न भविष्यति, किमोणेर्ऋदित्करणेनेति? आचार्यप्रवृत्तिर्ज्ञापयति—नित्यमपि द्विर्वचनमुपधाह्रस्वत्वेन बाध्यत इति; यत ओणेर्ऋदित्करणं करोति।

**णाविति किमिति।** एवं मन्यते—णिग्रहणे चाकृते लुङ्-चङादेशयोः कृतयोर्णिलोपे चाकृते वृद्धयावादेशयोश्चाकृतयोः, अलू इ + अत् इति स्थित ऊकारस्य ह्रस्वो मा भूदित्येवमर्थं वा णिग्रहणं क्रियते? ऊकारस्य

**पदमञ्जरी**

भावः। चोदयति—इह त्विति। माङ्प्रयोग आड् मा भूदिति। **नित्यत्वादिति।** द्विर्वचनं हि कृतेऽपि ह्रस्वत्वे प्राप्नोति, अकृतेऽपि, ततश्च तदेव स्यात्तत्र को दोषः? इत्यत आह—**तथा सतीति।** परिहरति—नैष दोष इति। **ओणेरिति।** 'ओणृ अपनयने' इत्यस्य ऋदित्करण एतत्प्रयोजनम्—ऋदितो नेति प्रतिषेधो यथा स्यात्। यदि चात्र द्विर्वचनं स्याद्, ऋदित्करणमनर्थकं स्यात्, द्विर्वचने कृते पररूपेण व्यवहितत्वादेव ह्रस्वत्वं न भविष्यति, पश्यति त्वाचार्यः—द्विर्वचनाद् ह्रस्वत्वं बलीय इति, तत ओणिमृदितं करोति। **णाविति किमिति।** ह्रस्वश्रुत्या

**भावबोधिनी**

के कारण द्वितीय ( एकाच् ) का द्वित्व प्राप्त होता है, [ क्योंकि 'अजादेर्द्वितीयस्य' यह द्वित्व ह्रस्व के पहले और बाद में प्राप्त होने से नित्य है। अतः पहले ह्रस्व ही होता है। ] किन्तु ऐसा होने पर ह्रस्व होने वाले अङ्ग के आकार का उपधात्व नष्ट हो जाता है इसलिए ह्रस्व नहीं हो सकेगा? [ आट् इ + अ + तिप् द्वितीय एकाच् = 'टि' का द्वित्व होने पर आ टि टि + अ ति में आ उपधा नहीं होगा, फलतः ह्रस्व नहीं हो सकेगा? ]—यह दोष नहीं है, क्योंकि 'ओणृ' धातु का ऋदित्करण ज्ञापक है—नित्य होता हुआ भी द्विर्वचन उपधाह्रस्वत्व द्वारा बाधित कर लिया जाता है।" [ भाव यह है कि 'ओणृ' धातु का ऋकार इत् इसलिये है जिससे 'नाग्लोपि' आदि अगले सूत्र से ह्रस्व का निषेध हो सके। यदि पहले द्वित्व ही होता तो 'ओण् इ + अ + ति द्वितीय एकाच् में 'णि' का द्वित्व होने पर उपधाह्रस्वत्व का प्रसङ्ग हो नहीं है। फलतः 'ओणृ' का ऋदित्करण व्यर्थ हो जाता। यही ज्ञापित करता है कि—'नित्य भी द्विर्वचन का बाध उपधाह्रस्वत्व द्वारा किया जाता है।' फलतः पहले उपधाह्रस्वत्व की प्राप्ति में उसका निषेध करने के लिये 'ऋदित्' करण सार्थक है। ]

णि परे रहते—इसका क्या फल है? 'चङ् परे उपधा का ह्रस्व होता है' ऐसा कहा जाने पर 'अलीलवत्' यहाँ इस वचन के सामर्थ्य से अन्तरङ्ग भी वृद्धि तथा आवादेश को बाधित करके उपधा का ह्रस्व होने

राका, धाकेत्यत्र 'उणादयो बहुलम्' (३।३।१) इति ह्रस्वो न भवति। 'न कपि' (७।४।१४) इति प्रतिषेधसामर्थ्यात्कनोऽपि सानुबन्धकस्य ग्रहणमिह भवति॥

**३५३१. न कपि ॥ १४ ॥ (८३५)**

**कपि प्रत्यये परतोऽणो ह्रस्वो न भवति। बहुकुमारीकः। बहुवधूकः। बहुलक्ष्मीकः। 'गोस्त्रियोरुपसर्जनस्य' (१।२।४८) इत्ययमपि ह्रस्वः कपि न भवति। समासार्थे ह्युत्तरपदे कपि कृते पश्चात् कबन्तेन सह समासेन भवितव्यमिति स्त्रीप्रत्ययान्तसमासप्रातिपदिकं न भवति॥**

**न्यासः**

अथेह कस्मान्न भवति—'कृदाधारार्चिकलिभ्यः कन्' इति रातेर्दधातेश्च कन्, तदन्तात्टाप्—राका, धाकेत्यादि। सुबोधम्। निरनुबन्धकस्येह ग्रहणान्निरनुबन्धकपरिभाषया कनो ग्रहणेन भवितव्यमिति कस्यचिद् भ्रान्तिः स्यात्, अतस्तां निराकर्तुमाह—**न कपीत्यादि**। यद्येषा परिभाषोपतिष्ठते, तदा 'न कपि' इति प्रतिषेधोऽनर्थकः स्यात्। सानुबन्धकत्वादेव कनो ग्रहणं न भविष्यतीत्यभिप्रायः॥ १३॥

**न कपि॥ बहुकुमारीक इति**। बह्व्यः कुमार्यो यस्य सः। 'नद्यृतश्च' इति कप्; अनुबन्धलोपः।

अथात्रास्मिन् ह्रस्वत्वे प्रतिषिद्ध उपसर्जनह्रस्वत्वं कस्मान्न भवति? अत एव प्रतिषेधान्न भविष्यतीति चेद्? न; 'अनन्तरस्य विधिर्वा प्रतिषेधो वा' इत्यनन्तरस्यैव ह्रस्वस्य ह्ययं प्रतिषेधो न सर्वस्य। कपीति वचनसामर्थ्यादुपसर्जनह्रस्वत्वमिति न भविष्यतीति चेद्? यत्र ह्युपसर्जनह्रस्वत्वस्य प्राप्तिरेव नास्ति—बहुयवागूकः, बहुलक्ष्मीक इति, तत्र वचनस्य चरितार्थत्वाद्, न ह्यत्रोपसर्जनह्रस्वत्वस्य प्राप्तिरस्ति, 'गोस्त्रियोरुपसर्जनस्य' इति ह्रस्वशासने स्त्रीशब्देन स्त्र्यधिकारविहितानां प्रत्ययानां टाबादीनां ग्रहणात्। तस्माद् बहुकुमारीक इत्यत्रोपसर्जनस्य ह्रस्वत्वेन भवितव्यमित्यत आह—**गोस्त्रियोरुपसर्जनस्येत्यादि**। कस्मान्न भवति? इत्याह—**समासार्थे हीत्यादि**। उपसर्जनह्रस्वत्वं हि स्त्रीप्रत्ययान्तस्य समासप्रातिपदिकस्य विधीयते, तद्विधाने 'ह्रस्वो नपुंसके प्रातिपदिकस्य' इत्यतः प्रातिपदिकग्रहणानुवृत्तेः समासप्रातिपदिकस्यैव स्त्रीप्रत्ययान्तस्योपसर्जनह्रस्वः स्यात्। न च बहुकुमारीक इत्यादौ स्त्रीप्रत्ययान्तं समासप्रातिपदिकं भवति; यस्मात् 'समासान्ताः' इत्यधिकार एवायं कब् विधीयते। 'समासान्ताः' इत्यत्रान्तग्रहणस्यैतत् प्रयोजनम्—समासस्यान्तोऽवयवो यथा स्यादिति,

**पदमञ्जरी**

**न कपि॥ बहुमारीक** इत्यादौ 'नद्यृतश्च' इति कप्॥ १३॥

अथात्रास्मिन्प्रतिषिद्धे उपसर्जनह्रस्वत्वं कस्मान्न भवति? अत एव प्रतिषेधात्। नायमस्य ह्रस्वस्य प्रतिषेधः, किं तर्हि? अनन्तरस्य 'केऽणः' इत्यस्य। कुत एतत्? 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति। एवं तर्ह्याह—**अयं कपि ह्रस्वो न भवतीति**। यदि चोपसर्जनह्रस्वत्वं स्यात्, वचनमिदमनर्थकं स्यात्। अतो वचनसामर्थ्याच्च यावच्च ह्रस्वत्वं तस्य प्रतिषेधो भविष्यति। अस्ति वचनस्यावकाशो यत्रोपसर्जनह्रस्वत्वं न प्राप्नोति, अस्त्रीप्रत्यये—बहुयवागूकः, बहुलक्ष्मीक इति, स्त्रीप्रत्यये उपसर्जनह्रस्वत्वं स्यादेव। तत्राह—**गोस्त्रियोरुपसर्जनस्येत्ययमपीति**। कुतः? इत्यत आह—**समासार्थे हीति**। 'समासान्ताः' इत्यत्रान्त-

**भावबोधिनी**

'राका, धाका' इनमें 'उणादयो बहुलम्' इससे ह्रस्व नहीं होता है। 'न कपि' इस प्रकार के निषेध के कारण यहाँ कन्—इस सानुबन्धक का भी ग्रहण होता है। [ कन् परे भी ह्रस्व निषेध हो जाता है। ]॥ १३॥

कप् परे रहते अण् का ह्रस्व नहीं होता है। उदा० बहुकुमारीकः। बहुवधूकः। बहुलक्ष्मीकः। [ बहुव्रीहि समास में—बह्व्यः कुमार्यः यस्य सः—इस विग्रह के बाद समासान्त कप् प्रत्यय "नद्यृतश्च" इस सूत्र से होता है। पूर्वसूत्र से प्राप्त ह्रस्व का निषेध हो जाता है। ]

'गोस्त्रियोरुपसर्जनस्य' यह भी ह्रस्व कप् परे रहते नहीं होता है। कारण यह है कि समास के लिए उत्तर पद में कप् करने पर बाद में कप्प्रत्ययान्त के साथ समास होना चाहिए। इसलिए स्त्रीप्रत्ययान्त समास प्राति-

### ३५३२. आपोऽन्यतरस्याम् ॥ १५ ॥ (८९२)

आबन्तस्याङ्गस्य कपि ह्रस्वो न भवत्यन्यतरस्याम् । बहुखट्वाकः, बहुखट्वकः । बहुमालाकः, बहुमालकः ॥

### ३५३३. ऋदृशोऽङि गुणः ॥ १६ ॥ (२४०६)

ऋवर्णान्तानां दृशेश्च अङि परतो गुणो भवति । शकलाङ्गुष्ठकोऽकरत् । अहं तेभ्योऽकरं नमः । असरत् । आरत् । जरा । दृशेः—अदर्शत्, अदर्शताम्, अदर्शन् ॥

**न्यासः**

स च कथं समासस्यावयवो भवति ? यदि तेन सह समाससंज्ञा भवति । कथञ्च तेन समाससंज्ञा भवति ? यद्यकृते समासे समासार्थादुत्तरपदात् कब्भवति, पश्चात् कबन्तेन समासो भवति, नान्यथा । तस्मात् समासान्ताधिकारे कपो विधानात् समासार्थादुत्तरपदात् कपि कृते पश्चात् समासेन भवितव्यम् । ततश्च स्त्रीप्रत्ययान्तमिह समासप्रातिपदिकं न भवतीति न भवत्युपसर्जनह्रस्वत्वम् ॥ १४ ॥

आपोऽन्यतरस्याम् ॥ बहुखट्वाक इति । 'शेषाद् विभाषा' इति कप् ॥ १५ ॥

ऋदृशोऽङि गुणः ॥ 'क्ङिति च' इति प्रतिषेधे प्राप्तेऽयं गुणो विधीयते । अकरदिति । कृञो लुङ्, च्लिः, तिप्, 'कृमृदृरुहिभ्यश्छन्दसि' इति च्लेरङ् । असरदिति । 'सृ गतौ' । आरदिति । 'ऋ गतिप्रापणयोः', 'सर्तिशास्त्यर्तिभ्यश्च' इति च्लेरङ्, अर्त्तेरजादित्वादाटि कृते 'आटश्च' इति वृद्धिः । अदर्शदिति । 'इरितो वा' इत्यङ् । अथ गुणग्रहणं किमर्थम्, अकार एव नोच्येत ? नैवं शक्यम्; अकार इत्युच्यमाने दृशेरन्त्यस्य स्यात् । गुणग्रहणे तु सति संज्ञाविधाने नियम इतीक एव स्थाने भवति ॥ १६ ॥

**पदमञ्जरी**

शब्दोऽवयववचनः । कथं च कप्समासावयवो भवति ? यदि तेन सह समासो भवति । कथं च तेन समासो भवति ? यद्यकृत एव समासे तदर्थादुत्तरपदात् कब्भवति, पश्चात्तदन्तेन समासः ।

ननु च कपः पूर्वं सुबन्तम्, तत्कथं कबन्तेन समासः ? वचनात्समासान्तेष्वसुबन्तेन समासः । अपर आह—'उत्तरपदे या विभक्तिस्तस्याश्च या प्रकृतिस्तयोर्मध्ये विकरणवत्समासान्तः, तन्मध्यपतितस्य तद्ग्रहणेन ग्रहणात्सुबन्तेन समासः' इति; एवं वदतो दोषः; बहुचर्मिकेत्यादौ 'प्रत्ययस्थात्' इतीत्वं न स्यात् । किं कारणम् ? कात्परः सुप्, ततः परष्टाप्, यथा—बहुपरिव्राजका मथुरेति । यदि कपि कृते पश्चात्तदन्तेन समासः, किमायातम् ? इत्यत आह—स्त्रीप्रत्ययान्तं समासप्रातिपदिकं न भवतीति । 'गोस्त्रियोः' इत्यत्र प्रातिपदिकस्येति वर्त्तते, स्त्रीप्रत्ययान्तस्य च प्रातिपदिकत्वं समासे सति, न चोक्ते प्रकारे कपः पूर्वभागस्य समासत्वं प्रातिपदिकत्वं वा समस्ति, तस्मान्नोपसर्जनह्रस्वत्वमिति ॥ १४ ॥ १५ ॥

ऋदृशोऽङि गुणः ॥ 'ऋ' इति वर्णग्रहणम्; व्याख्यानात् । अकरदित्यादौ 'कृमृदृरुहिभ्यश्छन्दसि' इति च्लेरङ् । असरदिति । 'सर्तिशास्त्यर्तिभ्यश्च' इत्यङ् । अदर्शदिति । 'इरितो वा' इत्यङ् । गुणग्रहणं किम्, नाकार एवोच्येत—'ऋदृशोऽङ्यः' इति ? नैवं शक्यम्; दृशेरन्त्यस्यात्वं स्यात्, गुणग्रहणात्त्विको भवति । यदि त्वण् इत्यनुवर्त्तते, शक्यं गुणग्रहणमकर्त्तुम् । तथा तु न कृतमित्येव ॥ १६ ॥

**भावबोधिनी**

पदिक नहीं होता है । [ फलतः प्रातिपदिक का ह्रस्व नहीं होता है । क्योंकि 'गोस्त्रियोः' इस सूत्र में 'प्रातिपदिकस्य' इसकी अनुवृत्ति होती है और स्त्रीप्रत्ययान्त की प्रातिपदिक संज्ञा समास होने पर ही होती है, कप् के पूर्व भाग का न तो समासत्व है और न प्रातिपदिकत्व । इसलिये उपसर्जनह्रस्वत्व भी सम्भव नहीं है । ] ॥ १४ ॥

आप् प्रत्ययान्त अङ्ग का कप् परे रहते विकल्प से ह्रस्व होता है । । उदा० बहुखट्वाकः, बहुखट्वकः । बहुमालाकः, बहुमालकः । [ बहुव्रीहि समास के बाद कप् प्रत्यय होने पर विकल्प से ह्रस्व होता है । ] ॥ १५ ॥

ऋवर्णान्तों तथा दृशिर् धातु का अङ् परे रहते गुण होता है । उदा० शङ्कलाङ्गुष्ठकोऽकरत् । अहं तेभ्योऽकरं नमः । असरत् । आरत् । [ कृ + लुङ् = तिप् च्लि का 'कृमृदृरुहिभ्यश्छन्दसि' सूत्र से अङ् आदेश अ कृ + अ +

**३५३४. अस्यतेस्थुक् ॥ १७ ॥ (२५७०)**

**अस्यतेरङ्गस्य थुगागमो भवत्यङि परतः । आस्थत्, आस्थताम्, आस्थन् ॥**

**३५३५. श्वयतेरः ॥ १८ ॥ (२४२१)**

**श्वयतेरङ्गस्याकारादेशो भवत्यङि परतः । अश्वत्, अश्वताम्, अश्वन् ॥**

**३५३६. पतः पुम् ॥ १९ ॥ (२३५५)**

**पतेरङ्गस्य पुमागमो भवत्यङि परतः । अपप्तत्, अपप्तताम्, अपप्तन् ॥**

**३५३७. वच उम् ॥ २० ॥ (२४५४)**

**वचेरङ्गस्य अङि परत उमागमो भवति । अवोचत्, अवोचताम्, अवोचन् ॥**

**न्यासः**

अस्यतेस्थुक् ॥ आस्थदिति । 'असु क्षेपणे', 'अस्यतिवक्तिख्यातिभ्योऽङ्' इति च्लेरङादेशः ॥ १७ ॥

श्वयतेरः ॥ अश्वदिति । 'टुओश्वि गतिवृद्ध्योः' । 'जृस्तम्भुम्रुचु' इत्यादिनाङ्, द्वयोरकारयोः पररूपत्वम् ॥ १८ ॥

पतः पुम् ॥ अपप्तदिति । 'शल हुल पत्लृ गतौ', पुषादिनाङ् । मकारो देशविध्यर्थः ॥ १९ ॥

वच उम् ॥ अवोचदिति । 'वच परिभाषणे', 'अस्यतिवक्तिख्यातिभ्यः' इत्यादिनाङ् । मकारस्य तदेव प्रयोजनम् ॥ २० ॥

**पदमञ्जरी**

अस्यतेस्थुक् ॥ आस्थादिति । 'अस्यतिवक्तिख्यातिभ्योऽङ्' ॥ १७ ॥

श्वयतेरः ॥ अश्वदिति । 'जृस्तम्भु' इत्यादिनाङ् ॥ १८ ॥

पतः पुम् ॥ अपप्तदिति । लृदित्वादङ् ॥ १९ ॥ २० ॥

**भावबोधिनी**

तृ, गुण, रपर अकरत् । उत्तम पुरुष मिप् = अम् परे—अकरम् । सृ + लुङ् । ऋ + लुङ् में 'सर्तिशास्त्यर्तिभ्यश्च' सूत्र से च्लि का अङ्, गुण, आट् 'आटश्च' से वृद्धि । ] जरा । [ जृष् धातु के षित् होने के कारण "षिद्भिदादिभ्योऽङ्" सूत्र से अङ् प्रत्यय, प्रस्तुत सूत्र से गुण, रपर, टाप्—जरा । ] दृशिर् के उदा० अदर्शत्, अदर्शताम्, अदर्शन् । [ दृश + लुङ् = तिप्, अट्, च्लि का चङ् "इरितो वा' इस सूत्र से अदृश् + अ + ति, गुण, रपर इलोप—अदर्शत् । ] ॥ १६ ॥

अस् अङ्ग को थुक् का आगम अङ् परे रहते होता है । उदा० आस्थत्, आस्थताम्, आस्थन् । [ क्षेपणार्थक अस् धातु से लुङ् = तिप् च्लि का अङ् आदेश 'अस्यतिवक्तिख्यातिभ्योऽङ्" सूत्र से, अस् + अ + त् थुक् = थ् आगम कित् होने से अन्त अवयव बनता है—आ अस् थ् अत् = आस्थत् । ] ॥ १७ ॥

( टु ओ श्वि ) श्वि—इस अङ्ग का अकार आदेश अङ् परे रहते होता है । उदा० अश्वत्, अश्वताम्, अश्वन् । [ श्वि + लुङ् = तिप्, "जृस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च" ( ३।१।५८ ) सूत्र द्वारा च्लि का अङ् आदेश अ श्वि + अ त्, प्रस्तुत सूत्र से इ का अकार आदेश अ श्व + अ + त्, अकार का पररूप—अश्वत् । ] ॥१८॥

पत् अङ्ग का पुम् आगम अङ् परे रहते होता है । उदा० अपप्तत्, अपप्तताम्, अपप्तन् । [ पत् + लुङ्, अट्, लृदित् होने से 'पुषादिद्युतादि०" सूत्र से च्लि का अङ् आदेश, पुम् = प् का आगम मित् होने से अन्त्य अच् से परे होता है—अपप्त् + अ + ति = त् अपप्तत् । ] ॥ १९ ॥

वच् अङ्ग का अङ् परे रहते उम् आगम होता है । उदा० अवोचत्, अवोचताम्, अवोचन् । [ वच् + लुङ् = तिप्, "अस्यतिवक्तिख्यातिभ्योऽङ्" सूत्र से च्लि का अङ् आदेश—अवच् + अ + ति, प्रस्तुत सूत्र से उम् आगम मित् होने से अन्त्य अच् से परे होने पर अ व उ च् + अ त्, गुण—अवोचत् । ] ॥ २० ॥

**३५३८. शीङः सार्वधातुके गुणः ॥ २१ ॥ (२४४१)**

शीङोऽङ्गस्य सार्वधातुके परतो गुणो भवति । शेते, शयाते, शेरते ।

सार्वधातुक इति किम् ? शिश्ये ॥

**३५३९. अयङ् यि क्ङिति ॥ २२ ॥ (९६४९)**

यकारादौ क्ङिति प्रत्यये परतः शीङोऽङ्गस्य 'अयङ्' इत्ययमादेशो भवति । शय्यते । शाशय्यते । प्रशय्य । उपशय्य ।

**न्यासः**

**शीङः सार्वधातुके गुणः ॥** अप्राप्तविषयत्वाद् गुणविधानस्य ङिति सार्वधातुक एतद्विधानम् । पिति तु सामान्यलक्षणेनैव गुणः सिद्धः । लोट, 'आडुत्तमस्य पिच्च' इत्यादि—शयै शयावहै इति । तस्माद् यत्र गुणो न प्राप्नोति तत्र विधीयते । **शेरत इति ।** अदादित्वाच्छपो लुक्, 'आत्मनेपदेष्वनतः' इति झकारस्यादादेशः । अत्र 'शीङो रुट्' इति रुडागमो भवति ।

**शिश्य इति ।** लिट्, 'लिट् च' इत्यार्धधातुकसंज्ञा, उत्तमपुरुषस्यैकवचनम्, प्रथमपुरुषस्यैकवचनं वा । यदा प्रथमपुरुषस्यैकवचनं तदेश्, पूर्ववदेव द्विर्वचनम्, 'एरनेकाचोऽसंयोगपूर्वस्य' इति यणादेशः; अन्यदेट्, टेरेत्वम् । अथ गुणग्रहणं किमर्थम्, न 'शीङः सार्वधातुके एत्' इत्येवोच्येत ? एवं मन्यते—'शीङः' इति सानुबन्धकनिर्देशे षष्ठ्युच्चारिता, निवृत्तिधर्मा चानुबन्धः, तस्येत्संज्ञायां लोपेन निवृत्तौ प्राप्तायामयमन्यप्रकारो निवृत्तेर्विज्ञायेत । तस्य नाप्येत्संज्ञा निवर्त्तिका, किं तर्हि ? एकारः । एवं तर्हि ङकारस्य स्थान एकार आपद्येत । तस्माद् गुणग्रहणं त्विकमुपस्थापयति । ङकारस्तु तेनैव हेतुना निवर्त्तत इति । यद्येवम्, ङकारो नोच्चारयिष्यते, 'शियः' इति निर्द्देशः करिष्यते ? नैवं शक्यम्; एवं हि निर्द्देशे सति यङ्लुक्यपि स्यात्—शेशीतः, शेश्यतीति ॥ २१ ॥

**अयङ्यि क्ङिति ॥ शय्यत इति ।** 'सार्वधातुके यक्' । **शाशय्यत इति ।** यङ्, परत्वान्नित्यत्वाच्च द्विर्वचनात् प्रागयङादेशः, ततः शय्येत्यस्य द्विर्वचनम्, 'दीर्घोऽकितः' इत्यभ्यासस्य दीर्घत्वम् । **प्रशय्येति ।** 'समानकर्तृकयोः पूर्वकाले क्त्वा', 'कुगतिप्रादयः' इति समासः, 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' । **शेयमिति ।**

**पदमञ्जरी**

**शीङ सार्वधातुके गुणः ॥** अनुबन्धनिर्देशो यङ्लुकि मा भूदिति—शेशीतः, शेश्यतीति । 'शीङ एः' इत्युच्यमाने सानुबन्धकात् षष्ठ्युच्चारिता, अनुबन्धश्च निवृत्तिधर्मा, तस्य लोपेन निवृत्तौ प्राप्तायामयमन्यः प्रकारो विज्ञायेत, नास्य लोपो निवर्त्तकः, किं तर्हि ? एकार इति । गुणग्रहणं त्विकं निवर्त्तयति । ङकारस्तु स्वेनैव हेतुना निवर्त्तते । तस्माद् गुणग्रहणम् ॥ २१ ॥

**अयङ्यि क्ङिति ॥ शय्यत इति ।** यक् । **शाशय्यत इति ।** यङ्, परत्वान्नित्यत्वाच्चायङादेशे कृते

**भावबोधिनी**

शीङ् अङ्ग का गुण सार्वधातुक प्रत्यय परे रहते होता है । उदा० शेते, शयाते, शेरते । [ शी + लङ् = त, शप् का लुक् 'अदिप्रभृतिभ्यः शपः' सूत्र से, शे + त, टि का एत्व—शेते । ]

सार्वधातुक परे—इसका क्या फल है ? शिश्ये । [ शी + लिट् = त = एश्, द्वित्वादि के बाद यण् होता है । सार्वधातुक न होने से गुण नहीं होता है । ] ॥ २१ ॥

कित् ङित् यकारादि प्रत्यय परे रहते 'शीङ्' अङ्गसंज्ञक का 'अयङ्' यह आदेश होता है । उदा० शय्यते । शाशय्यते । [ शीङ् + यक् + त, ई का अयङ् होने पर शय् य + त, एत्व—शय्यते । शीङ् + यङ् में पर तथा नित्य होने से पहले अयङ् आदेश होने से शय् + य, द्वित्व, हलादि शेष शशय्य + त, "दीर्घोऽकितः" इस सूत्र से अभ्यास का दीर्घ—शाशय्यते । ] प्रशय्य । उपशय्य । [ प्र पूर्वक तथा उप पूर्वक शी + क्त्वा = ल्यप् = य, प्रशी + य, उप शी + य, ई का अयङ् आदेश—प्रशय्य, उपशय्य । ]

यकारादि परे—इसका क्या फल है ? शिश्ये । [ शी + लिट् = त = ए द्वित्वादि के बाद यण् होता है क्योंकि यकारादि प्रत्यय परे नहीं है । ]

यीति किम् ? शिश्ये । क्ङितीति किम् ? शेयम् ॥

**३५४०. उपसर्गाद्ध्रस्व ऊहतेः ॥ २३ ॥ (२७०२)**

उपसर्गादुत्तरस्य ऊहतेरङ्गस्य ह्रस्वो भवति यकारादौ क्ङिति प्रत्यये परतः। **समुह्यते । समुह्य । गतः । अभ्युह्यते । अभ्युह्य गतः ।**

उपसर्गादिति किम् ? ऊह्यते । ऊहतेरिति किम् ? समीह्यते ।

'यि' इत्येव—समूहितम् । 'क्ङिति' इत्येव—समूह्योऽयमर्थः । 'अणः' इत्येव—आ + ऊह्यते = ओह्यते । समोह्यते ॥

**न्यासः**

'अचो यत्' । शय्येति । 'संज्ञायां समजनि' इत्यादिना क्यप् ॥ २२ ॥

**उपसर्गाद्ध्रस्व ऊहतेः ॥ समुह्य गत इति ।** 'ऊह वितर्के' । यद्यपि वहेरपि यजादित्वात् किति सम्प्रसारणेनैतत् सिध्यति, तथाप्यूहेरपि दीर्घस्याश्रवणं यथा स्यादित्येवमर्थमिदं ह्रस्वविधानम् ।

**समीह्यत इति ।** 'ईह चेष्टायाम्' ।

**समूहित इति ।** क्तः । **समूह्योऽयमर्थ इति ।** 'ऋहलोर्ण्यत्' । **अण इत्येवेत्यादि ।** 'केऽणः' इत्यतोऽण्ग्रहणमनुवर्त्तते । **आ उह्यते, ओह्यते, समोह्यत इति ।** ह्रस्वत्वं न भवति । यद्यण्ग्रहणमनुवर्त्तते, तदा ह्रस्वविधानमनर्थकं स्यात्, उपसर्गादूहतेरुदिति वक्तव्यम् ? नानर्थकम्; उत्तरार्थत्वात्—'एतेर्लिङि' इति वक्ष्यति, तत्र 'ह्रस्वः' इत्येतस्यानुवृत्तिर्यथा स्यात् ॥ २३ ॥

**पदमञ्जरी**

द्विर्वचनम् । **प्रशय्येति ।** ल्यप् ॥ २२ ॥

**उपसर्गाद्ध्रस्व ऊहतेः ॥** ङितोऽसम्भवादुदाहरणं न प्रदर्शितम् । यङस्तावदजादित्वादसम्भवः । यासुटोऽपि शपा व्यवधानात् । आशिषि तु किदेव यासुट् । एवं चोहतेदीर्घप्रयोगनिवृत्त्यर्थं वचनम् । **समुह्यत** इत्यादिकं तु रूपं वहेरेव सम्प्रसारणे कृते सिद्धम् । अनेकार्थत्वाद्धातूनामर्थभेदोऽप्यकिञ्चित्करः । **आ ऊह्यत इति ।** नेदं लौकिकं वाक्यं प्रयोगार्हम्, न हि तत्र धातूपसर्गयोरसंहितास्ति; 'संहितैकपदे नित्या नित्या धातूपसर्गयोः' इति स्मरणात् । तस्मादलौकिकेन प्रक्रियावाक्येनाङः प्रश्लेषः प्रदर्श्यत इति ह्रस्वत्वं न कृतम्; लौकिकप्रयोगसम्पादनपरत्वाच्छास्त्रस्य । अन्ये त्वत्रापि ह्रस्वत्वं पठन्ति । **ओह्यत इति ।** अत्रैकादेशे कृते व्यपवर्गाभावाद् ह्रस्वाभावः, 'उपसर्गादूहतेः' इत्युभयत आश्रयणादन्तादिवद्भावोऽपि नास्ति । **समोह्यत इति ।** अत्रैकादेशस्यादिवद्भावात्समः परस्य ह्रस्वत्वप्रसङ्गः । 'अणः' इत्यनुवृत्तेस्तु न भवति, पूर्वणैव णकारेण प्रत्याहारः । एवं च रूपाश्रयोऽयं विधिरिति ताद्रूप्यानतिदेशाद् ह्रस्वाभावः ॥ २३ ॥

**भावबोधिनी**

कित् ङित् परे रहते—इसका क्या फल है ? शेयम् । [ शी + यत्, कित् परे न होने से अयङ् नहीं होता है । न्यासकार ने शय्या शब्द में "संज्ञायां समजनि०" इत्यादि सूत्र से क्यप् मानकर अयङ् आदेश किया है । ] ॥२२॥

उपसर्ग से उत्तरवर्त्ती 'ऊह' अङ्गसंज्ञक का ह्रस्व होता है कित् यकारादि प्रत्यय परे रहते । उदा० समुह्यते । समुह्य गतः । [ अम् ऊह् + यक् + त, सम् ऊह + ल्यप् ऊ का ह्रस्व होता है । ] अभ्युह्यते । अभ्युह्य गतः । [ अभि ऊह + यक् + त, अभि ऊह् + ल्यप् । ]

उपसर्ग से परे—इसका क्या फल है ? ऊह्यते । [ अकेले धातु का ह्रस्व नहीं होता है । ] ऊह् का—इसका क्या फल है ? समीह्यते । [ सम् ईह + यक् + त, टि का एत्व आदेश । ह्रस्व नहीं होता है । ]

'यकारादि परे ही'—समूहितम् । [ क्त परे रहते ह्रस्व नहीं होता है । ] कित्, ङित् परे ही होता है'—समूह्यः अयम् अर्थः । [ अम् + ऊह + ण्यत् में ह्रस्व नहीं होता है । ] अण् का ही ह्रस्व होता है—आ + उह्यते = ओह्यते, ( सम् आ + उह्यते ) = समोह्यते । [ यहाँ 'ओ' का ह्रस्व नहीं होता है क्योंकि 'केऽणः' सूत्र से 'अण्' इसकी अनुवृत्ति होने से 'ओ' का ह्रस्व नहीं होता है । ] ॥ २३ ॥

## ३५४१. एतेर्लिङि ॥ २४ ॥ (२४५७)

एतेरङ्गस्योपसर्गादुत्तरस्य लिङि यकारादौ क्ङिति परतो ह्रस्वो भवति । उदियात् । समियात् । अन्वियात् । आशिषि लिङि 'अकृत्सार्वधातुकयोः' (७।४।२५) इति दीर्घत्वे कृते ह्रस्वोऽनेन भवति ।

उपसर्गादित्येव—ईयात् । 'अणः' इत्येव—आ + ईयात् = एयात् । समेयात् ॥

## ३५४२. अकृत्सार्वधातुकयोर्दीर्घः ॥ २५ ॥ (२२९८)

अकृद्यकारे असार्वधातुकयकारे च क्ङिति परतोऽजन्तस्याङ्गस्य दीर्घो भवति । भृशायते । सुखायते । दुःखायते । चीयते, चेचीयते । स्तूयते, तोष्टूयते । चीयात् । स्तूयात् ।

### न्यासः

एतेर्लिङि ॥ उदियादिति । 'इण् गतौ', आशिषि लिङ्, 'स्कोः संयोगाद्योरन्ते च' इति सकारलोपः । अभीयादिति । सवर्णदीर्घत्वेऽकृते ह्रस्वः । आशिषि लिङीत्यादिना सूत्रस्य विषयं दर्शयति । सार्वधातुके हि लिङि दीर्घत्वमिणो न सम्भवतीति नात्रास्योपयोगः । यत्राकृत्सार्वधातुकयोर्दीर्घत्वमापद्यते, तत्र दीर्घत्वे कृतेऽनेन ह्रस्वो भवति ॥ २४ ॥

अकृत्सार्वधातुकयोर्दीर्घः ॥ भृशायत इति । 'भृशादिभ्यो भुव्यच्वेर्लोपश्च', 'हलः' इति क्यङ् । सुखायत इति । 'सुखादिभ्यः कर्तृवेदनायाम्' इति क्यङ् । चीयत इति । कर्मणि लकारः, 'सार्वधातुके यक्' । चेचीयत इति । 'गुणो यङ्लुकोः' इत्यभ्यासस्य गुणः । तोष्टूयत इति । 'ष्टुञ् स्तुतौ', 'शर्पूर्वाः खयः' इति खयः शेषः । चीयात्, स्तूयादिति । आशिषि लिङ् ।

### पदमञ्जरी

एतेर्लिङि ॥ आशिषि लिङीत्यादिना सूत्रस्य विषयं दर्शयति । सार्वधातुके हि लिङि दीर्घत्वमिणो न सम्भवति । ननु च सवर्णदीर्घत्वे सति सम्भवति—आभीयात्, प्रतीयात्, परीयादिति, नात्र ह्रस्वत्वेन भवितव्यम्; किं कारणम् ? 'उपसर्गादेतेः' इत्युभयत आश्रयणादन्तादिवद्भावात् । आ + ईयादित्यादि । आ + ऊह्यत इत्यादिना व्याख्यातम् ॥ २४ ॥

अकृत्सार्वधातुकयोर्दीर्घः ॥ अकृद्यकार इति । यकारमात्रस्य प्रत्ययस्यासम्भवादकृति असार्वधातुके च यकारादावित्यर्थः । भृशायत इति । 'भृशादिभ्यो भुव्यच्वेः' इति क्यङ् । सुखायत इति । 'सुखादिभ्यः कर्तृवेदनायाम्' । चीयत इति । यक् । चेचीयत इति । यङ् । तोष्टूयत इति । 'शर्पूर्वाः खयः' । चीयादिति । आशिषि लिङ् ।

### भावबोधिनी

उपसर्ग से उत्तरवर्त्ती एति = इण् अङ्ग का यकारादि कित्, ङित् लिङ् परे रहते ह्रस्व होता है । उदा० उदियात् । समियात् । अन्वियात् । आशीर्लिङ् में 'अकृत्सार्वधातुकयोः' सूत्र द्वारा दीर्घ कर देने पर इस प्रस्तुत सूत्र द्वारा ह्रस्व होता है । [ न्यासकार ने 'अभीयात्' में अभि + ईयात् में सवर्ण दीर्घ के पहले ह्रस्व मानकर अभि + इयात् में सवर्णदीर्घत्व माना है । ]

उपसर्ग से परे ही—ईयात् । [ अकेले का ह्रस्व नहीं होता । ] अण् का ही ह्रस्व होता है—आ + ईयात् = एयात् । सम् + एयात् में 'ए' का ह्रस्व नहीं होता है क्योंकि 'ए' अण् नहीं है । ] ॥ २४ ॥

अकृत् = कृद्भिन्न यकार और असार्वधातुक यकार जो कित् या ङित् है, परे रहते अजन्त अङ्ग का दीर्घ होता है । उदा० भृशायते । सुखायते । दुःखायते । [ क्यङ् प्रत्यय परे होने से अजन्त अङ्ग का दीर्घ होता है । ] चीयते, चेचीयते । [ चि + यक् + लट् = त, दीर्घ, एत्व । चि + यङ्, द्वित्वादि के बाद दीर्घ—चेचीयते । ] स्तूयते, तोष्टूयते । [ स्तु + यक् + त, स्तु + यङ् द्वित्व आदि कार्य होने पर दीर्घ होता है । ] चीयात् । स्तूयात् । [आशीर्लिङ् में दीर्घ होता है । ]

अकृदिति किम् ? प्रकृत्य । प्रहृत्य । परत्वाद्दीर्घत्वेन तुको बाधः स्यात् ।
असार्वधातुक इति किम् ? चिनुयात् । सुनुयात् ।
'क्ङिति' इत्येव—उरुया । धृष्णुया ॥

**३५४३. च्वौ च ॥ २६ ॥ (२१२०)**

च्विप्रत्यये परतोऽजन्तस्याङ्गस्य दीर्घो भवति । शुचीकरोति । शुचीभवति । शुचीस्यात् । पटूकरोति । पटूभवति । पटूस्यात् ॥

**३५४४. रीङ् ऋतः ॥ २७ ॥ (१२३४)**

न्यासः

प्रकृत्येति । पूर्ववल्ल्यप् । स च 'कृदतिङ्' इति कृत्संज्ञकः । ननु च दीर्घश्रुत्याऽजित्येतस्मिन्नुपस्थिते तेनाङ्गं विशिष्यते, तत्र विशेषणेन च तदन्तविधिरित्यजन्तस्याङ्गस्य दीर्घत्वेन भवितव्यमिति, इह 'ह्रस्वस्य पिति कृति' तुकि कृतेऽजन्तता नास्ति, ततश्चानजन्तत्वादेव दीर्घत्वं न भविष्यति, किमेतन्निवृत्त्यर्थेनाकृद्ग्रहणेन ? इत्यत आह—परत्वादित्यादि । तुकोऽवकाशः—अग्निचिति, दीर्घस्यावकाशः—चीयत इति; प्रकृत्य, प्रहृत्य—इत्यत्रोभयप्राप्तौ सति, असत्यकृद्ग्रहणे परत्वाद् दीर्घत्वेन तुग्बाध्येत । तस्मादकृद्ग्रहणं कर्तव्यम् ।

चिनुयादिति । विध्यादिलिङ्, स च 'तिङ्शित्सार्वधातुकम्' इति सार्वधातुकसंज्ञकः ।

उरुया, धृष्णुयेति । उरु धृष्णुशब्दयोस्तृतीयैकवचने 'सुपां सुलुक्' इत्यादिना याभावः ॥ २५ ॥

च्वौ च ॥ शुचीकरोतीति । 'अभूततद्भावे' इत्यादिना च्विः । चकारः पूर्वापेक्षया समुच्चयार्थः ॥२६॥

रीङृतः ॥ यिग्रहणमनुवर्तते, अकृत्सार्वधातुकयोरिति च । मात्रीयतीति । 'सुप आत्मनः क्यच्' ।

पदमञ्जरी

**निश्चित्य, प्रस्तुत्येति** । ल्यबयं कृत्संज्ञकः । ननु चाजन्तस्य दीर्घो विधीयते, इह च तुकि कृतेऽनजन्तत्वाद्दीर्घो न भविष्यति ? इत्यत आह—**परत्वादिति** । तुकोऽवकाशः—अग्निचित्, सोमसुत्; दीर्घस्यावकाशः—चीयते, स्तूयते; निश्चित्य, प्रस्तुत्येत्यत्र परत्वात्तुग् दीर्घत्वेन बाध्यते । प्रायेण तु **प्रकृत्य, प्रहृत्येति** पाठः, तत्रोत्तरसूत्रेण रीङः प्रसङ्गाद् दीर्घत्वेन तुको बाधः स्यादित्ययुक्तं स्यात् । आद्यप्राप्त्यभिप्रायेण वा व्याख्येयम् । **चिनुयादिति** । विध्यादिलिङि ।

**उरुया, धृष्णुयेति** । 'सुपां सुलुक्' इत्यादिना यादेशः ॥ २५ ॥ २६ ॥

**रीङ् ऋतः** ॥ **पित्र्यमिति** । 'पितुर्यच्च' इति यत्प्रत्ययः रीङादेशे कृते यस्येतिलोपः ।

भावबोधिनी

अकृत्—इसका क्या फल है ? प्रकृत्य, प्रहृत्य । [ क्त्वा = ल्यप् कित् हैं किन्तु कृत् प्रत्यय होने से दीर्घ नहीं होता है । ] परवर्त्ती होने से दीर्घत्व द्वारा तुक् का बाध होने लगता ।

असार्वधातुक में—इसका क्या फल है ? चिनुयात् । सुनुयात् । [ यहाँ विधिलिङ् सार्वधातुक होने से दीर्घ नहीं होता है । ]

कित् ङित् परे—इसका क्या फल है ? उरुया । धृष्णुया । [ इनमें तृतीया एकवचन टा का 'सुपां सुलुक्' सूत्र द्वारा 'या' आदेश हुआ है । वह कित् ङित् नहीं है । ] ॥ २५ ॥

च्वि प्रत्यय परे रहते अजन्त अङ्ग का दीर्घ होता है । उदा० शुचीकरोति । शुचीभवति । शुचीस्यात् । पटूकरोति । पटूभवति । पटूस्यात् । [ अशुचिं शुचिं करोति, अशुचिः शुचिः भवति, अशुचिः शुचिः स्यात् आदि विग्रहों में अभूततद्भाव में अर्थात् जो वैसा नहीं उसे वैसा करने या होने में च्वि प्रत्यय होता है । उसका सर्वापहारी लोप होता है । प्रस्तुत सूत्र से अच् का दीर्घ होता है । ] ॥ २६ ॥

ऋकारान्त अङ्ग का अकृत् और असार्वधातुक यकार तथा च्वि प्रत्यय परे रहते 'रीङ्' यह आदेश होता है । उदा० मात्रीयति, मात्रीयते । [ आत्मनः मातरम् इच्छति इस विग्रह में 'सुप आत्मनः क्यच्' सूत्र से क्यच् = य,

ऋकारान्तस्याङ्गस्य अकृद्यकारेऽसार्वधातुके यकारे च्वौ च परतः 'रीङ्'—इत्ययमादेशो भवति। मात्रीयति, मात्रीयते। पित्रीयति, पित्रीयते। चेक्रीयते। मात्रीभूतः।

"क्ङिति' इत्येतन्निवृत्तम्, तेनेहापि भवति—पितुरागतं पित्र्यम्।

ॠत इति तपरकरणं किम्? चेकीर्यते। निजेगिल्यते॥

न्यासः

पित्रीयत इति। 'कर्तुः क्यङ् सलोपश्च' इति क्यङ्। चेक्रीयत इति। करोतेर्यङ्। पित्र्यमिति। 'पितुर्यच्च' इति यत् प्रत्ययः, रीङादेशे कृते 'यस्येति च' इतीकारलोपः।

कथं पुनः क्ङितीत्युच्यमाने तत्रादेशो भवति? इत्याह—क्ङितीत्येतदिह निवृत्तमिति। यद्येवं यिग्रहणस्यापि निवृत्तिः प्राप्नोति, तदेकयोगनिर्दिष्टत्वात्? नैतदस्ति; स्वरितत्वप्रतिबद्धा हि शब्दानामनुवृत्तिः। इह च यिग्रहणस्यैव स्वरितत्वं प्रतिज्ञायत इति तदेवानुवर्त्तते, क्ङिद्ग्रहणस्य स्वरितत्वं न प्रतिज्ञायत इति न तदनुवर्त्तते।

चेकीर्यत इति। 'कॄ विक्षेपे', 'ॠत इद्धातोः' इतीत्त्वे रपरत्वम्, 'हलि च' इति दीर्घः। निजेगिल्यत इति। 'गॄ निगरणे', 'लुपसद' इत्यादिना यङ्, 'ग्रो यङि' इति लत्वं रेफस्य। अथ दीर्घग्रहणं किमर्थम्, न रिङित्येवोच्येत, 'अकृत्सार्वधातुकयोः' इति दीर्घत्वेनैव सिद्धमिति, तत्रायमप्यर्थः—उत्तरसूत्रे पुना रिङ्ग्रहणं न कर्त्तव्यं भवति, एतदेव हि तत्रानुवर्तिष्यते? न सिध्यति; नाप्राप्ते दीर्घत्वे रिङारभ्यमाणस्तस्य बाधकः स्यात्। भवतु नाम ऋकारस्य यो दीर्घस्तस्य बाधकः, यस्तु कृत आदेशे स्थान्यन्तरस्य प्राप्नोति तस्य कथं बाधकः, न ह्यस्मिन् प्राप्ते रिङारभ्यते? एवं तर्हि मन्दधियां सुखप्रतिपत्त्यर्थं दीर्घोच्चारणम्। ङकारोऽन्त्यादेशार्थः॥ २७॥

पदमञ्जरी

कथं पुनः 'क्ङिति' इत्यनुवर्त्तमानेऽत्र रीङादेशो भवति? अत आह—क्ङितीत्येतदिह निवृत्तमिति।

चेकीर्यत इति। 'कॄ विक्षेपे' यङ्, 'ॠत इद्धातोः', 'हलि च' इति दीर्घः। जेगिल्यत इति। अत्र 'ग्रो यङि' इति लत्वे कृते रेफाभावाद् दीर्घाभावः। अथ रीङिति किमर्थम्, न रिङेवोच्येत, 'अकृत्सार्वधातुकयोः', 'च्वौ च' इति दीर्घो भविष्यति, तत्रायमप्यर्थः—उत्तरत्र रिङ्ग्रहणं न कर्त्तव्यं भवति; तथा यग्लिङोरपि ग्रहणं न कर्त्तव्यं भवति, 'शे च' इत्येव वक्तव्यं चकारादकृत्सार्वधातुकयकारे च? यद्येवम्, यथा मात्रीयतीत्यादौ दीर्घो भवति, तथा यग्लिङोरपि स्यात्—क्रियते, क्रियादिति। अथ तत्र नाप्राप्ते दीर्घे रिङि विधीयमानो दीर्घत्वं बाधत इति उच्येत; तर्हि क्यजादिष्वपि बाधेत। अथ मतम्—ऋवर्णदीर्घत्वं तावद्बाध्यताम्, रिङस्तु कथं बाध्यते, न हि तत्र नाप्राप्ते दीर्घे स आरभ्यत इति? यग्लिङोरपि तर्हि न बाधेत। तस्मात्क्यजादिषु दीर्घस्य, यग्लिङोस्तु ह्रस्वस्य श्रवणं यथा स्यादिति पृथगादेशद्वयं वक्तव्यम्॥ २७॥

भावबोधिनी

धातु संज्ञा, सुप् लोप—मातृ + य, प्रस्तुत सूत्र से 'री' यह आदेश—मात्रीय + ति। माता इव आचरति—इस विग्रह में 'कर्तुः क्यङ् सलोपश्च' सूत्र द्वारा क्यङ् = य प्रत्यय, ऋ का रीङ् आदेश ङित् होने से आत्मनेपद होता है मात्रीयते।] पित्रीयति, पित्रीयते। [आत्मनः पितरम् इच्छति—इस अर्थ में क्यच् प्रत्यय। पिता इव आचरति—इस अर्थ में क्यङ् प्रत्यय करने पर ऋ का रीङ् आदेश होता है।] चेक्रीयते। [कृ का यङ् परे रूप है द्वित्वादि के बाद चे कृ + य ते, ऋ का रीङ् होता है अभ्यास का गुण—चेक्रीयते।] मात्रीभूतः। [अमाता माता भूतः—इस अर्थ में—मात्रीभूतः।]

कित् ङित्—ये निवृत्त हो जाते हैं। इस कारण यहाँ भी होता है—पितुः आगतम्—पित्र्यम्। [पितृ से 'पितुर्यच्च' सूत्र से यत् पितृ + य, रीङ् आदेश, भ संज्ञा, ई लोप—पित्र्य] ॠत = ॠ का—यह तपरकरण किस लिये है? चेकीर्यते। निजेगिल्यते। ['कॄ विक्षेपे' तथा 'गॄ निगरणे' में दीर्घ ॠ है अतः रीङ् आदेश नहीं होता है।]॥ २७॥

**२५४५. रिङ् शयग्लिङ्क्षु ॥ २८ ॥ (२३६७)**

ऋकारान्तस्याङ्गस्य श, यक्—इत्येतयोर्लिङि च यकारादावसार्वधातुके परतः 'रिङ्' इत्ययमादेशो भवति। श—आद्रियते, आध्रियते। यक्—क्रियते, ह्रियते। लिङ्—क्रियात्। ह्रियात्।

रिङ्वचनं दीर्घनिवृत्त्यर्थम्।

'असार्वधातुके' इत्येव—बिभृयात्। 'यि' इत्येव—कृषीष्ट, हृषीष्ट॥

**२५४६. गुणोर्ऽतिसंयोगाद्योः ॥ २९ ॥ (२३८०)**

ऋतो यकि लिङि इति वर्त्तते। 'श' इत्यत्रासम्भवान्निवृत्तम्। गुणो भवत्यर्तेः संयोगादीनामृका-

**न्यासः**

**रिङ् शयग्लिङ्क्षु** ॥ अत्रापि यिग्रहणम्, 'अकृत्सार्वधातुकम्' चानुवर्त्तते। तत्र सम्भवव्यभिचारा-ल्लिङ एव विशेषणम्, न शयकोः। **आद्रियते, आध्रियत इति**। 'दृङ् आदरे', 'धृङ् अवस्थाने', आङ् पूर्वः, तुदादित्वाच्छः। **क्रियादिति**। 'आशिषि लिङ्'। **बिभृयादिति**। अत्र विध्यादिलिङ्, जुहोत्यादित्वात् श्लुः, 'श्लौ' इति द्विर्वचनम्, 'भृञामित्' इतीत्वमभ्यासस्य। **कृषीष्टेति**। 'आशिषि लिङ्'। 'उश्च' इति कित्वाद् गुणाभावः॥ २८॥

**गुणोर्ऽत्तिसंयोगाद्योः** ॥ 'ऋ गतिप्रापणयोः', 'ऋ सृ गतौ'—इत्येतयोर्भौवादिकजौहोत्यादिकयो-र्ग्रहणम्। 'छन्दोवत् सूत्राणि भवन्ति' इत्यतः 'बहुलं छन्दसि' इतिशपो लुकं कृत्वाऽर्त्तीति निर्देशः क्रियेत, एवं सति जौहोत्यादिकस्य ग्रहणं न स्यात्। अथापीयर्त्तिनिर्देशः क्रियते, एवमपि भौवादिकस्य ग्रहणं न स्यात्।

**पदमञ्जरी**

**रिङ् शयग्लिङ्क्षु** ॥ यिग्रहणमकृत्सार्वधातुकग्रहणं चानुवर्त्तमानं सम्भवव्यभिचाराभ्यां लिङ एव विशेषणम्, न शयकोः। **आद्रियते, आध्रियत इति**। 'दृङ् आदरे', 'धृङ् अवस्थाने', तुदादित्वाच्छः, रिङि कृते इयङादेशः। **रिङ्वचनं दीर्घनिवृत्त्यर्थमिति**। रिङि कृते 'अकृत्सार्वधातुकयोः' इति दीर्घत्वं प्राप्नोति, तस्यापि निवृत्त्यर्थमिति भावः॥ २८॥

**गुणोर्ऽतिसंयोगाद्योः** ॥ 'ऋ गतिप्रापणयोः' भूवादिः, 'ऋ सृ गतौ' जौहोत्यादिकः—द्वयोरप्ययं छान्दसत्वाल्लुका निर्देशः; ऋच्छतीति निर्देशे इयर्त्तेर्न स्यात्, इयर्त्तीति निर्देशे ऋच्छतेर्न स्यात्। ऋग्रहणमेव

**भावबोधिनी**

ऋकारान्त अङ्ग का श, यक् इनके तथा यकारादि असार्वधातुक लिङ् के परे रहते 'रिङ्' यह आदेश होता है। उदा०—आद्रियते, आध्रियते। [ आङ् पूर्वक दृङ् तथा धृङ् से 'तुदादिभ्यः शः' ( ३।१।७७ ) से श = अ प्रत्यय करने पर ऋ का रिङ् होने से आ द् रि अ त, आ ध् रि अ त, 'अचि श्नुधातुभ्रुवाम्' ( ६।४।७७ ) से इ का इयङ् आदेश, टि का एत्व—आद्रियते, आध्रियते। ] यक्—क्रियते, ह्रियते। [ कृ + यक् + त, हृ + यक् + त, भावकर्म में, ऋ का रिङ् टि का एत्व—क्रियते, ह्रियते। ] लिङ्—क्रियात्। ह्रियात्। [ कृ + आशीर्लिङ् तिप्, यासुट्, ऋ का रिङ् आदेश—क्रियात्, ह्रियात्। ]

रिङ् का विधान [ 'अकृत् सार्वधातुकयोः' से प्राप्त ] दीर्घ की निवृत्ति के लिये है। [ रिङ् आदेश होने पर प्राप्त भी दीर्घ की निवृत्ति के लिये हैं। ]

'असार्वधातुक में ही'—बिभृयात्। [ 'भृञ् भरणे' के विधिलिङ् में आदेश नहीं होता है। ] यकारादि परे ही—कृषीष्ट, हृषीष्ट। [ यहाँ यकारादि परे न होने से रिङ् नहीं होता है। ] ॥ २८॥

ऋकारान्त का, यक् परे, लिङ् परे—इनकी अनुवृत्ति होती है। 'श' इसकी असम्भव होने से निवृत्ति होती है। 'ऋ' धातु का तथा संयोगादि ऋकारान्त धातुओं का यक् परे रहते और असार्वधातुक यकारादि लिङ् परे

रान्तानां यकि परतो लिङि च यकारादावसार्वधातुके। अर्यते, अर्यात्। स्मर्यते, स्मर्यात्।

इह संस्क्रियते, संस्क्रियादिति सुटो बहिरङ्गलक्षणस्यासिद्धत्वाद्, अभक्तत्वाद्वा संयोगादित्वमङ्गस्य नास्तीति गुणो न प्रवर्त्तते।

'यि' इत्येव—स्वृषीष्ट। ध्वृषीष्ट। 'असार्वधातुके' इत्येव—इयृयात्॥

## ३५४७. यङि च ॥ ३० ॥ (२६३३)

यङि च परतः, अर्त्तेः संयोगादेश्च ऋतो गुणो भवति। अरार्यते। सास्वर्यते। दाध्वर्यते। सास्मर्यते।

**न्यासः**

'ऋ' इत्येतन्निर्देशस्तु न कृतः, वैचित्र्यार्थः। पूर्वेण रिङः प्राप्तस्यायमपवादः। श इत्यसम्भवान्निवृत्तमिति। असम्भवस्त्वर्त्तिसंयोगाद्योरशविकरणत्वात्। **अर्यत इति**। यक्। **अर्यादिति**। आशिषि लिङ्।

अथ संस्क्रियते, संस्क्रियादित्यत्र कस्मान्न भवति, भवति हि करोतिरपि सुटि कृते संयोगाद्यम्? इत्यत आह—**इहेत्यादि**। बहिरङ्गत्वं तु सुटो द्विपदाश्रयत्वात्। गुणस्य पुनरन्तरङ्गत्वमेकपदाश्रयत्वात्। 'असिद्धं बहिरङ्गमन्तरङ्गे' इति सुटोऽसिद्धत्वात् संयोगादित्वमङ्गस्य नास्ति। अथापि कथञ्चित् सुटः सिद्धत्वं स्यात्, एवमप्यभक्तत्वात् सुटः संयोगादित्वं नास्ति, अतो गुणो न प्रवर्त्तते। अङ्गाधिकारादङ्गावयवः संयोगो गृह्यते। न ह्यत्राभक्तत्वे सुटोऽङ्गावयवः संयोग उपपद्यते। **इयृयादिति**। 'ऋ गतौ', विध्यादिलिङ्। जुहोत्यादित्वाच्छपः श्लुः, 'श्लौ' इति द्विर्वचनम्, 'अर्तिपिपर्त्योश्च' इत्यभ्यासस्येत्वम्, 'अभ्यासस्यासवर्णे' इतीयङ्, 'लिङः सलोपोऽनन्त्यस्य' इति सलोपः।

'अर्त्तिसंयोगाद्योरत्' इति कर्त्तव्ये गुणग्रहणं वैचित्र्यार्थम्॥ २९॥

**यङि च**॥ पूर्वेण प्राप्तस्य रीङोऽयमपवादः। **अरार्यत इति**। यङ्, गुणः, रपरत्वम्। 'अजादेर्द्वितीयस्य' इति द्विर्वचनम्, हलादिशेषः, 'दीर्घोऽकितः' इति दीर्घत्वम्। ननु चार्त्तेरहलादित्वाद् यङ् न प्राप्नोति? इत्यत आह—**अर्त्तेरित्यादि**।

**पदमञ्जरी**

तु न कृतम्, वैचित्र्यार्थम्। न चैवमुच्यमाने वर्णग्रहणशङ्का? 'ऋतः' इत्यनुवृत्तेः। **श इत्येतदिहासम्भवान्निवृत्तमिति**। न ह्यर्त्तिः, संयोगादिर्वा धातुस्तुदादिषु पठ्यते।

संस्क्रियते, संस्क्रियादित्यत्र सुटि कृते संयोगाद्यङ्गमिति गुणप्रसङ्गः? इत्यत आह—**इहेति**। बहिरङ्गत्वं सुटो द्विपदाश्रयत्वात्, इदं तु 'पूर्वं धातुः साधनेन युज्यते' इत्याश्रित्योक्तम्। पक्षान्तरेऽप्याह—**अभक्तत्वाद्वेति**। **इयृयादिति**। विध्यादिलिङ्, शपः श्लुः, द्विर्वचनम्, 'अर्तिपिपर्त्योश्च' इत्यभ्यासस्येत्वम्, 'अभ्यासस्यासवर्णे' इतीयङ्। अकार एव वक्तव्ये गुणग्रहणं चिन्त्यप्रयोजनम्॥ २९॥

**यङि च**॥ **ध्नीभाव इति**। प्रक्रियालाघवाय धकारोच्चारणम्, घ्नीभावविधौ 'अभ्यासाच्च' इति

**भावबोधिनी**

रहते गुण होता है। उदा० अर्यते, अर्यात्। स्मर्यते, स्मर्यात्। [ ऋ + यक् + लट् = त, ऋ का गुण, रपर, टि का एत्व। ऋ + अशीर्लिङ् में भी ऋ का गुण, रपर अर्यात् कित् होने से यक् में तथा ङित् होने से यङ् में गुण अप्राप्त है। यह सूत्र गुण करता है। ]

यहाँ 'संस्क्रियते' 'संस्क्रियात्' में बहिरङ्ग लक्षण सुट् असिद्ध हो जाता है, अथवा उसका अवयव नहीं माना जाता है इस कारण इस अङ्ग का संयोगादित्व नहीं होता है इस लिये गुण प्रवृत्त नहीं होता है।

'यकारादि परे ही'—स्वृषीष्ट। ध्वृषीष्ट। [ यहाँ नहीं होता है। ] 'असार्वधातुक में ही'—इयृयात्। [ यहाँ सार्वधातुक विधिलिङ् में गुण नहीं होता है। ]॥ २९॥

और यङ् परे रहते भी ऋ धातु का तथा संयोगादि ऋकारान्त धातु का गुण होता है। उदा० अरार्यते, सास्वर्यते। दाध्वर्यते। सास्मर्यते। ऋ इस धातु से "अस्यत्यर्त्यूर्णोतीनामुपसंख्यानम्" इस वार्तिक से यङ् प्रत्यय

अर्तेः 'अटचर्त्यशूर्णोतीनामुपसंख्यानम्' ( ७।४।८२ ) इति यङ् ।

'न न्द्राः संयोगादयः' ( ६।१।३ ) इति द्विर्वचनप्रतिषेधो यकारस्य नेष्यते ।

❀ हन्तेर्हिंसायां यङि घ्नीभावो वक्तव्यः ❀ (म० भा०) जेघ्नीयते । हिंसायामिति किम् ? जङ्घन्यते ॥

**३५४८. ई घ्राध्मोः ॥ ३१ ॥ (२६४८)**

'घ्रा', 'ध्मा'—इत्येतयोर्यङि परत ईकारादेशो भवति । जेघ्रीयते । देध्मीयते ॥

**३५४९. अस्य च्वौ ॥ ३२ ॥ (२११८)**

'ई' इति वर्तते । अवर्णान्तस्याङ्गस्य च्वौ परत ईकारादेशो भवति । शुक्लीभवति, शुक्लीस्यात् । खट्वीकरोति, खट्वीस्यात् ॥

**न्यासः**

भवतु नामोपसंख्यानाद् यङ्, रेफादेस्तु द्विर्वचनेन न भवितव्यम्, 'न न्द्राः संयोगादयः' इति प्रतिषेधात् ? इत्यत आह—**न न्द्राः संयोगादय इति ।** उक्तं हि तत्र—यकारपरस्य रेफस्य प्रतिषेधो वक्तव्यः । तस्माद्रेफादेर्य इत्येतस्य द्विर्वचनं भवति । **जङ्घन्यत इति ।** 'नुगतोऽनुनासिकान्तस्य' इति नुक्, 'अभ्यासाच्च' इति कुत्वम् ॥ ३० ॥

**ई घ्राध्मोः ॥** अत्र दीर्घोच्चारणं किमर्थम्, दीर्घो यथा स्यात्, ह्रस्वो मा भूत् ? नैतदस्ति; ह्रस्वस्यापि हि विधाने 'अकृत्सार्वधातुकयोर्दीर्घः' इत्येवं सिध्यति, 'च्वौ च' इति यथायोगं दीर्घो भविष्यति ? एवं तर्ह्येतज्ज्ञापयति—'संज्ञापूर्वको विधिरनित्यः' इति । तेन स्वायम्भुवमिति सिद्धं भवति ॥ ३१ ॥

**अस्य च्वौ ॥** 'च्वौ च' इति दीर्घस्यायमपवादः ॥ ३२ ॥

**पदमञ्जरी**

कुत्वे गौरवप्रसङ्गात् । **जेघ्नीयत इति ।** दिग्यादेशेनेव घ्नीभावेन द्विर्वचनं न बाध्यते, विषयभेदात्—यङन्तस्य द्विर्वचनम्, प्रकृतिमात्रस्य घ्नीभावः । **जङ्घन्यते इति ।** गत्यर्थोऽयम् ॥ ३० ॥

**ई घ्राध्मोः ॥** इकारविधावपि 'अकृत्सार्वधातुकयोर्दीर्घः' ॥ ३१ ॥

**अस्य च्वौ ॥** 'च्वौ च' इति दीर्घे सिद्धे ईकारविधानं प्रक्रियालाघवार्थम् ॥ ३२ ॥

**भावबोधिनी**

होता है । [ गुण, रपर आर्य, 'अजादेर्द्वितीयस्य' सूत्र से द्वितीय एकाच् 'र्य' का द्वित्व अभ्यासकार्य करने पर अरर्य में 'दीर्घोऽकितः' से अभ्यास का दीर्घ—अरार्य + त, एत्व । ] ❀ 'न न्द्राः संयोगादयः' यह द्विर्वचन का प्रतिषेध यकार का इष्ट नहीं है । ❀ [ अतः 'र्य' का द्वित्व होने में बाधा नहीं आती है । स्वृ, ध्वृ, स्मृ का भी यङ् परे गुण, रपर, द्वित्व आदि पूर्वोक्त प्रक्रिया होती है । ]

❀हन् का हिंसा अर्थ में यङ् परे रहते 'घ्नी' होना कहना चाहिए । ❀ उदा० जेघ्नीयते । [ हन् + यङ्, घ्नी आदेश, द्वित्व, अभ्यासकार्य, 'कुहोश्चुः' से चुत्व और जश्त्व होने पर जेघ्नीय + लट् = ता एत्व ] हिंसा अर्थ में—इसका क्या फल है ? जङ्घन्यते । [ हन् के दो अर्थ हैं गति और हिंसा । गति अर्थ में 'घ्नी' नहीं होता है । हन् + यङ् का ही द्वित्वादि होता है । ] ॥ ३० ॥

घ्रा तथा ध्मा—इनका यङ् परे रहते ईकार आदेश होता है । उदा० जेघ्रीयते । देध्मीयते । [ घ्रा + यङ्, ध्मा + यङ् में ई करके घ्री + य, ध्मी + य में द्वित्व तथा अभ्यासकार्य करने पर रूप बनते हैं । ] ॥ ३१ ॥

'ई' इसकी अनुवृत्ति होती है । अवर्णान्त अङ्ग का च्वि परे रहते ईकार आदेश होता है । उदा० शुक्लीभवति, शुक्लीस्यात् । खट्वीकरोति, खट्वीस्यात् । [ अभूततद्भाव अर्थ में च्वि प्रत्यय, उसका सर्वापहारी लोप करने के बाद अ तथा आ का 'ई' होता है । यह सूत्र 'च्वौ च' से प्राप्त दीर्घ का अपवाद है । ] ॥ ३१ ॥

'अस्य = अकार की'—इसकी अनुवृत्ति होती है । क्यच् परे रहते अवर्णान्त अङ्ग का ईकार आदेश होता है । उदा० पुत्रीयति । घटीयति । खट्वीयति । मालीयति । [ आत्मनः पुत्रम् इच्छति—इस अर्थ में 'सुप आत्मनः

## ३५५०. क्यचि च ॥ ३३ ॥ (२६५८)

'अस्य' इति वर्त्तते। क्यचि परतोऽवर्णान्तस्याङ्गस्य ईकारादेशो भवति। पुत्रीयति। घटीयति। खट्वीयति। मालीयति। 'अकृत्सार्वधातुकयोर्दीर्घः' (७।४।२५) इत्यस्यापवादः।

पृथग्योगकरणमुत्तरार्थम् ॥

## ३५५१. अशनायोदन्यधनाया भुबुक्षापिपासागर्धेषु ॥ ३४ ॥ (२६६१)

अशनाय, उदन्य, धनाय—इत्येतानि निपात्यन्ते, बुभुक्षा, पिपासा, गर्ध—इत्येतेष्वर्थेषु। अशनायेति—अशनशब्दस्यात्वं क्यचि निपात्यते। अशनायतीति भवति, बुभुक्षा चेत्। अशनीयतीत्येवान्यत्र।

उदन्येति—उदकशब्दस्य उदन्नादेशो निपात्यते। उदन्यतीति भवति, पिपासा चेत्। उदकीयतीत्येवान्यत्र।

धनायेति—धनशब्दस्यात्वं निपात्यते। धनायतीति भवति, गर्धश्चेत्। धनीयतीत्येवान्यत्र ॥

**न्यासः**

**क्यचि च** ॥ 'अकृत्सार्वधातुकयोर्दीर्घः' इत्यस्यायमपवादः। चकारः 'अस्य' इत्यनुकर्षणार्थः। अथ पृथग्योगकरणं किमर्थम्, नास्य 'च्विक्यचोः' इत्येकयोग एव क्रियताम्? इत्यत आह—**पृथग्योगकरण**मित्यादि। 'न च्छन्दस्यपुत्रस्य' इत्येवमाद्युत्तरकार्यं क्यचि यथा स्यात्, च्वौ मा भूत्—इत्येवमर्थो योगविभागः कृतः ॥ ३३ ॥

**अशनायोदन्यधनाया बुभुक्षापिपासगर्धेषु** ॥ भोक्तुमिच्छा बुभुक्षा। पातुमिच्छा पिपासा। गर्धनं गर्धः। अभिकाङ्क्षेत्यर्थः ॥ ३४ ॥

**पदमञ्जरी**

**क्यचि च** ॥ **पृथग्योगकरणमुत्तरार्थमिति**। 'न छन्दस्यपुत्रस्य' इत्यादि क्यच्येव यथा स्यात्, च्वौ मा भूदिति ॥ ३३ ॥

**अशनायोदन्यधनाया बुभुक्षापिपासागर्धेषु** ॥ **एतेष्वर्थेष्विति**। गम्यमानेषु। यस्तदानीमेव बुभुक्षमाणोऽशनमिच्छति तदत्रोदाहरणम्। यस्तु तदानीं सुहित एवोत्तरार्थमशनमिच्छति, तदत्र प्रत्युदाहरणम्।

**उदकीयतीति**। स्नानाद्यर्थमुदकमिच्छतीत्यर्थः। **धनायतीति**। अभिलाषातिरेकः = गर्धः, सत्येव धने भूयोऽपि धनमिच्छतीत्यर्थः। **धनीयतीति**। दरिद्रः सन् धनमिच्छति ॥ ३४ ॥

**भावबोधिनी**

क्यच्' सूत्र से क्यच् प्रत्यय होने पर धातुसंज्ञा, सुप् लोप पुत्र+य, अ का ई—पुत्रीय + लट् = तिप्, शप्। इसी प्रकार अन्य रूपों में भी समझना चाहिए। ] यह "अकृत्सार्वधातुकयोः" इस दीर्घ का अपवाद है ॥ ३२ ॥

पृथक् सूत्र बनाना उत्तरवर्त्ती में अनुवृत्ति के लिये है ॥ ३३ ॥

अशनाय, उदन्य, धनाय—ये शब्द (क्रमशः) बुभुक्षा (भोजन करने की इच्छा), पिपासा (पीने की इच्छा) और गर्ध (=बहुत अधिक इच्छा करना = लालच करना)—इन अर्थों में निपातित होते हैं। उदा० अशनाय—यहाँ अशन का क्यच् परे रहते आत्व निपातित होता है—अशनायति यह होता है यदि बुभुक्षा अर्थ हो तो। अन्य अर्थ में तो—'अशनीयति' यही होता है। [ पूर्व सूत्र द्वारा अ का ई होता है। ]

उदन्य—उदक शब्द का 'उदन्य' आदेश निपातित होता है। उदन्यति—यह होता है यदि पिपासा अर्थ हो तो। अन्यत्र तो 'उदकीयति' यही होता है। [ उदकम् आत्मनः इच्छति अर्थ में क्यच् होने पर पूर्व सूत्र से अ का ईकार होता है। ]

धनाय—धनशब्द का आत्व निपातित होता है। यदि गर्ध अर्थ हो तो 'धनायति' ऐसा होता है। अन्य अर्थ में 'धनीयति' यह होता है। [ जब धन की उत्कट चाह होती है तब यह निपातन होता है। ] ॥ ३४ ॥

**३५५२. नच्छन्दस्यपुत्रस्य ॥ ३५ ॥ (३५८८)**

छन्दसि विषये पुत्रवर्जितस्यावर्णान्तस्याङ्गस्य क्यचि यदुक्तं तन्न भवति । किं चोक्तम् ? दीर्घत्वम्, ईत्वं च । मित्रयुः[1] (मै० २।६।१२) । संस्वेदयुः (मै० ४।१२।२) देवाञ्जिगाति सुम्नयुः (ऋ० ३।२७।१) ।

अपुत्रस्येति किम् ? पुत्रीयन्तः सुदानवः ।

❀ अपुत्रादीनामिति वक्तव्यम् ❀ (म० भा०) । जनीयन्तोऽन्वग्रवः ॥

**३५५३. दुरस्युर्द्रविणस्युर्वृषण्यति रिषण्यति ॥ ३६ ॥ (३५८९)**

दुरस्युः, द्रविणस्युः, वृषण्यति, रिषण्यति—इत्येतानि छन्दसि निपात्यन्ते । दुष्टशब्दस्य क्यचि दुरस्भावो निपात्यते । अविषेणा दुरस्युः । दुष्टीयतीति प्राप्ते ।

**न्यासः**

**न च्छन्दस्यपुत्रस्य ॥ क्यचि यदुक्तं तन्न भवतीति** । किं पुनस्तत् ? इत्याह—**दीर्घत्वमीत्वञ्चेति** । ननु च 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इत्यनन्तरस्य ईत्वस्य प्रतिषेधेन भवितव्यम्, न तु व्यवहितस्य दीर्घत्वस्य ? नैष दोषः; 'अश्वाघस्यात्' इत्यश्वाघयोरात्वचनं ज्ञापकम्—दीर्घत्वस्याप्ययं प्रतिषेधो भवतीति, अन्यथा दीर्घत्वेनैव सिद्धत्वादाकारकरणमनर्थकं स्यात् । **मित्रयुरिति** । 'क्याच्छन्दसि' इत्युप्रत्ययः, 'अतो लोपः' इत्यकारलोपः ।

**अपुत्रादीनामिति वक्तव्यमिति** । पुत्रादीनां प्रतिषेधो न भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्—'क्यचि च' इत्यस्यानन्तरं पुत्रस्येति वक्तव्यम्, किमर्थमिदम् ? 'नच्छन्दसि' इति प्रतिषेधं वक्ष्यति, तद् बाधनार्थम् । एवम् 'अपुत्रस्य' इति नञ् उच्चारयितव्यो न भवति । तदिदम् 'क्यचि च' इत्यस्यानन्तरं पुत्रस्येति वक्तव्ये यदिहापुत्रस्येति वचनं तत् पुत्रादीनां प्रतिषेधो यथा स्यादित्येवमर्थम् । एतच्च पुत्रस्योपलक्षणत्वाल्लभ्यते ॥ ३५ ॥

**पदमञ्जरी**

**न छन्दस्यपुत्रस्य ॥** इहानन्तर्यादीत्वस्यैव प्रतिषेधः प्राप्नोति, ततश्चापवादेऽपनीते उत्सर्गः 'अकृत्सार्वधातुकयोः' इति दीर्घः प्राप्नोतीत्याशङ्क्याह—**क्यचि यदुक्तं तन्न भवतीति** । किं पुनस्तत् ? इत्यत आह—**दीर्घत्वमीत्वं चेति** । एवं मन्यते—यदयम् 'अश्वाघस्यात्' इत्यात्वं शास्ति, तज्ज्ञापयति—दीर्घस्याप्ययं प्रतिषेध इति; अन्यथा दीर्घेणैव सिद्धत्वादात्ववचनमनर्थकं स्यादिति । **मित्रयुरित्यादौ** 'क्याच्छन्दसि' इत्युप्रत्ययः । पुत्रमिच्छन्तः **पुत्रीयन्तः** । जनमिच्छन्तो **जनीयन्तः**, लटः शत्रादेशः, 'उगिदचाम्' इति नुम् । अपरे त्वाहुः—जनीमिच्छन्तो जनीयन्तः, जनीति वधूरुच्यत इति । तत्रादिग्रहणस्य प्रयोजनान्तरं मृग्यम् ॥ ३५ ॥

**दुरस्युर्द्रविणस्युर्वृषण्यति रिषण्यतीति ॥ दुष्टीयतीति प्राप्ते इति** । भाषायां प्राप्तिरुच्यते, तत्र

**भावबोधिनी**

वेदविषय में पुत्र शब्द को छोड़कर अवर्णान्त अङ्ग का क्यच् परे जो कहा गया है वह नहीं होता है अर्थात् केवल पुत्र के अ का होता है अन्य के अ का नहीं । क्या कहा गया है ? दीर्घ होना और ईकार होना । उदा० मित्रयुः । सस्वेदयुः । देवान् जिगाति सुम्नयुः । [ क्यच् प्रत्ययान्त से 'क्याच्छन्दसि' सूत्र से 'उ' प्रत्यय होता है । यहाँ अ का दीर्घ और ईत्व प्राप्त है, निषेध हो जाता है । ]

अपुत्र का—इसका क्या फल है ? पुत्रीयन्तः सुदानवः । [ पुत्र के अ का ई होता ही है । ]

❀ अपुत्र आदि का नहीं होता है—ऐसा कहना चाहिए । ❀ उदा० जनीयन्तोऽन्वग्रवः । [ आत्मनः जनम् जनीं=वधूं वा इच्छन्ति इस अर्थ में क्यच् होने पर अ का ईकार आदेश होता ही है । ] ॥ ३५ ॥

दुरस्युः, द्रविणस्युः, वृषण्यति, रिषण्यति—ये शब्द वेदविषय में निपातित होते हैं । क्यच् परे रहने पर

---

१. अत्र 'पुत्रयुः'—इति मुद्रितः पाठोऽसाधुः ।

द्रविणशब्दस्य द्रविणस्भावो निपात्यते । 'द्रविणस्युर्विपन्यया (ऋ०६।१६।३४) द्रविणीयतीति प्राप्ते ।
वृषशब्दस्य वृषण्भावो निपात्यते । वृषण्यति ( ऋ० ९।५।६ ) । वृषीयतीति प्राप्ते ॥
रिष्टशब्दस्य रिषण्भावो निपात्यते । रिषण्यति ( ऋ० २।२३।१२ ) । रिष्टीयतीति प्राप्ते ॥

## ३५५४. अश्वाघस्यात् ॥ ३७ ॥ (३५९०)

अश्व, अघ—इत्येतयोः क्यचि परतश्छन्दसि विषये आकारादेशो भवति । अश्वायन्तो मघवन् ( ऋ० ७।३२।२३ ) । मा त्वा वृका अघायवो विदन् ( काठ० ७।२।३९ ) ।

एतदेवात्त्ववचनं ज्ञापकम्—'नच्छन्दस्यपुत्रस्य' ( ७।४।३५ ) इति दीर्घप्रतिषेधो भवतीति ॥

## ३५५५. देवसुम्नयोर्यजुषि काठके ॥ ३८ ॥ (३५९१)

देव, सुम्न—इत्येतयोः क्यचि परत आकारादेशो भवति काठके यजुषि । देवायन्तो यजमानाय ( काठ० ७।२।९ ) । सुम्नायन्ता हवामहे ( काठ० ८।१७।७६ ) ।

### न्यासः

दुरस्युर्द्रविणस्युर्वृषण्यति रिषण्यति ॥ ३६ ॥

अश्वाघस्यात् ॥ एतदेवाद्वचनं ज्ञापकमित्यादि । कथं कृत्वा ज्ञापकम् ? यदि 'नच्छन्दसि' इत्यनन्तरस्यैवेत्वस्यायं प्रतिषेधः, तदाऽद्वचनमनर्थकं स्यात्, 'अकृत्सार्वधातुकयोः' इत्यनेनैव सिद्धत्वात्, कृतश्च, तस्मादेतज्ज्ञापयति—दीर्घस्याप्ययं प्रतिषेधो भवतीति ॥ ३७ ॥

देवसुम्नयोर्यजुषि काठके ॥ 'न च्छन्दसि' इति प्रतिषेधे प्राप्ते देवसुम्नयोरिदमारभ्यत आद्वचनम् ।

### पदमञ्जरी

उप्रत्ययाभावात् तत्समानार्थस्तृच् प्रयुक्तः । प्रायेण तु लडन्तं पठ्यते, तत्र प्रकृतिमात्रे तात्पर्यम् ॥ ३६ ॥

आश्वाघस्यात् ॥ एतदेवेत्यादि । पूर्वमेवैतद्व्याख्यातम् ॥ ३७ ॥

देवसुम्नयोर्यजुषि काठके ॥ वेदवचनोऽत्र यजुःशब्दः, न मन्त्रवचनः । काठानामिदं काठकम्,

### भावबोधिनी

दुष्ट शब्द का दुरस् भाव निपातित होता है—अवियोना दुरस्युः । 'दुष्टीयति' ऐसा प्राप्त रहने पर [ यह रूप होता है । दुष्टम् इच्छति—इस अर्थ में क्यच् परे रहते दुष्ट का दुरस् आदेश होने पर दुरस्य + उ । ]

द्रविण शब्द का द्रविणस् होना निपातित होता है । उदा० 'द्रविणस्युः विपन्यया ।' द्रविणीयति—यह रूप प्राप्त होने पर [ द्रविण का द्रविणस् होता है । ]

वृष शब्द का वृषण् भाव निपातित होता है—वृषण्यति । वृषीयति—ऐसा रूप प्राप्त रहते । [ वृष का वृषण् होता है । ]

रिष्ट शब्द का रिषण् भाव निपातित होता है—रिषण्यति । रिष्टीयति—ऐसा रूप प्राप्त रहने पर [ रिषण् निपातित होता है ] । [ वेद में दृष्टानुविधि होने से ये निपातन करने पड़ते हैं । ] ॥ ३६ ॥

अश्व तथा अघ इन शब्दों को क्यच् परे रहते वेद-विषय में आकार आदेश होता है । उदा० अश्वायन्तो मघवन् । मा त्वा वृका अघायवो विदन् । [ अश्वम् इच्छन्ति, अघम् इच्छन्ति—इन अर्थों में क्यच् परे रहते अ के ईत्व का अपवाद आ आदेश होता है । ]

यह आत्व आदेश का विधान ही ज्ञापक है—'न च्छन्दस्यपुत्रस्य' यह दीर्घ का प्रतिषेध भी होता है । [ अन्यथा केवल ईत्व का प्रतिषेध ही लिखा जाता । ] ॥ ३७ ॥

देव तथा सुम्न—इन शब्दों का क्यच् परे रहते आकार आदेश यजुर्वेद की काठक शाखा में होता है । उदा० देवायन्तो यजमानाय । सुम्नायन्ता हवामहे । ( काठक सं० ८।१७ ) [ देवम् इच्छन्ति, सुम्नम् इच्छन्ति—इन अर्थों में क्यच् परे रहते प्राप्त ईत्व का अपवाद आ आदेश होता है । ]

यजुषीति किम् ? देवाञ्जिगाय सुम्नयुः ( ऋ० ३।२७।१ )। काठक इति किम् ? सुम्नयुरिद-मासीत् ( तै० २।५।७।१२ )।

**३५५६. कव्यध्वरपृतनस्यर्चि लोपः ॥ ३९ ॥ (३५९२)**

कवि, अध्वर, पृतना—इत्येतेषामङ्गानां क्यचि परतो लोपो भवति ऋचि विषये। कव्यन्तः सुमनसः। अध्वर—अध्वर्यन्तः। पृतना—पृतन्यन्तस्तिष्ठन्ति ॥

**३५५७. द्यतिस्यतिमास्थामित्ति किति ॥ ४० ॥ (३०७४)**

द्यति, सति, मा, स्था—इत्येतेषामङ्गानामिकारादेशो भवति तकारादौ किति प्रत्यये परतः।

**न्यासः**

**काठक इति**। यजुष एवैतद् विशेषणम्। कठस्येदं यजुः काठकम्—'गोत्रचरणाद् वुञ्' ॥ ३८ ॥

**कव्यध्वरपृतनस्यर्चिलोपः ॥ कव्यन्त इति**। 'अलोऽन्त्यस्य' लोपः। क्यजन्ताच्छतृप्रत्ययः, तदन्ताज्जस् ॥ ३९ ॥

**द्यतिस्यतिमास्थामित्ति किति ॥** छन्दसि, यजुषि, ऋचीति सर्वं निवृत्तम्; तेन सामान्येनायं विधिः। 'दो अवखण्डने', 'षो अन्तकर्मणि'। 'मा माने', 'माङ् माने, 'मेङ् प्रणिदाने'—'गामादाग्रहणेष्वविशेषः' इति त्रयाणामपि ग्रहणम्। 'ष्ठा गतिनिवृत्तौ'। तत्राद्यस्य 'दो दद् घोः' इति दत्त्वे प्राप्ते शेषाणां 'घुमास्था' इत्यादि-सूत्रेण ईत्त्वे प्राप्त इत्त्वं विधीयते।

**अवदायेति**। पूर्ववत् क्त्वो ल्यप्। **अवदातेति**। तृच्।

द्यतिस्यतीति श्तिपा निर्देशोऽयं यङ्लुग्निवृत्त्यर्थः। तेन तयोर्यथाप्राप्तमेव भवति—दादत्तः, दादत्तवान्; सासीतः, सासीतवान्।

**पदमञ्जरी**

'गोत्रचरणाद्वुञ्'। **काठके यजुषि** कठशाखायामित्यर्थः ॥ एवं च कृत्वा ऋगात्मके यजुषि मन्त्रे कठशाखाया-मात्वं भवति, तथा ऋग्वेदेऽपि भवति स चेन्मन्त्रः काठके दृष्टः। **देवान् जिगाति सुम्नयुरिति**। बह्वृचा-नामप्यस्ति कठशाखा, ततो भवति प्रत्युदाहरणम्। अनन्ता वै वेदाः ॥ ३८ ॥ ३९ ॥

**द्यतिस्यतिमास्थामित्ति किति ॥** 'दो अवखण्डने', 'षो अन्तकर्मणि'। 'मा माने', 'माङ् माने', 'मेङ् प्रणिदाने'—त्रयाणामपि ग्रहणम्, गामादाग्रहणेष्वविशेषात्।

**भावबोधिनी**

यजुर्वेद में—इसका क्या फल है ? देवाञ्जिगाय सुम्नयुः। [ ऋग्वेद की कठ शाखा का यह मन्त्र है। अतः आकार आदेश नहीं होता है। ] काठक में—इसका क्या फल है ? सुम्नयुरिदमसीदमासि। [ यह तैत्तिरीय शाखा का मन्त्रभाग होने से आकार आदेश नहीं होता है। ] ॥ ३८ ॥

कवि, अध्वर, पृतना—इन अङ्गों का क्यच् परे रहते लोप होता है—ऋग्वेद के विषय में। उदा० कव्यन्तः सुमनसः। अध्वर—अध्वर्यन्तः। पृतना—पृतन्यन्तस्तिष्ठन्ति। [ इनमें अन्त्य अ तथा आ का लोप होने पर क्यच् प्रत्ययान्त से शतृ प्रत्यय के रूप हैं। ] ॥ ३९ ॥

द्यति ( दो अवखण्डने ), सति ( षोऽन्तकर्मणि ), मा, स्था—इन अङ्गों का इकार आदेश तकारादि कित् प्रत्यय परे रहते होता है। उदा० द्यति ( अवखण्डनार्थ दो का आत्व आदेश करने पर दा से क्त, क्तवतु के उदा० )—निर्दितः, निर्दितवान्। [ निर् दा + क्त, क्तवतु, आ का इकार आदेश ] स्यति—अन्तकर्म अर्थवाली षो = सो का आत्व करने पर—स-से क्त, और क्तवतु प्रत्यय परे रहते 'आ' का इकार आदेश होने पर ] अवसितः, अवसितवान्। [ 'मा माने', 'माङ् माने' तथा 'मेङ् प्रणिदाने' इन तीनों का ग्रहण होने से 'मे' का ए का आत्व करने पर ] मा—मितः, मितवान्। [ मा + क्त, क्तवतु, आ इकार आदेश। ] स्था—स्थितः, स्थितवान्। [ आ का इकार आदेश। सूत्र में गृहीत 'दा' का 'दो दद्घोः' से 'दद्' आदेश और शेष धातुओं के आ का ई आदेश 'घु-मा-स्था०'' इस सूत्र से प्राप्त रहने पर प्रस्तुत सूत्र से 'इ' कार आदेश किया गया है। ]

द्यति—निर्दितः, निर्दितवान्। स्यति—अवसितः, अवसितवान्। मा—मितः, मितवान्। स्था—स्थितः, स्थितवान्।

तीति किम्? अवदाय। कितीति किम्? अवदाता॥

**३५५८. शाच्छोरन्यतरस्याम्॥ ४१॥ (३०७५)**

शा, छा—इत्येतयोरन्यतरस्यामिकारादेशो भवति तकारादौ किति। शा—निशितम्, निशातम्। निशितवान्, निशातवान्। छा—अवच्छितम्, अवच्छातम्। अवच्छितवान्, अवच्छातवान्।

**न्यासः**

तपरकरणं मुखसुखार्थम्, न तु दीर्घनिवृत्त्यर्थम्। 'भाव्यमानोऽण् सवर्णान्न गृह्णाति' इति दीर्घस्याप्राप्तेः॥ ४०॥

**शाच्छोरन्यतरस्याम्**॥ 'शो तनूकरणे', 'छो छेदने'।

**श्यतेरित्त्वं व्रते नित्यमिति**। व्रत इति नोत्तरपदं गृह्यते, किं तर्हि? विषयः। व्रतविषये श्यतेर्नित्यमित्त्वं भवति। **संशितो ब्राह्मण इति**। आचारविशेषे व्रताख्ये यत्नवानेवोच्यते सशितव्रत इति। संशितम् = यत्नेन सम्यक् प्रतिपादितं व्रतं यस्य येन वा स एवमुच्यते। ननु च व्रतविषये विधीयमानेनेत्त्वेनैव व्रतस्य द्योतितत्वाद् व्रतशब्दस्य प्रयोगो न प्राप्नोति? नैष दोषः; अन्यत्र हीत्त्वं भवत्येव, व्रते तु नित्यमाख्यायते, सोऽयं सामान्यशब्दो भवति। अत्र विशेषार्थो व्रतशब्दः प्रयुज्यते। परनिपातस्त्वाहिताग्न्यादित्वात् द्रष्टव्यः। **व्यवस्थितविभाषाविज्ञानात् सिद्धमिति**।

**पदमञ्जरी**

**अवदायेति**। ल्यप्। **अवदातेति**। तृच्। 'द्यतिस्यति' इति श्तिपा निर्देशो धातुविशेषणार्थः॥ ४०॥

**शाच्छोरन्यतरस्याम्**॥ 'शो तनूकरणे', छो छेदने'।

**श्यतेरिति**। व्रत इति विषयो निर्दिश्यते, नोत्तरं पदम्; तेन संशितो ब्राह्मण इत्यत्रापि नित्यमित्त्वं भवति। **संशित इति**। व्रतविषये यत्नवानुच्यते। **संशितव्रत इति**। बहुव्रीहिः। सम्यक्सम्पादितव्रत इत्यर्थः। **व्रतादन्यत्रापीत्त्वं** भवति, व्रते तु नित्यमिति, संशितशब्दस्य सामान्यशब्दत्वादविरुद्धो व्रतशब्दस्य प्रयोगः।

**भावबोधिनी**

तकारादि परे रहने पर—इसका क्या फल है? अवदाय। [ अव दा + क्त्वा = ल्यप् = य में इत्व नहीं होता है क्योंकि तकारादि परे नहीं है। ] कित् रहने पर इसका क्या फल है? अवदाता। [ अव दा + तृच् में कित् परे नहीं है, इकार आदेश नहीं होता है। ]॥ ४०॥

'शा' तथा 'छा' इनका विकल्प से इकार आदेश कित् तकारादि ( प्रत्यय ) परे रहते होता है। उदा० शा—निशितम्, निशातम्। निशितवान्, निशातवान्। [ 'शो तनूकरणे' का आत्व करने के बाद निपूर्वक शा + क्त। क्तवत् में विकल्प से इकार आदेश होने से 'इ' तथा आ के दो रूप होते हैं। ] छो—अवच्छितम्, अवच्छातम्। अवच्छितवान्, अवच्छातवान्। [ 'छो छेदने' धातु के ओ का आत्व करने पर क्त और क्तवतु परे रहते 'आ' का 'इ' आदेश विकल्प से होता है। ]

* व्रत अर्थ में 'शो' का इत्व नित्य कहना चाहिए। * उदा० संशितः ब्राह्मणः। संशितव्रतवाला—यह अर्थ है। [ संपूर्वक 'शा + क्त' में नित्य इकार आदेश होता है। संशितम् = यत्नेन सम्यक् प्रतिपादितं व्रतं यस्य येन वा—इस अर्थ में 'संशितव्रतः' यह होता है। ]

[ प्रस्तुत वार्तिक की आवश्यकता नहीं है क्योंकि ] व्यवस्थित विभाषा मान लेने से सिद्ध है। [ कहीं पर विकल्प होता है, कहीं नित्य होता है और कहीं नहीं होता है—यही व्यवस्थित विभाषा का स्वरूप माना जाता है। ]

❀ श्यतेरित्वं व्रते नित्यमिति वक्तव्यम्। (म० भा०) संशितो ब्राह्मणः। संशितव्रत इत्यर्थः। व्यवस्थितविभाषाविज्ञानात् सिद्धम्।

देवत्रातो गलो ग्राह इतियोगे च सद्विधिः।

**न्यास**

एतदागमवाक्येन द्रढयितुमाह—**देवत्रात इत्यादि**। 'त्रैङ् पालने', क्तः। 'नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम्' इति संज्ञाविषये नत्वं न भवत्येव—देवैस्त्रातो देवत्रातः, देवशब्दोऽत्र संज्ञोपलक्षणार्थः। केवलस्यापि त्रातशब्दस्य संज्ञायां न नत्वं प्रतिपद्यते। एवं संज्ञाया अन्यत्रोभयं भवति—त्राणः, त्राण इति। **गल इति**। गिरतेः पचाद्यच्। 'ग्रो यङि' 'अचि विभाषा' इति प्राण्यङ्गे नित्यं लत्वम्—गल इति। विषे तु न भवत्येव—गर इति। **ग्राह इति**। ग्रहेः 'विभाषा ग्रहः' इति णप्रत्ययः। जलचरे नक्रे नित्यं णप्रत्ययो भवति—ग्राह इति। आदित्यसोमादिषु पचाद्यज् भवत्येव—ग्रह इति। **इतियोगे च सद्विधिर्न भवतीति**। वर्षतीति धावति, हन्तीति पलायत इति—'लक्षणहेत्वोः क्रियायाः' इति सत्संज्ञकौ शतृशानचावितियोगे न भवत एव, व्यवस्थितविभाषया। तत्र 'नन्वोर्विभाषा' इत्यतो विभाषाग्रहणमनुवर्त्तते—अर्जयन् वसति, अधीयानो वसति। तत्रासतीतियोगे नित्यावेव तौ भवतः। ननु चेतिशब्देनैव हेत्वर्थस्य द्योतितत्वाद् वर्षतीति, हन्तीत्येवमादौ सद्विधिर्न भविष्यति, यत्र त्वितिशब्दो न प्रयुज्यते तत्र भवत्येव—अर्जयन् वसतीत्यादौ, तदत्र विभाषाधिकारमन्तरेणापि विभाषा लभ्यत एव; अतो विभाषाग्रहणं नानुवर्त्यमेव, तस्मादनुदाहरणमेतद् व्यवस्थितविभाषायाः? इदं तर्ह्युदाहरणम्—करिष्यामीति व्रजतीति। अत्र 'लृट् शेषे च' इति चकारात् क्रियायामुपपदे क्रियार्थायां लृट्, तस्य लृटः सद्विधिर्न भविष्यतीति; व्यवस्थितविभाषया। अप्रथमासमानाधिकरणेनेतियोगादन्यत्र नित्यं भवति—करिष्यन्तं पश्येति, प्रथमासमानाधिकरणे तु विकल्पः—ब्राह्मणः करिष्यन्, ब्राह्मणः करिष्यतीति।

**पदमञ्जरी**

**व्यवस्थितविभाषाविज्ञानात्सिद्धमिति**। क्वचिन्नित्यं प्रवृत्तिः, क्वचिद्विकल्पेन, क्वचिन्नैव प्रवृत्तिः—इत्येवं विविधमवस्थिता विभाषा व्यवस्थितविभाषा।

व्यवस्थितविभाषाणां दिङ्मात्रं श्लोकेन दर्शयति—**देवत्रात इति**। 'क्तिच्क्तौ च संज्ञायाम्' इति क्तः। 'नुदविदोन्दत्रा' इति नत्वं संज्ञायां न भवति। देवग्रहणस्योपलक्षणत्वाद् भवत्रात इत्यादावपि संज्ञायां नत्वाभावः। क्रियाशब्दे तु त्रातम्, त्राणमित्युभयं भवति। **गल इति**। 'अचि विभाषा' इति लत्वम्, प्राण्यङ्गे नित्यं भवति, गिरत्यन्नमिति गलः, विषे तु नैव भवति, गीर्यते शपथार्थिभिरिति गरः; क्रियाशब्दे तूभयं भवति—गरः, गल इति। **ग्राह इति**। 'विभाषा ग्रहः' इति आदित्यादिषु पचाद्यजेव भवति। ग्रहण इति क्रियाशब्दे तु पूर्ववत्। **इतियोग इति**। हन्तीति पलायते, वर्षतीति धावतीत्यादौ इति प्रयोगे 'लक्षणहेत्वोः क्रियायाः'

**भावबोधिनी**

[ भाष्य में यह वचन है—]

देवत्रात, गल, ग्राह, इति के योग में सत्संज्ञक शतृशानच् प्रत्यय, गवाक्ष, संशितव्रत—ये आपस में वैकल्पिक नहीं होते है। [ ये नित्य आदेश हैं। परन्तु विषयभेद में विकल्प होता है। ]

**विमर्श—**प्रस्तुत सूत्र पर वार्तिककार का खण्डन करने के लिये भाष्यकार ने व्यवस्थितविभाषा पक्ष का आश्रयण किया है। इस विषय में कुछ लक्ष्य भी प्रस्तुत किये हैं—'त्रैङ्पालने' धातु से 'क्तिच्क्तौ च संज्ञायाम्' सूत्र से क्त प्रत्यय करने पर 'नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम्' इस से संज्ञाविषय में 'त' का 'न' नहीं होता है—देवत्रातः यही रूप होता है। किन्तु संज्ञाविषय से भिन्न स्थल में अर्थात् क्रियाविषय में तो—नत्व और नत्वाभाव—त्राणम्, त्रातम् दोनों रूप होते हैं। 'गॄ' धातु से पचादिगणीय मानकर अच् प्रत्यय में 'अचि विभाषा' सूत्र से होने वाला रेफ का लत्व आदेश 'प्राण्यङ्ग' अर्थ में नित्य होता है—गलः। किन्तु इससे भिन्न विष अर्थ में लत्व नहीं होता है—गरः = विष। 'ग्रह' धातु से 'विभाषा ग्रहः' से ण प्रत्यय जलचर जन्तुविशेष अर्थ में होता है—ग्राहः = मगर।

मिथस्ते न विभाष्यन्ते गवाक्षः संशितव्रतः ॥ ( म० भा० ) ।

## ३५५९. दधातेर्हिः ॥ ४२ ॥ (३०७६)

**दधातेरङ्गस्य 'हि' इत्ययमादेशो भवति तकारादौ किति प्रत्यये परतः । हितः । हितवान् । हित्वा ॥**

### न्यासः

**मिथ इत्यादि ।** मिथ इति सहभावेन । देवत्रातगलग्राहादयस्त्राणगरग्रहादिभिः सहैकस्मिन् विषये विकल्पेन नान्वाख्यायन्त इत्यर्थः । **गवाक्ष इति ।** 'सर्वत्र विभाषा गोः' इत्यनुवर्त्तमाने 'अवङ् स्फोटायनस्य' इति वातायने नित्यमवङ् भवति, प्राण्यङ्गे तु गोऽक्षमित्यत्र न भवति; अन्यत्रोभयम्—गवाक्षम्, गोऽक्षमिति । **संशितव्रत इति ।** व्रते नित्यमित्वम् । अन्यत्र विकल्पेन—निशितम्, निशातं शस्त्रम् । तीक्ष्णमित्यर्थः । तदेतत् सर्वं व्यवस्थितविभाषया लभ्यते । क्वचिद्विधिरेव, क्वचित् प्रतिषेध एव, क्वचिदुभयमपीत्येवंविधा विविधार्थे स्थिता विभाषा व्यवस्थितविभाषा । एतच्च विविधमवस्थानमाकृतौ—पदार्थे वेदितव्यम् । तत्र हि सर्वं लक्ष्यराशिमेकीकृत्याभिसंक्षिप्य तदुभयमुपदिश्यते । विधिः प्रतिषेधश्च जातौ पदार्थ उभयमपि भवतीत्येतावतोऽर्थस्य प्रतिपादने शास्त्रस्य व्यापारः । यस्तु क्वचिदर्थे विधिरेव, क्वचित् प्रतिषेध एव, क्वचिदुभयमित्यसङ्करेण व्यवस्थानम्, एतच्चाविच्छिन्नाचार्यपारम्पर्योपदेशाल्लभ्यते ॥ ४१ ॥

**दधातेर्हिः ॥** 'घुमास्था' इति सूत्रणेत्वे प्राप्ते दधातेर्हिरादेशो विधीयते । श्तिपा निर्देशो यङ्लुग्निवृत्त्यर्थः । तेन यङ्लुगन्तस्य हिरादेशो न भवति—दाधीतः, दाधीतवान्, दाधीत्वेति ॥ ४२ ॥

### पदमञ्जरी

इति शतृशानचौ न भवतः । **मिथ इति ।** एकस्मिन्विषये न विकल्प्यन्ते, किन्तु विषयभेदेन । एतच्चाकृतिपक्ष उपपद्यते, तत्र हि सर्वं लक्ष्यजातं युगपदभिसमीक्ष्य द्वयमुपदिश्यते—भावोऽभावश्च, तत्र तयोर्विषयभेदेन प्रवृत्तावपि समुदाये द्वयं प्रवृत्तं भवति । असङ्कीर्णत्वं तु प्रयोगवशात् प्रत्येतव्यम् । **गवाक्ष इति ।** वातायने 'अवङ् स्फोटायनस्य' इति नित्यमवङ् भवति, प्राण्यङ्गे गोऽक्षमित्यत्र न भवति; अन्यत्र विकल्पः—गवाग्रम्, गोऽग्रमिति ॥ ४१ ॥

**दधातेर्हिः ॥** यद्यपि हिनोतेर्हित इत्यादि सिद्धम्, दधातेस्तु धीत इत्यादिनिवृत्तये सूत्रारम्भः । श्तिपा निर्देशो धेटो मा भूदिति । 'ध' इत्युच्यमाने धेटोऽप्यनुकरणं सम्भाव्येत, यथा—'दाधा घ्वदाप्' इत्यत्र । यङ्लुकि त्विटि सति दाधित इति भवति ॥ ४२ ॥

### भावबोधिनी

किन्तु आकाशीय सूर्य आदि अर्थ में अच् ही होता है—ग्रहः । 'इति' के योग में सत्संज्ञक = शतृ-शानच् प्रत्यय नहीं होते हैं—वर्षति इति धावति, हन्ति इति पलायते–यहाँ 'लक्षणहेत्वोः क्रियायाः' सूत्र से शतृ शानच् नहीं होते है क्योंकि 'नन्वोर्विभाषा' सूत्र से विभाषा की अनुवृत्ति होती है ।

देवत्रात-गल-ग्राह आदि त्राण-गर-ग्रह आदि के साथ एक विषय में विकल्प से अन्वाख्यात नहीं है किन्तु विषयभेद से विकल्पित होते ही हैं। वातायन ( झरोखा ) अर्थ में 'अवङ् स्फोटायनस्य' सूत्र से नित्य अवङ् आदेश होकर गो + अक्षः = गवाक्षः बनता है । किन्तु गो प्राणी के अङ्ग अर्थ में—गोऽक्षम् यहाँ अवङ् नहीं ही होता है । अन्य स्थल में दोनों रूप होते हैं—गवाक्षम्, गोऽक्षम् । इसी प्रकार 'व्रत अर्थ में नित्य इत्व होने से 'संशितः' यही रूप होता है । अन्य अर्थ में—'निशितम्, निशातम्' दोनों रूप होते है । यहाँ तीखा = धारदार अर्थ है । इसलिये व्यवस्थित विभाषा मानकर रूप सम्भव हैं । नित्य वचन की आवश्यकता नहीं है ॥ ४१ ॥

दधाति ( धा ) अङ्ग का 'हि' यह आदेश कित् तकारादि प्रत्यय के परे रहते होता है । उदा० हितः । हितवान् । हित्वा । ( धा + क्त, क्तवतु, क्त्वा में क् लोप के बाद 'हि' आदेश होता है । ] ॥ ४२ ॥

**३५६०. जहातेश्च क्त्वि ॥ ४३ ॥ (३३३१)**

जहातेरङ्गस्य 'हि' इत्ययमादेशो भवति क्त्वाप्रत्यये परतः। हित्वा राज्यं वनं गतः। हित्वा गच्छति।

जहातेर्निर्देशाज्जिहीतेर्न भवति—हात्वा ॥

**३५६१. विभाषा छन्दसि ॥ ४४ ॥ ३५९३ ॥**

जहातेरङ्गस्य विभाषा 'हि' इत्ययमादेशो भवति छन्दसि विषये क्त्वाप्रत्यये परतः। हित्वा शरीरं यातव्यम्। ( तै० ब्रा० २।५।६।५ ) हात्वा ॥

**३५६२. सुधितवसुधितनेमधितधिष्वधिषीय च ॥ ४५ ॥ (३५९४)**

सुधित, वसुधित, नेमधित, धिष्व, धिषीय—इत्येतानि छन्दसि विषये निपात्यन्ते। तत्र सुधित, वसुधित, नेमधित—इति सु वसु-नेम-पूर्वस्य दधातेः क्त्वाप्रत्यये इत्वमिडागमो वा प्रत्ययस्य निपात्यते।

**न्यासः**

**जहातेश्च क्त्वि ॥** पूर्ववदीत्त्वे प्राप्ते क्त्वाप्रत्यये हिरादेशो विधीयते। यद्यपि 'हि गतौ' इत्यस्यापि हित्वेति सिध्यति, तथापि जहातेरिकारनिवृत्त्यर्थं वचनम्।

अथ किमर्थं जहातेरिति श्तिपा निर्देशः, न 'हः' एवोच्येत ? इत्याह—**जहातेरित्यादि।** एतेन 'ओहाङ् गतौ' इत्यस्य निवृत्तये निर्देशः क्रियत' इति दर्शयति। यदि हि 'हः' इति निर्देशः स्यात्, तदा तस्य साधारणत्वाज्जिहातेरपि स्यात्। जहातेरिति श्तिपा निर्देशे तु न भवति। अनेन जहातिरेव निर्दिश्यते, न जिहातिः। न हि तस्यैवंविधो निर्देश उपपद्यते; 'भृञामित्' इत्यभ्यासस्येत्त्वविधानात्। एवंविधेऽपि श्तिपा निर्देशे यङ्लुगन्तस्य न भवति—जाहात्वेति। ईत्वमप्यत्र न भवति; तद्विधावपि श्तिपा निर्देशात्। अत्र चेटि कृते 'आतो लोप इटि च' इत्याकारलोपः ॥ ४३ ॥

**विभाषा छन्दसि ॥ ४४ ॥**

**सुधितवसुधितनेमधितधिष्वधिषीय च ॥** चकारेण छन्दसीत्यनुकृष्यते। **इडागमो वेति।** यदेडागमस्तदा 'आतो लोप इटि च' इत्याकारलोपः। **सुधितमिति।** 'कुगतिप्रादयः' इति समासः। **वसुधितमिति।**

**पदमञ्जरी**

**जहातेश्च क्त्वि ॥** इदमपि वचनं जहातेर्हात्वेति मा भूदिति। श्तिपा निर्देशस्य तु प्रयोजनं वृत्तावेव दर्शितम्। यङ्लुकि जाहित्वेति भवति ॥ ४३ ॥

**विभाषा छन्दसि ॥** पूर्वसूत्रारम्भादयमारम्भः, अन्यथा हिनोतिजहात्योः रूपद्वयं सिद्धम्। हात्वेति। छान्दसत्वादीत्त्वाभावः ॥ ४४ ॥

**सुधितवसुधितनेमधितधिष्वधिषीय च ॥ इडागमो वेति।** यदा इडागमः; तदा 'आतो लोप इटि

**भावबोधिनी**

'जहाति' ( = हा ) अङ्ग का भी 'हि' यह आदेश क्त्वा प्रत्यय परे रहते होता है। उदा० हित्वा राज्यं वनं गतः। हित्वा गच्छति। [ 'ओ हाक् त्यागे' धातु से क्त्वा = त्वा प्रत्य परे 'हा' का 'हि' आदेश होता है। ]

'जहाति' ऐसा निर्देश होने से जिहीते = 'ओहाङ् गतौ' धातु का ग्रहण नहीं होता है—हात्वा। [ यही बनता है। ] ॥ ४३ ॥

जहाति ( ओहाक् त्यागे ) अङ्ग का 'हि' यह आदेश वेदविषय में क्त्वा प्रत्यय परे रहते विकल्प से होता है। उदा० हित्वा शरीरं यातव्यम्। हात्वा। [ 'हा' का 'हि' विकल्प से होता है। ] ॥ ४४ ॥

सुधित, वसुधित, नेमधित, धिष्व, धिषीय—ये शब्दरूप वेदविषय में निपातित होते हैं। इनमें से 'सुधित, वसुधित, नेमधित'—इनमें सु, वसु, नेम-पूर्वक 'धा' धातु से क्त्वा प्रत्यय परे इत्व अथवा, प्रत्यय को इट् का आगम निपातित होता है। उदा० गर्भं माता सुधितम्। [ सु + क्त, में इट् का आगम, आलोप होता है। अथवा 'धा'

'गर्भं माता सुधितम्' ( ऋ० वे० १०।२७।१६ ) सुहितमिति प्राप्ते। 'वसुधितमग्नौ जुहोति'। वसुहितमिति प्राप्ते। 'नेमधिता बाधन्ते'। ( ऋ० १०।९३।१३ ) नेमहिता इति प्राप्ते।

धिष्वेति—लोण्मध्यमैकवचने दधातेरित्वमिडागमो वा प्रत्ययस्य द्विर्वचनाभावश्च निपात्यते। 'धिष्व स्तोमम्' ( ऋ० ८।३३।१५ ) धत्स्वेति प्राप्ते।

धिषीयेति—आशीर्लिङ्यात्मनेपदोत्तमैकवचने दधातेरित्वमिडागमो वा प्रत्ययस्य निपात्यते। 'धिषीय।' ( तै० १।६।४।४ )।' धासीयेति प्राप्ते॥

**३५६३. दो दद् घोः॥ ४६॥ ( ३०७७ )**

'दा'—इत्येतस्य घुसंज्ञकस्य 'दद्' इत्ययमादेशो भवति तकारादौ किति प्रत्यये परतः। दत्तः। दत्तवान्। दत्तिः।

द इति किम्? धातः। धातवान्। धेट एतद्रूपम्। घोरिति किम्? 'दाप् लवने' ( धा० पा०

**न्यासः**

विशेषणसमासः। पूर्ववदाकारलोपः। **नेमधितमिति**। 'सामि' इति द्वितीयासमासः। सामीति तत्रार्थग्रहणमित्युक्तम्। नेमशब्दश्चायं सामिशब्दपर्यायः। **धिष्वेति**। 'थासः से', 'सवाभ्यां वामौ' इति वकारः। **द्विर्वचनाभाव इति**। 'श्लौ' इति द्विर्वचनं प्राप्नोति, अतस्तदभावो निपात्यते। **धत्स्वेति**। 'श्नाभ्यस्तयोरातः' इत्याकारलोपः, धकारस्य 'खरि च' इति चर्त्वम्—तकारः, 'दधस्तथोश्च' इत्यभ्यासस्य भष्भावेन धकारः। **धिषीयेति**। आशिषि लिङ्, 'इटोऽत्' इत्यत्वम्॥ ४५॥

**दो दद् घोः**॥ छन्दसीति निवृत्तम्; पूर्वसूत्रे चकारेणानुकृष्टत्वात्। **दत्तः, दत्तवानिति**। क्तक्तवतू। **दत्तिरिति**। क्तिन्। **धीतः, धीतवानिति**। पूर्ववदीत्वम्।

अथ 'दधातेर्हिः' इति हिरादेशः कस्मान्न भवति? इत्यत आह—**धेट एतद्रूपमित्यादि**। 'धेट् पाने'

**पदमञ्जरी**

च' इत्याकारलोपः। **वसुधितमिति**। कर्मधारयः। क्तिन्यपि दृश्यते—उत त्वेतं वसुधितिं निरेके। **नेमधितमिति**। अयमपि कर्मधारयः।

**धत्स्वेति**। 'श्नाभ्यस्तयोरातः' इत्याकारलोपः, 'दधस्तथोश्च' इति भष्भावः॥ ४५॥

**दो दद् घोः॥ धीत इति**। घुमास्थादिसूत्रेणेत्वम्। **धेट एतद्रूपमिति**। दधातेस्तु 'दधातेर्हिः' इति हिरादेशो भवति। **दातमिति**। 'दाप् लवने'। लूनमित्यर्थः। **अवदातमिति**। 'दैप् शोधने'। **अयमादेशस्थान्त**

**भावबोधिनी**

के आ का इत्व आदेश होता है।] सुहितम्—यह रूप प्राप्त रहते। [ यह सुधितम् होता है। ] वसुधितम् अग्नौ जुहोति। वसुहितम्—यह रूप प्राप्त रहते। [ वसु पूर्वक धा + क्त में इत्व आदेश अथवा इट् आलोप होता है। ] 'नेमधिता बाधन्ते।' यहाँ 'नेमहिता' इस रूप के प्राप्त रहते। [ नेमधा + क्त में इत्व अथवा इट् आगम, आलोप होता है। ]

धिष्व—लोट् लकार मध्यम पुरुष एकवचन में 'धा' का इत्व आदेश अथवा प्रत्यय को इट् का आगम और द्वित्व का अभाव निपातित होते हैं। उदा० धिष्व सोमम्। 'धत्स्व' इस रूप के प्राप्त रहते [ धा + लोट् + थास् = से, 'सवाभ्यां वामौ' से ए का व आदेश धा + स्व, आ का इत्व, द्वित्व का अभाव अथवा इट् आगम आलोप, द्वित्व का अभाव, स् का ष्—धिष्व। ]

धिषीय—आशीर्लिङ् आत्मनेपद में उत्तमपुरुष एकवचन में 'धा' का इत्व अथवा प्रत्यय को इट् का आगम—धिषीय। धासीय-इस रूप के प्राप्त रहते [ उक्त रूप होता है—धा + लिङ् = इट्, सीयुट्—धा + सीय् + इ, 'इटोऽत्' से इट् का अत् धा के आ का इ, अथवा प्रत्यय 'सीय' का इट् आगम, आलोप, षत्व होता है।]॥४५॥

'दा' इस घुसंज्ञक का 'दद्' यह आदेश तकारादि कित् प्रत्यय परे रहते होता है। उदा० दत्तः। दत्तवान्। दत्तिः। [ दा + क्त, क्तवतु, क्तिन्, 'दा' का 'दद्' यह आदेश—दद् + त, चर्त्व-दत्तः आदि बनते हैं। ]

१०६० ) । दातं बर्हिः । 'दैप् शोधने' ( धा० पा० ९२५ ) । अवदातं मुखम् ।

अयमादेशस्थान्त इष्यते । एवं ह्युक्तम्—

तान्ते दोषो दीर्घत्वं स्याद्दान्ते दोषो निष्ठानत्वम् ।

धान्ते दोषो धत्वप्राप्तिस्थान्तेऽदोषस्तस्मात्थान्तम् ॥ ( म० भा० )

यदि तु 'दस्ति' इति तकारादौ दीर्घत्वम्, तदा तान्तेऽप्यदोषः । दान्तधान्तयोरपि 'सन्निपातलक्षणो विधिरनिमित्तं तद्विघातस्य' ( व्या० प० १२ ) इति नत्वधत्वे न भविष्यत इति न दोषः ॥

**न्यासः**

इत्यस्य रूपम्, न दधातेः । तेन हिरादेशो न भवतीति भावः । **दातमिति** । 'दाप् लवने' इत्येतस्यैतद्रूपम्, तस्य घुसंज्ञा नास्ति; अदाबिति प्रतिषेधात् ।

'दो दद् घोः' इति जश्त्वेनायं निर्द्देशः, तत्र न ज्ञायते—किं तकारान्तोऽयमादेशः ? आहोस्विद् दकारान्तः ? उत धकारान्तः ? अथ थकारान्त इति वा ?—इति कस्यचिद् भ्रान्तिः स्यात्, अतस्तां निराकर्तुमाह—**अयमादेश इत्यादि** । कथं ज्ञायते ? इत्याह—**एवं ह्युक्तमित्यादि** । यद्ययमादेशस्तकारान्तः स्यात्, सुदत्तेत्यत्र 'इकः काशे' इत्यनुवर्तमाने 'दस्ति' इति दीर्घत्वं स्यात् । अथ दकारान्तः, तदा 'रदाभ्याम्' इत्यादिना निष्ठानत्वं स्यात् । अथ धकारान्तः, तदा 'झषस्तथोर्धोऽधः' इति झषन्ताद्धत्वमापद्येत निष्ठातकारस्य । **थान्तेऽदोष इति** । नञोऽत्र प्रश्लेषः । थान्ते दोषो नास्तीत्यर्थः । **तस्मादित्यादि** । यस्मात् त्रिषु पूर्वकेषु पक्षेषु दोषः, तस्मात्थान्तोऽयमादेशः । उदाहरणे दत्तः, दत्तवानिति 'खरि च' इति चर्त्वम्—थस्य तः ।

**यदि त्वित्यादि** । द्वौ पक्षौ भाष्ये 'दस्ति' इत्यत्र दर्शितौ—'दा' इत्येतस्मिंस्तकारादौ, तकारान्ते वेति । तत्र यदि तकारान्ते 'दा' इत्येतस्मिन् दीर्घत्वं भवतीति—एष पक्ष आश्रीयते, तदैव दीर्घत्वप्राप्तिदोषः । यदि तु

**पदमञ्जरी**

**इष्यत इति** । कुतः ? इत्याह—**एवं ह्युक्तमिति** । यद्यपि दकारः श्रूयते, तथापि संहितायां तकारादीनामपि जश्त्वे कृते एतस्य रूपस्य सम्भवाच्चतुर्णां पक्षाणां सम्भवः । यद्ययमादेशस्तकारान्तः स्यात्, सुदत्तमित्यत्र 'दस्ति' इति दीर्घत्वं स्यात्; 'दा' इत्येतस्य यस्तस्तस्मिन्निति हि तत्रार्थः । अथ दकारान्तः, 'रदाभ्याम्' इति नत्वं प्रसज्येत । अथ धकारान्तः, 'झषस्तथोर्धोऽधः' इति धत्वमापद्येत । **थान्तेऽदोष इति** । नञोऽत्र प्रश्लेषः, 'तस्मात्थान्तः' इति निगमनात् ।

**यदि त्विति** । 'दस्ति' इत्यत्र द्वौ पक्षौ—'दा' इत्येतस्य यस्तकारान्त आदेशः, तकारादिर्वेति । तत्र द्वितीयपक्षे नायं दोषः । **दान्तधान्तयोरपीति** । तकारादिप्रत्ययसन्निपातेन भवन् दद्भावो न तद्विघातस्य निमित्तं भवति ।

**भावबोधिनी**

'दा' का—इसका क्या फल है ? धात्तः । धात्तवान् । यह धेट् का रूप है । घुसंज्ञक का—इसका क्या फल है ? 'दाप् लवने' इससे 'दातं बर्हिः' । 'दैप् शोधने' का 'अवदातं मुखम्' । [ इनमें 'दद्' आदेश नहीं होता है क्योंकि 'दाधा घ्वदाप्' सूत्र द्वारा दाप्‌भिन्न 'दा' की ही घुसंज्ञा होती है । ]

* यह आदेश थान्त ( = दथ् ) इष्ट है । * क्योंकि [ महाभाष्य में ] ऐसा कहा गया है—[ दा के ] तान्त ( दत् ) आदेश में दीर्घ होना दोष है, दान्त ( = दद् ) आदेश में निष्ठा त का नत्व दोष है, धान्त ( = दध् ) में धत्व की प्राप्ति [ दोष है ], थान्त ( = दथ् ) में दोष नहीं है अतः थान्त ही मानना चाहिए । [ भाव यह है कि 'दद्घोः' में सन्धि कार्य होने से यह स्पष्ट नहीं है कि 'दद्' का मूल रूप क्या है ? ( १ ) यदि यह आदेश तान्त अर्थात् दत् यह माना जायगा तो 'सुदत्तम्' आदि में 'दस्ति' इस सूत्र द्वारा दीर्घत्व की प्रसक्ति है क्योंकि 'दा' का जो त् उसके परे रहते दीर्घ होता है । ( २ ) यदि दद् यह दकारान्त माना जायगा तो 'दत्तम्' आदि में 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' सूत्र से निष्ठा के त का नत्व प्रसक्त है । ( ३ ) यदि धकारान्त = दध् माना जाय तो दध् + त आदि में 'झषस्तथोर्धोऽधः' सूत्र से 'त' का धत्व प्रसक्त होता है । इन दोषों के कारण ( ४ ) थकारान्त 'दथ्' यह आदेश माना जाता है—दथ् + त, चर्त्व से थ् का त् होता है—दत्तः । ]

अवदत्तं विदत्तं च प्रदत्तं चादिकर्मणि ।
सुदत्तमनुदत्तं च निदत्तमिति चेष्यते ॥ ( म० भा० )

'अच उपसर्गात्तः' ( ७।४।४७ ) इति प्राप्ते निपात्यन्ते । अनुपसर्गा वा एते अवादयः क्रियान्तरविषया वेदितव्याः ॥

**न्यासः**

तकारादौ 'दा' इत्येतस्मिन् दीर्घत्वं भवतीति--एष पक्ष आश्रीयते, तदा तान्तेऽप्यदोषः । यत्र तकारादित्वम्, 'दा' इत्येतस्य, तत्र दीर्घत्वं भवति--नीत्तम्, वीत्तमित्यादौ, न तु सुदत्तादौ । तस्मात् पाक्षिको दीर्घप्राप्तिदोषः । **दान्तधान्तयोरपीत्यादि** । तकारादिसन्नियोगेन हि दान्तधान्तावादेशाविमौ विहितौ नोत्सहेते तद्विघातनिमित्ततामुपगन्तुम् । तस्माद् दान्तधान्तयोरप्यदोषः ।

**अवदत्तमित्यादि । आदिकर्मणि** = क्रियाप्रारम्भे । आदिभूतक्रियाक्षण इत्यर्थः । अत्र 'अच उपसर्गात्तः' इति तकारादेशे प्राप्त एतेऽवदत्तादयो निपात्यन्ते । 'आदिकर्मणि' इति च सर्वेषां विशेषणम्, न तु प्रदत्तमित्यस्यैव । आदिकर्मणोऽन्यत्र 'अच उपसर्गात्तः' इति तकारादेशो भवति, न तु दद्भावः—अवत्तम्, वीत्तम्, सूत्तम्, अनूत्तमिति ।

**अनुपसर्गा इत्यादि** । अथ वा—अवादयो ददाति प्रत्युपसर्गसंज्ञका एव न भवन्ति; तद्वाच्यायाः क्रियाया अन्या या क्रिया गमिर्वाच्या तद्विषयत्वात्—अवगतं दत्तमवदत्तमिति । एवमन्यत्रावगन्तव्यम् । तस्माद् गमिं प्रत्युपसर्गसंज्ञका एते, न ददातिं प्रति । तथा ह्युक्तम्—यं प्रति क्रियायुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञका भवन्तीति । तस्मादुपसर्गसंज्ञाया अभावान्नैवात्र तकारः प्रसजेदिति किं निपातनेन ॥ ४६ ॥

**पदमञ्जरी**

**अवदत्तमित्यादि । आदिकर्मणीति** इत्येतत्प्रदत्तमित्येतस्य विशेषणम्, नेतरेषाम्; असम्भवात् । **इति चेष्यत इति** । चकाराद्यथाप्राप्तं च, तेन अवत्तम्, वित्तम्, प्रत्तमित्याद्यपि भवति ।

**अनुपसर्गा वा एत इति** । कथमनुपसर्गत्वम् ? इत्यत आह—**क्रियान्तरविषया इति** । अवगतं दत्तमिति गमिनाऽवादीनां योगः, ततश्च 'यत्क्रियायुक्ताः प्रादयस्तं प्रति गत्युपसर्गसंज्ञा भवन्ति' इति ददातिं प्रत्यनुपसर्गत्वम् ॥ ४६ ॥

**भावबोधिनी**

यदि 'दस्ति' सूत्र का यह अर्थ मानें—तकारादि परे दीर्घ होता है—तब तो तान्त आदेश में भी दोष नहीं है । [ जहाँ तकारादित्व होगा वहीं दीर्घ होगा जैसा कि नीत्तम्, वीतम् आदि में है । क्योंकि 'अच उपसर्गात्तः' सूत्र से जहाँ आदेश होता है वहीं दीर्घ होता है । ] दान्त तथा धान्त आदेश में भी * 'सन्निपातलक्षण विधि उसके विघात का कारण नहीं बनती है ।* इस परिभाषा के कारण नत्व और षत्व नहीं होते हैं; इसलिए दोष नहीं है । [ तकारादि प्रत्यय के सन्नियोग से होने वाला जो 'दद्' यह आदेश वह उस तकारादित्व के विघात में निमित्त नहीं बन सकता । अतः निष्ठानत्व अथवा षत्व दोनों नहीं होते हैं । ]

अवदत्तम्, विदत्तम्, प्रदत्तम्, सुदत्तम्, अनुदत्तम् और निदत्तम्—ये रूप आदिकर्म में [ क्त प्रत्यय में ] इष्ट हैं । [ न्यासकार ने 'आदिकर्म में' इसका सम्बन्ध सभी से माना है । किन्तु पदमञ्जरीकार केवल 'प्रदत्तम्' के साथ ही सम्बन्ध मानते हैं अन्यों के साथ असम्भव मानते हैं । 'च' के उल्लेख के कारण यथाप्राप्त रूप भी होते हैं अर्थात् 'दा' का दद् यह न होकर 'अच उपसर्गात्तः' इस सूत्र से दा के आ का त् आदेश होता है—अवत्तम्, वीत्तम् प्रत्तम्, सूत्तम्, अनुत्तम् रूप भी होते हैं यही लिख रहे हैं— ]

''अच उपसर्गात्तः'' इस सूत्र [ से त् आदेश ] के प्राप्त रहते 'अवदत्तम्' आदि निपातित होते हैं । अथवा अव आदि 'दा' धातु के प्रति उपसर्ग ही नहीं है अपितु गम् आदि से बोध्य अन्य क्रियाविषयक ही समझने चाहिए । [ अतः 'अवगतं दत्तम्' आदि मान लेने पर 'अव' आदि उपसर्ग नहीं होते हैं जिसके फलस्वरूप 'अच उपसर्गात्तः' सूत्र की प्राप्ति ही न होने से निपातन की आवश्यकता नहीं है । ] ॥ ४६ ॥

**३५६४. अच उपसर्गात्तः ॥ ४७ ॥ (३०७८)**

अजन्तादुपसर्गादुत्तरस्य 'दा'—इत्येतस्य घुसंज्ञकस्य 'त' इत्ययमादेशो भवति तकारादौ किति। प्रत्तम्, अवत्तम्, नीत्तम्, परीत्तम्।

अच इति किम्? निर्दत्तम्। दुर्दत्तम्।

उपसर्गादिति किम्? दधि दत्तम्। मधु दत्तम्।

'घोः' इत्येव—अवदातं मुखम्।

उपसर्गादिति पञ्चमीनिर्द्देशादादेरलः प्राप्नोति? तत्र समाधिमाहुः—'अचः' इत्येतद् द्विरावर्तयितव्यम्, तत्रैकं पञ्चम्यन्तम् उपसर्गविशेषणार्थम्, अपरमपि षष्ठ्यन्तं स्थानिनिर्देशार्थमित्याकारस्य स्थाने तकारो भवति। द्वितकारो वा संयोगोऽयमादिश्यते, सोऽनेकाल्त्वात् सर्वस्य भविष्यति। 'अपो भि' (प० सू० ७।४।४८) इत्यत्र पञ्चम्यन्तम् 'अचः' इत्यनुवर्त्तते, तेन पकारमात्रस्य भविष्यति।

**न्यासः**

**अच उपसर्गात्तः॥** ददादेशस्यायमपवादः। **त इत्ययमादेशो भवतीति**। अकार उच्चारणार्थः। प्रत्तमित्यादावाकारस्य तकारे कृते दकारस्य चर्त्वम्—तकारः। **नीत्तमिति**। 'दस्ति' इति दीर्घत्वम्। **अवदातमिति**। 'दैप् शोधने' इत्येतस्यैतद्रूपम्।

**आदेरलः प्राप्नोतीति**। 'आदेः परस्य' इति वचनात्। **अच इत्येतद् द्विरावर्त्तयितव्यमिति**। 'अचः' इत्येतस्य द्विरावृत्तावचोऽच इति द्वे शब्दरूपे भवतः। तत्रैकं पञ्चम्यन्तम्, अपरं षष्ठ्यन्तम्। तत्रैकेनोपसर्गो विशिष्यते—अजन्तादुपसर्गादिति। इतरेणापि स्थानी निर्दिश्यत इत्येवमाकारस्यायमादेशो भवति। **द्वितकारो वेति**। अथ वा—'अच उपसर्गात्तः' इति द्वितकार एव संयोगादेशो निर्दिश्यते, तेनास्यानेकाल्त्वात् सर्वस्यैव भवति, यदि तर्हि द्वितकारोऽयं निर्देशस्तदा 'अपो भि' इत्यनेनापि सर्वादेशः प्राप्नोति, अनेकाल्त्वादित्याह—**अपो भीत्यादि**। 'अपो भि' इत्यत्र पञ्चम्यन्तमच इत्यनुवर्त्तते, तेन सत्यप्यनेकाल्त्वे 'तस्मादित्युत्तरस्य' इति पकारमात्रस्य भविष्यति, न सर्वस्येति।

**पदमञ्जरी**

**अच उपसर्गात्तः ॥ त इत्ययमिति**। तकारेऽकार उच्चारणार्थः। **प्रत्तमिति**। तत्राकारस्य तकारे दकारस्य चर्त्वम्। **नीत्तमिति**। 'दस्ति' इति दीर्घत्वम्।

**आदेरलः प्राप्नोतीति**। 'आदेः परस्य' इति वचनात्। **अच इत्येतदावर्त्तत इति**। यद्वा—अस्येति वर्त्तते, क्व प्रकृतम्? 'अस्य च्वौ' इति, 'दो दद् घोः' इत्ययमपि दद्भावोऽवर्णस्य प्राप्नोति, ततश्च दत्तमिति संयोगादि श्रूयते, एवं तर्ह्येवं वक्ष्यामि—'दोऽद्घोः' इति, दो य आकारस्तस्याद्भवतीति। **द्वितकारको वेति**। 'अलोऽन्त्यस्य' इत्येतस्य द्वावपवादौ—'आदेः परस्य', 'अनेकाल्शित्सर्वस्य' इति, तयोर्विप्रतिषेधे परः प्रवर्त्तते।

**भावबोधिनी**

अजन्त उपसर्ग से उत्तरवर्ती 'दा' इस घुसंज्ञक का 'त' यह आदेश कित् तकारादि प्रत्यय परे होता है। उदा० प्रत्तम्, अवत्तम्, नीत्तम्, परीत्तम्। [ प्र दा + क्त, दद् का अपवाद 'त्' आदेश होता है—प्रद्त् + त्, चर्त्व से द् का त्, एकत् का लोप होता है। नि—दा + त, परि दा + त में 'दस्ति' सूत्र से दीर्घ हो जाता है। ]

अजन्त से परे—इसका क्या फल है? निर्दत्तम्। दुर्दत्तम्। [ यहाँ निर् दुर् से परे है। ]

उपसर्ग से परे—इसका क्या फल है? दधि दत्तम्। मधु दत्तम्। [ यहाँ उपसर्ग नहीं है। ]

'घु' संज्ञक दा का ही—अवदातं मुखम्। [ दैप् शोधने' की घुसंज्ञा नहीं होती है। अतः आदेश भी नहीं। ]

'उपसर्गात्' यह पञ्चम्यन्त निर्देश होने से [ 'आदेः परस्य' सूत्र के अनुसार ] आदि अल् अर्थात् 'दा' में द् का त् आदेश प्राप्त होता है? इसमें समाधान देते हैं—सूत्र में 'अचः' को दो बार आवृत्ति करनी चाहिये, इनमें एक 'अचः' पञ्चम्यन्त को उपसर्ग के विशेषण के लिए मानना चाहिये—'अजन्त उपसर्ग से परे।' और दूसरे 'अचः' षष्ठ्यन्त को स्थानी के निर्देश के लिए समझना चाहिये। [ अजन्त उपसर्ग से परे 'दा' के अच् का 'त' होता है' ऐसा

❀ द्यतेरित्वादचस्त इत्येतद्भवति विप्रतिषेधेन ❀ ( म० भा० )। अवत्तम्। 'प्रत्तं जुहोति' ( मै० १।६।९ ) ॥

**३५६५. अपो भि ॥ ४८ ॥ (४४२)**

'अप्'—इत्येतस्याङ्गस्य भकारादौ प्रत्यये परतः 'त' इत्ययमादेशो भवति। अद्भिः। अद्भ्यः। भीति किम्? अप्सु।

❀ स्ववःस्वतवसोर्मास उषसश्च तकारादेश इष्यते छन्दसि भकारादौ ❀ ( म० भा० ) स्ववद्भिः। 'स्वतवद्भिः'। 'माद्भिष्ट इन्द्रो वृत्रहा'। 'समुषद्भिरजायथाः' ( ऋ० १।६।३ ) ॥

**न्यासः**

**द्यतेरित्यादि** ॥ द्यतेरित्यस्यावकाशः—यत्राजन्त उपसर्गो न भवति—निर्दितम्, दुर्दितमिति; अस्यादेशस्यावकाशः—अजन्तादुपसर्गात् परो योऽन्यो घुसंज्ञकः—'डुदाञ् दाने' अवत्तम्, परीत्तमिति; अजन्तादुपसर्गादुत्तरस्य द्यतेरुभयप्रसङ्गे सति तकार एव भवति विप्रतिषेधेन—अवत्तम्, प्रत्तमिति ॥ ४७ ॥

**अपो भि। अद्भिरिति।** 'झलां जशोऽन्ते' इति जश्त्वम्—तकारस्य दकारः। द्वितकारपक्षे तु पूर्वस्यापि 'झलां जश् झशि' इति जश्त्वम्—दकारः। 'झरो झरि सवर्णे' इति पूर्वदकारलोपः।

**सुव इत्यादि।** सुवस्, स्वतवस्, मास्, उषस्—इत्येतेषाञ्च भकारादौ परतस्त इत्ययमादेश इष्यते च्छन्दसि विषये। स च 'व्यत्ययो बहुलम्' इत्यनेनैव लभ्यत इति वेदितव्यम् ॥ ४८ ॥

**पदमञ्जरी**

'अपो भि' इत्यत्रापि तर्हि सर्वादेशप्रसङ्गः? अत आह—**अपो भीत्यत्रेति।** अत्र द्वयोस्तकारयोरन्त्यस्य संयोगान्तलोपः, पूर्वस्य जश्त्वम्। अत्र केचिदाहुः—अवश्यमत्राच इत्यनुवर्त्यम्, अन्यथा लूञ् 'ऋदोरप्', लवाभ्यामित्यत्रापि स्यादिति, तन्न; लुप्ते पकारे नाप्शब्द इति नात्र भविष्यति ॥

भूतपूर्वगतिर्युक्ता न साम्प्रतिकसम्भवः।
न प्रत्ययाप्रत्यययोरित्यस्याप्यत्र सम्भवः॥
द्वयोरतुल्यकक्षत्वात्प्रत्ययेऽपो न हि श्रुतः ॥ ४७ ॥

**अपो भि ॥ स्ववद्भिरिति।** अवतेरसुन्, शोभनमवो येषां ते स्ववसः। 'तु' इति सौत्रो धातुः, स्वन्तवो येषां ते स्वतवसः। **माद्भिरिति।** 'पद्दन्नोमास्' इति मासशब्दस्य मासादेशः। **उषद्भिरिति।** 'मिथुनेऽसिः', 'वसेः किच्च' इत्यसिप्रत्ययः ॥ ४८ ॥

**भावबोधिनी**

सूत्रार्थ करना चाहिये ]—इस प्रकार आकार के स्थान में 'तकार' आदेश होता है। तथवा दो तकारों वाले संयोग को आदेश किया जा रहा है और यह अनेकाल् होने से सम्पूर्ण 'दा' के स्थान पर 'त्त' हो जायगा। [ इसमें लाघव भी है। ] 'अपो भिः' इस अग्रिम सूत्र में पञ्चम्यन्त 'अचः' इसकी अनुवृत्ति होती है। जिससे 'तस्मादित्युत्तरस्य' परिभाषा के अनुसार अच् से अव्यवहित ] प् का ही तकार होता है। [ अतः कोई दोष नहीं है। ]

* दो = द्यति के इत्व आदेश की अपेक्षा विप्रतिषेध से अच् का तकार आदेश होता है। * अवत्तम्। प्रत्तं जुहोति। [ दो = दा + त्त, तकार आदेश, चर्त्व। ] ॥ ४७ ॥

'अप्' इस अङ्ग का भकारादि प्रत्यय परे रहते 'त' यह आदेश होता है। [ तकार का अकार उच्चारणार्थ है। ] उदा० अद्भिः। अद्भ्यः। [ अप् + भिस्, अप् + भ्यस्, प् का त् आदेश, जश्त्व, स् का रुत्व विसर्ग होता है। ]

भकारादि परे—इसका क्या फल है? अप्सु। [ अप् + सुप् यहाँ त् नहीं होता है। ]

* स्ववस्, स्वतवस्, मास् और उषस्—इनका भकारादि प्रत्यय परे रहते वेदविषय में तकार आदेश होना इष्ट है। * उदा० स्ववद्भिः। [ स्ववस् + भिस्, स् का त्, जश्त्व ] स्वतवद्भिः। [ स्वतवस् + भिस् स् का त्, जश्त्व ] माद्भिष्ट इन्द्रो वृत्रहा। [ मास् + भिस्, स् का त्, जश्त्व। ] समुषद्भिरजायथाः। [ सम् उषस् + भिस्, त् का जश्त्व होता है। सु = शोभनम् अवः येषां ते—इस विग्रह में—स्ववस्। स्वं तवः येषां ते—इस अर्थ में

## ३५६६. सः स्यार्धधातुके ॥ ४९ ॥ (२३४२)

सकारान्तस्याङ्गस्य सकारादावार्धधातुके परतस्तकारादेशो भवति। वत्स्यति, अवत्स्यत्। विवत्सति। जिघत्सति।

स इति किम्? वक्ष्यति। सीति किम्? घासः। वासः। आर्धधातुक इति किम्? आस्से। वस्से॥

## ३५६७. तासस्त्योर्लोपः ॥ ५० ॥ (२१९१)

तासेरस्तेश्च सकारस्य सकारादौ प्रत्यये परतः लोपो भवति। तासेः—कर्तासि। कर्तासे। अस्तेः—त्वमसि। व्यतिसे।

### न्यासः

सः स्यार्धधातुके॥ अत्रापि द्वितकारपक्षेऽनेकाल्त्वात् सर्वादेशः प्राप्नोति, तस्माद् 'अचः' इति पञ्चम्यन्तमनुवर्त्तनीयमिति। अथ वा—'निर्दिश्यमानस्यादेशा भवन्ति' इति सकारस्यैव भविष्यति। वत्स्यतीति। 'वस निवासे'। जिघत्सतीति। अदेः सन्, 'लुङ्सनोर्घस्लृ' इति तस्य घस्लादेशः। वक्ष्यतीति। 'वच परिभाषणे', 'चोः कुः' इति कुत्वम्। घासः, वास इति। भावे घञ्, 'घञपोश्च' इत्यदेर्घस्लादेशः। आस्से, वस्स इति। 'आस उपवेशने', 'वस आच्छादने', अनुदात्तेत्वादात्मनेपदम्, 'थासः से', अदादित्वाच्छपो लुक्।

अथ 'सः स्यतिङ्' इति कस्मान्नोक्तम्? नैवं शक्यम्; इहापि न स्यात्—व्यतिवत्सीष्ठा इति॥ ४९॥

तासस्त्योर्लोपः॥ 'अनद्यतने लुट्', तासिः, सिप्। कर्त्तासि इति। 'थासः से'। त्वमसीति। 'अस भुवि', पूर्ववच्छपो लुक्। व्यतिस इति। 'कर्त्तरि कर्मव्यतीहारे' इत्यात्मनेपदं भवति। 'थासः से', 'श्नसोरल्लोपः' इत्यकारलोपः।

### पदमञ्जरी

सः स्यार्धधातुके॥ वत्स्यतीत्यादि। 'वस निवासे', लट्। जिघत्सतीति। 'लुङ्सनोर्घस्लृ'। आस्से, वस्से इति। 'आस् उपवेशने', 'वश आच्छादने'—अदादी अनुदात्तेतौ। 'अतङि' इत्युच्यमाने व्यतिवत्सीष्टेत्यत्रापि न स्यात्॥ ४९॥

तासस्त्योर्लोपः॥ व्यतिसे इति। 'कर्त्तरि कर्मव्यतिहारे' इत्यात्मनेपदम्, शपो लुक्, 'श्नसोरल्लोपः'

### भावबोधिनी

स्ववस्। मास का मास् आदेश "पद्दन्नोमास्" इस सूत्र से होता है। वस् धातु से असि प्रत्यय होता है और कित् होता है। अतः सम्प्रसारण, षत्व उषस् बनता है।] ॥ ४८॥

सकारान्त अङ्ग को सकारादि आर्धधातुक परे रहते तकार आदेश होता है। उदा० वत्स्यति, अवत्स्यत्। [वस् + लट् तथा लङ् के रूप हैं। स्य करने पर वस् + स्य + ति, अवस् + स्य + त् में धातु के स् का त् आदेश होता है।] विवत्सति [वस् + सन्, द्वित्व अभ्यासकार्य, अ का इत्व—विवत्स + लट्] जिघत्सति। [अद् + सन् 'लुङ्सनोर्घस्लृ' सूत्र से घस्लृ आदेश—घस् + स, द्वित्व, अभ्यासकार्य के बाद जिघस् + स, स् का त् जिघत्स + लट्।]

'स् का'—इसका क्या फल है? वक्ष्यति। [वच् + स्य + ति यहाँ च् का त् नहीं होता है।] सकारादि प्रत्यय परे रहते—इसका क्या फल है? घासः, वासः। [भाव अर्थ में 'अद्' तथा 'वस्' से घञ् = अ प्रत्यय अद् का 'घस्लृ' आदेश 'घञपोश्च' सूत्र से होने पर घस् + अ, वस् + अ, उपधा वृद्धि, सकारादि प्रत्यय न होने से 'त्' नहीं होता है।] आर्धधातुक परे रहते—इसका क्या फल है? आस्से, वस्से। [आस् + लट् = थास्, से, आच्छादनार्थक वस् + लट् = थास् = से, यहाँ सार्वधातुक प्रत्यय में 'त्' नहीं होता है] ॥ ४९॥

तास् तथा अस्ति = अस् के सकार का लोप सकारादि प्रत्यय परे हो जाता है। उदा० कर्तासि। कर्तासे। [कृ + लुट् = तिप् तास् कृ + तास् + सि गुण, रपर कर् + तास् + सि, तास् के स् का लोप। कृ + तास् + थास् = से में भी लोप होता है।] अस् के स् लोप के उदा० त्वमसि। व्यतिसे। [अस् + सिप्। व्यति अस् + थास् = से,

अस्तेरकारसकारयोर्लुप्तयोः 'से' इति प्रत्ययमात्रमेतत्पदम्, तेन 'सात्पदाद्योः' (पा० सू० ८।३।१११) इति षत्वं न भवति ॥

**३५६८. रि च ॥ ५१ ॥ (२१९२)**

रेफादौ च प्रत्यये परतः तासस्त्योः सकारस्य लोपो भवति। कर्तारौ, कर्तारः। अध्येतारौ, अध्यतारः। अस्तेर्लिटि—व्यतिरे ॥

**३५६९. ह एति ॥ ५२ ॥ (२२५०)**

तासस्त्योः सकारस्य हकारादेशो भवति एति परतः। कर्ताहे। अस्तेः—व्यतिहे ॥

**न्यासः**

अथ 'आदेशप्रत्यययोः' इति षत्वं कस्मान्न भवति ? इत्यत आव—**अस्तेरकारसकारयोरित्यादि**। अकारसकारयोर्हि लुप्तयोः प्रत्ययमात्रमवशिष्यते, तदेव पदम्, अतः 'सात्पदाद्योः' इति प्रतिषेधात् षत्वं न भविष्यतीति भावः ॥ ५० ॥

**रि च ॥ कर्त्तारौ, कर्त्तार इति**। लुट्, तस्, झिः, 'लुटः प्रथमस्य डारौरसः' इति तसो झेश्च यथाक्रमं रौरसौ भवतः। **अध्येतारौ, अध्येतार इति**। इङो ङित्त्वादात्मनेपदम्, आताम्, झः, तयोश्च पूर्ववद्रौरसौ। अस्ते रेफादिप्रत्ययो न सम्भवतीति नास्त्युदाहरणम्। केचित्तु—'व्यतिरे' इत्युदाहरणं दर्शयन्ति; एतच्च च्छन्दस्येवं प्रयोगो यद्यस्ति ततो युक्तम्, अथ तु नास्त्येवं सत्ययुक्तम्। 'इरयो रे' इति रेभावश्छन्दसि विधीयते, 'यथादृष्टानुविधिश्छन्दसि' इति। चकारः पूर्वापेक्षया समुच्चयार्थः ॥ ५१ ॥

**ह एति ॥ कर्त्ताहे इति**। कृञो लुट्, आत्मनेपदम्, उत्तमपुरुषैकवचनम्, इट्, टेरेत्वम्। अत्र

**पदमञ्जरी**

इरयकारलोपः। **प्रत्ययमात्रमेतत्पदमिति**। तेन 'सात्पदाद्योः' इति षत्वप्रतिषेध इति भावः ॥ ५० ॥

**रि च** ॥ अस्तेरुदाहरणं न प्रदर्शितम्, रेफादेरसम्भवात् ॥ ५१ ॥

**ह एति** ॥ एशि हकारो न भवति—एधामासे इति, किं कारणम् ? तासेर्यं एकारः सम्भवति तत्रैवास्तेरपि। कथ्च तासेः सम्भवति ? उत्तमैकवचनम्। अपर आह—उत्तमैकवचनम्, सार्वधातुकं चेति; तेन सुप्तोऽहं त्वां प्रेक्षामासे, उत्तमेऽप्यार्धधातुके न भवतीति ॥ ५२ ॥

**भावबोधिनी**

'श्नसोरल्लोपः' सूत्र से अस् के अ का लोप, प्रस्तुत सूत्र से स् का लोप हो जाने पर केवल उपसर्ग और प्रत्यय शेष बचते हैं—व्यतिसे। यही लिख रहे हैं— ] 'अस्' धातु के अकार और सकार के लुप्त हो जाने पर 'से' यह केवल प्रत्यय वाला पद है [ धातु लुप्त है ] इस कारण 'सात्पदाद्योः' इस सूत्र से षत्व नहीं होता है, प्रतिषेध हो जाता है। ] ॥ ५० ॥

रेफादि प्रत्यय परे रहते तास् तथा अस् के स् का लोप होता है। उदा० कर्त्तारौ, कर्तारः। अध्येतारौ, अध्येतारः। [ लुट् = झि, झ दोनों के स्थान पर 'लुटः प्रथमस्य डा-रौ-रसः' से रस् आदेश होने पर कर् तास्+रस्, अधि ए + तास् + रस् में तास् के स् का लोप हो जाता है—कर्तारस्, अध्येतारस्। ] अस् का लिट् में—व्यतिरे। [ व्यति + अस् + झ, झ का इरे और 'इरयोः रे छन्दसि' सूत्र से इरे का 'रे' आदेश करने पर व्यति अस् + रे, 'श्नसोरल्लोपः' से अ लोप, प्रस्तुत सूत्र से स् लोप। यह वैदिक उदाहरण ही सम्भव है। लौकिक में रेफादि प्रत्यय नहीं मिलता है। इसीलिए पदमञ्जरीकार के अनुसार 'अस्' का रेफादि परे उदाहरण वास्तव में दिखाया ही नहीं गया है। न्यासकार ने वैदिक उदा० की उपपत्ति की है। ] ॥ ५१ ॥

तास् और अस् के स् का ह् आदेश एति = एकार परे होता है। उदा० कर्ताहे। [ कृ + तास् + उत्तम-

**३५७०. यीवर्णयोर्दीधीवेव्योः ॥ ५३ ॥ (२४८८)**

**यकारादाविवर्णादौ च परतो दीधीवेव्योर्लोपो भवति । यकारादौ—आदीध्य गतः । आवेव्य गतः । आदीध्यते । आवेव्यते ।**

**इवर्णादौ—आदीधिता । आवेविता । लिङि—आदीधीत । आवेवीत ।**

**यीवर्णयोरिति किम् ? आदीध्यनम् । आवेव्यनम् ॥**

**न्यास**

सकारस्यानेन हः । **व्यतिह इति** । अस्तेः 'कर्त्तरि कर्मव्यतीहारे' इत्यात्मनेपदम्, पूर्ववदकारलोपः । **एतीति** । तपरकरणं सप्तम्यामयादेशपरीहारार्थम् । अयादेशे हि सति सन्देहः स्यात्—कस्यायं निर्देश इति—किमयादेशस्य ? अथैकारस्य ? ॥ ५२ ॥

**यीवर्णयोर्दीधीवेव्योः ॥** स्वरितत्वाल्लोपोऽनुवर्त्तते, न त्वनन्तरो हकारः, तस्यास्वरितत्वप्रतिज्ञानात् । यकारे त्विकार उच्चारणार्थः । यिश्च इवर्णश्च तौ यीवर्णौ तयोः परतः 'दीधीङ् दीप्तिदेवनयोः' 'वेवीङ् वेतिना तुल्ये'—इत्यनयोर्लोपो भवति, स च 'अलोऽन्त्यस्य' इत्यन्तस्य यकारादौ श्रवणे प्राप्ते इवर्णादौ 'एरनेकाचः' इति यणादेशे प्राप्ते लोपवचनमिदम् । **आदीध्य, आवेव्येति** । ल्यप् । **आदीध्यत, आवेव्यत इति** । 'भावकर्मणोः' इत्यात्मनेपदम्, 'सार्वधातुके यक्' । **आदीधता, आवेवितेति** । तृच् । **आदीध्यनमावेव्यनमिति** । ल्युट्, 'दीधीवेवीटाम्' इति गुणनिषेधाद् यणादेशः । अत्र यद्यपि निमित्तयोः कार्यिणोः समानत्वम्, तथापि यथासंख्यं न भवति; अस्वरितत्वात् । वर्णग्रहणमिवर्णे श्रूयमाणे यथा स्यात्, इह मा भूत्—आदीधयतेः, आवेवयतेर्णिजन्ताण्ण्वुल्, आदीध्यकः, आवेव्यकः । अत्र हि नित्यत्वाण्णिलोपे कृते प्रत्ययलोपलक्षणेन प्राप्नोति, अतो वर्णग्रहणान्न भवति ॥ ५३ ॥

**पदमञ्जरी**

**यीवर्णयोर्दीधीवेव्योः ॥** यकारे इकार उच्चारणार्थः । **लोपो भवतीति** । हकारस्त्वनन्तरोऽप्यस्वरितत्वान्नानुवर्त्तते । **आदीध्येति** । ल्यप् । **आदीध्यक इति** । यक् । **आदीधितेति** । तृच्, इट् ।

**आदीध्यनमिति** । ल्युट्, 'दीधीवेवीटाम्' इति गुणप्रतिषेधः । इहादीधयतेर्ण्वुल्—आदीध्यक इति । श्रूयमाण एव णौ ण्वुल् । उत्पत्तेः प्रागेव प्राप्तोऽपि लोपो न भवति; वर्णग्रहणात् । किं वर्णग्रहणमतिरिच्यत इत्यतो न भवति ? नेत्याह । अक्षरार्थं एवायम्, कथम् ? 'वर्ण वर्णने' चुरादिः, वर्ण्यते उपलभ्यत इति वर्णः, वर्णश्चासाविश्चेति विशेषणसमासे विशेषणस्य निपातनात् परनिपातः ॥ ५३ ॥

**भावबोधिनी**

पुरुष एकवचन इट् प्रत्यय, टि का एत्व कृ + तास् + ए, ऋ का गुण, रपर, स् का ह् । ] अस् का उदा० व्यतिहे । [ व्यति अस् + इट् = एत्व, स् का ह्, अ का लोप 'श्नसोरल्लोपः' सूत्र से—व्यतिहे । ] ॥ ५२ ॥

यकारादि ( प्रत्यय ) तथा इवर्ण के परे रहते दीधीङ् तथा वेवीङ् का लोप होता है । [ 'अलोऽन्त्यस्य' के अनुसार अन्त्य वर्ण ई का ही लोप होता है । ] यकारादि परे उदा० आदीध्य गतः । आवेव्य गतः । [ आङ्पूर्वक दीधी तथा वेवी से क्त्वा का ल्यप् = य यकारादि परे मानकर ई का लोप होता है । ] आदीध्यते । आवेव्यते । [ भाव या कर्म में यक् प्रत्यय होने पर 'ई' का लोप होता है ।

इवर्णादि परे उदा० आदीधिता । आवेविता । [ आङ्पूर्वक दीधी और वेवी से तृच् प्रत्यय इट् आगम—आदीधी + इतृ, आ वे वी + इ तृ, ई का लोप ] लिङ् लकार में—आदीधीत । आवेवीत [ आङ् दीधी + सीयुट् = ईय् + , अवेवी + ईय् त, धातु के ई का लोप होता है । ]

यकारादि परे और इवर्ण परे—इसका क्या फल है ? आदीध्यनम् । आवेव्यनम् । [ आङ् दीधी + ल्युट् = अन, आवेवी + ल्युट् = अन, यहाँ लोप न होकर, यण् होता है—आदीध्यनम् । आवेव्यनम् । ] ॥ ५३ ॥

## ३५७१. सनि मीमाघुरभलभशकपतपदामच इस् ॥ ५४ ॥ (२६२३)

**सनि प्रत्यये सकारादौ परतो मी, मा, घु, रभ, लभ, शक, पत, पद—इत्येतेषामङ्गानामचः स्थाने इसित्ययमादेशो भवति । 'मी' इति मीनातिमिनोत्योर्द्वयोरपि ग्रहणमिष्यते । मित्सति । प्रमित्सति । 'मा' इति गामादाग्रहणेष्वविशेषः । मित्सते । अपमित्सते । घु—दित्सति, धित्सति । रभ—आरिप्सते । लभ—आलिप्सते । शक—शिक्षति । पत—पित्सति । पद—प्रपित्सते ।**

### न्यासः

**सनि मीमाघुरभलभशकपतपदामच इस् ॥** 'सः स्यार्धधातुके' इत्यतः सीत्यनुवर्त्तते, तच्च सनो विशेषणम् । **मीति मीनातिमिनत्योरिति ।** 'मीञ् हिंसायाम्', 'डुमिञ् प्रक्षेपणे'—इत्येतयोः । ननु च 'मी' इत्येतस्मिन्नुच्चार्यमाणे मिनोतेर्ग्रहणं नोपपद्यते ? नैवम्; अस्यापि 'अज्झनगमां सनि' इति दीर्घत्वे कृते मीत्येवं रूपं भवति । एवमपि लक्षणप्रतिपदोक्तपरिभाषया तस्य ग्रहणं नोपपद्यते ? नैतदस्ति; अत्र हि घुसंज्ञकत्वाद् 'घु' इत्यस्य पूर्वनिपातमकुर्वतैतत् सूचितम्—यथा पूर्वनिपात इह नापेक्ष्यते, तथान्यदपि किञ्चिच्छास्त्रीयं वचनमिति । तेनेयं परिभाषा नापेक्ष्यत इति युक्तं मिनोतेरपि ग्रहणम् । **मा इति गामादाग्रहणेष्वविशेष इति ।** मेङ्प्रभृतीनां पूर्वोक्तानां त्रयाणां ग्रहणम् । **घु इति ।** घुसंज्ञकौ 'दा' 'धा'—इत्येतौ गृह्येते । 'रभ राभस्ये', 'डुलभष् प्राप्तौ', 'शक्लृ शक्तौ', 'शल हुल पत्लृ गतौ', 'पद गतौ'—एषामचः स्थाने सकारादौ प्रत्यये सनीस् भवति ।

### पदमञ्जरी

**सनि मीमाघुरभलभशकपतपदामच इस् ॥** सीत्येतदिहानुवृत्तं सनो विशेषणम् । **मीनातिमिनोत्योरिति ।** 'मीञ् हिंसायाम्', 'डुमिञ् प्रक्षेपणे' । **उभयोरपि ग्रहणमिति ।** मिनोतेरपि 'अज्झनगमां सनि' इति दीर्घे कृते 'मी' इति रूपसम्भवात् । नन्वसौ लाक्षणिकः ? सत्यम्; इष्टिरेवेयम्, यदाह—**इष्यत इति ।** 'मा माने', 'माङ् माने', 'मेङ् प्रणिदाने'—त्रयाणामपि ग्रहणम् । मीनातिमिनोत्योः सनः कित्त्वे सति अनेज्विष-

### भावबोधिनी

सन् प्रत्यय में सकारादि पर रहते मी, मा, घुसंज्ञक, रभ, लभ, शक, पत, पद—इन अङ्गसंज्ञकों के अच् के स्थान पर 'इस्' यह आदेश होता है । 'मी' इससे मीनाति और मिनोति ( 'मीञ् हिंसायाम्' तथा 'डुमिञ् क्षेपणे' ) इन दोनों का ग्रहण होना इष्ट है । उदा० मित्सति । प्रमित्सति । [ मी + सन्, द्वित्व आदि, 'अत्र लोपोऽभ्यासस्य' से अभ्यास का लोप, 'ई' का 'इस्' आदेश मिस् + स, 'सस्यार्धधातुके' से स् का त् मित् स + लट् ] 'मा' इससे [ 'मा माने' 'माङ् माने' और 'मेङ् प्रणिदाने' इन तीनों का ग्रहण होता है क्योंकि ] 'गा मा दा के ग्रहण में विशेष का ग्रहण नहीं अपि तु सामान्यरूप से [ सभी का ग्रहण ] होता है । उदा० मित्सते । अपमित्सते । [ मा+ सन्, द्वित्व अभ्यासलोप 'आ' का इस् मिस्+स्, स् का त् । ] घु संज्ञक के उदा० दित्सति, धित्सति । [ दा + सन् धा + सन्, द्वित्व, अभ्यास कार्य, अभ्यास लोप, आ का इस्, स् का त्—दित्स, धित्स + लट् ] रभ—आरिप्सते । लभ्—आलिप्सते । [ आङ्पूर्वक रभ् + सन् लभ् + सन्, द्वित्व, अभ्यासकार्य, अभ्यास का लोप, अ का इस्—आ र् इस् भ् + स, आ ल् इस् भ् + स, 'खरि च' से चर्त्व भ् का प् आरिस्प्स, आलिस्प्स यहाँ 'स्कोः सयोगाद्योरन्ते च' से स् का लोप—आरिप् स, आलिप् स+लट् आत्मनेपद में त, एत्व ] शक—शिक्षति । [ शक+सन्, द्वित्व अभ्यास कार्य, अभ्यास लोप शक् + स, अ का इस् श् श् इस् क् + स, संयोगादि स का लोप, षत्व, क्षत्व—शिक्षति । ] पत्—पित्सति । [ 'पत् + सन्, द्वित्व अभ्यासकार्य, अभ्यास लोप, अ का इस् प् इस् त् + स, सलोप—पित्स + लट् ] पद—प्रपित्सते । [ प्र पद् + सन् द्वित्व, अभ्यासकार्य, अभ्यासलोप, अ का इस् संयोगादि स् का लोप प्र प् इस् द्+स, चर्त्व, संयोगादि स् लोप प्रपित्स + लट् = त । ]

सन् परे—इसका क्या फल है ? दास्यति । [ सन् नहीं है । ]

सनीति किम् ? दास्यति ।

'सि' इत्येव—पिपतिषति । ❀ 'तनिपतिदरिद्राणामुपसंख्यानम् ❀ (का० वा०) इति पतेरिडागमविकल्पः ।

❀ सनि राधो हिंसायामच इस्वक्तव्यः ❀ । प्रतिरित्सति । हिंसायामिति किम् ? आरिरात्सति ॥

**३५७२. आप्ज्ञप्यृधामीत् ॥ ५५ ॥ (२६१६)**

आप्, ज्ञपि, ऋध—इत्येतेषामङ्गानामच ईकारादेशो भवति सनि सकारादौ परतः । आप्—ईप्सति । ज्ञपि—ज्ञीप्सति । ऋध्—ईर्त्सति ।

**न्यासः**

अच इत्यस्य ग्रहणं सर्वादेशो मा भूदित्येवमर्थम् । असति हि तस्मिन्ननेकाल्त्वात् सर्वादेशः स्यात् । प्रमित्सतीति । 'अत्र लोपोऽभ्यासस्य' इत्यभ्यासलोपः, 'सः स्यार्धधातुके' इति सस्य तः । अपमित्सते इति । 'पूर्ववत् सनः' इत्यात्मनेपदम् । एवमारिप्सते, आलिप्सत इत्यत्रापि । 'खरि च' इति चर्त्वम्—भकारस्य पकारः, 'स्कोः संयोगाद्योरन्ते च' इति सलोपः ॥ ५४ ॥

आप्ज्ञप्यृधामीत् ॥ ईप्सतीति । 'आप्लृ व्याप्तौ' । ज्ञीप्सतीति । 'ज्ञा अवबोधने', णिच्, 'अर्त्ति' इत्यादिना पुक्, 'मारणतोषणनिशामनेषु ज्ञा', 'मिच्च' इति मित्सञ्ज्ञायां ह्रस्वः, 'णेरनिटि' इति णिलोपः । ईर्त्संतीति । 'ऋधु वृधौ', ईकारः, रपरत्वञ्च, धकारस्य 'खरि च' इति चर्त्वम्-तकारः ।

**पदमञ्जरी**

यत्वात् मारूपासम्भवात्पृथग्ग्रहणम् । घु इति । घुसंज्ञका दाधा गृह्यन्ते । 'रभ राभस्ये', 'डुलभष् प्राप्तौ', 'शक्लृ शक्तौ', 'पत्लृ गतौ' । मित्सतीति । 'स स्यार्धधातुके' इति सकारस्य तकारः, 'अत्र लोपोऽभ्यासस्य' । आत्मनेपदेषु 'पूर्ववत्सनः' । आरिप्सते इत्यादौ 'स्कोः संयोगाद्योः' इति सलोपः ॥ ५४ ॥

आप्ज्ञप्यृधामीत् ॥ 'आप्लृ व्याप्तौ', 'ज्ञा अवबोधने', णिचि पुक्, 'मारणतोषणनिशामनेषु ज्ञा' 'मिच्च' इति मित्संज्ञायाम् 'मितां ह्रस्वः' । 'ऋधु वृद्धौ' ईर्त्संतीति । रपर ईकारः, धकारस्य चर्त्वम् ।

**पदमञ्जरी**

'स परे ही' होता है अतः 'पिपतिषति' [ यहाँ इट् होने पर नहीं होता है क्योंकि ] "तनिपति-दरिद्राणामुपसंख्यानम्' इस वार्तिक से 'पत्' धातु को विकल्प से इट् आगम होता है ।

❀ सन् परे हिंसा अर्थ में राध् के अच् का इस् होता है । ❀ उदा० प्रतिरित्सति । [ प्रतिपूर्वक राध् + सन्, द्वित्व, अभ्यास कार्य, अभ्यास का लोप प्रति राध्+स, आ का इस् आदेश, चर्त्व ध का त, संयोगादि स् का लोप—प्रतिरित्सति । ] हिंसा में—इसका क्या फल है ? आरिरात्सति । [ गत्यादि अर्थ में इस् न होने से अभ्यासलोप नहीं होता है—आ रिरात्सति । ] ॥ ५४ ॥

आप्, ज्ञप् और ऋध्—इन अङ्गसंज्ञकों के अच् का ईकार आदेश सकारादि सन् प्रत्यय के परे रहते होता है । उदा० आप्—ईप्सति । [ 'आप्लृ व्याप्तौ' धातु से सन्—आप्+स, आ का ई—ईप् स, द्वित्वादि के बाद 'अत्र लोपोऽभ्यासस्य' से अभ्यास का लोप—ईप्स + लट् । ] ज्ञपि—ज्ञीप्सति । [ ज्ञा + णिच्, पुक्, मित् होने से 'मितां ह्रस्वः' से उपधा का ह्रस्व—ज्ञप् इ + स, 'णेरनिटि' से णिलोप, अ का ई—ज्ञीप् स, द्वित्वादि के बाद अभ्यास का लोप—ज्ञीप्स + ति । ] ऋध् —ईर्त्संति । [ ऋध् + स, ऋ का ई, रपर ईर्ध् + स, ध् का चर्त्व त्, द्वित्व, अभ्यास का लोप—ईर्त्स + लट् = तिप् । ]

ज्ञपेर्द्वावचौ, तत्र णेः पूर्वविप्रतिषेधेन लोपः, इतरस्य त्वीत्वम् ।

'सनि' इत्येव—प्राप्स्यति । सीत्येव-जिज्ञपयिषति । अर्दिधिषति । 'सनीवन्तर्ध' (पा० सू० ७।२।४९) इति ज्ञपेः, ऋधेश्चेटो विकल्पः ॥

**३५७३. दम्भ इच्च ॥ ५६ ॥ (२६२१)**

दम्भेरच इकारादेशो भवति, चकारादीच्च सनि सकारादौ परतः । धीप्सति, धिप्सति । 'सि' इत्येव—दिदम्भिषति ॥

**न्यासः**

इह च ज्ञापिनाङ्गेनाज् विशेषयितव्यः, न त्वचा ज्ञपिः; व्यभिचाराभावात् । न हि ज्ञपिरजन्ततां व्यभिचरति । अचि तु ज्ञपिनाङ्गेन विशिष्यमाणे सर्वस्य ज्ञपिसम्बन्धिनोऽच ईत्वेन भवितव्यम्, तथा च णेरपीत्वे कृते ज्ञीप्सतीति न सिध्येदित्येतच्चोद्यमाशङ्क्याह—**ज्ञपेर्द्वावचावित्यादि** । तत्रेत्वस्याकाशोऽजाद्यः, णिलोपस्यावकाशः—कारणा, हारणा; द्वितीयस्याच उभयप्रसङ्गे णिलोप एव भवतीति पूर्वविप्रतिषेधेन—**ज्ञीप्सतीति । इतरस्येति** । अकारस्य । **अर्दिधिषतीति** । लघूपधगुणः, रपरत्वम्, 'अजादेर्द्वितीयस्य' इति 'ध' इत्येतद् द्विरुच्यते । रेफस्य तु द्विर्वचनं न भवति; 'नन्द्राः संयोगादयः' इति प्रतिषेधात् । अभ्यासस्य जश्त्वम्—जकारः । तकारो मुखसुखार्थः ॥ ५५ ॥

**दम्भ इच्च ॥ धिप्सति, धीप्सतीति** । 'दम्भु दम्भे' । तस्य यदा 'सनीवन्तर्ध' इत्यादिनेड् न क्रियते,

**पदमञ्जरी**

**ज्ञपेरित्यादि** ॥ इह 'अचः' इत्यनुवर्त्तते, तेन च ज्ञपौ विशिष्यमाणे अजन्तस्य ज्ञपेरित्वं विधीयमानम् 'अलोऽन्त्यस्य' इत्यन्त्यस्य स्यात्, अजन्तस्येति च विशेषणं व्यर्थम्; व्यभिचाराभावात्; तेन ज्ञपिनाज्विशेष्यते—ज्ञपेरचो यत्र तत्रस्थस्येति, यथा—आबृधिभ्याम् । एवं चैकप्रकारो विशेषणविशेष्यभावो भवति, तत्रानन्त्येऽचि सावकाशमीत्वमन्त्येऽचि पूर्वतिप्रतिषेधेन णिलोपो बाधते, तदिदमुक्तम्—**णेर्लोप इति । इतरस्य त्विति** । अपर आह—अस्तु णेरपीत्वम्, तस्य स्थानिवद्भावाण्णिलोपो भविष्यति, ईत्ववचनं त्वनन्त्ये श्रवणार्थमिति ।

**अर्दिधिषतीति** । सनि इति लघूपधगुणे रपरे कृते 'न न्द्राः' इति प्रतिषेधाद् रेफवर्जितद्वितीयस्यैकाचो द्विर्वचनम् ॥ ५५ ॥

**दम्भ इच्च ॥ धिप्सति, धीप्सतीति** । 'हलन्ताच्च' इति सनः कित्वादुपधालोपः, भकारस्य

**भावबोधिनी**

ज्ञपि—इसके दो अच् हैं (अ और इ), इनमें णि (इ) का लोप पूर्वविप्रतिषेध से हो जाता है अन्य (अच् अ) का ईकार आदेश होता है। [सूत्र में 'ज्ञपि' ऐसा णिजन्त ही उल्लिखित है। अतएव उपर्युक्त अच् का स्पष्टीकरण दिया गया।]

सन् परे ही—प्राप्स्यति। [यहाँ सन् परे नहीं है।] सकारादि परे ही—जिज्ञपयिषति। अर्दिधिषति। ['ज्ञपि' तथा ऋध् से परे सन् को 'सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरि-ज्ञपि-सनाम्'' (७।१।४९) सूत्र से विकल्प से इट् का आगम होता है। इट् के अभाव पक्ष में प्रस्तुत सूत्र से अच् का ई होता है। इट् होने पर सन् इडादि हो जाता है, सकारादि नहीं रहता है। अतः सूत्र से ई नहीं होता है यही लिख रहे हैं—] ''सनीवन्तर्ध'' इस सूत्र से 'ज्ञपि' तथा 'ऋध्' को इट् का विकल्प है। [इट् पक्ष में सूत्र नहीं लगता है।] ॥ ५५ ॥

'दम्भ' धातु के अच् का इकार आदेश होता है और 'च' के बल से ईकार भी होता है सकारादि सन् के परे रहते। उदा० धिप्सति, धीप्सति। [दम्भ्+सन्, 'सनीवन्तर्ध' से इट् के अभावपक्ष में प्रस्तुत सूत्र से अ का इ तथा ई आदेश—दिम्भ्+स, दीम्भ्+स, 'हलन्ताच्च' सूत्र से सन् के कित् हो जाने से अनुनासिक वर्ण का लोप

## ३५७४. मुचोऽकर्मकस्य गुणो वा ॥ ५७ ॥ (२६२४)

मुचोऽकर्मकस्य गुणो वा भवति सनि सकारादौ परतः। 'हलन्ताच्च' (पा० सू० १।२।१०) इति किस्वप्रतिषेधो विकल्प्यते। मोक्षते वत्सः स्वयमेव, मुमुक्षते वत्सः स्वयमेव।

अकर्मकस्येति किम्? मुमुक्षति वत्सं देवदत्तः। कर्मकर्त्तरि मुचिरकर्मको भवति, कर्मविशेषस्याविवक्षितत्वाद्वा॥

**न्यासः**

तदा सनि सकारादाविकारः, ईकारश्च, 'हलन्ताच्च' इति किस्वादनुनासिकलोपः, भकारस्य चर्त्वे पकारः॥ ५६॥

**मुचोऽकर्मकस्य गुणो वा॥ मोक्षते इति।** 'मुच्लृ मोक्षणे'। 'चोः कुः' इति कुत्वम्, इण्कोः' इति षत्वम्, 'कर्मवत् कर्मणा' इत्यादिना कर्मवदतिदेशादात्मनेपदम्। **स्वयमेवेति** वचनं कर्मकर्तृत्वप्रदर्शनार्थम्। वत्सं मोक्तुमिच्छति, स मोक्तुमिष्यमाणो मुक्तिक्रियां प्रत्यानुकूल्यं यदा प्रतिपद्यते तदा स्वतन्त्रत्वादस्मिन् कर्मणि कर्तृत्वेन विवक्षिते मुचिरकर्मको भवति।

अथ गुणग्रहणं किमर्थम्, नौदित्येवोच्येत? ननु चैवं सत्योकारश्चकारस्य स्थाने 'अलोऽन्त्यस्य' प्राप्नोति, गुणग्रहणादिक एव भवति, संज्ञाविधाने नियमात्? नैतदस्ति; अच इत्यनुवर्तते। तेनान्त्यस्य न भविष्यति। एवं तर्ह्येतज्ज्ञापयति—अच इति निवृत्तमिति। तेन 'अत्र लोपोऽभ्यासस्य' इत्यत्रातोऽभ्यासस्य लोपो न भवति। सति त्वजधिकारे, मा भूत् तस्यानुवृत्तिरपार्थिकेत्यच एव लोपः स्यात्॥ ५७॥

**पदमञ्जरी**

चर्त्वम्। इत्वं शक्यमविधातुम्; एवं वक्ष्यामि—'सनिमीमादीनामच इस् दम्भ ईच्च', चकारादिस्भावश्च, ततः 'आप्ज्ञप्यृधामित्' इत्येव॥ ५६॥

**मुचोऽकर्मकस्य गुणो वा॥ मुमुक्षत इति।** भूषाकर्मकिरादिसनां चान्यत्रात्मनेपदात्' इति कर्मकर्त्तरि यगभावः। अतिदेशेन स्वाश्रयस्यानिवृत्तेः कर्तरि शब्भवति; यथा—नमते दण्डः स्वयमेवेति।

**कर्मविशेषस्याविवक्षितत्वाद्वेति।** उक्तं हि—

'प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया।' इति॥ ५७॥

**भावबोधिनी**

दिभ्+स, दीभ्+स, चर्त्व से भ् का प्, द्वित्व, अभ्यासकार्य, अभ्यास का लोप, "एकाचो बशो भष् झषन्तस्य स्ध्वोः" सूत्र से भष्भाव से द् का ध्—धिप्स, धीप्स+लट् = ति।] सकारादि सन् परे होता है—दिदम्भिषति। [ यहाँ इट् होने से सकारादि न होकर इडादि सन् होता है। अतः सूत्र नहीं लगता है।]॥ ५६॥

अकर्मक मुच् धातु का गुण विकल्प से होता है सकारादि सन् प्रत्यय के परे रहते। "हलन्ताच्च" इस सूत्र से किस्वप्रतिषेध विकल्प से होता है। [ जब गुण होता है तब किस्व नहीं माना जाता है।] उदा० मोक्षते वत्सः स्वयमेव। [ 'मुच्+सन्, कर्मकर्ता अर्थ में रूप है, विकल्प से गुण, द्वित्व, अभ्यासलोप—मोच्+स, कुत्व से च् का क् स् का ष्, क्+ष = क्ष मोक्ष+लट् 'कर्मवत् कर्मणा तुल्यक्रियः' से कर्मवदतिदेश के द्वारा 'भावकर्मणोः' से आत्मनेपद प्रत्यय होता है। जब गुण नहीं होता है तब 'अत्र लोपोऽभ्यासस्य' से अभ्यास का लोप भी नहीं होता है—मुच्+स, द्वित्व, हलादिशेष मुमुच्+स, कुत्व, षत्व, क्षत्व करने पर मुमुक्ष+लट् = त एत्व ] मुमुक्षते वत्सः स्वयमेव। ( बछड़ा अपने आप छूटना चाहता है।)।

३५७५. अत्र लोपोऽभ्यासस्य ॥ ५८ ॥ (२६२०)

यदेतत्प्रक्रान्तम्—'सनि मीमा' ( पा० सू० ७।४।५४ । इत्यादि 'मुचोऽकर्मकस्य' ( पा० सू० ७।४।५७ ) इति यावत्, अत्राभ्यासलोपो भवति । तथैवोदाहृतम् । "अभ्यासस्य' इत्येतच्चाधिकृतं वेदितव्य-माध्यायपरिसमाप्तेः । इत उत्तरं यद्वक्ष्यामोऽभ्यासस्येत्येवं तद्वेदितव्यम् । वक्ष्यति—"'ह्रस्वः' ( पा० सू० ७।४।५९ । डुढौकिषते । तुत्रौकिषते ।"

'सनि मीमाघुरभलभशकपतपदामच इस् अभ्यासलोपश्च' इत्येवं सिद्धे यद् 'अत्र' ग्रहणमिह क्रियते

न्यासः

**अत्र लोपोऽभ्यासस्यासस्य ॥** अत्रेत्यनेन यन्निर्दिश्यते तद्दर्शयितुमाह—**यदेतदित्यादि** । अथात्र ग्रहणं किमर्थम् ? 'सनि मीमा' इत्यादौ प्रकरणे यथा स्याद्, ददौ, ददतुरित्यादौ मा भूदिति चेत् ? न; यदि ह्येतत् प्रयोजनमभिमतं स्यात् 'सनि मीमाघुरभलभशकपतपदामच इसभ्यासलोपश्च' इत्येवमुद्दिश्येत, एवमिहैव प्रकरणे भविष्यति, नान्यत्र, ततो निष्प्रयोजनमत्रग्रहणमित्यत आह—**सनि मीमाघुरभलभेत्यादि** । **विषयाव-धारणार्थमिति** । अभ्यासलोपविषयस्य नियमार्थमित्यर्थः । तामेव तस्य विषयानियमार्थतां दर्शयितुमाह—**अत्रैवेत्यादि** । अत्रेत्यनेनेसादिविषयो निर्दिश्यते । इसादिविषय एवाभ्यासलोपो यथा स्यादिति नियमेन यद्व्यवच्छिन्नं तद् दर्शयितुमाह—**सन्वद्भावविषये न भवतीति** । **अमीमपदिति** । 'मीञ् हिंसायाम्', 'मीनाति-मिनोतिदीङां ल्यपि च' इत्यात्वम्, णिच्, पूर्ववत् पुक्, लुङ्, च्लेश्चङ्, णिलोपः, उपधाह्रस्वत्वम्, द्विर्वचनम् अट्, 'सन्वल्लघुनि चङ्परे' इत्यादिना सन्वद्भावे 'सन्यतः' इतीत्त्वम्, 'दीर्घो लघोः' इति दीर्घः । **अदीद-पदिति** । 'डुदाञ् दाने', पूर्ववण्णिजादिः । अत्रग्रहणादिहाभ्यासलोपो न भवति ।

पदमञ्जरी

**अत्र लोपोऽभ्यासस्य** ।। अत्रशब्दस्यार्थं दर्शयति—**यदेतदिति** ।

अथात्रग्रहणं किमर्थम् ? अत्र 'सनिमीमा' इत्यादौ प्रकरणे यथा स्याद्; ददौ, ददातीत्यत्रा मा भूदिति । नैतदस्ति प्रयोजनम्, एवं वक्ष्यामि—'सनि मीमाघुरभलभशकपतपदामच इसभ्यासलोपश्च'—इति, उत्तरत्रापि 'अभ्यासलोपश्च' इत्येव ? तत्राह—**सनि मीमाघ्वित्यादि** । विषयावधारणम् = विषयनियमः । कः पुनरसौ ? इत्यत आह—**अत्रैवेत्यादि** । अवधारणस्य व्यवच्छेद्यं दर्शयति—**सन्वद्भावविषये न भवतीति** । **अमीमपदिति** । मिञो णिचि 'मीनातिमिनोति' इत्यात्वम्, पुक्, लुङ्, चङि द्विर्वचनम्, सन्वद्भावादित्त्वम्, 'दीर्घो लघोः' ।

भावबोधिनी

अकर्मक का—इसका क्या फल है ? मुमुक्षति वत्सं देवदत्तः । [ यहाँ मुच् सकर्मक है । अतः न गुण होता है और न कर्मवदतिदेश से आत्मनेपद । ] कर्मकर्ता अर्थ में मुच् धातु अकर्मक हो जाता है अथवा कर्मविशेष की अवि-वक्षा करने से भी अकर्मक हो जाता है । ] ॥ ५७ ॥

जो यह प्रकरण चला है—"सनि मी" ( ४।७।५४ ) से लेकर 'मुचोऽकर्मकस्य' ( ७।४।५७ ) इस सूत्र तक, इनमें अभ्यास का लोप हो जाता है । इसी प्रकार 'अभ्यासस्य' ( अभ्यास का )—इसका अधिकार अध्याय की परिसमाप्ति तक समझना चाहिए । यहाँ से चाहे जो कहेंगे उसे 'अभ्यास का' ऐसा समझना चाहिए । कहेंगे—ह्रस्वः' ( ह्रस्व होता है, अभ्यास का )—डुढौकिषते । तुत्रौकिषते । [ ढौक् + सन्, त्रौक् + सन्, द्वित्वादि के बाद अभ्यास का ह्रस्व होने से ए ओ—इ, उ हो जाते हैं—डुढौक + इस्, तुत्रौक् इ + स, आत्मनेपद में रूप है । ]

'सनि मीमाघुरभलभशकपतपदामच इस् अभ्यासलोपश्च' ( ७।४।५४ ) इसी से सिद्ध रहने पर अर्थात् सन् प्रत्यय में ही कार्य होने पर इस सूत्र में जो 'अत्र' का ग्रहण है किया जाता है वह विषय का अवधारण (निश्चय) कराने के लिये है—यहीं पर अभ्यास का लोप होता है, सन्वद्भाव के विषय में लोप नहीं होता है । इस कारण

**तद्विषयावधारणार्थम्—अत्रैवाभ्यासलोपो भवति, सन्वद्भावविषये न भवति। अमीमपत्। अदीदपत्।**
**'सन्वल्लघुनि चङ्परे' ( पा० सू० ७।४।९३ ) इति प्राप्नोति।**

**सर्वस्याभ्यासस्यायं लोप इष्यते, तदर्थमेव केचिद् 'अत्र' ग्रहणं वर्णयन्ति।**
**'नानर्थकेऽलोऽन्त्यविधिः' इत्यपरे सर्वस्य कुर्वन्ति॥**

**न्यासः**

कथं पुनः सन्यभ्यासलोप उच्यमान इह प्राप्नोति, यन्निवृत्त्यर्थमत्रग्रहणं क्रियते? इत्याह—**सन्वल्लघुनीत्यादि**। यथैव हि सन्वद्भावातिदेशादित्वं भवति, एवमभ्यासलोपः स्यात्। इहालोऽन्त्यपरिभाषया 'अलोऽन्त्यस्य' लोपेन भवितव्यमिति कस्यचिद् भ्रान्तिः स्यात्, अतस्तां निराकर्तुमाह—**सर्वस्येत्यादि**। कथं पुनः सर्वस्य लभ्यते? इत्यत आह—**तदर्थमेवेत्यादि**। एतेनैवकारेण विषयावधारणार्थतां निरस्यति। यद्येवम्, सन्वद्भावविषयेऽपि प्राप्नोति? एवं मन्यते—सन्वद्भावविषयेऽप्यभ्यासलोपप्रसङ्गः परिहर्तुं शक्यते। तत्र सन्वदिति सनाश्रयकार्यमतिदिश्यते। न चाभ्यासलोपः सनमेवापेक्षते, किं तर्हि? इस्भावादिकमपि। तदभावाद-सत्यप्यत्रग्रहणेऽमीमपदित्यादिष्वभ्यासलोपो न भविष्यति। तस्मादतिरिच्यत एवात्रग्रहणमिति न कर्त्तव्यमेव। तत् क्रियते—सर्वस्याभ्यासलोपो यथा स्यादिति।

कथं पुनः क्रियमाणेऽप्यत्रग्रहणे सर्वस्य लोपो लभ्यते? ग्रन्थाधिक्यादर्थाधिक्यमित्येके। अत्रग्रहणेन महत् सूत्रं प्रणयतैतत् सूचितम्—महतः स्थानिनोऽयं लोपः कर्त्तव्यः। एवञ्चायं महतः स्थानिनः कृतो भवति यदि सर्वस्याभ्यासलोपः क्रियते, नान्यथेत्यन्ये।

**नानर्थकेऽलोऽन्त्यविधिरित्यपर इति**। के पुनस्ते? ये विषयावधारणार्थतामत्रग्रहणस्य वर्णयन्ति ते वेदितव्याः। अनर्थकत्वमभ्यासस्य स्थाने द्विर्वचनपक्षे वेदितव्यम्। अत्र हि यस्य स्थाने यच्छब्दान्तरं विधीयते

**पदमञ्जरी**

कथं पुनः सनीत्युच्यमानस्याभ्यासलोपस्यात्र प्रसङ्गः? इत्यत आह—**सन्वल्लघुनीति**। यथैव हि सन्वद्भावेनेत्वं भवति, तथाभ्यासलोपोऽपि स्यात्, 'अलोऽन्त्यस्य' लोपेन भवितव्यमित्याशङ्कायामाह—**सर्वस्येति**। कथं पुनः सर्वस्य लभ्यते? अत आह—**तदर्थमेवेति**। 'इतराभ्योऽपि दृश्यते' इति षष्ठ्यन्तात्त्रल्। योऽयमभ्यासः प्रसिद्धोऽस्य लोपः, न तदन्तस्येत्यर्थः। विषयावधारणं त्वन्यथापि सिद्धम्। सन्वल्लघुनीति न कार्यमतिदिश्यते, किं तर्हि? रूपम्। लोपश्चासावभावरूपो न रूपमिति नातिदिश्यते। **नानर्थकेऽलोन्त्य-विधिरित्यपरे सर्वस्य कुर्वन्तीति**। 'अनभ्यासविकारेषु' इति तु प्रतिषेधो न भवति; लोपस्याविकारत्वात्। **तथा च पस्पशायाम्**—'लोपागमवर्णविकारज्ञः' इति पृथग्ग्रहणम्, 'द्वौ चापरौ वर्णविकारनाशौ' इति च

**भावबोधिनी**

अमीभवत् अदीदपत् इनमें भी 'सन्वल्लघुनि चङ् परे' ( ७।४।९३ ) इससे सन्वद्भाव के कारण [ लोप ] प्राप्त होता है। [ किन्तु यह प्रकरण न होने से लोप नहीं होता है। ]

सम्पूर्ण अभ्यास का यह लोप इष्ट है इसी के लिये कुछ लोग 'अत्र' ग्रहण कहते हैं।

अनर्थक में 'अलोऽन्त्यस्य' विधि नहीं लगती है ऐसा मानकर सभी के स्थान पर दूसरे लोप मानते हैं।

**विमर्श**—'लोपोऽभ्यासस्य' इतना ही कहने पर प्रकरण का ज्ञान स्वतः हो ही जाता क्योंकि "सनि मीमा०" सूत्र में 'सन् परे' का उल्लेख है, तब 'अत्र' के ग्रहण की क्या आवश्यकता? समाधान यह है कि अभ्यासलोप का नियम कराने के लिये 'अत्र' का ग्रहण है। शब्दतः प्रतिपाद्य होने से केवल इसी प्रस्तुत प्रकरण में 'सन् परे' अभ्यास का लोप होता है। अन्यत्र सन्वद्भाव से अतिदिष्ट होने पर भी लोप नहीं होता है। यदि ऐसा न रहता तो सन्वद्भाव से जैसे अभ्यास का इत्व होता है वैसे ही लोप भी होने लग जाता।

'लोपः' के साथ 'अलोऽन्त्यस्य' का योग करके 'अन्त्यस्य लोपः' न होने लग जाय समस्त अभ्यास का

## ३५७६. ह्रस्वः ॥ ५९ ॥ (२१८०)

ह्रस्वो भवत्यभ्यासस्य । डुढौकिषते, तुत्रौकिषते । डुढौके, तुत्रौके । अडुढौकत्, अतुत्रौकत् ।

❀ अभ्यासस्यानचि ❀ ( म० भा० ) । अभ्यासस्य यदुच्यते अनचि तद्भवतीति वक्तव्यम् । चराचरः । चलाचलः । पतापतः । वदावदः । 'हलादिः शेषो' ( पा० सू० ७।४।६० ) न भवति ॥

**न्यासः**

तत् समस्तमेवार्थवत् । एकदेशस्त्वभ्यासोऽनर्थक एव । द्विष्प्रयोगद्विर्वचनपक्षेऽप्यनर्थान्तरवाचित्वादनर्थकताभ्यासस्य ॥ ५८ ॥

**ह्रस्वः ॥ डुढौकिषते, तुत्रौकिषत इति** । ढौकृ, त्रौकृ—इत्येताभ्यामनुदात्तेत्वादात्मनेपदिभ्यां सन्, 'पूर्ववत्सनः' इत्यात्मनेपदम् । **अडुढौकत्, अतुत्रौकदिति** । आभ्यामेव ण्यन्ताभ्यां लुङ् पूर्ववच्चङादि कार्यम् । **डुढौके, तुत्रौक इति** । लिट्, एकवचनम्, तस्यैश् ।

**अभ्यासस्यानचीत्यादि** । अभ्यासस्य यत् कार्यं विधीयते तदनचि परे भवतीत्येदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्—'वा चरिचलिपतिवदीनामच्याक्चाभ्यासस्य' इत्यागमविधानसामर्थ्याद्धलादिशेषेण न भवितव्यम् । हलादिशेषे हि सत्यादेशस्यागमस्य च कश्चिद्विशेषो नास्तीत्यादेशमेव विदध्यात् । एवञ्च—अभ्यासलोपाभावात् पारिशेष्यादचोऽन्यत्रैव भविष्यति ॥ ५९ ॥

**पदमञ्जरी**

पृषोदरादिसूत्रे । अन्वयव्यतिरेकाभ्यामर्थवत्तावधार्यते, न चाभ्यासस्योपजनने कश्चिदर्थः प्रतीयत इत्यभ्यासस्यानर्थक्यम् ॥ ५८ ॥

**ह्रस्वः ॥ हलादिशेषो न भवतीति** । न चागमविधानसामर्थ्याद्धलादिशेषाभावः, अन्यथाऽऽदेशमेवाकारं विदध्यादिति वाच्यम् । सत्यपि वा हलादिशेषे विग्रहीतश्रवणार्थत्वादाकारस्य—चलाचलमिति ॥५९॥

**भावबोधिनी**

लोप हो सके—इसके लिये 'अत्र' इसका ग्रहण है । 'अत्र' इसमें सप्तम्यन्त से अल् न मानकर षष्ठ्यन्त से अल् समझना चाहिये—जो यह अभ्यास प्रसिद्ध है उसका लोप होता है, उसके अन्त्य मात्र का लोप नहीं होता है ।

कुछ विद्वानों का मत है सम्पूर्ण अभ्यास अर्थवान् होता है, उसका अन्त्य वर्ण अकेला अर्थवान् नहीं होता है, अतः अन्त्य अल् का लोप न होकर सम्पूर्ण अभ्यास का ही लोप होता है ॥ ५८ ॥

अभ्यास का ह्रस्व होता है । उदा० डुढौकिषते, तुत्रौकिषते । [ ढौक् + सन्, त्रौक् + सन् में 'सन्यङोः' सूत्र से द्वित्व, 'पूर्वोऽभ्यासः' से पूर्व की अभ्यास संज्ञा होती है, उसी का ह्रस्व करने पर 'औ' का 'उ' हो जाता है—ढुढौक् + इ स, जश्त्व करने पर डुढौकिष, तुत्रौकिष, 'पूर्ववत् सनः' से आत्मनेपद होता है । ] डुढौके, तुत्रौके । [ ढौक् + लिट् = त = एश्, त्रौक् + लिट् = त = एश् यहाँ भी द्वित्व, अभ्यास का ह्रस्व आदि होता है । ] अडुढौकत् अतुत्रौकत् । [ ढौक् त्रौक् से लुङ्, च्लि, चङ् द्वित्वादि कार्य होते है । ]

❀ अभ्यास का अनच् में । ❀ अभ्यास का जो कार्य कहा जाता है अनच् में वह होता है ऐसा—समझना चाहिए, अर्थात् अच् परे रहते लोप नहीं होता है । उदा० चराचरः । चलाचलः । पतापतः । वदावदः । [ चर् आदि यङ् प्रत्ययान्त से 'वा चरिचलि-पतिवदीनामच्याभ्यासस्य' इस वार्तिक से अभ्यास को आक् का आगम होता है—चर् आ चर में अभ्यास का लोप नहीं होता है । यही स्थिति सर्वत्र समझनी चाहिए । यङ् करने पर द्वित्व आक् आगम, 'पचादि' मानकर 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' सूत्र से अच् प्रत्यय, 'यङोऽचि च' से यङ् का लुक् होता है । ] इनमें 'आदि हल् शेष नहीं होता है' ॥ ५९ ॥

**३५७७. हलादिः शेषः ॥ ६० ॥ (२१७९)**

**अभ्यासस्य हलादिः शिष्यते, अनादिर्लुप्यते । जग्लौ । मम्लौ । पपाच । पपाठ । आट, आटतुः, आटुः ।**

**आदिशेषनिमित्तोऽयमनादेर्लोपो विधीयते, तत्र अभ्यासजातेराश्रयणात् क्वचिदपि वर्त्तमानो हलादिरनादेः सर्वत्र निवृत्तिं करोति ।**

**न्यासः**

**हलादिः शेषः ॥ हलादिरिति ।** हल् चासावादिश्चेति हलादिः—कर्मधारयोऽयम्, न तु षष्ठीसमासः—हलामादिर्हलादिः । यदि षष्ठीसमासः स्यात्, तदायमर्थः स्यात्—अभ्यासस्य ये हलस्तेषामादिः शिष्यत इति । तथा च—आनक्षतुः, आनक्षुरित्यत्र 'अक्ष् व्याप्तौ' इत्यस्याजादित्वाद् द्वितीयस्यैकाचोऽभावात् प्रथमस्यैकाचो द्विर्वचने कृते यद्यप्यभ्यासादिः ककारो न भवति, तथापि हलादिर्भवति, तस्य शेषः प्रसज्येत । कर्मधारये तु न दोषः, तत्राभ्यासापेक्षं हलादित्वं विधीयते, न चात्र ककारोऽभ्यासादिः । तस्मात् कर्मधारयोऽयम् । **जग्लौ, मम्लाविति ।** 'ग्लै हर्षक्षये', 'म्लै गात्रविनामे', 'आदेच उपदेशेऽशिति' इत्यात्वम्, 'आत औ णलः' इत्यौत्वम् । **आटतुः, आटुरिति ।** 'अत आदेः' इत्याभ्यासस्य दीर्घत्वे कृते सवर्णदीर्घत्वम् ।

ननु च शेषोऽवस्थानम्, तच्चादेः सिद्धमेव, तत् किमर्थं विधीयते ? इत्याह—**आदिशेषनिमित्तोऽयमित्यादि ।** आदिशेषो निमित्तं यस्य लोपस्य स तथोक्तः । न ह्यत्रादेः शेषो विधीयते, किं तर्हि ? तन्निमित्तोऽयमनादेर्लोपो विधीयते । सिद्ध एव ह्यादेरवस्थाने हलादिशेष इतीदं विधीयमानं नियमार्थं विज्ञायते—आदेरेव हलोऽवस्थानं भवति, न त्वनादेरिति । एवमादिशेषनिमित्तमनादेरदर्शनं विहितं भवति । यदि तर्ह्यादिशेष-

**पदमञ्जरी**

**हलादि शेषः ॥** शिष्यते = अवस्थाप्यत इति शेषः, कर्मणि घञ् । 'हलादिः' इत्यसमासः समासे तु—

कर्मधारयपक्षे स्यादादिशब्दस्य पूर्वता ।
षष्ठीसमासे त्वानक्षेरयादौ शेषः प्रसज्यते ॥

कर्मधारये हि विशेषणत्वादादिशब्दस्य पूर्वनिपातः प्राप्नोति । षष्ठीसमासे हलन्तरापेक्षं हल आदित्वम्, नाभ्यासापेक्षमिति अजादिष्वपि प्रसङ्गः । 'अक्षू व्याप्तौ' लिट्, आनक्ष, अत्र ककारस्य शेषः प्राप्नोति । आटतुरित्यादावप्यादिवद्भावात्प्रसङ्गः । कर्मधारयासमासयोस्तु अभ्यासापेक्षमादित्वमिति नायं दोषः । **अनादिर्लुप्यते इति ।** हलित्यपेक्षते, एतेनासमासपक्षो दर्शितः । समासे ह्युपसमस्तस्यापेक्षायोगादनादिर्हलिति पुनर्हल्ग्रहणं कर्तव्यम् ।

**भावबोधिनी**

अभ्यास का आदि हल् शेष रहता है, अनादि हल् का लोप होता है । उदा० जग्लौ । मम्लौ । [ ग्लै हर्षक्षये' 'म्लै गात्रविनामे' इनमें 'आदेच उपदेशेऽशिति' सूत्र से ऐ का आत्व—ग्ला, म्ला, + लिट् तिप् = णल् औ, द्वित्व, अभ्यासंज्ञा म्ला म्ला + औ, आदि हल् शेष अन्य का लोप ग ग्ला + औ, ह्रस्व, कुत्व जग्ला + औ, वृद्धि —जग्लौ, इसी प्रकार मम्लौ । ] पपाच । पपाठ । [ पच्, पठ् से लिट् में पूर्वोक्त सभी कार्य करने के बाद 'अत उपधायाः' से उपधा अ की वृद्धि । ] आट, आटतुः आटुः । [ अट् + लिट् आदि करते पर द्वित्व, हलादि शेष अ अट् + अ, 'अत आदेः' से अभ्यास का दीर्घ आ अट् + अ, सवर्णदीर्घ—आट् + अ ]

आदि शेष निमित्त है जिसका ऐसा यह अनादि का लोप विहित है, इनमें अभ्यास जाति के आश्रयण से कहीं भी वर्त्तमान आदि हल् सर्वत्र अनादि हल् की निवृत्ति ( लोप ) करता है । [ भाव यह है कि यह सूत्र आदि का शेष विधान नहीं करता है अपितु इसको निमित्त बनाकर अनादि हल् के लोप का विधान करता है और नियम फलित होता है आदि ही हल् की अवस्थिति रहती है अनादि की नहीं । ]

**अपरे तु ब्रुवते—शेषशब्दोऽयं निवृत्त्या विशिष्टमवस्थानमाह। तदवस्थानमुक्तितो यद्यपि प्रधानम्, अविधेयत्वात्तु तदप्रधानम्, निवृत्तेरेव तु विधेयत्वात्प्रधानम्। तत्रायमर्थोऽस्य जायते—अभ्यासस्यानादेर्हलो निवृत्तिर्भवतीति। सा किमित्यादेरविधेयां सतीमनिवृत्तिमपेक्षिष्यत इति॥**

**न्यासः**

निमित्तोऽयमनादेर्लोपो विधीयेत्, एवं सत्याटतुराटुरित्यत्र लोपो न भवति, निमित्ताभावात्, अभ्यासस्य हलेव तावदादिर्नास्ति, कुतः पुनस्तस्य शेषः? इत्यत आह—**तत्रेत्यादि**। अनादिलोपे कर्त्तव्येऽभ्यासजातिराश्रीयते, नाभ्यासव्यक्तिः। तेन यद्यपि सर्वास्वभ्यासव्यक्तिषु हलादिर्न वर्त्तते, तथापि क्वचिदपि पपाचेत्यादौ वर्त्तमानो हलादिरनादेः सर्वत्राटतुः, आटुरित्येवमादावपि निवृत्तिं करोति; अभ्यासजातेरभिन्नत्वात्। यैव हि पपाचेत्यादावभ्यासजातिः; सैवाटतुः आटुरित्यादावपि।

**अपरे त्वित्यादि**। आटतुः, आटुरित्यादावनादेर्लोपं प्रतिपादयितुमपरे ब्रुवत इति। शेषशब्दोऽयं नावस्थानमात्रमाह, किं तर्हि? निवृत्त्या विशिष्टमवस्थानम्, यद्येवम्, अवस्थानस्य विशेष्यत्वात् प्राधान्यम्, निवृत्तेस्तु विशेषणत्वादप्राधान्यम्। तथा च—प्रधानानुयायित्वादप्राधान्यं गुणानाम्। यत्रैवाभ्यासस्य हलादेरस्थानं पपाचेत्यादौ, तत्रैवानादेर्हलो निवृत्त्या भवितव्यम्, ततः स एव दोषः—आटतुः, आटुरित्यादावनादेर्हलो निवृत्त्या भवितव्यम्, ततः स एव दोषः—आटतुः, आटुरित्यादावनादेर्हलो निवृत्तिर्न प्राप्नोतीति? अत आह—**तदवस्थानमित्यादि**। यद्यपि विशेष्यभूतं तदवस्थानं शेषशब्देनाभिधीयत इत्युक्तितः प्रधानम्, तथाप्यविधेयत्वादप्रधानम्। अविधेयत्वं तु तस्य सिद्धत्वात्। निवृत्तिरेव विशेषणभूतापि विधेयत्वात् प्रधानम्। तथा चोक्तम्—सिद्धमुपकारकं परार्थमङ्गम्, साध्योऽनुपकारकस्त्वङ्गीति कृत्वा प्रधानम्। तत्र निवृत्तौ विधेयत्वात् प्रधानभूतायामयमस्य सूत्रस्यार्थो जायते—'अभ्यासस्यानादेर्हलो निवृत्तिर्भवति' इति। ततश्चासौ विधेयत्वात् प्राधान्यमापन्ना सती **किमित्यादेरविधेयामप्रधानभूतामनिवृत्तिमपेक्षिष्यते**। केन कारणेनापेक्षिष्यते? न केनचि-

**पदमञ्जरी**

ननु शेषोऽवस्थानं तत्त्वादेः प्राप्तमेव, तत्किमेतेन? अत आह—**आदिशेषनिमित्तोऽयमिति**। सत्यम्, 'सिद्धे सत्यारम्भो नियमार्थः', आदिरेव शिष्यते न त्वनादिरिति, ततश्चादिशेषनिमित्तोऽयमनादेर्लोपो विधीयत इति नास्यानर्थक्यमित्यर्थः। यद्यादिशेषो निमित्तमनादिलोपस्य, पपाचेत्यादौ यत्रादेर्हलोऽवस्थानं तत्रैवान्यस्य निवृत्तिः स्यात्, आटतुरित्यादौ तु न स्यादित्यत आह—**तत्रेति**। जातिपक्षे अभ्यासजातावेवादेरवस्थानमपेक्षितम्, न प्रतिव्यक्तीति दोषाभावः।

**अपरे त्विति**। पूर्वत्र पक्षेऽवस्थानमेव शब्दार्थः, नियमाश्रयणात्त्वितरव्यावृत्तिः; अत्र तु पक्षे निवृत्तिरपि गुणभूतशेषशब्देनैवोच्यते। ततः किम्? इत्यत आह—**तदवस्थानमित्यादि**। **उक्तितः** = शब्दव्यापारतः। **अविधेयत्वात्त्विति**। आर्थमप्राधान्यं दर्शयति। निवृत्तिस्तु विपरीतेत्याह—**निवृत्तेरेव त्विति**। लोकेऽपि 'चङ्क्रम्यमाणोऽधीष्वात्र जपंश्चमङ्क्रमणं कुरु' इत्येवमर्थाभेदेऽपि शब्दोद्भेदः प्रतीयते। ततः किम्? इत्यत आह—**तत्रेति**। साविधेयत्वात्प्रधानभूता सती निवृत्तिः। **किमित्यादेरनिवृत्तिमपेक्षिष्यते**। किम्भूताम्? **अविधेयां सतीम्**। अविधेयत्वादप्रधानभूतां सतीमित्यर्थः न प्रधानं गुणानुवर्ति, तस्मादपेक्षाकारण नास्तीत्यर्थः।

**भावबोधिनी**

[ इस पक्ष के अनुसार आदि का अवस्थान शब्दार्थ है और नियम से अन्य = अनादि की अवस्थान और अनादि की निवृत्ति दोनों को 'शेष' शब्द से कहने के लिये यह मत है—] दूसरे विद्वान् तो ऐसा कहते हैं—यह 'शेष' शब्द निवृत्ति के द्वारा विशिष्ट अवस्थान को कहता है। वह अवस्थान यद्यपि उक्ति = शब्दव्यापार से प्रधान है किन्तु विधेय न होने से वह अप्रधान है, जबकि निवृत्ति की ही विधेय होने से प्रधानता है। इसलिये इसका यह अर्थ होता है—अभ्यास के अनादि हल् की निवृत्ति होती है। वह किसलिए आदि की विधेय होती हुई अनिवृत्ति की अपेक्षा करेगा? अर्थात् नहीं करेगा। [ अतः यदि अभ्यास का आदि हल् है तो वह शेष बचता है यदि हल् न होकर

## ३५७८. शर्पूर्वाः खयः ॥ ६१ ॥ (२२५९)

**अभ्यासस्य शर्पूर्वाः खयः शिष्यन्ते, अन्ये हलो लुप्यन्ते । चुश्च्योतिषति । तिष्ठासति । पिस्पन्दिषते । शर्पूर्वा इति किम् ? पपाच । खय इति किम् ? सस्नौ । ॐखर्पूर्वाः खय इति वक्तव्यम्ॐ (म० भा०) ।**

**न्यासः**

दित्यर्थः न हि प्रधानस्य गुणानुयायित्वं युक्तम् । तस्मादसत्यपि हलादेरवस्थानेऽनादेर्लोपेन भवितव्यमिति भावः ॥ ६० ॥

**शर्पूर्वाः खयः** ॥ पूर्वेण शरां शेषे प्राप्ते खयां शेष आरभ्यते । अनादिशेषश्चायमादिशेषं बाधते । न हि शरामवस्थाने खयां शेषशब्दो विशेषणमुपपद्यते । स हि निवृत्त्या विशिष्टमवस्थानमाह—इत्युक्तम् । न चोभयोरवस्थाने निवृत्त्या विशिष्टमवस्थानं भवति । तस्मादादिशेषस्यायमनादिशेषोऽपवादः । **चुश्च्योतिषतीति** । 'श्चुतिर् क्षरणे', सन्, इट् । **तिष्ठासतीति** । 'ष्ठा गतिनिवृत्तौ' । **पिस्पन्दिषत इति** । 'स्पदि किञ्चिच्चलने', अनुदात्तेत्, इदित्त्वान्नुम्, 'पूर्ववत्सनः' इत्यात्मनेपदम् ।

**सस्नाविति** । 'ष्णा शौचे' । पूर्ववण्णल औत्वम् ।

**खर्पूर्वा इत्यादि** । **उचिच्छिषतीति** । 'उच्छी विवासे,' सन्, उछिष् इति स्थिते द्विर्वचनं प्राप्नोति, तुक् च; तत्र वर्णाश्रयेणान्तरङ्गत्वात् तुक् । तस्मिन् कृते, द्विर्वचनं प्राप्नोति, चुत्वञ्च; तत्र परत्वात् द्विर्वचने

**पदमञ्जरी**

**भाष्ये परिहारान्तरम्**—'हल्' इत्येको योगः, 'अत्र लोपः' इति वर्त्तते; स च कर्मसाधनः, यथा 'हल्ङ्याब्भ्यो दीर्घात्' इत्यत्र, अभ्यासस्य हल् लुप्यते, तत आदिः शेषः; यद्वा—'ह्रस्वोहलादिः शेषः' इति संहितापाठ एव, तत्राहलिति पदच्छेदः—अभ्यासोऽहल् भवति, अविद्यमानहल्को भवति, ततः आदिः शेष इति ॥ ६० ॥

**शपूर्वाः खयः** ॥ पूर्वेण शरां शेषे प्राप्ते खयां शेषो विधीयते, तत्रैकाभ्यासविषयेणानादिशेषेणादिशेषो बाध्यते; सत्यपि सम्भवे बाधनं भवतीति न्यायात् । किञ्चासम्भवोऽप्यत्र शक्यते वक्तुम्, कथम् ? शेषशब्दोऽयं निवृत्तिमदवस्थानमाह, न चोभयोरवस्थाने निवृत्त्या विशिष्टमवस्थानं सम्भवति । **चुश्च्योतिषतीति** । 'श्च्युतिर् क्षरणे' । **पिस्पन्दिषत इति** । 'स्पदि किञ्चिच्चलने', अनुदात्तेत् ।

**सस्नाविति** ॥ 'ष्णा शौचे' ।

**भावबोधिनी**

अच् है तो वह भी शेष बचता है केवल आदि से भिन्न हल् या हलों का लोप हो जाता है । इसीलिये 'अक्ष्' धातु में 'क्ष् = क्ष् दोनों अनादि हल् लुप्त हो जाते हैं । ] ॥ ६० ॥

अभ्यास के शर्पूर्वक खय् अर्थात् जिनके पूर्व में शर् प्रत्याहार का कोई वर्ण है ऐसे खय् प्रत्याहार के वर्ण शेष बचते हैं, और दूसरे हलों का लोप हो जाता है । उदा० चुश्च्योतिषति । तिष्ठासति । पिस्पन्दिषते । [ 'श्च्युतिर् क्षरणे' इससे सन् करने पर 'सन्यङोः' से द्वित्व श्च्युत् श्च्युत् + स, यहाँ अभ्यास का खय् = च् उ = चु शेष बचता है श् य् का लोप हो जाता है—चुश्च्युत् + इट् सन ] इसी प्रकार ष्ठा = स्था + सन् में भी द्वित्व के बाद थ स्था + सन्, चर्त्व से थ् का त्, अ का इत्व, ति स्था स । स्पदि, इ लोप नुम्, स्पन्द + सन् द्वित्व के बाद खय् प शेष रहता है—प स्पन्दे + स, आत्मनेपदी होने से 'त' । ]

शर्पूर्वक—इसका क्या फल है ? पपाच । [ डुपचष् पच् यहाँ शर् पूर्व में नहीं है । ] खय् शेष रहता है—इसका क्या फल है ? सस्नौ । [ ष्णा = स्ना + लिट् = तिप् = णल् = औ, द्वित्व के बाद आदि हल् स् ही शेष बचता है क्योंकि यहाँ 'स्ना' में खय् नहीं है । ]

उचिच्छिषतीत्यत्र उच्छेरन्तरङ्गत्वात्तुकि कृते द्विर्वचनम्, तत्र हलादिः शेषे सत्यभ्यासे तकारः श्रूयेत ॥

**३५७९. कुहोश्चुः ॥ ६२ ॥ (२२४५)**

**अभ्यासस्य कवर्गहकारयोश्चवर्गादेशो भवति । चकार । चखान । जगाम । जघास । हकारस्य— जहार । जिहीर्षति । जहौ ॥**

**न्यासः**

कर्तव्ये चुत्वस्यासिद्धत्वाद् द्विर्वचनं प्राप्नोति छिष्-शब्दस्य । तत्र छकारस्य शेषो न प्राप्नोति; शर्पूर्वत्वात् । न ह्ययं तकारः शर्भवति, ततश्च पूर्वेण हलादिशेषे कृते सत्यभ्यासे तकार श्रूयेत । अथापीदमस्ति—'पूर्वत्रासिद्धीयमद्विर्वचने' इति पूर्वं चुत्वं पश्चाद् द्विर्वचनं क्रियते, तथापि हलादिशेषेण छकारे निवृत्ते 'निमित्तापाये नैमित्तिकस्याप्यपायः' इति चुत्वे निवृत्ते उचिच्छिषतीत्यत्र तकार एवाभ्यासे श्रूयेत । तस्मात् खर्पूर्वाः खय इति वक्तव्यम् । एवं हि सतिच्छकारस्य शेषे कृते तकारो निवर्त्तत इति न भवत्यनिष्टप्रसङ्गः ॥ ६१ ॥

**कुहोश्चुः ॥ चखानेति ।** 'खनु अवदारणे', द्विर्वचनम्, तस्य चुत्वम्—छकारः, 'अभ्यासे चर्च' इति छकारस्य चकारः । **जघासेति ।** 'लिट्यन्यतरस्याम्'—इत्यदेर्घस्लादेशः, अभ्यासस्य चुत्वम् । नादवतो महाप्राणस्य स्थाने तादृश एव झकारः, तस्यापि जश्त्वम्—जकारः । **जहारेति ।** 'हृञ् हरणे' । **जिहीर्षतीति ।** 'इको झल्' इति सनः कित्वम्, अज्झनगमां सनि' इति दीर्घत्वम्, 'ॠत इद्धातोः' इतीत्वम्, रपरत्वम्, हलि च इति दीर्घत्वम्, हीर्ष—इत्यस्य द्विर्वचनम् ॥ ६२ ॥

**पदमञ्जरी**

**खर्पूर्वा इति ।** सूत्रे शर्ग्रहणमपनीय खर्ग्रहणं कर्त्तव्यमित्यर्थः । **उचिच्छिषतीति ।** 'उच्छी विवासे' । **अन्तरङ्गत्वादिति ।** उपदेशानन्तरमेव प्राप्तत्वादन्तरङ्गत्वात्तुकि कृते द्विर्वचनमिति । तच्च 'पूर्वत्रासिद्धम्' इति चुत्वस्यासिद्धत्वात् सतुक्क एव भवति, तत्र कृते यद्यत्र हलादिशेषः स्यात्, अभ्यासः तकारे श्रूयेत । एतच्च 'पूर्वत्रासिद्धीयमद्विर्वचने' इत्येतदनाश्रित्योक्तम् । तदाश्रयणे तु चुत्वे कृते तस्य सिद्धत्वात् च्छिषशब्दस्य द्विर्वचने चकारशेषेणैव रूपं सिध्यति; न चेदमस्ति—'निमित्ताभावे नैमित्तिकस्याप्यभावः' इति, येन चुत्वं निवर्त्तते ॥ ६० ॥

**कुहोश्चुः ॥ चखानेति ।** खकारस्य झकारः, तस्य 'अभ्यासे चर्च' इति चकारः । **जघासेति ।** घकारस्य झकारः, तस्य जश्त्वम्—जकारः । **जिहीर्षतीति ।** 'इको झल्' इति सनः कित्वम्, हकारस्यापि झकारः, तस्य जश्त्वम् ॥ ६२ ॥

**भावबोधिनी**

* खर्पूर्वक खय् शेष बचते हैं—ऐसा कहना चाहिए । * उदा० उचिच्छीषति—यहाँ 'उच्छ' से अन्तरङ्ग होने के कारण तुक् करने के बाद द्वित्व होता है, इसमें हलादि शेष होने पर अभ्यास में तकार सुनाई देने लगेगा । [ अतः खर्पूर्वक का खय् शेष बचता है अन्य का लोप होता है । भाव यह है कि 'उच्छी विवासे' इस धातु के सन् में उछ् + इट् + सन् = उछिष में द्वित्व और तुक् दोनों की प्राप्ति होती है । इनमें अन्तरङ्ग होने से तुक् पहले ही होता है । तुक् कर देने पर द्वित्व और 'स्तोः श्चुना श्चुः' से चुत्व की प्राप्ति है । अन्तरङ्ग होने से चुत्व होता है परन्तु द्विर्वचन की कर्तव्यता में चुत्व असिद्ध हो जाता है—उत् छिष् का ही द्वित्व प्राप्त होगा । यहाँ आदि हल् 'त्' शेष बचेगा, छ का का लोप हो जायगा क्योंकि शर्पूर्वक नहीं है । वार्तिक मान लेने पर 'छ' का चर्त्व करने से 'च्' सुनाई देगा ।

वास्तव में ''पूर्वत्रासिद्धीयमद्विर्वचने'' इस वचन को न मानने पर ही प्रस्तुत वार्तिक की आवश्यकता है । अन्यथा उच्छिष् में श्चुत्व होने से स्वतः आदि हल् 'च' अभ्यास में सुनाई देता है । ] ॥ ६१ ॥

अभ्यास के कवर्ग और हकार का चवर्ग आदेश होता है । उदा० चकार । चखान । [ कृ + लिट् में द्वित्व, अभ्यास कार्य के बाद कृ + अ, में क् का च् होता है च कृ + अ खन् + लिट् में भी द्वित्व, अभ्यासकार्य के बाद चुत्व से

### ३५८०. न कवतेर्यङि ॥ ६३ ॥ (२६४१)

**कवतेरभ्यासस्य यङि परतश्चुर्न भवति । कोकूयते उष्ट्रः । कोकूयते खरः ।**

**'कवतेः' इति विकरणनिर्देशः कौतेः, कुवतेश्च निवृत्त्यर्थः । तयोश्चुत्वमेव भवति—चोकूयते ॥**

**यङीति किम् ? चुकुवे ॥**

**न्यासः**

**न कवतेर्यङि** ॥ पूर्वेण प्राप्तस्य चुत्वस्यायं निषेधः । **कोकूयत इति** । 'अकृत्सार्वधातुकयोः' इति दीर्घः, 'गुणो यङ्लुकोः' इत्यभ्यासस्य गुणः ।

अथ विकरणनिर्देशः किमर्थः, न 'कोः' इत्येवोच्येत ? इत्यत आह—**कवतेरित्यादि** । 'कुङ् शब्दे' इति तौदादिकः, 'कु शब्दे' इत्यादादिकः 'कुङ्' इति भौवादिकः शब्दार्थ एव; तत्र भौवादिकस्य ग्रहणं यथा स्यात्, इतरयोर्मा भूदित्येवमर्थो विकरणनिर्देशः । ननु चानयोर्निवृत्तेरेतत् फलम्—चोकूयत इत्येतदपि रूपं यथा स्यादिति, एतच्च 'कोः' इत्यपि निर्देशे निरनुबन्धकपरिभाषया कौतेरेव निरनुबन्धकस्य ग्रहणे सति सिध्यत्येव, तस्मात् 'कोः' इत्येवं निर्देशः कर्त्तव्यः ? नैतदेवम्; सत्यपि हि शब्दार्थत्वे भिद्यत एवैषामभिधेयम् । तथा हि—कवतिस्तावदव्यक्तशब्दे वर्तते—उष्ट्रः कोकूयत इति; कुवतिरप्यार्त्तस्वरे वर्तते—चोकूयते वृषल इति, पीडित इत्यर्थः; कौतिस्तु शब्दमात्रे । तस्माद्विशिष्टार्थस्य परिग्रहो यथा स्यादित्येवमर्थो विकरणनिर्देशः कर्तव्यः । ननु लुग्विकरणपरिभाषया कौतेर्न भविष्यतीति, तत् किमर्थं तन्निवृत्त्यर्थता विकरणस्योपपद्यते ? एवं मन्यते—कुवतिनिवृत्त्यर्थोऽवश्यं विकरणनिर्देशः कर्तव्यः, सोऽन्यार्थः क्रियमाणः कौतेर्निवृत्त्यर्थोऽपि भवति, तेन लुग्विकरणपरिभाषात्र कौतेर्निवृत्त्यर्थमाश्रयितव्या न भवति ।

**चुकुव इति** । पूर्ववत् तशब्दस्येश्, 'अचि श्नुधातु' इत्यादिनोवङ् ॥ ६३ ॥

**पदमञ्जरी**

**न कवतेर्यङि** ॥ **कवतेरित्यादि** । 'कूङ् शब्दे' इति तुदादिः, 'कु शब्दे' इत्यदादिः, 'कुङ् खुङ्' इति भूवादिः शब्दार्थ एव । तत्रासति विकरणनिर्देशे 'कोः' इत्युच्यमाने त्रयाणामपि ग्रहणं स्याद् । अथ

**भावबोधिनी**

ख का छ होता है इसके बाद 'अभ्यासे चर्च' सूत्र से 'छ' का 'च' होता है—च खन् + अ, उपधावृद्धि—चखान । ] जगाम । [ गम् + लिट् ] जघास । [ अद् + लिट्, लिट्यन्यतरस्याम्' सूत्र से घस् आदेश—घस् + लिट् द्वित्व आदि के घ का झ, जश्त्व से झ का ज—जघास । ] हकार का उदा० जहार । [ हृ + लिट् = तिप्, द्वित्व आदि के बाद 'ह्' का चुत्व से झ, पुनः जश्त्व से ज—जहृ + अ ] जिहीर्षति [ हृ + सन्, कित् होने से 'अज्झनगमां सनि' से दीर्घ, 'ऋत इद्धातोः' सूत्र से ऋ का इत्व, रपर 'हलि च' से दीर्घ—हीर् + द्वित्व, अभ्यासकार्य के बाद ह का झ, जश्त्व से ज—जिहीर्ष + लट् ] जहौ । [ ओहाक् त्यागे–हा + लिट्, द्वित्वादि के बाद चुत्व, जश्त्व जहा + लिट् = तिप् = णल् = औ, वृद्धि—जहौ । ] ॥ ६२ ॥

कवति [ कुङ् शब्दे इस भ्वादिगणीय ] के अभ्यास का चुत्व यङ् परे नहीं होता है । उदा० कोकूयते उष्ट्रः । कोकूयते खरः । [ कु + यङ्, द्वित्व, अभ्यासकार्य, 'गुणो यङ्लुकोः' से अभ्यास का गुण—कोकु + य, अकृत्सार्वधातुकयोः' से दीर्घ, प्राप्त चुत्व का निषेध कोकूय + लट् = त, एत्व । ]

'कवतेः' यह [ शप् ] विकरण का निर्देश 'कौति' ( 'कु शब्दे' इस अदादिगणीय ) का तथा 'कुवति' ( कुङ् शब्दे' इस तुदादिगणीय ) की निवृति के लिये है । इन दोनों का तो चुत्व ही होता है—चोकूयते ।

यङ्परे— इसका क्या फल है ? चुकुवे । [ कु + लिट् = त, एश् में द्वित्व के बाद चुत्व होता ही है क्योंकि यङ् परे नहीं है । ] ॥ ६३ ॥

**३५८१. कृषेश्छन्दसि ॥ ६४ ॥ (३५९५)**

कृषेश्छन्दसि विषये यङि परतोऽभ्यासस्य चुर्न भवति। करीकृष्यते यज्ञकुणपः। छन्दसीति किम्? चरीकृष्यते कृषीवलः॥

**३५८२. दार्धर्तिदर्धर्तिदर्धर्षिबोभूतुतेतिक्तेऽलर्ष्यापनीफणत्संसनिष्यदत् करिक्रत्कनिक्रदद्भरिभ्रद्दविध्वतोदविद्युतत्तरित्रतः सरीसृपतं वरीवृजन्मर्मृज्यागनीगन्तीति च ॥ ६५ ॥ (३४९६)**

दार्धर्ति, दर्धर्ति, दर्धर्षि, बोभूतु, तेतिक्ते, अलर्षि, आपनीफणत्, संसनिष्यदत्, करिक्रत्, कनिक्रदत्, भरिभ्रत्, दविध्वतः, दविद्युतत्, तरित्रतः, सरीसृपतम्, वरीवृजत्, मर्मृज्य, आगनीगन्ति—इत्येतानि अष्टादश

**न्यासः**

कृषेश्छन्दसि। करीकृष्यत इति॥ 'कृष विलेखने'। 'रीगृदुपधस्य' इति रीगागमः॥ ६४॥

**दार्धर्तिदर्धर्तिदर्धर्षिबोभूतुतेतिक्तेऽलर्ष्यापनीफणत्संसनिष्यदत्करिक्रत्कनिक्रदद्भरिभ्रद्दविध्वतोदविद्युतत्तरित्रतः सरीसृपतंवरीवृजन्मर्मृज्यागनीगन्तीति च॥**

चकारश्छन्दसीत्यनुकर्षणार्थः। **धारयतेरिति**। 'धृञ् धारणे,' 'धृङ् अवस्थाने,' 'धृङ् अवध्वंसने'—इत्येतेषां ण्यन्तानां ग्रहणम्। **धृङो वेति**। अनन्तरोक्तयोरण्यन्तयोः। **श्लौ यङ्लुकि वेति**। तत्र तावद् **दाधर्तीति**—यदा धारयतेः श्लौ निपात्यते, तदा णिलोपोऽभ्यासस्य दीर्घत्वं निपात्यते। यदा तु यङ्लुकि, तदाऽनेकाच्त्वाद् यङ् न प्राप्नोति, सोऽपि निपात्यते, उपधाह्रस्वत्वञ्च। णिलोपस्त्वार्धधातुकत्वादेव यङः

**पदमञ्जरी**

तौदादिको दीर्घान्तः? एवमपि द्वयोर्ग्रहणं स्यात्। न च निरनुबन्धकत्वादादादिकस्यैव ग्रहणम्; लुग्विकरणत्वात्। तस्माद्धौवादिकस्यैव यथा स्यादिति विकरणनिर्देशः॥ ६३-६४॥

**दार्धर्तिदर्धर्तिदर्धर्षिबोभूतुतेतिक्तेऽलर्ष्यापनीफणत्संसनिष्यदत्करिक्रत्कनिक्रदद्भरिभ्रद्दविध्वतोदविद्युतत्तरित्रतःसरीसृपतंवरीवृजन्मर्मृज्यगनीगन्तीति च।** **धारयतेरिति**। धृङ् अवस्थाने' ण्यन्तः। **धृङो वेति**। स एव प्रकृत्यन्तरम्। **श्लौ यङ्लुकि चेति**। 'श्लौ' इत्येतद्धारयतेः, धृङा वत्युभाभ्यां सम्बध्यते। 'यङ्लुकि च' इत्येतत्तु 'धृङो वा' इत्यनेनैव। तदयमर्थः—दाधर्तीति धारयतः श्लौ णिलुगभ्यासदीर्घत्वं च निपात्यते, धृङो वा श्लावभ्यासदीर्घत्वम्। अत्र परस्मैपदमपि निपात्यम्, तस्यैव वा यङ्लुकि अभ्यासदीर्घत्वं निपात्यते

**भावबोधिनी**

यङ् परे रहते कृष् के अभ्यास का चुत्व वेदविषय में नहीं होता है। उदा० करीकृष्यते यज्ञकुणपः। [ कृष् + यङ् द्वित्व, अभ्यासकार्य "रीगृदुपधस्य च" सूत्र से रीक् आगम क री कृष् + य, प्राप्त चुत्व का निषेध—करीकृष्यते। ]

वेदविषय में—इसका क्या फल है? चरीकृष्यते कृषीवलः। [ लौकिक प्रयोग में अभ्यास का चुत्व होता होता ही है। ॥ ६४॥

(१) दार्धर्ति, (२) दर्धर्ति, (३) दर्धर्षि, (४) बोभूतु, (५) तेतिक्ते, (६) अलर्षि, (७) आपनीफणत्, (८) संसनिष्यदत्, (९) करिक्रत्, (१०) कनिक्रदत्, (११) भरिभ्रत्, (१२) दविध्वतः, (१३) दविद्युतत्, (१४) तरित्रतः, (१५) सरीसृपतम्, (१६) वरीवृजत्, (१७) मर्मृज्य, (१८) आगनीगन्ति—ये १८ शब्द वेदविषय में निपातित होते हैं। (१-३) दार्धर्ति, दर्धर्ति, दर्धर्षि—इनमें 'धारि' (णिजन्त धृङ् अवस्थाने, 'धृङ् अवध्वंसने और 'धृञ् धारणे') से अथवा [ अणिजन्त ] 'धृङ्' से श्लु विकरण में या यङ्लुक् में अभ्यास का दीर्घ होता है और णि का लोप होता है। [ धृ + णिच् = से शप् का श्लु निपातित होने से द्वित्व अभ्यास कार्य दधृ + इ + ति—अभ्यास का दीर्घ णि (इ) लोप, दाधृति, ऋ का गुण, रपर—दार्धर्ति। यहाँ परस्मैपद भी निपातित होता है। जब धृङ् से यङ्लुक् माना

छन्दसि विषये निपात्यन्ते । दार्धर्ति दर्धर्ति दर्धर्षीति—धारयतेः, धृङो वा श्लौ यङ्लुकि वा अभ्यासस्य दीर्घत्वं णिलोपश्च । दाधर्ति । एवं दर्धर्ति ( ऋ० ५।८४।३ )—श्लौ रुगभ्यासस्य निपात्यते । तथा दर्धर्षीति । अत्र च यल्लक्षणेनानुपपन्नं तत्सर्वं निपातनात्सिद्धम् ।

बोभूत्विति—भवतेर्यङ्लुगन्तस्य लोटि गुणाभावो निपात्यते । नैतदस्ति प्रयोजनम्; अत्र 'भूसुवो-स्तिङि' ( ७।३।८८ ) इति गुणाभावः सिद्धः ? ज्ञापनार्थं तर्हि निपातनमेतत् । ज्ञापयति—अन्यत्र यङ्लुगन्तस्य गुणप्रतिषेधो न भवतीति । 'बोभोति, बोभवीति' ( ऋ० ३।५३।८ ) ।

**न्यासः**

'णेरनिटि' इत्येवं सिद्धः । अभ्यासस्य दीर्घत्वमपि 'दीर्घोऽकितः' इत्येवं सिद्धम् । **दर्धर्ति, दर्धर्षीति** । अत्रापि यदा धारयतेः श्लौ तदाभ्यासस्य रुगागमो णिलोपश्च श्लुस्तु सर्वत्र 'बहुलं छन्दसि' इत्यनेनैव वेदितव्यः । यदा तु यङ्लुकि, तदा 'दीर्घोऽकितः' इत्यनेन दीर्घत्वे प्राप्ते तदभावश्च निपात्यते । यदा धृङः—दाधर्तीति श्लौ निपात्यते, तदा द्विर्वचने कृतेऽभ्यासस्य दीर्घत्वं निपात्यते । यदा तु तस्यैव धृङो यङ्लुकि, तदाभ्यासस्य 'ऋतश्च' इति प्राप्तस्य रुगादेरभावो निपात्यते । **दर्धर्ति, दर्धर्षीति** । अत्रापि यदा धृङ्, श्लौ, तदाभ्यासस्य रुगागमो निपात्यते; यदा यतु ङ्लुकि, तदा पूर्ववत् प्राप्तस्य दीर्घत्वस्याभावो निपात्यते, न तु रुगागमः; तस्य हि 'रुग्रिकौ च लुकि' इत्येवं सिद्धत्वात् । परस्मैपदं च 'व्यत्ययो बहुलम्' इति ।

**बोभूत्विति** । **अन्यत्रेति** । लोट्प्रथमपुरुषस्यैकवचनापेक्षमन्यत्वं वेदितव्यम् । **बोभवीतीति** । अदादित्वच्छपो लुक् 'बहुलं छन्दसि' इति बहुलवचनत्वाद्भवति, 'यङो वा' इति पक्ष ईट् ।

**पदमञ्जरी**

इति । दर्धर्तीत्यत्र तु यङ्लुक् । पक्षे दाधर्तीति । निपातनेन प्राप्तस्य दीर्घत्वस्याभावो निपात्यते, 'रुग्रिकौ च लुकि' इत्येव रुक् सिद्धः । श्लुपक्षे तु रुगपि निपात्यः । दर्धर्षीत्यत्र यङ्लुक्, पक्षे न किञ्चिन्निपात्यम् ।

**बोभूत्विति** । यङ्लुगन्ताल्लोट् । **बोभवीतीति** । लट्, यङो वा' इति पक्षे ईट् ।

**भावबोधिनी**

जाता है तब णिजन्त के अनेकाच् होने से अप्राप्त यङ् का भी निपातन होता है, इसमें उपधा का ह्रस्व भी निपातित होता है ।'' पदमञ्जरीकार ने 'श्लौ' इसका सम्बन्ध 'धारयति = धृङ् अवस्थाने' + णिच् के साथ और 'धृङ् अवध्वंसने' इसके अर्थात् दो के साथ ही माना है । 'यङ्लुकि च' इसका सम्बन्ध केवल 'धृङ् अवध्वंसने' इसी के साथ माना है । न्यासकार सामान्यरूप से सभी का दोनों से सम्बन्ध मानते हैं । ]

दाधर्ति—इसी के समान दर्धर्ति—इसमें [ 'धारयति' से ] श्लु [ फलस्वरूप द्वित्व, अभ्यासकार्य के बाद दधृ + ति में ] अभ्यास को रुक् का आगम निपातित होता है—द र् धृ + ति, गुण, रपर दर्धर्ति । इसी प्रकार दर्धर्षि । [ यहाँ मध्यमपुरुष एकवचन में 'सिप्' प्रत्यय है । ] इनमें सूत्र द्वारा जो भी अनुपपन्न है वह सभी कुछ निपातन से सिद्ध होता है । [ जब यङ्लुक् है तब द्वित्वादि के बाद 'दीर्घोऽकितः' इससे अभ्यास का दीर्घ प्राप्त है उसका अभाव भी निपातित होता है ।

न्यासकार तथा पदमञ्जरीकार दोनों ने उक्त रूपों की प्रक्रिया का विस्तृत वर्णन किया है । उसे वहीं देखना चाहिये । ]

(४) बोभूतु—भू धातु यङ्लुगन्त का लोट् में गुणाभाव निपातित होता है । [ भू + यङ्लुक्, प्रत्ययलक्षण से द्वित्व तथा अभ्यासकार्य आदि के बाद बोभू + ति में प्राप्त गुण का अभाव निपातित किया जाता है । ] यह प्रयोजन नहीं है, यहाँ 'भूसुवोस्तिङि सूत्र से गुण का अभाव सिद्ध ही है ? तब तो यह ( गुणाभाव ) निपातन ज्ञापन के लिये है । ज्ञापित करता है—इससे भिन्न रूप में यङ्लुगन्त को गुणप्रतिषेध नहीं होता है—बोभोति, बोभवीति । [ यङ्लुक् के अदादि मान लेने के कारण शप् का लुक् होता है । 'यङो वा' इस सूत्र से वैकल्पिक ईट् का आगम—बोभू + ईति, गुण, अवादेश—बोभवीति । ईट् न होने पर बोभोति । ]

तेतिक्ते ( ऋ० ४।२३।७ ) तिजेर्यङ्लुगन्तस्यात्मनेपदं निपात्यते । यङो ङित्वात् प्रत्ययलक्षणेनात्मनेपदं सिद्धमेव ? ज्ञापनार्थं तु आत्मनेपदनिपातनम् —'अन्यत्र यङ्लुगन्तादात्मनेपदं न भवति' ।

अलर्षीति—इयर्तेर्लटि सिपि अभ्यासस्य हलादिः शेषापवादो रेफस्य लत्वं निपात्यते । सिपा निर्देशोऽतन्त्रम्, तिप्यपि दृश्यते—'अलर्ति दक्षः' ( ऋ० ८।४८।८ ) ।

आपनीफणदिति ( ऋ० ४।४०।४ )—फणतेराङ्पूर्वस्य यङ्लुगन्तस्य शतर्यभ्यासस्य नीगिनपात्यते ।

संसनिष्यददिति ( मै० १।११।२ )—स्यन्देः संपूर्वस्य यङ्लुक्, शतर्यभ्यासस्य निक्, धातुसकारस्य षत्वं निपात्यते । न चास्य सम्पूर्वता तन्त्रम्, अन्यत्रापि हि दृश्यते--आसनिष्यददिति ।

न्यासः

तेतिक्त इति । तिजेरिति 'तिज निशाने' इत्येतस्य । ननु च यङो ङित्वात् प्रत्ययलक्षणेनात्मनेपदं सिद्धम्, एतत् किमर्थं निपात्यते ? इत्याह—यङो ङित्वादित्यादि । ज्ञापनार्थमात्मनेपदं सिद्धम् । ज्ञापनार्थमात्मनेपदं निपात्यत इति दर्शयति । ज्ञापनस्य तु प्रयोजनम्—अन्यत्र यङ्लुगन्तादात्मनेपदं न भवतीति भावः,—बोभवतीति ।

अलर्षीति । 'ऋ सृ गतौ'—इत्यस्य जौहोत्यादिकस्य 'उरत्' इत्यत्त्वे कृते रपरत्वे च हलादिशेषः प्राप्नोति, तदपवादो रेफस्य लत्वं निपात्यते । किं पुनः कारणं सिपा निर्देशोऽयमतन्त्रमित्येवं व्याख्यायते ? इत्याह—तिप्यपीत्यादि ।

फणतेरिति । 'फण गतौ'—इत्येतस्य । स्यन्देरिति । 'स्यन्दू प्रस्रवणे'—इत्येतस्य । किमर्थं पुनः सम्पूर्वस्यातन्त्रत्वं व्याख्यायते ? इत्याह—अन्यत्रापि हीत्यादि ।

पदमञ्जरी

प्रत्ययलक्षणेनेति । यद्यपि 'अनुदात्तङितः' इति ङित्वनिमित्तमात्मनेपदं न प्रत्ययनिमित्तम्; तथापि लोलूयते इत्यादौ यङन्तादात्मनेपदम्, तत्प्रत्ययस्य ङित्वादिति प्रत्ययलक्षणं भवत्येव । एवं चादादिषु 'चर्करीतं परस्मैपदम्' इति परस्मैपदग्रहणमनुवादः । कर्त्तर्येव चेदमात्मनेपदं नियम्यते इति भावकर्मणोर्यङ्लुगन्तादात्मनेपदं भवत्येव ।

भावबोधिनी

(५) तेतिक्ते—'तिज निशाने' धातु से यङ्लुगन्त का आत्मनेपद निपातित होता है । [ तिज् + यङ् लुक्, द्वित्व अभ्यासकार्य तेतिज् + लट् आत्मनेपद हो जाने से 'त' एत्व, कुत्व, चर्त्व—तेतिक्ते । ] यहाँ यङ् के ङित् होने से प्रत्ययलक्षण से आत्मनेपद सिद्ध ही है ? तो यह आत्मनेपद का निपातन ज्ञापन के लिये है—'अन्यत्र कहीं भी यङ्लुगन्त से आत्मनेपद नहीं होता है । [ इसी कारण यङन्त से तो आत्मनेपद होता है किन्तु यङ्लुगन्त से नहीं होता है । केवल इसी शब्द से होता है । ]

(६) अलर्षि—( जुहोत्यादिगणीय 'ऋ गतौ' ) 'इयर्ति' से लट् सिप् में अभ्यास के हलादि शेष का अपवाद रेफ का लत्व निपातित होता है । [ ऋ + श्लु + लट् = सिप् द्वित्व ऋ ऋ + सि, 'उरत्' सूत्र से अभ्यास का अकार रपर अर् ऋ सि, ऋ का गुण, रपर अर् अर् + सि । यहाँ अभ्यास का आदि हल् शेष, अन्य का लोप न होकर रेफ का लत्व निपातित होता है—अल् अर् सि, षत्व—अलर्षि । ] सिप् द्वारा निर्देश तन्त्र नहीं है, क्योंकि तिप् में भी देखा जाता है—अलर्ति दक्षः । [ इनमें 'अर्तिपिपर्त्योश्च' सूत्र द्वारा प्राप्त अभ्यास के इत्व का अभाव भी निपातित समझना चाहिए । ]

(७) आपनीफणत्—आङ्पूर्वक फण् धातु के यङ्लुगन्त का शतृ प्रत्यय में नीक् आगम निपातित होता है । [ आ फण् + यङ् लुक्, द्वित्व, अभ्यासकार्य, चर्त्व—आ प फण् + शतृ = अत्, नीक् का आगम—आपनीफणत् । ]

(८) संसनिष्यदत्—सम्पूर्वक 'स्यन्द' यङ्लुक् शतृ में अभ्यास को 'निक्' का आगम और धातु के स का षकार निपातित होता है । [ स्यन्द + यङ् लुक्, द्वित्व, हलादिशेष—स स्यन्द + शतृ, निक् = नि आगम, षत्व,

करिक्रदिति ( ऋ० १।१३१।३ )—करोतेर्यङ्लुगन्तस्य शतरि चुत्वाभावः, अभ्यासककारस्य रिगागमो निपात्यते।

कनिक्रददिति ( ऋ० १।१२८।३ )—क्रन्देर्लुङि च्लेरङादेशो द्विर्वचनमभ्यासस्य चुत्वाभावो निगागमश्च निपात्यते। तथा चास्य हि विवरणं कृतम्। अक्रन्दीदिति भाषायाम्।

भरिभ्रदिति ( ऋ० १०।४५।७ )—बिभर्तेर्यङ्लुगन्तस्य शतरि 'भृञामित्' इति इत्वाभावो जश्त्वाभावोऽभ्यासस्य रिगागमो निपात्यते।

दविध्वत इति—ध्वरतेर्यङ्लुगन्तस्य शतरि जसि रूपमेतत्। अत्राभ्यासस्य विगागम ऋकारलोपश्च निपात्यते। 'दविध्वतो रश्मयः सूर्यस्य'। ( ऋ० ४।१३।४ )

**न्यासः**

करिक्रदिति। 'डुकृञ् करणे'। यणादेशे कृतेऽनृकारान्तत्वाद् 'ऋतश्च' इत्यभ्यासस्य रिगागमो न प्राप्नोति, स निपात्यते।

क्रन्देरिति। 'कदि क्रदि क्लदि आह्वाने रोदने च' इत्येतस्य। कथं पुनर्ज्ञायते—लुङ्येतन्निपातनम्? इत्याह—अस्य हीत्यादि। यस्माल्लुङन्तेन क्रन्दतेरर्थो निर्दिश्यते, ततो ज्ञायते—लुङ्येतन्निपातनमिति। अत्र चाभ्यासस्य रीगागमो निपात्यत एव।

बिभर्त्तेरिति। 'डुभृञ् धारणपोषणयोः'—इत्यस्य।

ध्वरतेरिति। 'ध्वृ हूर्च्छने'।

**पदमञ्जरी**

करिक्रदिति। अत्र चुत्वाभाव एव निपात्यः, रिगागमस्तु 'रुग्रिकौ च' इत्येव सिद्धः। तथा चास्येति। अस्य मन्त्रपदस्य ब्राह्मणे विवरणम्।

**भावबोधिनी**

अनुनासिक न् का लोप—सनिष्यद् अत्। ] इसका सम्पूर्वक होना तन्त्र = अनिवार्य नहीं है क्योंकि अन्यत्र भी ऐसा देखा जाता है—आसनिष्यदत्।

(९) करिक्रत्—कृ यङ्लुगन्त का शतृ में चुत्वाभाव और अभ्यास के ककार को 'रिक्' आगम निपातित होता है। [ कृ + यङ्लुक्, द्वित्व कृ + कृ 'उरत्' से ऋ का अत्व, रपर, हलादिशेष ककृ + शतृ = अत्, 'कुहोश्चुः' से प्राप्त चुत्व का अभाव, यण् अभ्यास क को रि आगम, करि क्र् + अत्, = करिक्रत्। यहाँ यण् करने पर ऋगन्त न होने से रिक् प्राप्त नहीं है, निपातित किया जाता है। ]

(१०) कनिक्रदत्—क्रन्द् + लुङ् में च्लि का अङ् आदेश, द्वित्व, अभ्यास का चुत्वाभाव और निक् का आगम निपातित होता है। [ क्रन्द् + लुङ्, च्लि का अङ क्रन्द् + अ + ति, द्वित्व आदि के बाद क क्रन्द् + अ + ति, न् लोप, चुत्वाभाव, निक् = नि आगम कनिक्रदत् ] ऐसा ही इसका विवरण [ ब्राह्मण-ग्रन्थों में ] किया गया है। भाषा में 'अक्रन्दीत्' ऐसा होता है। [ इसी से यह माना जाता है कि लुङ् का रूप है। अट् आगम का अभाव भी निपातित है। ]

(११) भरिभ्रत्—डुभृञ्-बिभर्ति का यङ्लुगन्त का शतृ प्रत्यय में 'भृञामित्' सूत्र से इत्व का अभाव, जश्त्व का अभाव और अभ्यास को रिक् का आगम निपातित होता है। [ भृ + यङ्लुक्, द्वित्वादि के बाद प्राप्त अभ्यास के इत्व का अभाव भ भृ + शतृ = अत्, जश्त्व का अभाव, यण् भ भ्र् + अत्, रिक् आगम—भरिभ्रत्। ]

(१२) दविध्वतः—'ध्वृ' इसके यङ्लुगन्त का शतृ प्रत्ययान्त का जस् में रूप है। इसमें अभ्यास को 'विक्' का आगम और ऋकारलोप निपातित होता है। उदा० दविध्वतो रश्मयः सूर्यस्य। [ ध्वृ + यङ् लुक् द्वित्व, अभ्यासकार्य द ध्वृ अभ्यास के बाद 'विक्' आगम द विध्वृ + शतृ = अत्, ऋ का लोप भी निपातित होता है—दविध्वत् + जस् = अस्, स् का रुत्व विसर्ग। ]

दविद्युतदिति ( ऋ० ६।१६।४५ )—द्युतेर्यङ्लुगन्तस्य शतरि अभ्यासस्य सम्प्रसारणाभावः, अत्वम्, विगागमश्च निपात्यते ।

तरित्रत इति—तरतेः शतरि श्लौ षष्ठ्येकवचनेऽभ्यासस्य रिगागमो निपात्यते ।

सरीसृपतमिति—सृपेः शतरि श्लौ द्वितीयैकवचनेऽभ्यासस्य रीगागमो निपात्यते ।

वरीवृजदिति ( ऋ० ७।२४।४ )—वृजेः शतरि श्लौ रीगागमो निपात्यतेऽभ्यासस्य ।

मर्मृज्येति—मृजेर्लिटि णलि अभ्यासस्य रुगागमो धातोश्च युगागमो निपात्यते । ततः 'मृजेर्वृद्धिः' ( ७।२।११४ ) न भवति; अलघूपधत्वात् । लघूपधगुणे प्राप्ते वृद्धिरारभ्यते ।

आगनीगन्तीति—आङ्पूर्वस्य गमेर्लटि श्लौ अभ्यासस्य चुत्वाभावो नीगागमश्च निपात्यते । 'वक्ष्यन्ती वेवागनीगन्ती कर्णम्' ( ऋ० १६।७५।३ ) ।

इतिकरणमेवम्प्रकाराणामन्येषामप्युपसंग्रहार्थम् ॥

**न्यासः**

द्युतेरिति । 'द्युत दीप्तौ'—इत्यस्य । सम्प्रसारणाभाव इति । 'द्युतिस्वाप्योः सम्प्रसारणम्' इति सम्प्रसारणं प्राप्नोति, अतस्तदभावो निपात्यते

तरतेरिति । 'तॄ प्लवनतरणयोः'—इत्यस्य ।

सृपेरिति । 'गम्लृ सृप्लृ गतौ'—इत्यस्य ।

वृजेरिति । 'वृजी वर्जने'—इत्येतस्य ।

मर्मृज्येति । 'मृजू शुद्धौ' इत्येतस्य णलि रूपम् । आगनीगन्तीति । एतदपि लटि तिपि ।

इतिकरणस्य प्रकारार्थतां दर्शयितुमाह—एवम्प्रकाराणामित्यादि । दाधर्तिप्रभृतीनामिव येषां छन्दस्यलाक्षणिकं कार्यं दृश्यते त एवम्प्रकारा दाधर्तिसदृशा इत्यर्थः । के पुनस्ते ? गलगर्त्तीत्येवमादयः । 'गॄ निगरणे' इत्येतस्य यङ्लुकि श्लौ वा गलगर्त्तीति रूपम्, अभ्यासस्य चर्त्वाभावः, हलादिशेषापवादः, रेफस्य लत्वं च निपात्यते ॥ ६५ ॥

**पदमञ्जरी**

भरिभ्रदिति । अत्रापि जश्त्वाभाव एव निपात्यः । जसि रूपमिति । 'नाभ्यस्ताच्छतुः' इति नुमः प्रतिषेधः ॥ ६५ ॥

**भावबोधिनी**

(१३) दविद्युतत्—'द्युत' धातु यङ्लुगन्त का शतृ प्रत्यय में अभ्यास के सम्प्रसारण का अभाव होता है, अ होता है तथा विक् का आगम होता है । [ द्युत् + यङ् लुक्, द्वित्व द्युत् द्युत्—दुद्युत्, सम्प्रसारण का अभाव, उ का अ–दद्युत्, विक् का आगम दविद्युत् + शत् = अत्—दविद्युतत् । ]

(१४) तरित्रतः—तॄ से शतृ परे श्लु में षष्ठी-एकवचन में अभ्यास को 'रिक्' का आगम निपातित होता है । [ तॄ + श्लु + शतृ, द्वित्व तॄ तॄ + अत्, 'उरत्' से अभ्यास का अत्व, रपर, हलादिशेष— त तॄ + अत्, रिक् आगम, यण् तरित्र् अत् + ङस् = अस् स् का रुत्व विसर्ग—तरित्रतः । ]

(१५) सृप् से शतृ प्रत्यय द्वितीया एकवचन में अभ्यास को 'रीक्' का आगम निपातित होता है । [ सृप् + श्लु + शतृ, द्वित्व, अभ्यासकार्य—ससृप् + अत्, रीक् का आगम—सरी सृपत् + अम् । ]

(१६) वरीवृजत्—वृज् से शतृ में श्लु परे रीक् आगम अभ्यास को निपातित होता है । [ वृज् + श्लु + शतृ, द्वित्व, अभ्यासकार्य के बाद अभ्यास को 'रीक्' का आगम–वरीवृज् + अत्–वरीवृजत् । ]

(१७) मर्मृज्य—मृज्धातु से लिट्=णल् में अभ्यास को रुक् का आगम तथा धातु को युक् का आगम निपातित होता है । इसके बाद 'मृजेर्वृद्धिः' नहीं होती है क्योंकि लघूपध नहीं रहता है । [ मृज् + लिट् = णल् = अ, द्वित्व अभ्यासकार्य म मृज् + अ, अभ्यास को रुक्=र् आगम, धातु को युक् = य् आगम—मर्मृज् य् अ=मर्मृज्य । ज् य के संयोग से पूर्व गुरु हो जाने से लघूपध न रह पाने से वृद्धि नहीं होती है । ] लघूपध गुण प्राप्त रहते वृद्धि का विधान है ।

(१८) आगनीगन्ति—आङ्पूर्वक गम् से लट् श्लु में अभ्यास के चुत्व का अभाव और नीक् का आगम

३५८३. उरत् ॥ ६६ ॥ ( २२४४ )

ऋवर्णान्तस्याभ्यासस्याकारादेशो भवति । ववृते, ववृधे, शश्रृधे[1] ।

नर्नर्ति, नरिनर्त्ति, नरीनर्ति—इत्येवमादौ 'अभ्यासविकारेषु अपवादो नोत्सर्गान्विधीन्बाधते' (व्या० प० २३ ) इत्युरदत्त्वे कृते रुगादय आगमाः क्रियन्ते ॥

३५८४. द्युतिस्वाप्योः सम्प्रसारणम् ॥ ६७ ॥ ( २३४४ )

द्युति, स्वापि—इत्येतयोरभ्यासस्य सम्प्रसारणं भवति । विदिद्युते । व्यदिद्युतत्[2] । विदिद्योतिषते । विदिद्युतिषते । विदेद्युत्यते ।

न्यासः

उरत् ॥ छन्दसीति निवृत्तम्; पूर्वसूत्रे चकारानुकृष्टत्वात् । ववृते, ववृधे, शश्रृध इति । 'वृतु वर्तने', 'वृधु वृद्धौ', 'श्रृधु शब्दकुत्सायाम्', लिट्; तत्राद्ययोरनुदात्तेत्त्वादात्मनेपदम्, इतरत्र स्वरितेत्त्वात्; पूर्ववदेव द्विर्वचनम्, हलादिशेषे च कृत ऋवर्णान्ततायामुपजातायामद्भावः, रपरत्वम्, हलादिशेषः ।

नर्नर्ति, नरिनर्ति, नरीनर्त्तीत्येवमादौ 'ऋदुपधस्य च' इति, 'रुग्रिकौ च लुकि' इति वा परत्वादपवादेषु कृतेषु रीगादिषु ऋवर्णान्ताभावादनेन न भवितव्यमिति कस्यचिद् भ्रान्तिः स्यात्, अतस्तां निराकर्तुमाह— नर्नर्तीति ॥ ६६ ॥

द्युतिस्वाप्योः सम्प्रसारणम् ॥ हलादिशेषे प्राप्ते तस्यापवादो द्युतिस्वाप्योः सम्प्रसारणमारभ्यते । विदिद्युत इति । 'द्युत दीप्तौ', लिट्, अनुदात्तेत्त्वादात्मनेपदम्, तत्र सम्प्रसारणमनेन, 'सम्प्रसारणाच्च' इति परपूर्वत्वम् । व्यद्युतदिति ण्यन्ताल्लुङ्, च्लेश्चङ्, णिलोपः, उपधाह्रस्वत्वम्, द्विर्वचनम्, अडागमः । विदिद्युतिषते,

पदमञ्जरी

उरत् ॥ ववृत्ते इत्यादौ हलादिशेषे कृते ऋकारान्ततायामुपजातायामद्भावः, रपरत्वे पुनः 'हलादिः शेषः' ।

नर्नर्तीत्यादौ रुगादिषु कृतेषु ऋकारान्तत्वाभावादत्वं न स्यादित्याशङ्क्याह—नर्नर्तीत्यादाविति । यथा चाभ्यासविकारेषु बाधका न बाधन्ते, तथा 'दीर्घोऽकितः' इत्यत्रैव वक्ष्यते ॥ ६६ ॥

द्युतिस्वाप्योः सम्प्रसारणम् ॥ विदिद्युते इति । 'द्युत दीप्तौ' अनुदात्तेत् । व्यदिद्युतदिति । ण्यन्ताल्लुङ् चङि द्विर्वचनम् । विदिद्योतिषते, विदिद्युतिषत इति । 'रलो व्युपधात्' इति सनः कित्त्वविकल्पः ।

भावबोधिनी

निपातित होते हैं—वक्ष्यन्ती वेदागनीगन्ती कर्णम् । [ गम्+श्लु+तिप्, द्वित्व, अभ्यासकार्य गगम् + ति, 'कुहोश्चु' से प्राप्त चुत्व का अभाव और नीक् का आगम—गनीगम् + ति, म् का अनुस्वार, परसवर्ण—आगनीगन्ति । ]

[ सूत्र में ] 'इति' लगाना इसी प्रकार के अन्य लक्ष्यों के संग्रह के लिये है ॥ ६५ ॥

ऋवर्णान्त के अभ्यास का अकार आदेश होता है । उदा० ववृते, ववृधे, शश्रृधे । [ वृत्, वृध्, श्रृध् + लिट् = त = एश् द्वित्व के बाद अभ्यास के ऋ का अ, रपर वर्‌ वृत् + ए, हलादिशेष—ववृत् + ए ] [ नृत् के यङ्लुक में—] नर्नर्ति, नरिनर्ति, नरीनर्ति—आदि शब्दरूपों में 'अभ्यासविकारों में अपवाद शास्त्र उत्सर्ग शास्त्रों का बाध नहीं करते हैं' इसके अनुसार 'उरत्' इससे ऋ का अ करने पर रुक्, रिक्, आगम किये जाते हैं [ नृनृत् + ति में 'ऋदुपधस्य च' रुग्रिकौ च लुकि' सूत्रों द्वारा परवर्ती होने से रुक्, रिक्, रीक् का आगम कर देने पर अभ्यास ऋवर्णान्त नहीं पाता है तब ऋ का अ कैसे होगा ? इसका समाधान है कि पहले अत्व ही किया जाता है बाद में आगम । अतः उक्त रूप बनने में बाधा नहीं है । ] ॥ ६६ ॥

द्युत् और स्वापि—इनके अभ्यास का सम्प्रसारण होता है । उदा० विदिद्युते । [ विपूर्वक द्युत् + लिट् = त = एश्, द्वित्व द्युत् द्युत् + ए, अभ्यास के य् का सम्प्रसारण इ द् इ उत् द्युत् + ए, "सम्प्रसारणाच्च" सूत्र से

१. 'शश्रृधे'—इति मुद्रितपुस्तके नास्ति । २. द्युद्भ्यो लुङि १।३।९१ इति वा परस्मपदे रूपम् ।

**स्वापेः—सुष्वापयिषति ।**

**स्वापिर्ण्यन्तो गृह्यते, तस्याभ्यासनिमित्तेन प्रत्ययेनानन्तर्ये सति सम्प्रसारणमिष्यते । इह न भवति—**

**न्यासः**

**विदिद्योतिषत इति ।** सन्, 'रलो व्युपधात्' इत्यादिना विकल्पेन कित्त्वम् । यदा कित्त्वं नास्ति, तदा लघूपधगुणः, 'पूर्ववत्सनः' इत्यात्मनेपदम् । **सुष्वापयिषतीति ।** 'ञिष्वप् शये', 'णिच् तदन्तात् सन् ।

किं कारणं ण्यन्तस्योदाहरणमुपन्यस्तम् ? इत्यत आह—**स्वापिर्ण्यन्तो गृह्यत इति ।** तेन ण्यन्तस्योदाहरणमुपदर्शितमित्यभिप्रायः । ण्यन्तस्य ग्रहणं स्वापेरिति निर्देशादेव विज्ञायते । न ह्यण्यन्तस्यैवविधो निर्देश उपपद्यते अपि च—अण्यन्तस्य योऽभ्यासस्तस्यानेनैव शास्त्रेण सम्प्रसारणं सिद्धम् । तथा हि—लिटि तावत् 'लिट्यभ्यासस्योभयेषाम्' इत्यनेनैव सिद्धम्, सनि तु 'रुदविद' इत्यादिना सनः कित्त्वे सति वच्यादिसूत्रेण कृतसम्प्रसारण एव सुपिभूतो द्विरुच्येत, यङ्यपि 'स्वपिस्यमिव्येञां यङि' इति कृतसम्प्रसारण एवासौ द्विरुच्यते । तस्मादण्यन्तस्यानेन शास्त्रेण सम्प्रसारणस्य सिद्धत्वात् स्वापिर्ण्यन्तो गृह्यते ।

यदि स्वापिर्ण्यन्तो गृह्यते, तदा स्वापयतेर्ण्वुल—स्वापकः, स्वापकमिच्छतीति क्यच्, स्वापकीय इति स्थिते स्वापकीयितुमिच्छतीति सन्—सिष्वापकीयिषति, अत्रापि सम्प्रसारणं प्राप्नोति ? इत्याह—**तस्येत्यादि ।** तस्य स्वापेरभ्यासस्य निमित्तं यः प्रत्ययस्तेनानन्तर्ये सत्यव्यवधान इदं सम्प्रसारणमिष्यते, तेन सिष्वापकीयिषतीत्यत्र न भवति । न ह्यभ्यासनिमित्तं यः प्रत्ययः इह स स्वापेरनन्तरः; ण्वुला क्यचा च व्यवधानात् ।

कथं पुनरभ्यासनिमित्तेन प्रत्ययेनानन्तर्ये सति सम्प्रसारणं लभ्यते, यावता नायं विशेषः सूत्रोपात्तः ? एवं मन्यते—अभ्यासेनाभ्यासनिमित्तं यः प्रत्ययः स सन्निधापितः, तस्य प्रत्ययविशेषनिमित्तत्वात्; तत्र तेनाभ्यासनिमित्तेन प्रत्ययेन स्वापिरङ्गं विशिष्यते—अभ्यासनिमित्ते प्रत्यये यदङ्गं स्वापिरिति । एवञ्च विशेष्यविशेषणभावे सत्यभ्यासनिमित्ते प्रत्ययेऽनन्तरे सति स्वापेरङ्गस्य योऽभ्यासस्तस्यैव सम्प्रसारणेन

**पदमञ्जरी**

**स्वापिर्ण्यन्तो गृह्यत इति ।** स्वपेर्यो णिज्विहितस्तदन्तस्य ग्रहणम् तेन स्वापं करोतीति णिचि कृते यः स्वापिस्तस्य ग्रहणं न भवति । एतच्च 'स्वापि' इत्युक्ते सहसा प्रथमं तस्यैव प्रतीतेर्लभ्यते । अण्यन्तस्यैव योऽभ्यासस्तस्यानेनैव सम्प्रसारणं सिद्धम् । तथा हि—लिटि तावत्किति 'वचस्वपियजादीनां किति' इति कृतसम्प्रसारणमेव द्विरुच्यते, अकित्यपि 'लिट्यभ्यासस्योभयेषाम्' इत्यस्ति सम्प्रसारणम्, सन्यपि 'रुदविदमुषग्रहिस्वपि' इति किदेव, यङ्यपि 'स्वपिस्यमिव्येञां यङि' इति कृतसम्प्रसारणमेव द्विरुच्यते । अथापि यङ्लुक्यभ्यासस्य सम्प्रसारणं न केनचित्प्राप्तम्, तथापि 'स्वापे' इति निर्देशादेव ण्यन्तस्य ग्रहणम् । **तस्येत्यादि ।** अभ्यासेनात्र स्वनिमित्तं प्रत्ययः सन्निधापितः, तेन स्वापिरङ्गं विशेष्यते—अभ्यासनिमित्ते प्रत्यये यदङ्गं स्वापिस्तस्येति । सिस्वापकीयिषतीत्यत्र चाभ्यासनिमित्तं यः प्रत्ययः सन् न तस्मिन्स्वापिरङ्गम्, यस्मिंश्च स्वापिरङ्गं ण्वुलि न तदभ्यासस्य निमित्तम् । द्युतेस्तु—व्यदिद्युतदिति, अत्राभ्यासस्य निमित्तं यश्चङ् स यद्यपि णिचा व्यवहितः, तथापि सम्प्रसारणमिष्यते ।

**भावबोधिनी**

उ का पूर्व रूप—दित् द्युत् + ए, हलादि शेष ] व्यदिद्युतत् । [ विपूर्वक द्युत्+लङ्, 'पुषादिद्युतादि' से च्लि का चङ् करने पर द्वित्व, अभ्यास का सम्प्रसारण आदि होता है । ] विदिद्योतिषते । विदिद्युतिषते । [ विद्युत् + सन्, द्वित्व तथा अभ्यासकार्य आदि के बाद "रलो व्युपधाद्धलादेः संश्च' से विकल्प से सन् के कित् होने से वैकल्पिक गुण होता है । ] विदेद्युत्यते । [ वि द्युत् + यङ् द्वित्वादि होते हैं । ]

स्वापि का—सुष्वापयिषति । [ 'ञि ष्वप् शयने' स्वप् + णिच्, उपधावृद्धि—स्वापि + सन्, द्वित्व के बाद अभ्यास के व् का सम्प्रसारण 'उ' और 'सम्प्रसारणाच्च' से आ का पूर्वरूप सुप् स्वाप् + इ स, हलादिशेष आदि कार्य होते हैं । ]

स्वापयतेर्ण्वुल् स्वापकः, तस्मात् क्यचि स्वापकीयति, स्वापकीयतेः सन्—सिष्वापकीयिषति ॥

३५८५. व्यथो लिटि ॥ ६८ ॥ ( २३५३ )

व्यथेर्लिटि परतोऽभ्यासस्य सम्प्रसारणं भवति । विव्यथे, विव्यथाते, विव्यथिरे । हलादिशेषेण यकारस्य निवृत्तौ प्राप्तायां सम्प्रसारणं क्रियते, यकारस्य 'न सम्प्रसारणे सम्प्रसारणम्' ( ६।१।३७ ) इति प्रतिषिध्यते । लिटीति किम् ? वाव्यथ्यते ॥

न्यासः

भवितव्यम्, न तु व्यवहितेन प्रत्ययान्तरेण हि यो व्यवहितः प्रत्ययः सन्नभ्यासे निमित्तं तदपेक्षया स्वापिरङ्गं भवति, न च सिष्वापकीयिषतीत्यभ्यासनिमित्तं यः प्रत्ययः स स्वापेरङ्गस्यानन्तरः; यस्तु स्वापेरनन्तरो ण्वुल् तदपेक्षया स्वापिरङ्गं भवति, न चासावभ्यासनिमित्तं भवति । इह तर्हि कस्मान्न भवति—स्वपनं स्वापो घञ्, स्वापं करोतीति णिच्, स्वापयितुमिच्छतीति सन्, सिष्वापयिषतीति ? उच्यते; अकारलोपस्य स्थानिवद्भावात् स्वापेर्योऽभ्यासस्तस्य सम्प्रसारणेन भवितव्यम् । न चाकारलोपस्य स्थानिवद्भावे सति स्वापेरभ्यासः, किं तर्हि ? शब्दान्तरस्य स्वाप इत्येतस्य ॥ ६७ ॥

व्यथो लिटि ॥ विव्यथ इति । 'व्यथ भयचलनयोः', अनुदात्तेत्त्वादात्मनेपदम् । अथ यकारस्य हलादिशेषेण निवृत्त्या भवितव्यम्, वकारस्य सम्प्रसारणेन ? इति कस्यचिद् भ्रान्तिः स्यात्, अतस्तां निराकर्तुमाह—यकारस्येत्यादि ।

वाव्यथ्यत इति । यङ् ॥ ६८ ॥

पदमञ्जरी

द्वन्द्वनिर्दिष्टयोरेतद्वैषम्यं लभ्यते कथम् ?
तस्माद्वक्तव्यमेवैतदिति मन्यामहे वयम् ॥

द्योतकीयतेः सनि अभ्यासस्य प्रसारणं भवति, न वेति चिन्त्यम् ॥ ६७ ॥

व्यथो लिटि ॥ विव्यथे इति । 'व्यथ भयचलनयोः', अनुदात्तेत् । अत्र यकारे हलादिशेषेण निवृत्ते वकारस्य प्रसारणप्रसङ्ग इत्याशङ्क्याह—यकारस्येति ।

इह 'लिट्यभ्यासस्योभयेषाम्' इत्यस्यानन्तरम् 'व्यथः' इति वक्तव्यम्, ततः 'द्युतिस्वाप्योः ? तथा तु न कृतमित्येव ॥ ६८ ॥

भावबोधिनी

स्वापि—ण्यन्त का ग्रहण होता है, इसका अभ्यास के निमित्तभूत प्रत्यय के अव्यवधान में सम्प्रसारण इष्ट है । इस कारण यहाँ नहीं होता है—स्वापि से ण्वुल् = अक—स्वापकः, इससे क्यच् करने पर—स्वापकीयति, से सन् करने पर 'सिष्वापकीयिषति' होता है । [ अभ्यास का सम्प्रसारण न होकर हलादि शेष करने के बाद सस्वापकीय इसमें 'सन्यतः' से अभ्यास अ का इ होता है । यहाँ अभ्यास का निमित्त सन् अव्यवहित परे नहीं है बीच में ण्वुल् और क्यच् दो प्रत्ययों का व्यवधान है । ] ॥ ६७ ॥

व्यथ् धातु के अभ्यास का सम्प्रसारण लिट परे रहते होता है । उदा० विव्यथे, विव्यथाते, विव्यथिरे । [ व्यथ् + लिट् = त = एश्, द्वित्व व्यथ् व्यथ् + ए, अभ्यास के य् का सम्प्रसारण इ अ का पूर्वरूप विथ् व्यथ् + ए, हलादिशेष—विव्यथ् ए । ] 'हलादिः शेषः' से आदि हल् व् के शेष रहने से यकार की निवृत्ति प्राप्त रहने पर सम्प्रसारण किया जाता है, 'न सम्प्रसारणे सम्प्रसारणम्' सूत्र से यकार के सम्प्रसारण का प्रतिषेध किया जाता है । [ इसी को रोकने के लिये यह सूत्र बनाया गया है । अतः य् का सम्प्रसारण 'इ' होने पर अ के पूर्वरूप में—विथ् व्यथ् + ए, हलादिशेष—विव्यथे । ]

लिट् में—इसका क्या फल है ? वाव्यथ्यते । [ व्यथ् + यङ् में सम्प्रसारण नहीं होता है । हलादि शेष, और अभ्यास का दीर्घ होता है । ] ॥ ६८ ॥

**३५८६. दीर्घ इणः किति ॥ ६९ ॥ ( २४५६ )**

इणोऽङ्गस्य योऽभ्यासस्तस्य दीर्घो भवति किति लिटि परतः। ईयतुः। ईयुः। 'इणो यण्' ( ६।४।८१ ) इति यणादेशे कृते स्थानिवद्भावाद् ( ६।४।८१ ) द्विर्वचनम्।

कितीति किम्? इयाय। इययिथ॥

**३५८७. अत आदेः ॥ ७० ॥ ( २२४८ )**

अभ्यासस्यादेरकारस्य दीर्घो भवति लिटि परतः। 'अतो गुणे' ( ६।१।९७ ) पररूपत्वस्यापवादः। आट, आटतुः, आटुः।

**न्यासः**

**दीर्घ इणः किति॥** इणो ह्रस्वस्यैव श्रवणे प्राप्ते दीर्घत्वं विधीयते। **ईयतुः, ईयुरिति।** ननु च परत्वात् 'इणो यण्' इति यणादेशे सत्यनचकत्वाद् द्विर्वचनं न प्राप्नोतीत्यत आह—**इणो यणित्यादि।** स्थानिवद्भावस्तु 'द्विर्वचनेऽचि' इत्यनेन। स च नियतकाले द्विर्वचन एव कर्त्तव्ये कृते च तस्मिन्नादेशरूप एवावतिष्ठते। **इयाय, इययिथेति।** णलि थलि चेति यथाक्रमं वृद्धिगुणयोः कृतयोः स्थानिवद्भावाद् द्विर्वचनमिकारः, तस्य 'अभ्यासस्यासवर्णे' इतीयङ्॥ ६९॥

**अत आदेः॥** लिटीत्यनुवर्तते। किद्ग्रहणं तु निवृत्तम्। 'अतो गुणे' इति पररूपत्वे प्राप्ते दीर्घत्वमारभ्यते। तपरकरणं स्वभावत एव यो ह्रस्वस्तस्य दीर्घो यथा स्यात्। तेनोपदेशे यो दीर्घस्तस्य ह्रस्वत्वे कृतेऽपि दीर्घो न भवति—'आछि आयामे', आञ्छ, आञ्छतुः, आञ्छुरिति। लिट्, तिपो णल्, तसोऽतुस्,

**पदमञ्जरी**

**दीर्घ इणः किति॥ यणादेशे कृत इति। परत्वात्। स्थानिवद्भावादिति।** 'द्विर्वचनेऽचि' इति रूपस्थानिवद्भावः। **इयाय, इययिथेति।** णलि थलि च वृद्धिगुणयोः कृतयोः स्थानिवद्भावाद द्विर्वचनम्, 'अभ्यासस्यासवर्णे' इतीयङ्॥ ६९॥

**अत आदेः॥** 'आदेः' इति वचनादत्र तदन्तविधिर्न भवति, लिटीत्यनुवर्त्तते, किद्ग्रहणं तु निवृत्तम्। 'अतो गुणे' पररूपत्वे प्राप्ते दार्घत्वमिदमारभ्यते। तपरकरणं किम्? दीर्घस्य मा भूत्—'आछि आयामे', आञ्छ, आञ्छतुः, आञ्छुः। किं च स्यात्, यद्यत्र दीर्घः स्यात्? 'तस्मान्नुड् द्विहलः' इति नुट् प्रसज्येत।

**भावबोधिनी**

'इण्' ( धातु ) अङ्ग का जो अभ्यास उसका दीर्घ होता है कित् लिट् परे रहते। उदा० ईयतुः, ईयुः। 'इणो यण्' सूत्र से यण् आदेश करने पर स्थानिवद्भाव से द्वित्व होता है। [ भाव यह है—इ + लिट् = तस् = अतुस् यहाँ परवर्त्ती होने से पहले 'इणो यण्' से 'इ' का यण् कर देने पर अनच्क हो जाने से द्वित्व की प्राप्ति ही नहीं है? इसका समाधान है कि स्थानिवद्भाव से 'इ' मानकर द्वित्व होता है—इ इ + अतुस्, अभ्यास का दीर्घ प्रस्तुत सूत्र से होता है, ई इ + अतुस् द्वितीय का यण् य् होने से य् अतुस्, ई य् उस्, स् का रुत्व, विसर्ग। ]

कित् में—इसका क्या फल है? इयाय। इययिथ। [ इ + लिट् = तिप् = णल् = अ वृद्धि करने पर भी स्थानिवद्भाव से 'इ' का द्वित्व इ इ + अ, वृद्धि इ ऐ + अ, 'अभ्यासस्यासवर्णे' से अभ्यास इ का इयङ्—इय् ऐ + अ, ऐ का आय्—इय् आय् अ = इयाय। इसी प्रकार इ + लिट् = सिप् = थल्, गुण करने पर भी स्थानिवद्भाव से 'इ' का द्वित्व—इ ए + थ, इट्, ए का अय्, इ का इयङ्—इय् अय् इ थ = इययिथ। कित् न होने से अभ्यास का दीर्घ नहीं होता है। ]॥ ६९॥

अभ्यास के आदि अकार का दीर्घ होता है लिट् परे रहते। यह 'अतो गुणे' से प्राप्त पररूप का अपवाद है। उदा० आट, आटतुः आटुः। [ आट् + लिट् = तिप् = णल्, द्वित्व, हलादि शेष—अ अट् + अ, 'अतो गुणे' से प्राप्त पररूप के अपवाद प्रस्तुत सूत्र से अभ्यास का दीर्घ—आ अट् + अ, सवर्णदीर्घ—आट। ]

आदेरिति किम् ? पपाच । पपाठ ॥

**३५८८. तस्मान्नुड् द्विहलः ॥ ७१ ॥ ( २२८८ )**

**तस्मादतोऽभ्यासाद्दीर्घीभूतादुत्तरस्य द्विहलोऽङ्गस्य नुडागमो भवति । आनङ्ग, आनङ्गतुः, आनङ्गुः । आनञ्ज, आनञ्जतुः, आनञ्जुः ।**

**द्विहल इति किम् ? आट, आटतुः, आटुः ।**

**न्यास**

झेरुस्, द्विर्वचने हलादिशेषे 'ह्रस्वः' । किञ्च स्याद् यद्यत्र दीर्घः स्यात् ? 'तस्मान्नुड् द्विहलः' इति नुट् स्यात् । 'आदेः' इति वचनादिहान्तस्य दीर्घो न भवति—पपाचेत्यादौ ॥ ७० ॥

**तस्मान्नुड् द्विहलः ॥** द्वौ हलौ यस्य तद्द्विहल् । **आनङ्ग, आनङ्गतुः, आनङ्गुरिति ।** 'अगि रगि लगि गत्यर्थाः', इदित्त्वान्नुम् । **आनञ्ज, आनञ्जतुः, आनञ्जुरिति ।** 'अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु' ।

'ऐऔच्' इत्यत्र 'प्रत्याहारे वर्णेषु ये वर्णैकदेशा वर्णान्तरसमानाकृतयः, तेषु तत् कार्यं न भवति, तच्छायानुकारिणो हि ते, न पुनस्त एव; पृथक्प्रयत्ननिर्वर्त्यं हि वर्णमिच्छन्त्याचार्याः' इत्युक्त्वा 'नुड्विधिलादेशविनामेष्वृकारे प्रतिविधातव्यम्' इत्युक्तम्[1] । तत्रावसरप्राप्त्या ऋकारे नुड्विधौ प्रतिविधानमाह—**ऋकारैकदेशो रेफो हल्ग्रहणेन गृह्यत इति । आनृधतुः, आनृधुरिति ।** 'ऋधु वृद्धौ' । कथं पुनर्वर्णात्मकानां हलां ग्रहणेनावर्णात्मक ऋकारैकदेशो रेफो गृह्यते ? द्विहल्ग्रहणसामर्थ्यादिति भावः ।

अत्र 'तस्मान्नुट्' इत्येवं वक्तव्यम् । न चैवं सत्याटतुः, आटुरित्यादौ नुट्प्रसङ्गो भवति; अश्नोतेरित्यस्य नियमार्थत्वात्—'अद्विहलो यदि भवति नुट् तदाऽश्नोतेरेव, नान्यस्येति । अश्नातिनिवृत्त्यर्थं तदेतन्नाशङ्कनीयम्; यद्येतावत् प्रयोजनं स्यात् 'नाश्नः' इत्येवं ब्रूयात् । तस्मान्नियम एवास्य प्रयोजनम् । तदेवमन्त-

**पदमञ्जरी**

यद्यप्यत्रापि ह्रस्वत्वे कृते अङ्गवति, तथापि तपरकरणसामर्थ्याद् 'अदेव योऽत्' इति विज्ञानात् स्वाभाविकस्य मात्रिकस्य परिग्रहः ॥ ७० ॥

**तस्मान्नुड् द्विहलः ॥ आनङ्गेति ।** 'अगि रगि लघि गत्यर्थाः' । **आनञ्जेति ।** 'अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु' । द्विहल्ग्रहणमनेकहलुपलक्षणम्, तेनानर्छेत्यत्र गुणे रपरे कृते त्रिहलोऽपि भवति ।

'ऐऔच्' इत्यत्र 'वर्णेषु ये वर्णैकदेशा वर्णान्तरसमानाकृतयस्तेषु तत्कार्यं न भवति' इत्युक्त्वा 'नुड्विधिलादेशविनामेषु ऋकारे प्रतिविधातव्यम्' इत्युक्तम्', तात्रावसरे प्राप्ते नुड्विधौ प्रतिविधत्ते—**ऋकारैकादेश इत्यादि ।**

**भावबोधिनी**

आदि अ का—इसका क्या फल है ? पपाच । पपाठ । [ पच् + लिट् = तिप् = णल्, द्वित्व, अभ्यासकार्य पपच् + अ, आदि अ न होने से दीर्घ नहीं होता है । 'अत उपधायाः' सूत्र से उपधा की वृद्धि होती है—पपाच । ] ॥ ७० ॥

उस दीर्घीभूत अभ्यास आकार से उत्तरवर्ती दो हलों वाले अङ्ग को नुट् का आगम होता है । उदा० आनङ्ग, आनङ्गतुः, आनङ्गुः । आनञ्ज, आनञ्जतुः, आनञ्जुः । [ 'अगि' इस गत्यर्थक के इ की इत्संज्ञा लोप के बाद 'इदितो नुम् धातोः' से नुम्, अनुस्वार, परसवर्ण—अङ्ग + लिट् = तिप् = णल् = अ, द्वित्व, हलादिशेष अ अङ्ग + अ, "अत आदेः" से अभ्यास का दीर्घ—आ अङ्ग + अ, नुट् आगम आ न् अङ्ग अ = आनङ्ग । 'अञ्जू व्यक्ति-म्रमणकान्तिगतिषु' के अ को इत्संज्ञा लोप अञ्जू + लिट् = तिप् = णल्, द्वित्व, हलादि शेष, अभ्यास का दीर्घ, नुट् आगम आन् अञ्ज् + अ = आनञ्ज । ]

दो हलों वाले को—इसका क्या फल है ? आट, आटतुः आटुः । [ अट् में एक ही हल् है । ]

---

१–१. 'एओङ्' सूत्रे 'काशिकायाम्' इति शेषः ।

ऋकारैकदेशो रेफो हल्ग्रहणेन गृह्यते। तेनेहापि द्विहलोऽङ्गस्य नुडागमो भवति— आनृधतुः, आनृधुः ॥

३५८९. अश्नोतेश्च ॥ ७२ ॥ ( २५३३ )

अश्नोतेश्च दीर्घीभूतादभ्यासादुत्तरस्य नुडागमो भवति। व्यानशे, व्यानशाते, व्यानशिरे।
'अश्नोतेः' इति विकरणनिर्देशो अश्नोतेर्मा भूदिति—आश, आशतुः, आशुः ॥

३५९०. भवतेरः ॥ ७३ ॥ ( २१८१ )

भवतेरभ्यासस्याकारादेशो भवति लिटि परतः। बभूव, बभूवतुः, बभूवुः।
'भवतेः' इति धातुनिर्देशादिहापि भवति—अनुबभूवे कम्बलो देवदत्तेन। 'लिटि' इत्येव—बुभूषति। बोभूयते ॥

**न्यासः**

रेणापि द्विहल्ग्रहणं सिद्धे यतो द्विहल्ग्रहणं करोति तस्यैतत् प्रयोजनम्—द्विहलसमानाकृतेरपि यथा स्यात्। यस्याप्येको हल् मुख्योऽवयवो द्वितीयस्त्वमुख्यस्तच्छायानुकारित्वादुपचारेण हल् व्यपदेशार्हः, तस्यापि यथा स्यादित्येवमर्थम्। एतच्च कथं लभ्यते? यद्यत्र द्विहल इत्येवंश्रुतिस्तच्छायानुकारिण्यपि ऋकारावयवे रेफे वर्तते, नान्यथा। तस्माद् द्विहल्ग्रहणसामर्थ्यादत्र हल्ग्रहणेन ऋकारैकदेशो रेफो गृह्यते; अन्यथा द्विहल्ग्रहणमनर्थकं स्यात् ॥ ७१ ॥

अश्नोतेश्च ॥ अद्विहलार्थोऽयमारम्भः। व्यानशे इति। 'अशू व्याप्तौ', 'अनुदात्तेत्त्वादात्मनेपदम्, त, एश्।

अश्नोतेरिति विकरणनिर्देशः 'अश भोजने'—इत्येतस्य क्रैयादिकस्य निवृत्तये। चकारो नुडागमानुकर्षणार्थः ॥ ७२ ॥

भवतेरः ॥ बभूवेति। 'भुवो वुग्लुङ्लिटोः' इति वुक्। अनुबभूवे इति। कर्मण्यात्मनेपदम्। श्तिपा निर्देशो यङ्लुग्निवृत्त्यर्थः—बोभावेति ॥ ७३ ॥

**पदमञ्जरी**

अत्र द्विहल्ग्रहणं न कर्त्तव्यम्, 'तस्मान्नुट्' इत्येवास्तु; एवमुच्यमाने आटतुः, आटुरित्यत्रापि प्राप्नोति? 'अश्नोतेश्च' इत्येतन्नियमार्थं भविष्यति—अद्विहलो यदि भवति अश्नोतेरेवेति; अश्नातिनिवृत्त्यर्थं नाश्न इत्येवं वाच्यं स्यात्, तदेवमन्तरेणापि द्विहल्ग्रहणं सिद्धे यद् द्विहल्ग्रहणं करोति तस्यैतदेव प्रयोजनम्—द्विहल्छायानुकारिणोऽपि यथा स्यादिति ॥ ७१ ॥ ७२ ॥

भवतेरः ॥ 'उरत्' इत्यस्यानन्तरमिदं नोक्तं लिटीत्युपजीवनाय। यदि पुनस्तदत्रैवोच्येत? नैवं शक्यम्; लिट्येव हि स्यात्। श्तिपा निर्देशो यङ्लुग्निवृत्त्यर्थः ॥ ७३ ॥

**भावबोधिनी**

ऋकार का एकदेश रेफ हल् ग्रहण से गृहीत होता है। इस कारण इसमें भी दो हलों वाले अङ्ग को नुट् आगम होता है—आनृधतुः, आनृधुः। [ 'ऋधु वृद्धौ' से लिट् = तस् = अतुस् द्वित्व, ऋध् ऋध् + अतुस्, अभ्यास के ऋ का अत्व, रपर, हलादिशेष, अ का दीर्घ आ ऋध् + अतुस् नुट् आनृधतुः ] ॥ ७१ ॥

अश् धातु के दीर्घीभूत अभ्यास से उत्तरवर्त्ती को नुट् आगम होता है। उदा० व्यानशे, व्यानशाते, व्यानशिरे। [ वि पूर्वक 'अशू व्याप्तौ' इस आत्मनेपदी से लिट् = त = ए, वि अश् + ए, द्वित्वादि के बाद अभ्यास का दीर्घ वि आ अश् + ए, नुट् = न् आगम, इ का यण्—व्यानशे। ]

'अश्नोति' यह श्नु विकरण का निर्देश 'अश्नाति' इसका न हो सके—इसलिये है—आश, आशतुः आशुः। [ 'अशू व्याप्तौ संघाते च' इस स्वादिगणीय का ही ग्रहण हो, 'अश भोजने' इस क्रयादिगणीय का न हो—इसीलिये 'अश्नोति' में श्नु का ग्रहण है। ] ॥ ७२ ॥

भवति = भू धातु के अभ्यास का अकार आदेश लिट् परे रहते होता है। उदा० बभूव, बभूवतुः, बभूवुः। [ भू + लिट् = तिप् = णल्, 'भुवो वुग् लुङ्लिटोः' से वुक् = व् आगम भूव् + अ, अभ्यास का ह्रस्व,

**३५९१. ससूवेति निगमे ॥ ७४ ॥**

'ससूव' इति निपात्यते। सूतेर्लिटि परस्मैपदं वुगागमः, अभ्यासस्य चात्वं निपात्यते। ससूव स्थविरं विपश्चिताम् ( ऋ० ४।१८।१० ) सुषुवे इति भाषायाम् ॥

**३५९२. णिजां त्रयाणां गुणः श्लौ ॥ ७५ ॥ ( २५०२ )**

निजादीनां त्रयाणामभ्यासस्य गुणो भवति श्लौ सति। णिजिर्—नेनेक्ति। विजिर्—वेवेक्ति। विष्लृ—वेवेष्टि।

**न्यासः**

**ससूवेति निगमे ॥ सूतेरिति।** 'षूङ् प्राणिगर्भविमोचने—इत्येतस्य। **सुषुव इति।** ङित्त्वादात्मनेपदम्, उवङ्।

इतिकरणमेवम्प्रकाराणामन्येषामुपसंग्रहार्थम्। तेन जाग्रमः, अदर्शमित्यादि सिद्धं भवति। **जाग्रम इति।** जाग्रर्त्तेरग् निपात्यते। **अदर्शमेति।** लङि दृशेः पश्यादेशाभावः। जागृम, अपश्यमिति भाषायाम्। दाधर्त्यादिषु ससूवग्रहणं न कृतम्; वैचित्र्यार्थम् ॥ ७४ ॥

**णिजां त्रयाणां गुणः श्लौ ॥** बहुवचननिर्देशादाद्यर्थो गम्यत इत्यत आह—**एषामित्यादि।** 'णिजिर् शौचपोषणयोः', 'विजिर् पृथग्भावे', 'विष्लृ व्याप्तौ'—इत्येते णिजादयो जौहोत्यादिकाः।

**त्रिग्रहणमुत्तरार्थमिति।** 'भृञामित्' इतीत्त्वम्। त्रयाणामेव यथा स्यादधिकानां मा भूदित्येवमर्थं त्रिग्रहणम्। एतदर्थमपि कस्मान्न भवति ? इत्यत आह—**एषामित्यादि।** यद्यत्र त्रिग्रहणं क्रियते, निजादीनामन्ते वृत्करणं किमर्थम् ? एतद् गणकारः प्रष्टव्यः, न सूत्रकारः; 'अन्यो हि गणकारोऽन्यश्च सूत्रकारः' इत्युक्तं प्राक्। गणकारेणापि वैचित्र्यार्थं वृत्करणं कृतमिति वेदितव्यम्। विचित्रा हि गणस्य कृतिर्गणकारेण।

**पदमञ्जरी**

**ससूवेति निगमे ॥** दाधर्त्यादिष्वेवैतत्पठितव्यम् ॥ ७४ ॥

**णिजां त्रयाणां गुणः श्लौ ॥**

निजिर्, विजिर्, विष्लृ व्याप्तौ जुहोत्यादिष्वमी त्रयः।

**त्रयाणां ग्रहणमुत्तरार्थमिति।** 'भृञामित्' इतीत्त्वं त्रयाणामेव यथा स्यात्। अथेहार्थमपि कस्मान्न भवति ? तत्राह—**एषां हीति।** यदि तर्ह्युत्तरार्थं त्रिग्रहणं कर्त्तव्यम्, तदेवास्तु, वृत्करणं तु निजामन्ते शक्यमकर्तुम् ? सत्यम्; तदपि कृतमित्येव।

**भावबोधिनी**

जश्त्व, प्रस्तुत सूत्र से 'उ' का अ आदेश—बभूव। ] 'भवतेः' इस धातु के निर्देश से यहाँ भी होता है—अनुबभूवे कम्बलः देवदत्तेन। [ कर्मवाच्य, आत्मनेपद लिट् प्रथम पुरुष एकवचन का रूप है। ] लिट् में ही—अतः 'बुभूषति बोभूयते' [ इन सन् और यङ् में नहीं होता है। ] ॥ ७३ ॥

'ससूव' यह शब्दरूप [ निगम में ] निपातित होता है। 'सू' धातु से लिट् में परस्मैपद वुक् का आगम और अभ्यास का अत्व निपातित होता है। उदा० ससूव स्थविरं विपश्चिताम्। 'सुषुवे' ऐसा भाषा में होता है। [ सू + लिट् = परस्मैपद तिप् = णल, स् + अ, वुक्, द्वित्व, अभ्यास कार्य सुसूव + अ, अभ्यास के उ का अ—ससूव। इसमें अप्राप्त सभी कार्य निपातन से होते हैं। ] ॥ ७४ ॥

णिजिर् आदि ( विजिर् और विष्लृ— ) तीन धातुओं के अभ्यास का गुण श्लु परे होता है। उदा० णिजिर्—नेनेक्ति। [ णिजिर्—निज् + श्लु + तिप्, 'श्लौ' से द्वित्व अभ्यासकार्य निनिज् + ति, अभ्यास का गुण, उपधागुण ज् का कुत्व ग्, चर्त्व ग् का क्—नेनेक्ति। ] वेवेक्ति। [ विजिर् = विज् में भी पूर्वोक्त सभी कार्य होते हैं। ] विष्लृ—वेवेष्टि। [ विष् + श्लु + ति, द्वित्व, हलादिशेष, अभ्यास का गुण उपधा गुण, ष्टुत्व—वेवेष्टि। ]

त्रिग्रहणमुत्तरार्थम् । एषां हि श्लुत्करणं समाप्त्यर्थं पठ्यत एवेति ।
श्लाविति किम् ? निनेज ॥

३५९३. भृञामित् ॥ ७६ ॥ ( २४८६ )

भृञादीनां त्रयाणामभ्यासस्येकारादेशो भवति श्लौ सति । भृञ्—बिभर्त्ति । माङ्—मिमीते । ओहाङ्—जिहीते ।

'त्रयाणाम्' इत्येव—जहाति । 'श्लौ' इत्येव—बभार ॥

३५९४. अर्तिपिपर्त्योश्च ॥ ७७ ॥ ( २४९३ )

अर्ति, पिपर्ति—इत्येतयोरभ्यासस्येकारादेशो भवति श्लौ । इयर्ति धूमम् । पिपर्ति सोमम् ॥

न्यासः

अथ गुणग्रहणं किमर्थम्, एकार एव नोच्येत ? अशक्यमेवेदं वक्तुम्; यवं ह्युच्यमाने द्वेषमपि कश्चिद् विजानीयाद्—हलादिशेषापवादोऽयं निजादीनामेकार इति । गुणग्रहणे हि संज्ञाविधाने नियम इतीक एव भवति, हलस्तु हलादिशेषेण निवृत्तिर्भवति ॥ ७५ ॥

भृञामित् ॥ 'डुभृञ् धारणपोषणयोः', 'माङ् माने', 'ओहाङ् गतौ'—इत्येते भृञादयो जौहोत्यादिका एव । मिमीते, जिहीत इति । 'ई हल्याघोः' इतीत्वम् ॥ ७६ ॥

अर्तिपिपर्त्योश्च ॥ इयर्ति, पिपर्तीति । 'ऋ सृ गतौ', 'पृ पालनपूरणयोः', जुहोत्यादिकत्वाच्छपः श्लुः, गुणः, द्विर्वचनम्, 'उरत्' इत्यत्त्वम्, अनेनेत्त्वम्, रपरत्वञ्च । अर्त्ते; 'अभ्यासस्यावर्णे' इतीयङ् । अथार्तिग्रहणं किमर्थम्, यावता निजादिभ्योऽयं परः पठ्यते । ये च निजादिभ्यः परे त सर्व एव छान्दसाः, तथा हि तान् पठित्वा छन्दसीत्युक्तम् । छान्दसत्वाच्चार्तेः 'बहुलं छन्दसि' इत्येवं सिद्धम् ? एवं तर्ह्येतज्ज्ञापयति—भाषायामप्यर्त्तेः प्रयोगो भवतीति ॥ ७७ ॥

पदमञ्जरी

गुणग्रहणमिक्परिभाषोपस्थानार्थम्, तेन हलादिशेषे कृते गुणो भवति; अन्यथा तदपवादो हल एव एकारः स्यात् । अथ 'अभ्यासविकारेष्वपवादो नोत्सर्गान् बाधते' इत्याश्रीयेत ? तदा विस्पष्टार्थं गुणग्रहणम् ॥ ७५ ॥

भृञामित् ॥ अमी अपि जुहोत्यादौ भृञ्, माङ्, ओहाङ्—भृञादयः । मिमीत इति । 'ई हल्यघोः ॥ ७६ ॥

अर्तिपिपर्त्योश्च ॥ इयर्तीति । 'ऋ सृ गतौ', 'पृ पालनपूरणयोः' 'अभ्यासस्यासवर्णे' इतीयङ् ।

भावबोधिनी

'त्रयाणाम्' का ग्रहण उत्तरवर्त्ती सूत्र के लिये । क्योंकि इनका श्लु करना समाप्ति के लिए पढ़ा ही जाता है । [ अतः आगे की धातुओं का ग्रहण प्राप्त ही नहीं है । तब 'त्रयाणाम्' का ग्रहण अग्रिम सूत्र के लिए ही समझा जाता है । ]

श्लु में—इसका क्या फल है ? निनेज । [ लिट् में श्लु नहीं होता है । ] ॥ ७५ ॥

भृञ् आदि ( माङ्, ओहाङ् ) तीन धातुओं के अभ्यास का इकार आदेश श्लु में होता है । उदा० बिभर्ति । माङ्—मिमीते । ओहाङ्—जिहीते । [ भृ + श्लु + ति, द्वित्व, भृ भृ + रि, अभ्यास में ऋ का इत्व, रपर, हलादि शेष, जश्त्व—बि भृ ति, ऋ का गुण, रपर बिभर्ति । माङ् + श्लु + त, द्वित्व आदि के बाद अभ्यास के आ का इत्व, 'ई हल्यघोः' सूत्र से आ का ई—मिमीते । ओहाङ् = हा + श्लु + त, यहाँ भी उपर्युक्त इत्व, ईत्व होते हैं । ]

'तीन का ही'—जहाति । [ ओहाक् का ग्रहण नहीं होता है । ] श्लु में ही—बभार । [ भृ + लिट् में नहीं होता है । ] ॥ ७६ ॥

अर्ति ( ऋगतौ ) और पिपर्ति ( पृ पालनपूरणयोः ) इनके अभ्यास का इकार आदेश होता है श्लु विषय में । उदा० इयर्ति धूमम् । पिपर्ति सोमम् । [ ऋ + श्लु + तिप् द्वित्व ऋ का ऋ ति, अभ्यास का इत्व, रपरत्व

**३५९५. बहुलं छन्दसि ॥ ७८ ॥ ( ३५९८ )**

छन्दसि विषयेऽभ्यासस्य श्लौ बहुलमिकारादेशो भवति । पूर्णां विवष्टि ( ऋ० ७।१६।११)—वशेरेतद्रूपम् । तथा वचेः—'जनिमा विवक्ति' ( ऋ० १।९७।९ ) । सचेः—वत्सं न माता सिषक्ति ( ऋ० १।३८।८ ) । जिघर्ति सोमम् । न च भवति—ददातीत्येवं ब्रूयात् । जजनमिन्द्रं । ( मै० १।९।१ ) माता यद्वीरं दधनन्धनिष्ठा ( ऋ० १०।७३।१ ) ॥

**३५९६. सन्यतः ॥ ७९ ॥ ( २३१७ )**

सनि परतोऽकारान्ताभ्यासस्येकारादेशो भवति । पिपक्षति । यियक्षति । तिष्ठासति । पिपासति ।

सनीति किम् ? पपाच । अत इति किम् ? लुलूषति । तपरकरणं किम् ? पापचिषते ॥

**न्यासः**

**बहुलं छन्दसि ॥ विवष्टीति ।** 'वश कान्तौ', 'बहुलं छन्दसि' इति शपः श्लुः, व्रश्चादिसूत्रेण षत्वम् । **विवक्तीति ।** 'वच परिभाषणे' । **सिषक्तीति ।** 'सच समवाये', 'सच सेचने' इति वा । **जिगर्ति, जिघर्तीति ।** 'गृ घृ सेचने' । सर्वत्र पूर्ववच्छपः श्लुः ।

**जजनम्, दधनमिति ।** 'जन जनने', 'धन धान्ये' । लुङ्, मिपोऽम्, जुहोत्यादित्वाच्छपः श्लुः, 'बहुलं छन्दस्यमाङ्योगेऽपि' इत्यड्निषेधः ॥ ७८ ॥

**सन्यतः ॥ पिपक्षतीत्यादि ।** पचियज्यो रूपे । **पिपासतीति ।** पातेः, पिबतेर्वा ।

**लुलूषतीति ।** 'लूञ् छेदने' । 'इको झल्' इति किस्वाद् गुणाभावः । 'सनि ग्रहगुहोश्च' इतीट्प्रतिषेधः । तपरकरणं किमर्थम् ? पापच्यतेः सन् पापचिषत इत्यत्र मा भूत् । किं पुनः कारणमत्र ह्रस्वो न भवति ? दीर्घविधानसामर्थ्यात् । यदि 'सनि योऽभ्यासः'—इत्येवं विज्ञायेत, ततो मुखसुखार्थम् ॥ ७९ ॥

**पदमञ्जरी**

अच्छन्दोऽर्थमिदम्; छन्दस्युत्तरसूत्रेणैव सिद्धत्वात् ॥ ७७ ॥ ७८ ॥

**सन्यतः ॥ यियक्षतीति ।** यजेर्व्रश्चादिना षत्वम्, षढोः कः सि' ।

तपरकरणं किम् ? पापच्यतेः सन्, पापचिषते इत्यत्र मा भूत् । किं पुनः कारणमत्र ह्रस्वो न भवति ? दीर्घविधानसामर्थ्यात् । यदि तु 'सनि योऽभ्यासः' इत्येवं विज्ञायेत, ततो लाघवे विशेषाभावात्तपरकरणम् ॥ ७९ ॥

**भावबोधिनी**

हलादिशेष—इ ऋ ति, ऋ का गुण रपर, 'अभ्यासस्यासवर्णे' सूत्र से 'इ' का इयङ्—इय् अर्ति = इयर्ति । इसी प्रकार पॄ + ति में द्वित्व के बाद इत्व, रपर, हलादि शेष पि पॄ ति, गुण, रपर—पिपर्ति । ] ॥ ७७ ॥

वेदविषय में श्लु में अभ्यास का इकार आदेश बहुल रूप से होता है । उदा० पूर्णां विवष्टि—यह 'वश' धातु का रूप है । [ वश् + श्लु + ति, द्वित्व अभ्यासकार्य, इत्व, षत्व, ष्टुत्व—विवष्टि । ] इसी प्रकार वच् का उदा० जनिमा विवक्ति । [ वच् + श्लु + तिप्, द्वित्व, अभ्यासकार्य व वच् ति, अ का इत्व, कुत्व—विवक्ति । सच् का—वत्सं न माता सिषक्ति । [ षच् = सच् + श्लु + ति, द्वित्व, अभ्यासकार्य, अ का इ, कुत्व—सिषक्ति । ] घृ का उदा० जिघर्ति सोमम् । [ 'घृ सेचने' श्लु + तिप्, द्वित्व, ऋ का इत्व, रपर घिर् घृ + ति, हलादिशेष, अभ्यास का चुत्व, जश्त्व, ऋ का गुण, रपर—जिघर्ति । ] और इत्व नहीं भी होता है—ददाति इत्येवं ब्रूयात् । [ दा + श्लु + तिप्, द्वित्वादि होने पर भी अ का इत्व नहीं होता है । ] जजनमिन्द्रं माता यद्वीरं दधनन्धनिष्ठा । [ जन जनने' और 'धन धान्ये' लुङ् = मिप् = अम्, श्लु, द्वित्व अभ्यासकार्य, 'बहुलं छन्दस्यमाङ्योगेऽपि' इससे अट् आगम का अभाव, अभ्यास के इत्व का अभाव । ] ॥ ७८ ॥

सन् परे रहते अकारान्त अभ्यास का इकार आदेश होता है । उदा० पिपक्षति । यियक्षति । तिष्ठासति । पिपासति । [ पच्, यज्, ष्ठा = स्था और पा—से सन्, 'सन्यङोः' से द्वित्व, अभ्यासकार्य हलादि शेष पपच् + स, ययज् + स, 'शर्पूर्वाः खयः' त स्था + स, पपास, अ का इत्व, कुत्व, षत्व, क्षत्व आदि कार्य होने पर रूप बनते हैं । ]

**३५६७. ओः पुयण्ज्यपरे ॥ ८० ॥ ( ३५९७ )**

**'सनि' इति वर्तते, 'इत्' इति च। उवर्णान्ताभ्यासस्य पवर्गे यणि जकारे चावर्णपरे परत इकारादेशो भवति सनि प्रत्यये परतः। पवर्गेऽपरे—पिपविषते, पिपावयिषति। बिभावयिषति।**

**यण्यपरे—यियविषति। यियावयिषति। रिरावयिषति। लिलावयिषति।**

**ज्यपरे—'जु' इति सौत्रोऽयं धातुः, जिजावयिषति।**

**न्यासः**

**ओः पुयण्ज्यपरे। पुयण्जीति।** पुयण्जमेकवद्भावं कृत्वा सप्तम्या निर्देशः। **अपर इति।** अः परो यस्मात् पुयण्जस्तदपरमवर्णपरमित्यर्थः। **पिपविषत इति।** 'पूङ् पवने', सन्, 'स्मिपूङ्रञ्जवशां सनि' इतीट्, गुणावादेशौ। स्थानिवद्भावात् 'पू' इत्यस्य द्विर्वचनम्, स्थानिवद्भावस्तु 'द्विर्वचनेऽचि' इत्यनेन। **पिपावयिषतीति।** पूङो ण्यन्तात् सन्। अत्रापि स्थानिवद्भावात् 'पू' इत्येतद् द्विरुच्यते। **बिभावयिषतीति।** 'भू सत्तायाम्'। ण्यन्तात् सन्।

**यियावयिषतीति।** यौतेर्ण्यन्तात् सन्। 'सनीवन्त' इत्यादिनेट्। **रिरावयिषति, लिलावयिषतीति।** रौतिलुनातिभ्यां ण्यन्ताभ्यां सन्।

**जिजावयिषतीति।** 'जु' इति सौत्रो धातुः; 'जुचंक्रम्य' इत्यादौ पाठात्। तस्मात् ण्यन्तात् सन्।

कथं पुनः पिपावयिषतीत्यादावुकारान्तताऽभ्यासस्य, यावता णौ परतोऽन्तरङ्गत्वाद् वृद्ध्यावादेशयोः कृतयोर्वकारान्तस्याद्विर्वचनेन भवितव्यम्, स्थानिवद्भावादुकारान्तस्य द्विर्वचनं भविष्यतीति चेत्? न; न हि

**पदमञ्जरी**

**ओः पुयण्ज्यपरे॥** पुयण्जकाराणां समाहारद्वन्द्वे सप्तम्येकवचनम्। पुयण्जि 'द्वन्द्वाच्चुदषहान्तात्समाहारे' इति समासान्तस्त्वनित्यत्वान्न भवति, अः परो यस्मात्पुयण्जस्तदपरम्, अवर्णपरमित्यर्थः। **पिपविषत इति।** 'पूङ् पवने', 'स्मिपूङ्रञ्जवशां सनि' इतीड्गुणावादेशौ, तयोः 'द्विर्वचनेऽचि' इति स्थानिवद्भावात् 'पू' इति द्विरुच्यते। **पिपावयिषतीति।** तत एव ण्यन्तात्सन्। **बिभावयिषतीति।** भवतेर्ण्यन्तात्सन्। **यियविषतीति।** 'यु मिश्रणे', 'सनीवन्तर्ध' इतीट्। **यियावयिषतीति।** तस्मादेव ण्यन्तात्सन्। **रिरावयिषति, लिलावयिषतीति।** रौतिलुनातिभ्यां ण्यन्ताभ्यामेव सन्। **जिजावयिषतीति।** 'जु' इति सौत्रो धातुः 'जुचङ्क्रम्य' इत्यादौ निर्दिष्टः।

**भावबोधिनी**

सन् परे—इसका क्या फल है? पपाच। [ पच् + लिट्, द्वित्व, अभ्यासकार्य होता है किन्तु सन् परे न होने से इत्व नहीं होता है। ] अकार का इत्व—इसका क्या फल है? लुलूषति। [ लूञ् = लू + स, द्वित्व आदि होने पर भी इत्व नहीं क्योंकि अभ्यास में अ नहीं है 'इको झल्' से किद्‌त्व होने के कारण गुण का अभाव होता है। ] तपरकरण किसलिये है? पापचिषते। [ पच् + यङ्, द्वित्वादि के बाद अभ्यास का दीर्घ—पापच्य + सन् में इट् यलोप आदि होता है किन्तु ह्रस्व अ न होने से इत्व नहीं होता है ] ॥ ७९ ॥

'सनि' इसकी तथा 'इत्' इसकी अनुवृत्ति होती है। उवर्णान्त अभ्यास का पवर्ग, यण् और जकार जो अवर्णपरक है अर्थात् जिनके बाद अकार है, उनके परे रहते सन् प्रत्यय में अभ्यास का इकार आदेश होता है। अवर्णपरक पकार विषय में उदा० पिपविषते पिपावयिषति। [ पूङ् + सन् 'स्मिपूङ्रञ्ज्वशां सनि' सूत्र से इट्, गुण अवादेश करने पर भी स्थानिवद्‌भाव से 'पू' मानकर द्वित्व, अभ्यास का ह्रस्व पुपव् इ स, उवर्णान्त अभ्यास 'पु' के बाद पवर्ग 'पव्' का 'प्' है और यह अवर्णपरक है अतः अभ्यास के उ का इ होता है—पि पव् इ + स, षत्व, आत्मनेपद में—पिपविषते। पू + णिच्—पावि + सन्, द्वित्वादि के बाद इत्व होता है—पिपावयिषति। भू + णिच् + सन्, द्वित्वादि के बाद अभ्यास का इत्व—बिभावयिषति। ]

अपरक यण् परे रहते के उदा० यियविषति। [ यु + सन्, 'सनीवन्तर्ध०' सूत्र से इट्, गुण, अव् आदेश, स्थानिवद्‌भाव मानकर द्वित्व आदि कार्य यु यव् इ स यहाँ अपरक यण् परे रहते उवर्णान्त अभ्यास का इत्व होता

एतदेव 'पुयण्ज्यपरे' इति वचनं ज्ञापकम्—अद्विर्वचननिमित्तेऽपि णौ स्थानिवद्भवतीति ।
ओरिति किम् ? पापच्यते । सन्—पापचिषते । पुयण् जीति किम् ? अवतुतावयिषति । जुहावयिषति । अपर इति किम् ? बुभूषति ॥

**न्यासः**

णौ कृतस्य स्थानिवद्भावो भवति । णेरद्विर्वचननिमित्तत्वादित्यत आह—**एतदेवेत्यादि** । न हि णिचमन्तरेण पुयण्जोऽवर्णपराः सर्वे सम्भवन्ति । तत्र िह यदि णौ कृतस्य स्थानिवद्भावो न स्यात्, तदा येषां णिचमन्तरेणावर्णपरता न सम्भवति, तेषामुवर्णान्तोऽभ्यासो न स्यात्, उच्यते चेदम् 'ओः पुयण्ज्यपरे' इति वचनम्, तस्मादेतज्ज्ञापकम्—अद्विर्वचनानिमित्तेऽपि णौ स्थानिवद् भवतीति । तेन तुतावयिषति, बिभावयिषतीत्यादि सिद्धं भवति । केषाञ्च पुनर्णिचमन्तरेणावर्णपरता न सम्भवति ? यकारपकाराभ्यामन्येषां सर्वेषामेव । **पापचिषत इति** । 'अतो लोपः' इत्यकारलोपः, 'यस्य. हलः' इति यकारस्य । **तुतावयिषतीति** । 'तु' इति सौत्रो धातुः; 'तुरुस्तुशम्यमः' इत्यादौ सूत्रे पाठात् । **जुहावयिषतीति** । 'हु दाने', ण्यन्तात् तस्मात् सन् । **बुभूषतीति** । पूर्ववद् इड्गुणयोरभावः ॥ ८० ॥

**पदमञ्जरी**

कथं पुनर्ण्यन्तेषु सन्युवर्णान्ताभ्यासस्य, यावता णौ वृद्ध्यावादेशयोः कृतयोराकारान्तस्य द्विर्वचनेन भवितव्यम्, न हि णौ कृतस्य केनचित्स्थानिवद्भावो विहितः, णेरद्विर्वचननिमित्तत्वात् ? इत्यत आह—**एतदेवेति** । न हि णौ कृतस्य स्थानिवद्भावमन्तरेण पुयण्जोऽवर्णपराः सम्भवन्ति । पिपचिषति, यियविषते इति सम्भवतीति चेत् ? किमेतावता ! वर्गग्रहणं प्रत्याहारग्रहणं जग्रहणं च्यर्थवद्भवति । तस्मादेतदेव वचनमुक्तस्यार्थस्य सूचकमिति । यच्चात्र वक्तव्यं तद् 'द्विर्वचनेऽचि' इत्यत्रोक्तम्, तत एवावधार्यम् ।

**पापचिषत इति** । 'सनि योऽभ्यासः' इत्येतदनाश्रित्येदं प्रत्युदाहरणम् । तदाश्रये तु प्रत्युदाहरणान्तरं मृग्यं यदि सम्भवति । **अवतुतावयिषतीति** । 'तु' इति सौत्रो धातुः 'तुरुस्तुशम्यमः' इत्यत्र निर्दिष्टः । **जुहावयिषतीति** । जुहोतेर्ण्यन्तात्सन् ॥ ८० ॥

**भावबोधिनी**

है—यि यव् इ स, षत्व यियविषति । णिजन्त यु से सन् में वृद्धि, आव् आदेश याव् इ स द्वित्वादि के बाद इत्व होता है । 'रु' 'लू' से णिच् वृद्धि, आव् आदेश, सन्, इट् राव् इ स, लाव्, इ स, इट् द्वित्व, अभ्यासकार्य के बाद अभ्यास का इत्व होता है । ] यियावयिषति । रिरावयिषति । लिलावयिषति ।

अवर्णपरक ज परे का उदा० 'जु' यह सौत्र धातु है । ['जुचङ्क्रम्य में पठित है]—जिजावयिषति । [जु + णिच्, वृद्धि आव् आदेश जावि + सन् द्वित्वादि के बाद अभ्यास के अ का इ—जिजावि +, इट् आदि करने पर जिजावयिषति । ]

यह 'अवर्णपरक पवर्ग, यण् और ज् परे रहते' वचन ही ज्ञापक है—द्विर्वचन का निमित्त न होने पर भी णि परे रहते स्थानिवद्भाव होता है ।

**विमर्श**—प्रश्न यह है कि णिच् कर देने पर अभ्यास उकारान्त कहाँ रह पाता है क्योंकि अन्तरङ्ग होने से वृद्धि और आव् आदेश हो जाने से भाव् इ स, पाव् इ स आदि में अकारान्त का ही द्विर्वचन होगा, वकारान्त का नहीं, कारण यह है कि णि परे जो वृद्धि, आव् आदेश होता है उनका स्थानिवद्भाव नहीं हो सकता क्योंकि णि तो द्विर्वचन का निमित्त नहीं है । फलतः अभ्यास में उवर्णान्तता न होने से इत्व नहीं होना चाहिए ? समाधान यह है कि जब णि परे मान कर किये गये वृद्धि—आव् आदेश का स्थानिवद्भाव नहीं किया जाता तब तक अवर्णपरक पवर्ग—यण्-जकार मिल ही नहीं सकते, यह सूत्र व्यर्थ होने लगेगा । व्यर्थ होकर यही सूत्र यह ज्ञापित करता है कि—णि के द्विर्वचन-निमित्तक न होने पर भी इसके परे रहते स्थानिवद्भाव हो जाता है । परिणामस्वरूप भाव् इ + स आदि में स्थानिवद्भाव से 'भू' मानकर अभ्यास के उकार का इकार हो जाता है । अतः द्वित्व हो जाने पर भाव् भाव् इ + स आदि में अभ्यास को भु मान कर इत्व होने में बाधा नहीं है । ]

**३५९८. स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा ॥ ८१ ॥ ( २५७८ )**

**स्रवति, शृणोति, द्रवति, प्रवति, प्लवति, च्यवति—इत्येतेषामभ्यासस्य ओरवर्णपरे यणि वा इकारादेशो भवति सनि परतः। सिस्रावयिषति, सुस्रावयिषति। शृणोति—शिश्रावयिषति, शुश्रावयिषति। द्रवति—दिद्रावयिषति, दुद्रावयिषति। प्रवति—पिप्रावयिषति, पुप्रावयिषति। प्लवति--पिप्लावयिषति, पुप्लावयिषति। च्यवति--चिच्यावयिषति, चुच्यावयिषति।**

**वचनसामर्थ्यादेकेन वर्णेन यणो व्यवधानमाश्रीयते। पूर्वसूत्रेण त्वनन्तर एव यणि भवितव्यमित्यप्राप्तविभाषेयम्।**

**न्यासः**

**स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा ॥** 'सु स्रु गतौ', 'श्रु श्रवणे', 'दु द्रु गतौ', 'प्रुङ् प्लुङ् च्युङ् गतौ'। सिस्रावयिषतीत्यादि। एभ्यो ण्यन्तेभ्यः सर्वत्र सन्।

ननु च सकारादिना वर्णेनात्र यणो व्यवधानम्, अत्रावर्णपरे यणि परत इत्वमुच्यमानं व्यवधाने कथं भवति? इत्याह—**वचनसामर्थ्यादिति**। सर्वत्रैव हि सकारादिनैकवर्णेन व्यवधानम्, उच्यते चेदं वचनम्, तस्मादत्र, वचनसामर्थ्यादेकेन वर्णेन व्यवधानमाश्रीयते; अन्यथा हि वचनमिदमनर्थकं स्यात्। **पूर्वसूत्रेणे**त्यादिनाऽप्राप्तविभाषेयमिति दर्शयति।

**पदमञ्जरी**

**स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा ॥** 'श्रु श्रवणे', अन्ये गत्यार्थाः। उदाहरणेषु ण्यन्तेभ्यः सन्।

**भावबोधिनी**

उकारान्त का ( इत्व )—इसका क्या फल है? पापच्यते। सन् में—पापचिषते। [ यहाँ अवर्णपरक चकार है, सन् है किन्तु अभ्यास में उकार नहीं है। इत्व नहीं होता है। ]

पवर्ग, यण् जकार—परे रहते—इसका क्या फल है? अवतुतावयिषति। [ अवपूर्वक तु इस णिजन्त से सन् परे रहते अभ्यास 'तु' के बाद पवर्ग, यण्, ज्, में से कोई नहीं है। अतः ईत्व नहीं होता है। इसी प्रकार ] जुहावयिषति। [ हु + णिच् + सन् यहाँ उक्त कोई वर्ण परे नहीं है। अतः इत्व नहीं होता है। ]

अपरक होने पर—इसका क्या फल है? बुभूषति। [ यहाँ उकारान्त अभ्यास के बाद पवर्ग भू और सन् हैं कि भ् के बाद अ नहीं, ऊ है। अपरक पवर्ग नहीं है। अतः इत्व नहीं होता है। ] ॥ ८० ॥

स्रु, श्रु, द्रु, प्रु, प्लु तथा च्यु—इन धातुओं के अभ्यास के उकार का इकार आदेश अवर्णपरक यण् के परे रहते सन् परे विकल्प से होता है। उदा० सिस्रावयिषति, सुस्रावयिषति। [ स्रु + णिच् वृद्धि, आव् स्राव् इ + सन्, स्थानिवद्भाव से द्वित्व, अभ्यासकार्य आदि करने पर प्रस्तुत सूत्र से विकल्प से अभ्यास उकार का इकार होता है—सिस्रावयिषति। इकार न होने पर सुस्रावयिषति। ] श्रु का उदा० शिश्रावयिषति, शुश्रावयिषति। [ श्रु + णिच् = श्राव् इ + सन्, द्वित्वादि के बाद उकार का इकार आदेश विकल्प से होने पर दो रूप बनते हैं। ] द्रु—उदा० दिद्रावयिषति, दुद्रावयिषति। [ द्रु + णिच् = द्राव् इ + सन् ] प्र—पिप्रावयिषति, पुप्रावयिषति। [ प्रु + णिच् = आव् इ + सन् ] प्लु—उदा० पिप्लावयिषति, पुप्लावयिषति। [ प्लु + णिच् = प्लाव् इ + सन् ] च्यु का उदा० चिच्यावयिषति, चुच्यावयिषति। [ च्यु + णिच् = च्याव् इ + स। ]

[ प्रस्तुत सूत्र के सभी उदा० में अवर्णपरक यण् से पूर्व स्, श्, द आदि एक अतिरिक्त वर्ण का भी व्यवधान रहता है, अव्यवहित यण् परे नहीं मिलता है तब इत्व कैसे हो सकता है? समाधान— ] इस वचन के सामर्थ्य से [ सकार आदि किसी अन्य ] एक वर्ण द्वारा व्यवधान मान सा लिया जाता है अर्थात् अव्यवहित यण् न होने पर भी मान लिया जाता है। [ अतः इत्व हो जाता है। ] किन्तु पूर्ववर्ती सूत्र द्वारा तो अव्यवहित यण् परे रहते ही [ अभ्यास के उकार का इत्व ] होना चाहिये। इसलिये यह अप्राप्तविभाषा है। [ अव्यवहित यण् परे न होने से पूर्वसूत्र से इत्व प्राप्त नहीं है। अतः यह 'अप्राप्ते सत्यां विभाषा' समझना चाहिये। ]

'अपरे' इत्येव—सुस्रूषति । शुश्रूषते ॥

**३५९९. गुणो यङ्लुकोः ॥ ८२ ॥ ( २६३० )**

यङि, यङ्लुकि च इगन्तस्याभ्यासस्य गुणो भवति । चेचीयते । लोलूयते । यङ्लुकि—जोहवीति । 'यङो वा' ( पा० सू० ) इतोड्विकल्पः । चोक्रुशीति ॥

**३६००. दीर्घोऽकितः ॥ ८३ ॥ ( २६३२ )**

अकितोऽभ्यासस्य दीर्घो भवति यङि यङ्लुकि च । पापच्यते । पापचीति । यायज्यते । यायजीति । अकित इति किम् ? यंयम्यते । यंयमीति । रंरम्यते । रंरमीति ।

**न्यासः**

शुश्रूषतीति । पूर्ववदिड्गुणयोरभावः । श्तिपा निर्देशो धातुनिर्देशार्थः, न यङ्लुग्निवृत्त्यर्थः । अत्र गुणे कृत उकारान्तताभावादित्वं न भवतीति सोस्रविषति ॥ ८१ ॥

**गुणो यङ्लुकोः ॥** अभ्यासस्य गुणोऽयं विधीयते । तेन यद्यत्र लुक्शब्दोऽयं सामान्यः, तथापि यङ्लुक एव सम्प्रत्ययो भवति । न ह्यन्यत्र लुक्यभ्यासः सम्भवतीति मत्वाऽऽह—**यङि यङ्लुकि चेत्यादि । चोक्रुशीति ।** 'क्रुश आह्वाने' यङ्, तस्य यङोऽचि च' इति लुक्, 'यङो वा' इतीट्, 'न लुमताङ्गस्य' इति प्रत्ययलक्षणनिषेधाद् यङो लुकि कृते गुणो न प्राप्नोतीति लुग्ग्रहणम् । 'पुगन्तलघूपधस्य च' इति प्राप्तोऽपि गुणः 'नाभ्यास्तस्याचि पिति सार्वधातुके' इति निषिध्यते ॥ ८२ ॥

**दीर्घोऽकितः ॥ यंयम्यत इति ।** 'यम उपरमे', 'नुगतोऽनुनासिकान्तस्य' इति नुक् ।

**पदमञ्जरी**

कथं पुनर्यणि परत उच्यमानमित्वं सकारादीनां वर्णेन व्यवधाने भवति ? तत्राह—**वचनसामर्थ्यादिति । पूर्वसूत्रे इत्यादिना** अप्राप्तविभाषेयमिति दर्शयति ॥ ८१ ॥

**गुणो यङ्लुकोः ॥** लुक्शब्देनात्र यङ्लुगेव गृह्यते; सन्निधानात् । किञ्च—अभ्यासस्यायं गुणो विधीयते, न च लुगन्तरेऽभ्यासः सम्भवति । **चोक्रुशीतीति । क्रुशेर्यङ्लुगन्तात्तिप्**, 'यङो वा' इतीट्, 'नाभ्यस्तस्याचि पिति' इति लघूपधगुण प्रतिषेधः ॥ ८२ ॥

**दीर्घोऽकितः ॥ अपवादत्वादिति ।** नाप्राप्ते दीर्घे नुक आरम्भादपवादत्वम् । **अनजन्तत्वादेवेति ।** दीर्घश्रुत्या 'अचश्च' इत्युपस्थानादभ्यासविशेषणादजन्तस्याभ्यासस्य दीर्घो विधीयत इति भावः । **अभ्यास-**

**भावबोधिनी**

अवर्णपरक यण् परे रहते ही—सुस्रूषति । शुश्रूषते । [ इनमें उवर्ण के बाद यण् तो है किन्तु यण् के बाद अ परे नहीं है । अतः इत्व नहीं होता है । अतः णिजन्त से सन् परे ही प्रस्तुत सूत्र का लक्ष्य समझना चाहिए ।]॥८१॥

यङ् और यङ्लुक् में इगन्त अभ्यास का गुण होता है । [ गुण का प्रसंग होने से 'इको गुणवृद्धी' परिभाषा से इक् की उपस्थिति समझनी चाहिये । ] उदा० चेचीयते । लोलूयते । [ पुनः पुनः अतिशयेन वा चिनोति, लुनाति—इनमें यङ् प्रत्यय 'सन्यङोः' से द्वित्व चि चि य, लुलु+य, अभ्यास का गुण चे चि य, लो लु य, 'अकृत्सार्वधातुकयोः' सूत्र से अजन्त अङ्ग का दीर्घ—चेचीय, लोलूय । ङित् होने से आत्मनेपद 'त' एत्व होता है । ] यङ्लुक् में उदा० जोहवीति । [ हु + यङ् 'यङोऽचि च' सूत्र से लुक् प्रत्ययलक्षण से द्वित्व, अभ्यासकार्य जुहु + ति, अभ्यास का गुण जो हु + ति 'यङो वा' सूत्र से विकल्प से ईट्, 'सार्वधातुकार्धधातुकयो' से उ का गुण, अव् आदेश—जोहवीति, ईट् न होने पर जोहोति ] चोक्रुशीति । [ क्रुश् + यङ् + तिप्, ईट् होने पर चोक्रुश् ईति । ] ॥ ८२ ॥

अकित् अभ्यास का दीर्घ यङ् और यङ्लुक् में होता है । उदा० पापच्यते । पापचीति । यायज्यते । यायजीति । [ पुनः पुनः अतिशयेन वा पचति, पुनः पुनः अतिशयेन वा यजति—इन विग्रहों में पच् और यज् से से यङ्, द्वित्व, अभ्यासकार्य के बाद प पच् य, य यज् य, प्रस्तुत सूत्र से अभ्यास का दीर्घ—पापच्य, यायज्य ।

ननु चात्रापवादत्वान्नुकि कृतेऽभ्यासस्यानजन्तत्वादेव दीर्घत्वं न भविष्यति ? एवं तर्हि 'अकितः' इत्यनेनैतज्ज्ञाप्यते—'अभ्यासविकारेष्वपवादा नोत्सर्गान् विधीन्बाधन्ते' ( व्या० प० २३ ) इति।

किमेतस्य ज्ञापने प्रयोजनम् ? डोढौक्यते इत्यत्र 'दीर्घोऽकितः' इत्यनेन सन्ध्यक्षरह्रस्वो न बाध्यते;

**न्यासः**

ननु चेत्यादिनाऽकित इत्येतत्प्रत्याचष्टे। यंयम्यत इत्यत्र मा भूदित्येवमर्थम् 'अकितः' इत्युच्यते। अत्र ह्यपवादत्वान्नुकि कृतेऽनजन्तत्वादेव दीर्घो न भविष्यतीति नार्थोऽकित इत्यनेन। एवं तर्हीत्यादिना 'अभ्यासविकारेष्वपवादा नोत्सर्गान् विधीन् बाधन्ते' इत्येतां परिभाषां ज्ञापयितुम् 'अकितः' इत्येतदुच्यत इति दर्शयति। डोढौक्यत इति। 'ढौकृ गतौ' इत्यस्य यङि कृते हलादिशेषे च 'ह्रस्वः' इति ह्रस्वत्वम्, पूर्वसूत्रेण गुणः। तत्रासत्यस्मिन् ज्ञापके पिपासतीत्येवमादौ सावकाशं ह्रस्वत्वम् 'दीर्घोऽकितः' इत्यनेन सन्ध्यक्षरे दीर्घत्वेन बाध्येत। दीर्घस्य दीर्घविधाने प्रयोजनाभावाद् दीर्घो न भविष्यतीति चेत् ? नैतद्, अस्ति हि दीर्घस्य दीर्घविधाने प्रयोजनम्, किं तत् ? ह्रस्वो मा भूदिति। एवं चासत्यस्मिन् ज्ञापके अचीकरदित्यत्राप्यचिक्षण-दित्यादौ सावकाशमित्त्वम् 'दीर्घो लघोः' इति दीर्घत्वेन बाध्येत। मीमांसत इत्यादावसत्यस्मिन् ज्ञापके पिपक्षतीत्यादौ सावकाशम् 'सन्यतः' इतीत्त्वं मानवधादिसूत्रेण विहितेन दीर्घत्वेन बाध्येत। अजीगणदित्यत्रा-प्यसत्यस्मिन् ज्ञापके पपाठेत्यादौ सावकाशो हलादिशेषः 'ई च गणः' इतीत्त्वेन बाध्येत। अस्मिंस्तु सति सर्व-मेतन्न बाध्यते। ननु चासति प्रयोजने ज्ञापकं भवति, अस्ति चास्य प्रयोजनम्, किं तत् ? धातुकित्त्वमपेक्ष्य

**पदमञ्जरी**

विकारेष्वित्यादि। अपवादग्रहणं बाधकमात्रोपलक्षणम्, उत्सर्गग्रहणमपि बाध्यमात्रोपलक्षणम्। तत्र ह्रस्व-त्वस्यावकाशः—ययावित्यत्र, दीर्घत्वस्यावकाशः—पापच्यत इत्यादि; डोढौक्यत इत्यावुभयप्रसङ्गे परत्वाद्दीर्घ-त्वस्य प्रसङ्गः, नापवादत्वात्। तथा सन्वद्भावस्यावकाशः—अचिक्षणदिति, दीर्घत्वस्यावकाशः-अदीदिपदिति; अचीकरदित्यादावुभयप्रसङ्गे परत्वाद्दीर्घत्वप्रसङ्गः। मीमांसते इत्यत्राप्यनैमित्तिकत्वेनान्तरङ्गत्वाद्दीर्घत्वप्रसङ्गः, इत्त्वं तु सनि परतोऽङ्गाधिकारेऽभ्यासस्याकारान्तस्य विधानाद्बहिरङ्गम्। अजीगणदित्यत्र त्वेकस्मिन् येनना-प्राप्तिन्यायेन हलादिशेषस्येत्त्वमपवादत्वाद् बाधकं प्राप्नोति। इह तु अपचच्छतुः, अपचच्छुः, चच्छदतुः

**भावबोधिनी**

आत्मनेपद में 'त' एत्व होता है—पापच्यते, यायज्यते। 'यङोऽचि च' सूत्र से यङ् के लुक् में भी उक्त प्रक्रिया, अभ्यास का दीर्घ—पापच् + ति, यायज् + ति, 'यङो वा' से विकल्प से ईट् होता है। ]

अकित् का—इसका क्या फल है ? ययम्यते। यंयमीति। रंरम्यते। रंरमीति। [ यम् तथा रम् से यङ् और यङ्लुक् में द्वित्व अभ्यासकार्य के 'नुगतोऽनुनासिकान्तस्य' सूत्र से नुक् ( न् ) का आगम होने पर य न् यम् य, र न् रम् य में नुक् के कित् होने से अकित् मानकर दीर्घ नहीं होता है। ]

प्रश्न—[ दीर्घ का ] अपवाद होने से पहले नुक् आगम कर देने पर अभ्यास के अनजन्त होने के कारण ही प्रस्तुत सूत्र से दीर्घ नहीं होगा ? यदि ऐसा है तब तो 'अकितः' इससे यह ज्ञापित होता है—अभ्यास-सम्बन्धी विकारों में अपवाद शास्त्र उत्सर्ग शास्त्रों का बाध नहीं करते हैं'। [ इस ज्ञापन के फलस्वरूप पहले दीर्घ ही प्राप्त होता है। ]

इस ज्ञापन का प्रयोजन क्या है ? 'डोढौक्यते' इसमें 'दीर्घोऽकितः' इस सूत्र से सन्ध्यक्षर का ह्रस्व बाधित नहीं होता है, 'अचीकरत्' इसमें 'दीर्घोलघोः' सूत्र से सन्वद्भाव से प्राप्त इत्व का बाध नहीं होता है, 'मान्' आदि धातुओं के सन् परे ईत्व का दीर्घ से बाध नहीं होता है—मीमांसते, तथा 'ई च गणः' सूत्र से ईत्व द्वारा हलादिशेष का बाध नहीं होता है—अजीगणत्।

विमर्श—अकित्-ग्रहण से यह परिभाषा ज्ञापित होती है कि अभ्याससम्बन्धी विकार में उत्सर्ग शास्त्र बाधित करके अपवाद शास्त्र की प्रवृत्ति नहीं होती है। इसके कई फल हैं—(१) ढौक + यङ् में द्वित्व, हलादिशेष जश्त्व 'डौ ढौक् य' इसमें 'ह्रस्वः' से प्राप्त ह्रस्व का बाध 'दीर्घोऽकितः' से नहीं होकर, ह्रस्व होकर डुढौक्य, पूर्ववर्ती सूत्र

अचीकरदित्यत्र 'दीर्घो लघोः' (७।४।९४) इत्यनेन सन्वदित्वं न बाध्यते; मान्प्रभृतीनां दीर्घेण सनीत्वं न बाध्यते—मीमांसते; 'ई च गणः' (७।४।९७) इतीत्वेन हलादिशेषो न बाध्यते—अजीगणत् ॥

**३६०१. नीग्वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम् ॥ ८४ ॥ ( २६४२ )**

**वञ्चु, स्रंसु, ध्वंसु, भ्रंसु, कस, पत, पद, स्कन्द—इत्येतेषामभ्यासस्य नीगागमो भवति यङि यङ्लुकि च । अञ्चु—वनीवच्यते । वनीवञ्चीति । स्रंसु—सनीस्रस्यते । सनीस्रंसीति । ध्वंसु—दनीध्वस्यते ।**

**न्यासः**

जहातेर्मा भूत्—जाहाति, जाहेतीति ? नैतदस्ति; यदि ह्येतत् प्रयोजनं स्यात्, तदा 'अहाकः' इति प्रतिषेधं कुर्यात् । किञ्च 'अकितः' इत्यभ्यासस्य विशेषणं भवितुमर्हति, यद्यभ्यासावस्थायां कित्त्वमुपजायते । न च जहातेः कित्त्वमभ्यासमपेक्षते, पूर्वमेव हि तदभ्यासाद् भवति । तस्माज्जहातेः—जहाति, जाहेतीति रूपेण भवितव्यम् । ततश्च 'अकितः' इति वचनं ज्ञापकमेव । कित्करणं तु जहातेः 'हश्च व्रीहिकालयोः' इत्यत्र सामान्यग्रहणाविघातार्थम् । अथ दीर्घग्रहणं किमर्थम्, आदित्येव नोच्येत ? नैवं शक्यम्; 'अकितः' इत्यस्य ज्ञापकता नोपपद्यते । सति हि दीर्घग्रहणे नुकि कृतेऽनजन्तत्वादेव हि दीर्घस्य प्राप्तिर्नास्तीति 'अकितः' इति प्रतिषेधस्य ज्ञापकत्वमुपपद्यते । आकारस्तु विधीयमानोऽजन्तस्याभ्यासस्य स्यादिति 'अकितः' इत्यस्य ज्ञापकत्वं न स्यात् । तस्माद् दीर्घग्रहणं कर्त्तव्यम् ॥ ८३ ॥

**नीग् वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम् ॥** 'वन्चु चन्चु तन्चु त्वन्चु म्रुन्चु म्लुन्चु गत्यर्थाः' । 'स्रन्सु ध्वन्सु अवस्रंसने', 'कस गतौ', 'शल हुल पल्ल गतौ', 'स्कन्दिर् गतिशोषणयोः' । **वनीवच्यत इति ।** 'अनिदिताम्' इत्यादिनानुनासिकलोपः । **वनीवञ्चीतीति ।** अत्र न भवत्यनुनासिकलोपः । यङो लुप्तत्वात्

**पदमञ्जरी**

चच्छदुः, चिच्छादयिषति, चिच्छर्दयिषति, चेच्छिद्यते—इति परत्वात् ह्रस्वत्वात्त्वगुणेषु कृतेषु पश्चात्तुक् क्रियते; तेनैतन्न नोदनीयम्—तुकि कृते एते विधयो न प्राप्नुवन्तीति । 'ओहाक् त्यागे' इत्यस्य धातोर्निषेधो न भवति, धातुर्ह्ययं कित्, न त्वभ्यासः । ककारस्तु 'हश्च व्रीहिकालयोः' इत्यत्र हाङ्हाकोः सामान्येन ग्रहणार्थः ॥ ८३ ॥

**नीग्वञ्चुस्रंसुध्वंसुभ्रंसुकसपतपदस्कन्दाम् ॥** वञ्चुकसिपतिपदयो गत्यर्थाः । 'स्कन्दिः शोषणार्थः',

**भावबोधिनी**

'गुणो यङ्लुकोः' से अभ्यास का गुण होने पर 'डोढौक्य + ते' बनता है । इसी प्रकार कृ + णिच् + लुङ् च्लि का चङ्, द्वित्व अ कृ कृ + णिच् + अ ति में अभ्यास का अत्व रपरत्व, हलादि शेष करने पर 'दीर्घो लघोः' से अभ्यास का दीर्घ और 'सन्यतः' से इत्व की प्राप्ति में इत्व ही पहले होकर बाद में दीर्घ होने से 'अचीकरत्' बनता है । मान धातु से स्वार्थिक सन् द्वित्व आदि के बाद म मान् + स यहाँ भी दीर्घ और इत्व में पहले इत्व होकर बाद में दीर्घ होता है । गण् + णिच् + लुङ्, च्लि का द्वित्व, अगण गण् अ त् में 'ई च गणः' द्वारा 'हलादिः शेषः' का बाध न होकर पहले आदि हल् शेष बचता है तब ईत्व, चुत्व आदि होकर—अजीगणत् बनता है ।

यहाँ यह ध्यान रखना चाहिये कि अनुवृत्त 'अभ्यासस्य अचः' का 'अकितः' के साथ वैयधिकरण्येन अन्वय होता है—अभ्यास के अकित् अच् का दीर्घ होता है—इससे यंयम्यते इत्यादि में दीर्घ से पहले भी नुक् कर देने पर भी दीर्घ होने लगेगा । इसे रोकने के लिये 'अकितः' आवश्यक है ॥ ८३ ॥

वञ्चु, स्रंसु, ध्वंसु, भ्रंसु, कस, पत, पद और स्कन्द—इन धातुओं के अभ्यास को नीक् का आगम यङ् में और यङ्लुक् में होता है । उदा० वञ्चु—वनीवच्यते । वनीवञ्चीति । [ गत्यर्थक वञ्च् + यङ्, द्वित्व तथा अभ्यास-कार्य के बाद व वञ्च् + य, 'अनिदितां हल उपधायाः क्ङिति' से अनुनासिक न् का लोप, प्रस्तुत सूत्र से अभ्यास के बाद नीक् का आगम—वनीवच्यते । यङ्लुक् व वञ्च् में नीक् वनीवञ्च् में अनुनासिकलोप नहीं होता है क्योंकि

दनीध्वंसीति । भ्रंसु—बनीभ्रस्यते । बनीभ्रंसीति । कस—चनीकस्यते । चनीकसीति । पत—पनीपत्यते । पनीपतीति । पद—पनीपद्यते । पनीपदीति । स्कन्द—चनीस्कद्यते । चनीस्कन्दीति ॥

३६०२. नुगतोऽनुनासिकान्तस्य ॥ ८५ ॥ (२६४३)

अनुनासिकान्तस्याङ्गस्य योऽभ्यासस्तस्याकारान्तस्य नुगागमो भवति यङ्यङ्लुकोः परतः । तन्तन्यते । तन्तनीति । जङ्गम्यते । जङ्गमीति । यंयम्यते । यंयमीति । रंरम्यते । रंरमीति ।

न्यासः

'न लुमताङ्गस्य' इति प्रत्ययलक्षणनिषेधात् । अथ नीकि कृते ह्रस्वत्वं कस्मान्न भवति ? दीर्घोच्चारणसामर्थ्यात् ॥ ८४ ॥

नुगतोऽनुनासिकान्तस्य ॥ 'दीर्घोऽकितः' इत्यनेन दीर्घत्वे प्राप्ते वचनमिदमारभ्यते । तंतन्यते इत्यादीनि तमिगमियमिरमीणां रूपाणि ।

पदमञ्जरी

इतरे अवस्रंसनार्थाः । वनीवच्यते इत्यादौ 'अनिदिताम्' इत्युपधालोपः । वनीवञ्चीतीत्यादौ न भवति । यङो लुमता लुप्तत्वादीकारोच्चारणसामर्थ्यान्नीकि कृते गुणह्रस्वौ न भवतः ॥ ८४ ॥

नुगतोऽनुनासिकान्तस्य ॥ नुगित्येतदित्यादि । केन सम्बन्धेनोपलक्षणम् ? अत आह—स्थानिना होति । उपलक्षणत्वे किं सिद्धम् ? अत आह—तेनेति । अझल्परत्वेऽपीति । तन्तन्यत इत्यादौ झल्परत्वे तु 'नश्चापदान्तस्य झलि' इत्यनुस्वारः सिद्ध एव ।

भावबोधिनी

लुप्त यङ् का 'न लुमताङ्गस्य' से प्रत्ययलक्षण प्रतिषेध हो जाता है । दीर्घ ई का उच्चारण करने के कारण अभ्यास का ह्रस्व भी नहीं होता है । यङ् में अनुनासिक का लोप और यङ्लुक में प्रत्ययलक्षण निषेध से लोप न होना आगे के लक्ष्यों में समझना चाहिए । ] स्रंसु—सनीस्रस्यते । सनीस्रंसीति । [उपर्युक्त सब प्रक्रिया होती है ।] ध्वंसु—दनीध्वस्यते । दनीध्वंसीति । [ध्वंसु+यङ्, द्वित्व, अभ्यासकार्य, जश्त्व दध्वंस् य, नीक् आगम, अनुनासिकलोप—दनीध्वस् य+ते । यङ्-लुक् में अनुनासिकलोप नहीं होता है ।] भ्रंसु—बनीभ्रस्यते । बनीभ्रंसीति । [भ्रंश+यङ्, द्वित्व, अभ्यास लोप जश्त्व आदि बभ्रंस+य, नीक् आगम, अनुनासिक लोप—बनीभ्रस्यते । यङ्लुक् में अनुनासिकलोप नहीं होता है—बनीभ्रंसीति । ] कस्—चनीकस्यते । चनीकसीति । [ कस् + यङ्, द्वित्व, अभ्यासकार्य चुत्व, नीक् चनीकस् य + ते । यङ्लुक् में 'यङो वा' से ईट् आगम—चनीकसीति ] पत्—पनीपत्यते, पनीपतीति । [ पत् + यङ्, द्वित्व, अभ्यासकार्य, नीक् आगम । ] पद—पनीपद्यते । पनीपदीति । [ पद् + यङ् द्वित्व, अभ्यासकार्य, नीक् आगम । ] स्कन्द्—चनीस्कद्यते । चनीस्कन्दीति । [ स्कन्द् + यङ्, द्वित्व, 'शर्पूर्वाः खयः' से खय् शेष, अन्य का लोप क स्कन्द + य, चुत्व, नीक् आगम, अनुनासिक लोप—च नी स्कन्द् य = चनीस्कद्यते । यङ्+लुक् में अनुनासिकलोप नहीं होता है—चनीस्कन्दीति । ] ॥८४॥

अनुनासिकान्त अङ्ग का जो अभ्यास उसके अकारान्त अंग को नुक् का आगम यङ् में तथा यङ्लुक् में होता है । उदा० तन्तन्यते । तन्तनीति । [ तन् + यङ्, द्वित्व, हलादि शेष त तन् + य, नुक् = न् का आगम अनुस्वार—परसवर्ण—तन्तन्य + ते । यङ्लुक् में 'यङो वा' से ईट् आगम—तन्तनीति ] जङ्गम्यते । जङ्गमीति । [ गम् + यङ्, द्वित्व, अभ्यासकार्य ज गम् + य, नुक् = न् आगम, अनुस्वार-परसवर्ण—जङ्गम्य + ते । यङ्लुक् में ईट् आगम जङ्गम् ईति । ] यंयम्यते । यंयमीति । [ यम् + यङ्, द्वित्व, हलादिशेष, नुक्, अनुस्वार यंयम्यते । यङ्लुक् में ईट् आगम यंयमीति । ] रंरम्यते । रंरमीति । [ रम् + यङ्, द्वित्व, हलादिशेष के बाद नुक्; अनुस्वार । यङ् लुक् में ईट्—रंरमीति । ]

[ यंयम्यते, यंयमीति आदि में नुक् करने पर भी अनुस्वार होना सम्भव नहीं है क्योंकि झल् परे रहते ही 'नश्चापदान्तस्य झलि' से अनुस्वार होता है ? इसका समाधान यह है—] नुक् इसको अनुस्वार के उपलक्षण

नुगित्येतदनुस्वारोपलक्षणार्थं द्रष्टव्यम् । स्थानिना ह्यादेशो लक्ष्यते । तेन यंयम्यते—इत्येवमादाव-झल्परत्वेऽप्यनुस्वारो भवति ।

❀ पदान्तवच्चेति वक्तव्यम् ❀ ( म० भा० ) । 'वा पदान्तस्य' ( ८।४।५९ ) इति परसवर्णविकल्पो यथा स्यादिति ।

अत इति किम् ? तेतिम्यते ।

तपरकरणं तु भूतपूर्वस्यापि दीर्घस्य निवृत्त्यर्थम्—बाभाम्यते । अनुनासिकान्तस्येति किम् ? पापच्यते ॥

**न्यासः**

यदि नुक् क्रियते, यंयम्यते इत्यादौ 'नश्चापदान्तस्य झलि' इति झल्युच्यमानोऽनुस्वारो न सिध्यति, अझल्परत्वात् ? इत्यत आह—**नुगित्येतदित्यादि** । कथं पुनर्नुगित्येतदनुस्वारोपलक्षणार्थं शक्यते द्रष्टुम् ? इत्याह—**स्थानिना हीत्यादि** । नुका हि स्थानिनाऽत्रादेशोऽनुस्वार उपलक्ष्यते । तस्मादनुस्वार एवागमोऽत्र विधीयते, न तु नुक् । यंयम्यत इत्यादौ यद्यप्यझल्परताऽस्ति, तथाप्यनुस्वारः सिध्यति ।

एवम् 'अनुस्वारस्य ययि परसवर्णः' प्राप्नोति, इष्यते च पक्षेऽनुस्वारस्य श्रवणम्, तन्न सिध्यति, अपदान्तत्वात् ? इत्यत आह—**पदान्तवच्चेत्यादि** । पदान्तवदनुस्वारो भवतीत्येतदर्थरूपं व्याख्येयमित्यर्थः । तत्रेदं व्याख्यानम्—तदन्तविधिनैवानुनासिकान्तस्यानुस्वारो भवतीति नार्थोऽन्तग्रहणेन, तत् क्रियते—पदान्तस्यानुस्वारस्य यो धर्मः स नुकोऽपि स्यादित्येवमर्थम्, तेनानुस्वारस्य पक्षे श्रवणं भविष्यतीति ।

**तेतिम्यत इति** । 'तिम ष्टिम आर्द्रीभावे' ।

अथ तपरकरणं किमर्थम्, यावता नास्ति किञ्चिदन्यस्य व्यावर्त्यमिति सर्वत्र ह्रस्वाभावात् ? इत्यत आह—**तपरकरणमित्यादि** । वर्त्तमानस्य दीर्घस्याभावाद् भूतपूर्वस्यापि दीर्घस्य निवृत्त्यर्थं तपरकरणं

**पदमञ्जरी**

'अनुस्वारस्य ययि परसवर्णः' इति नित्यं परसवर्णः प्राप्नोति, इष्यते च पक्षे अनुस्वारस्य श्रवणम् ? अत आह—**पदान्तवच्चेति** । तत्कथं लभ्यते ? इहान्तग्रहणं न कर्त्तव्यं तदन्तविधिना सिद्धम् ? तत्क्रियते—पदान्तस्यानुस्वारस्य यो धर्मः सोऽस्य यथा स्यादिति । एवं च—अनुनासिकान्तस्येति पृथक् पदे, अनुनासिकेति लुप्तषष्ठीकम् ।

**तेतिम्यत इति** । 'तिम आर्द्रीभावे' ।

**तपरकरणं किमिति** । सर्वत्र ह्रस्वस्यैव भावान्नास्य किञ्चिद्व्यावर्त्यमिति प्रश्नः । **भूतपूर्वस्यापीति** ।

**भावबोधिनी**

के लिये देखना चाहिए । क्योंकि स्थानी के द्वारा आदेश लक्षित होता है । [ अतः नुक् इस स्थानी से यहाँ आदेश अनुस्वार लक्षित होता है । ] इसलिये 'यंयम्यते' आदि में झल् परे न होने पर भी अनुस्वार होता है । [ वास्तव में आगम अनुस्वार ही है । परसवर्ण से नकार भी हो जाता है । अतः जहाँ झल् परे नहीं है वहाँ भी अनुस्वार होने में बाधा नहीं है । ]

❀ इस अनुस्वार को पदान्तवत् ऐसा कहना चाहिए । ❀ यह इसलिये आवश्यक है कि 'वा पदान्तस्य' सूत्र से विकल्प से परसवर्ण हो सके । [ अन्यथा 'अनुस्वारस्य ययि परसवर्णः' से नित्य ही परसवर्ण होने लग जाता । ]

अकारान्त को—इसका क्या फल है ? तेतिम्यते [ 'तिम आर्द्रीभावे' इससे यङ् में द्वित्व अभ्यासकार्य के बाद नुक् नहीं होता है क्योंकि अकारान्त नहीं है । ]

'अत्' का तपरकरण तो भूतपूर्व भी दीर्घ आकार की निवृत्ति के लिये है अर्थात् पहले दीर्घ था बाद में 'ह्रस्वः' से ह्रस्व होने पर भी नुक् का वारण करने के लिये तपरकरण है—बाभाम्यते । [ 'भाम क्रोधे' से यङ् द्वित्व, हलादिशेष भा भाम् + य, ह्रस्वः' से अभ्यास का ह्रस्व—बभाम्+य यहाँ नुक् नहीं होता है । पुनः 'दीर्घोऽकितः' से अभ्यास का दीर्घ होने पर बाभाम्यते बनता है । ]

## ३६०३. जपजभदहदशभञ्जपशां च ॥ ८६ ॥ (२६३८)

जप, जभ, दह, दश, भञ्ज, पश—इत्येतेषामभ्यासस्य नुगागमो भवति यङ्यङ्लुकोः परतः। जञ्जप्यते। जञ्जपीति। जभ—जञ्जभ्यते। जञ्जभीति। दह—दन्दह्यते। दन्दहीति। दश—दन्दश्यते। दन्दशीति।

'दश'—इति दन्शिरयं नकारलोपार्थमेव निर्दिष्टः। तेन यङ्लुक्यपि नकारलोपो भवति। भन्ज—बम्भज्यते। बम्भञ्जीति।

'पश' इति सौत्रो धातुः—पम्पश्यते। पम्पशीति॥

न्यासः

भविष्यतीति। बाभाम्यत इति। 'भाम क्रोधे' ॥ ८५ ॥

**जपजभदहदशभञ्जपशाञ्च ॥** अनुनासिकार्थोऽयमारम्भः। 'जप जल्प व्यक्तायां वाचि', 'जभि जृभी गात्रविनामे', 'दह भस्मीकरणे', 'दन्श दशने', 'भन्जो आमर्द्दने', 'पशिः' सौत्रो धातुः। **जञ्जप्यते** इत्यादिषु **दंदश्यत** इति पर्यन्तेषु 'लुपसद' इत्यादिना यङ्। इतरत्र सामान्यलक्षणेन ॥ ८६ ॥

पदमञ्जरी

अन्यथा तपरकरणमनर्थकं स्यादित भावः। **बाभाम्यत इति।** 'भाम क्रोधे ॥ ८५ ॥

**जपजभदहदशभञ्जपशां च ॥** 'जप जल्प व्यक्तायां वाचि', 'जभ जृभी गात्रविनामे', 'दह भस्मीकरणे', 'दन्श दशने', 'भञ्जो आमर्दने', 'पश' इति सौत्रो धातुः। **जञ्जप्यत** इत्यादिचतुर्षु 'लुपसद' इत्यादिना यङ् इतरत्र सामान्यलक्षणेन ॥ ८६ ॥

भावबोधिनी

अनुनासिकान्त को (नुक् होता है)—इसका क्या फल है? पापच्यते। [ पच् + यङ् द्वित्वादि कार्य होता है। अनुनासिकान्त नहीं है अतः नुक् नहीं होता है। ] ॥ ८५ ॥

जप, जभ, दह, दश, भञ्ज, पश—इन धातुओं के अभ्यास को नुक् का आगम यङ् तथा यङ्लुक् परे होता है। उदा० जञ्जप्यते। जञ्जपीति। [ जप् + यङ्, द्वित्व हलादिशेष ज जप् य, नुक् = न् आगम, न् का अनुस्वार-परसवर्ण—जञ्जप्य + ते। यङ्लुक् में ईट् आगम होने से जञ्जपीति। ] जभ—जञ्जभ्यते। जञ्जभीति। [जभ + यङ् द्वित्व, हलादिशेष ज जभ + य, नुक्, अनुस्वार—परसवर्ण–जञ्जभ्यते। यङ्लुक् में ईट्—जञ्जभीति।] दह—दन्दह्यते। दन्दहीति। [ दह् + यङ्, द्वित्व हलादिशेष द दह+य, नुक् ] दश—दन्दश्यते। दन्दशीति। [ दश + यङ्, द्वित्व हलादिशेष, नुक्, अनुस्वार—परसवर्ण–दन्दश्यते। यङ्लुक् में दन्दशीति। ]

'दश' यह 'दन्श्' ही नकारलोप के लिये निर्दिष्ट है अर्थात् 'दंश' को ही नकारलोप करके 'दश' इस रूप में निर्दिष्ट किया गया है। इस कारण यङ्लुक् में भी नकारलोप होता है। [ सामान्यरूप से तो यङ् में ङित् मानकर लोप होता है, यङ्लुक् में प्रत्ययलक्षण-प्रतिषेध से ङित्व न होने से लुक् नहीं होता है। परन्तु यङ् और यङ्लुक् दोनों में अनुस्वार न सुनाई दे इसी उद्देश्य से लुप्त अनुनासिक वाले 'दश' का सूत्र में उल्लेख किया गया है। ]

भञ्ज्—बम्भज्यते। बम्भञ्जीति। [ भन्ज्+यङ्, द्वित्व, हलादिशेष, अनुनासिक लोप, नुक्, अनुस्वार–परसवर्ण–बम्भज्यते। यङ्लुक् में अनुनासिकलोप का अभाव, ईट् का आगम—बम्भञ्जीति। ]

पश्—यह सौत्र ( सूत्र में ही पठित ) धातु है—पम्पश्यते। पम्पशीति। [ कहीं कहीं दन्त्य स् भी मिलता है—पम्पस्यते। पम्पसीति। ]

**विमर्श**—यहाँ ध्यान रखना चाहिए कि आदि की चार—जप, जभ, दह, दश—धातुओं से "लुप-सदचर-जप-जभ-दह-गृभ्यो भावगर्हायाम्" ( ३।१।२४ ) सूत्र से धात्वर्थ की गर्हा प्रतीत होने पर ही यङ् होता है—गर्हितं जपति–जञ्जप्यते, जञ्जपीति आदि। 'भञ्ज' तथा 'पश' इनसे पौनः–पुन्य या अतिशय अर्थ में सामान्य सूत्र से यङ् होता ॥ ८६ ॥

**३६०४. चरफलोश्च ॥ ८७ ॥ (२६३६)**

चर, फल—इत्येतयोरभ्यासस्य नुगागमो भवति यङ्यङ्लुकोः परतः। चञ्चूर्यते। चञ्चूरीति। पम्फुल्यते। पम्फुलीति ॥

**३६०५. उत्परस्यातः ॥ ८८ ॥ (२६३७)**

चरफलोरभ्यासात्परस्यात उकारादेशो भवति यङ्यङ्लुकोः परतः। चञ्चूर्यते। चञ्चूरीति। पम्फुल्यते। पम्फुलीति।

परस्येति किम्? अभ्यासस्य मा भूत्। अत इति किम्? अलोऽन्त्यस्य मा भूत्।

न्यासः

**चरफलोश्च ॥** 'चर गतौ'। 'ञिफला विशरणे', 'फल निष्पत्तौ'—द्वयोरपि ग्रहणम्। निष्पत्त्यर्थस्याकार उच्चारणार्थः, नानुबन्धः; प्रयोजनाभावात्, ततश्च निरनुबन्धकपरिभाषया निरनुबन्धकस्य निष्पत्त्यर्थस्यैवास्य ग्रहणं प्राप्नोति, न विशरणार्थस्य? नैष दोषः; चकारोऽत्र क्रियते, स च विशरणार्थस्य समुच्चयार्थो भविष्यति। **चञ्चूर्यत** इति। 'लुपसद' इत्यादिना यङ्। उत्तरसूत्रेणाकारस्योकारे कृते 'हलि च' इति दीर्घः। योगविभाग उत्तरार्थः ॥ ८७ ॥

**उत्परस्यातः ॥ अभ्यासस्य मा भूदिति।** असति परग्रहणेऽभ्यासाधिकारादभ्यासस्यैव स्यादित्यभिप्रायः। **अलोऽन्त्यस्य मा भूदिति।** यदि 'अतः' इति नोच्येत, ततोऽलोऽन्त्यपरिभाषयाऽभ्यासात्परस्य धातुरूपस्य योऽन्त्योऽल् तस्य स्यादिति मन्यते।

अथ तपरकरणं किमर्थम्, यावता मात्रिकस्य स्थान आन्तरतम्याद् विधीयमानो मात्रिक एव भविष्यति? इत्यत आह—**तपरकरणमित्यादि।** असति तपरकरण उकारे कृते चञ्चूर्ति, पम्फुल्तीत्यत्र, 'पुगन्तलघूपधस्य' इति गुणः स्यात्, स मा भूदित्येवमर्थं तपरकरणं क्रियते। ननु चञ्चूर्तीत्यत्र दीर्घत्वमेव

पदमञ्जरी

**चरफलोश्च ॥** चरतिर्भक्षणार्थः। 'ञिफला विशरणे', फल निष्पत्तौ'—द्वयोरपि ग्रहणमिष्यते। **चञ्चूर्यत** इति। 'लुपसद' इत्यादिना यङ्। उत्तरसूत्रेणाकारस्योत्त्वे 'हलि च' इति दीर्घत्वम्। योगविभाग उत्तरार्थः ॥ ८७ ॥

**उत्परस्यातः ॥ अभ्यासस्य मा भूदिति।** अन्यथा प्रकरणात्तस्यैव प्रसङ्गः।

**अन्त्यस्य मा भूदिति।** 'आदेः परस्य' इत्यस्य त्वप्रसङ्गः; पञ्चमीनिर्देशाभावात्।

**तपरकरणं किमिति।** यद्यपि भाव्यमानोऽप्युकारः सवर्णान्गृह्णाति, तथाप्यान्तर्यतो मात्रिकस्य

भावबोधिनी

चर तथा फल—इन धातुओं के अभ्यास को नुक् का आगम यङ् और यङ्लुक् परे होता है। उदा० चञ्चूर्यते। चञ्चुरीति। पम्फुल्यते। पम्फुलीति। [ गर्हितं चरति, गर्हितं फलति—इन अर्थों में "लुपसद०" आदि सूत्र से यङ्, द्वित्व, हलादि शेष च चर् य, अभ्यास को नुक् = न् आगम, अनुस्वार–परसवर्ण चञ्चर् य, अग्रिम सूत्र 'उत्परस्यातः' से अभ्यास से परवर्त्ती अकार का उकार—चञ्चुर् य, 'हलि च' से उपधा रेफ का दीर्घ—चञ्चूर्यते। यङ्लुक् में चञ्चुरीति। 'फल निष्पत्तौ', तथा 'ञि फला विशरणे' दोनों का ग्रहण है। यङ् द्वित्व, हलादि शेष के बाद नुक्, अनुस्वार परसवर्ण—पम्फल् य, अग्रिम सूत्र से अभ्यास से परवर्त्ती अ का उत्व–पम्फुल्यते। ] ॥८७॥

चर तथा फल—के अभ्यास से परवर्त्ती अकार का उकार आदेश यङ् और यङ्लुक् परे रहते होता है। उदा० चञ्चूर्यते। चञ्चुरीति। पम्फुल्यते। पम्फुलीति। [ इनकी प्रक्रिया पूर्ववर्ती सूत्र में प्रस्तुत की गई है। ]

परवर्त्ती अकार की—इसका क्या फल है? अभ्यास का उत्व न होने लगे। अकार का उकार—इसका क्या फल है? 'अलोऽन्त्यस्य' सूत्र से अन्त्य का न होने लगे। [ अतः स्थानी अकार का निर्देश है। ]

उदिति तपरकरणम्—चञ्चूर्ति, पम्फुलीति इत्यत्र लघूपधगुणनिवृत्त्यर्थम्। दीर्घस्यासिद्धत्वादिह लघुत्वं न निवर्तते ॥

**३६०६. ति च ॥ ८९ ॥ (३०३७)**

तकारादौ प्रत्यये परतश्चरफलोरकारस्य उकारादेशो भवति। चरणं चूर्तिः। ब्रह्मणश्चूर्तिः। प्रफुल्तिः। प्रफुल्ताः सुमनसः।

'यङ्यङ्लुकोः', 'अभ्यासस्य'—इति चानुवर्त्तमानमपि वचनसामर्थ्यादिह नाभिसम्बध्यते ॥

**३६०७. रीगृदुपधस्य च ॥ ९० ॥ (२६४४)**

**न्यासः**

गुणस्य बाधको भविष्यति, तत् किमेतन्निवृत्त्यर्थेन तपरकरणेन ? इत्यत आह—**दीर्घत्वमित्यादि**। असिद्धत्वं तु 'पूर्वत्रासिद्धम्' इत्यनेन। यदि तर्हि लक्षणान्तरेण प्राप्तो गुणस्तपरकरणेनं निवर्त्तते, गुणवद् दीर्घत्वमपि न स्यात् ? नैष दोषः; तपरकरणे हि दीर्घत्वपि सिद्धमिति। तेन दीर्घस्य निवृत्तिर्न शक्यते वक्तुम्। तथा च—'अत उत् सार्वधातुके' इति तपरकरणेन दीर्घत्वमशक्यं निवर्त्तयितुमिति मन्यमानेन 'न भकुर्छुराम्' इति करोतेर्दीर्घत्वप्रतिषेध आरभ्यते। अत इति तपरकरणमिह मा भूत्—फलन्तं प्रयुङ्क्ते फालयतेः क्विप्, तदन्ताद् 'आचारे पुनः सर्वप्रातिपदिकेभ्यः' इति क्विप्, तदन्ताद् यङ्—पम्फाल्यते, पम्फालीति। कथञ्च प्राप्नोति ? एकदेशविकृतस्यानन्यत्वात् ॥ ८८ ॥

**ति च** ॥ अयङ्लुगर्थोऽयमारम्भः। **चूर्तिरिति**। 'स्त्रियां क्तिन्' पूर्ववद्दीर्घः। **प्रफुल्ता इति**। निष्ठा, तदन्ताट्टाप्, जस्। **वचनसामर्थ्यादिह नाभिसम्बध्यत इति**। यदीह यङ्लुग्ग्रहणमभ्यासग्रहणञ्चाभिसम्बध्येत, ततो वचनस्य वैयर्थ्यं स्यात्। पूर्वेणैव यङ्यङ्लुकोरभ्यासस्य सिद्धत्वादित्यभिप्रायः ॥ ८९ ॥

**रीगृदुपधस्य च** ॥ **वरीवृत्यत** इत्यादीनि वृत्तिवृधिनृतीनां रूपाणि। **रीगृत्वत इति वक्तव्यमिति**।

**पदमञ्जरी**

मात्रिक एव सिद्ध इति प्रश्नः। **लघूपधगुणनिवृत्त्यर्थमिति**। अनेन लक्षणेन दीर्घस्य प्राप्त्यभावाल्लक्षणान्तरप्राप्तेऽपि विकारस्तपरकरणसामर्थ्याद्वार्यत इति भावः। यथैव तर्हि गुणो निवर्त्तते, तथा 'हलि च' इति दीर्घत्वमपि निवर्त्तेत ? अत आह—**दीर्घत्वे होति** ॥ ८८ ॥

**ति च** ॥ **वचनसामर्थ्यादिति**। यङ्लुकि पूर्वेणैव सिद्धत्वात् ॥ ८९ ॥

**रीगृदुपधस्य च** ॥ **ऋत्वत इति**। यङि परतो य ऋकारवान् तस्यैव ग्रहणम्, न तूपदेशे ऋत्वतः।

**भावबोधिनी**

'उत्' यह तपरकरण—चञ्चूर्ति, पम्फुलीति—इनमें "पुगन्तलघूपधस्य च" से लघूपध गुण को रोकने के लिये है। [ यद्यपि एकमात्रिक अकार का एकमात्रिक उकार ही आदेश होता अतः तपरकरण = 'उत्' की आवश्यकता नहीं प्रतीत होती है ? समाधान यह है कि 'उत्' विधानसामर्थ्य से इ ही रहता है, उपधागुण नहीं होता है। चञ्चूर्यते में ] दीर्घ के असिद्ध हो जाने से यहाँ लघुत्व की निवृत्ति नहीं होती है। [ अतः लघूपध की निवृत्ति करने के लिये तपर आवश्यक है। ] ॥ ८८ ॥

तकारादि प्रत्यय परे रहते भी चर तथा फल धातुओं के अकार का उकार आदेश होता है। उदा० चरणम् = चूर्तिः। ब्रह्मणः चूर्तिः। [ 'स्त्रियां क्तिन्' से भाव में क्तिन् प्रत्यय होता है—चर्+ति, अ का उ, दीर्घ—चूर्ति। ] प्रफुल्तिः। प्रफुल्ताः सुमनसः। [ प्रफल्+क्तिन्, प्रफल्+क्त, अ का उ। ]

"यङ् तथा यङ्लुक् परे रहते' और 'अभ्यास का' इनकी अनुवृत्ति होने पर भी प्रस्तुत सूत्र में 'ति' वचन के कारण यहाँ इनका सम्बन्ध नहीं होता है। [ अतः सामान्य स्थल पर यह सूत्र लगता है। ] ॥ ८९ ॥

ह्रस्व ऋकार जिसकी उपधा में है ऐसे अङ्ग का जो अभ्यास उसको 'रीक्' का आगम यङ् और यङ् लुक् परे होता है। उदा० वरीवृत्यते। वरीवृध्यते। वरीवृतीति। वरीवृधीति। नरीनृत्यते। नरीनृतीति। [ वृत्+यङ्,

ऋदुपधस्याङ्गस्य योऽभ्यासस्तस्य रीगागमो भवति यङ्यङ्लुकोः परतः। वरीवृत्यते। वरीवृध्यते। वरीवृतीति। वरीवृधीति। नरीनृत्यते। नरीनृतीति।

❀ रीगृत्वत इति वक्तव्यम् ❀ (म० भा०) इहापि यथा स्यात्—वरीवृश्च्यते। परीपृच्छ्यते। वरीवृश्चीति। परीपृच्छीति॥

## ३६०८. रुग्रिकौ च लुकि॥ ९१॥ (२६५२)

यङ्लुकि ऋदुपधस्याङ्गस्य योऽभ्यासस्तस्य रुग्रिकावागमौ भवतश्चकाराद्रीक्च। नर्नर्ति, नरिनर्ति, नरीनर्ति। वर्वर्ति, वरिवर्ति, वरीवर्ति। उकार उच्चारणार्थः।

❀ मर्मृज्यते मर्मृज्यमानास इत्युपसंख्यानम् ❀ (म० भा०)। मर्मृज्यते। मर्मृज्यमानासः॥

**न्यासः**

ऋदुपधादन्यस्यापि ऋत्वतो रीगादयो यथा स्युरित्येवमर्थो व्याख्येय इत्यर्थः। तत्रेदं व्याख्यानम्—चकारोऽत्र क्रियते, स च ऋदुपधादन्यस्यापि ऋत्वतः समुच्चयार्थः, तेन वृश्चतिप्रभृतीनामपि ऋत्वतां रीगादयो भवन्तीति।

'रीगृत्वतः' इति सूत्रं न कृतम्; वैचित्र्यार्थम्।

'ऋदुपधस्य' इति तपरकरणमसन्देहार्थम्। उकारे परतो यणादेशे कृते सन्देहः स्यात्—किमृकारोपधस्य? अथ वा रेफोपधस्येति?॥ ९०॥

रुग्रिकौ च लुकि॥ ९१॥

**पदमञ्जरी**

तेन परीपृच्छ्यत इत्यादौ सम्प्रसारणे कृतेऽपि भवति॥ ९०॥

रुग्रिकौ च लुकि॥ मर्मृज्यत इति। लुकि विधीयमानो रुग्यङि न प्राप्नोतीति वचनम्॥ ९१॥

**भावबोधिनी**

द्वित्व, 'उरत्' से अभ्यास के ऋ का गुण, रपर, हलादिशेष, अभ्यास को रीक् = री का आगम वरीवृत् य + ते। यङ्-लुक् में व वृत्, रीक् वरीवृत् + ति, ईट् आगम वरीवृत् ईति। इसी प्रकार वृध् और नृत् के रूप भी समझने चाहिए।]

❀ ऋत्वान् = ह्रस्व ऋकार वाली धातु को 'रीक्' का आगम होता है, ऐसा कहना चाहिए।❀ जिससे कि यहाँ भी हो सके—वरीवृश्च्यते। परीपृच्छ्यते। वरीवृश्चीति। परीपृच्छीति। ['ओ व्रश्चू छेदने', तथा 'प्रच्छ ज्ञीप्सायाम्' इन दोनों से यङ् प्रत्यय होने पर ङित् मानकर र् का सम्प्रसारण "ऋ और अ का पूर्वरूप कर देने पर वृश्च् + य, पृच्छ् + य, द्वित्व, अभ्यासकार्य, ऋकारवान् हो जाने से रीक् का आगम प री पृच्छ् + यते। वरीवृश्च् + यते। यङ्लुक् में भी रीक् होता है। यहाँ उपदेश में ऋकारवान् का ग्रहण नहीं है। अतः सम्प्रसारण के बाद भी ऋत्वान् होने से रीक् आगम हो जाता है।]॥ ९०॥

यङ्लुक् में ऋदुपध अङ्ग का जो अभ्यास उसे रुक्, रिक् और 'च' के बल से रीक् ये तीन आगम होते है। उदा० नर्नर्ति, नरिनर्ति नरीनर्ति। वर्वर्ति, वरिवर्ति, वरीवर्ति। रुक् का उकार केवल उच्चारण के लिये है। [ नृत् + रुक् = र् आगम नर् नृ + ति, गुण, रपर—(१) नर्नर्ति। रिक् = रि आगम (२) नरिनर्ति। रीक् = री आगम (३) नरीनर्ति। इस प्रकार वृत् के भी रुक्, रिक्, रीक् आगम में तीन रूप होते है।]

❀ मर्मृज्यते और मर्मृज्यमानास यह उपसंख्यान करना चाहिए।❀ उदा० मर्मृज्यते। मर्मृज्यमानासः। [मृज् + यङ्, द्वित्व, अभ्यासकार्य के बाद रुक् आगम की प्राप्ति नहीं है क्योंकि यह यङ्लुक् में ही होता है, यङ् परे नहीं। अतः वार्तिक से निपातन होता है। 'मर्मृज्यमानासः' यह प्रथमा बहुवचन का रूप है। जस् में असुक् आगम होता है वेद में। यङ् होने से यहाँ भी अप्राप्त रुक् का आगम किया जाता है।]॥ ९१॥

३६०९. ऋतश्च ॥ ९२ ॥ (२६५३)

ऋकारान्तस्याङ्गस्य योऽभ्यासस्तस्य रुग्रिकावागमौ भवतो रीक्च यङ्लुकि। चर्कर्ति, चरिकर्ति, चरीकर्ति। जर्हर्ति, जरिहर्ति, जरीहर्ति।

तपरकरणं किम् ? किरतेः—चाकर्ति।

किरतिं चर्करीतान्तं पचतीत्यत्र यो नयेत्।
प्राप्तिज्ञं तमहं मन्ये प्रारब्धस्तेन संग्रहः॥ (म० भा०)

**न्यासः**

**ऋतश्च॥** लुकीत्येव। चकारेण रीगादयोऽनुकृष्यन्ते। **चर्कर्तीति।** 'डुकृञ् करणे'। **जर्हर्तीति।** 'हृञ् हरणे'।

**किरतेश्चाकर्त्तीति।** 'कॄ विक्षेपे' इत्यस्य।

**किरतिमित्यादि।** किरतिग्रहणमुपलक्षणार्थम्। तेन 'गॄ निगरणे' इत्येवमादेरपि ॠकारान्तस्य ग्रहणं वेदितव्यम्। **चर्करीतान्तमिति।** यङ्लुगन्तमित्यर्थः। यङ्लुक एव पूर्वाचार्यप्रणीतैषा संज्ञा 'चर्करीतम्' इति। **पचतीति।** लट्प्रथमपुरुषस्यैकवचनम्। एतदप्युपलक्षणार्थमेव। वचनान्तराणामपि ह्यत्रग्रहणम्। तेन 'कॄ' इत्येवमादिकमॄकारान्तं यो लट्प्रथमपुरुषैकवचनादौ नयेत्=चाकर्त्तीत्येवमादीनि रूपाणि प्रापयेत्, सम्पादयेदित्यर्थः। **प्राप्तिज्ञं तमहं मन्य इति।** प्राप्तिं जानातीति प्राप्तिज्ञः। इह तु रुगादीनां प्रकृतत्वात् तत्प्राप्तिं यो जानाति स प्राप्तिज्ञो वेदितव्यः। **मन्ये अवगच्छामि। प्रारब्धस्तेन संग्रह इति।** अनेन प्राप्तिज्ञतायां हेतुमाह। सम्यग् गृह्यते ज्ञायते लक्षणमनेनेति संग्रहः=व्याकरणशास्त्रम्। प्रकर्षेणारब्धः प्रारब्धः; बहुभ्यो बहुशः श्रवणात्।

**पदमञ्जरी**

**ऋतश्च॥ किरतिमिति।** ॠकारान्तोपलक्षणमेतत्। 'चर्करीतम्' इति यङ्लुकः पूर्वाचार्यसंज्ञा। **पचतीति।** लट उपलक्षणम्, तेन चाकर्तीत्यादीनि रूपाणि, किरतेर्यो नयेदित्यर्थः। यद्वा—यङ्लुकि किरतिं पचतीति यो नयेत्=पचतिना तुल्यरूपाणि यो नयेत्, पचतिवद् रुगादिकमकृत्वा नयेदित्यर्थः। **प्राप्तिज्ञमिति।** रुगादीनां विषयविभागेन या प्राप्तिस्तां जानातीति प्राप्तिज्ञः। **प्रारब्ध इति।** संग्रहणं संग्रहः, साधुशब्द-संग्रहस्तेन प्रारब्ध इति योग्यतातिशयोद्भावनेनायं स्तूयते।

**भावबोधिनी**

ऋकारान्त अङ्ग का जो अभ्यास उसे रुक्, रिक् और रीक् तीनों आगम यङ्लुक् में होते हैं। उदा० चर्कर्ति, चरिकर्ति, चरीकर्ति। जर्हर्ति, जरिहर्ति जरीहर्ति। [ 'डुकृञ् करणे' 'हृञ् हरणे' कृ+यङ्, हृ + यङ् में यङ्लुक् में द्वित्व तथा अभ्यासकार्य करने पर क कृ, में चुत्व, हहृ में चुत्व और जश्त्व के बाद क्रमशः रुक्, रिक् रीक् आगम करने पर चर्कृ, चरिकृ, चरीकृ + तिप् में गुण, रपर होता है। इसी प्रकार जर् हृ, जरिहृ, जरीहृ + तिप् में भी गुण, रपर होता है। फलतः—चर्कर्ति, चरिकर्ति चरीकर्ति, जर्हर्ति, जरिहर्ति, जरीहर्ति रूप बनते हैं। ]

ऋत् का तपरकरण किस लिये है ? किरति—कॄ से चाकर्ति [ में आगम-निवृत्ति के लिये है। कॄ धातु में दीर्घ ॠ होने से कोई भी आगम नहीं होता है कॄ कॄ, अत्व, रपरत्व, हलादिशेष, 'दीर्घोऽकितः' सूत्र से अभ्यास का दीर्घ चा कॄ+ ति, गुण, रपर—चाकर्ति होता है। ]

[ काशिका में महाभाष्य का पद्य उद्धृत है—] जो (विद्वान् व्यक्ति) किरति (=कॄ) चर्करीतान्त (=यङ्लुगन्त) को पचति (लट्लकार प्रथम पुरुष एकवचन) तक ले जावे [ भाव यह है कि कॄ गॄ आदि दीर्घ ॠकार वाली धातु के चर्करीत=यङ्लुक् अन्त को जो लट् प्रथम पुरुष एकवचन में पहुचावे अर्थात् 'चाकर्ति' चाकीर्तः, चाकिरति आदि रूपों को बना सके ] उस व्यक्ति को मैं [ रुक् रिक्, रीक् की ] प्राप्ति समझने वाला मानता

तत्रेयं प्राप्तिः—तपरकरणसामर्थ्यादङ्गविशेषणम् 'ऋतः' इत्येतत्, तथा चाप्राप्तिः किरतेः रुगादीनामिति ॥

**३६१०. सन्वल्लघुनि चङ्परेऽनग्लोपे ॥ ९३ ॥ (२३१६)**

लघुनि धात्वक्षरे परतो योऽभ्यासस्तस्य चङ्परे णौ परतः सनीव कार्यं भवति अनग्लोपे। 'सन्यतः' (७।४।७९) इत्युक्तम्, चङ्परेऽपि यथा—अचीकरत्। अपीपचत्।

**न्यासः**

का पुनरसौ प्राप्तिर्यत्परिज्ञानाय प्राप्तिज्ञमवगच्छामीत्याह—**तत्रेयमित्यादि**। द्वयमिह प्रकृतम्—अङ्गम्, अभ्यासश्चेति। ऋत इति विशेषणमुपात्तम्; तत्र यद्यप्युभयं प्रकृतं तथाप्यृत इत्येतदङ्गस्यैव विशेषणम्, नाभ्यासस्य। कुतः? तपरकरणसामर्थ्यात्। सर्वत्रैव ह्यभ्यासस्य 'ह्रस्वः' इति ह्रस्वत्वेन भवितव्यम्; अतो दीर्घस्याभ्यासस्याभावात्। यदि 'ऋतः' इत्येतदभ्यासस्य विशेषणं स्यात्, तदा तपरकरणमनर्थकं स्यात्। तस्मात् **तपरकरणसामर्थ्यादङ्गस्यैव विशेषणमृत इत्येतत्**, नाभ्यासस्य। एवञ्च सति किरतेरप्राप्तिः; रुगादीनां तपरकरणेन व्यावर्त्तितत्वात्। आदिशब्देन रिगादीनां परिग्रहः। **तथा चाप्राप्तिः किरते रुगादीनामिति** ब्रुवतैतदुक्तं भवति—करोतिप्रभृतीनामेव ह्रस्वान्तानां पारिशेष्यात् प्राप्तिरिति ॥ ९२ ॥

**सन्वल्लघुनि चङ्परेऽनग्लोपे** ॥ 'सन्यतः' इत्यादिना सूत्रत्रयेण यदभ्यासस्य सनि कार्यं भवति तल्लघुनि चङ्पर इत्यतिदिश्यते। 'लघुनि', 'चङ्परे' इति व्यधिकरणे सप्तम्यौ—चङ्परे णौ परतो यत् पूर्वं

**पदमञ्जरी**

तत्र प्राप्तिज्ञमित्यत्र प्राप्तिं व्याचष्टे—**तत्रेयं प्राप्तिरिति**। **तपरकरणसामर्थ्यादिति**। अभ्यासविशेषणे तु भूतपूर्वदीर्घनिवृत्त्यर्थं तपरकरणमिति व्याख्येयम्। न हि मुख्यनिवर्त्त्यसम्भवे गौणकल्पना न्याय्येति अङ्गविशेषणमृत इत्याश्रितमित्यर्थः ॥ ९२ ॥

**सन्वल्लघुनि चङ्परेऽनग्लोपे** ॥ 'लघुनि चङ्परे' इति व्यधिकरणे सप्तम्यौ, न समानाधिकरणे; चङ्परस्य लघुनोऽसम्भवात्। **चङ्परे णौ परत इति**। कथं पुनर्णाविति लभ्यते? चङ्परस्यान्यस्यासम्भवात्। ननु चाचकमतेत्यत्र मकारः सम्भवति, अदुद्रवद्, असुस्रवदित्यत्र वकारः? एवं तर्हि 'चङ्परे' इत्यङ्गस्य

**भावबोधिनी**

है, उसने संग्रह = साधुशब्दों का संग्रह अथवा व्याकरणशास्त्र का प्रारम्भ किया है। [ श्लोक में 'किरति' 'चर्करीतान्त' और 'पचति' ये तीनों क्रमशः गॄ आदि दीर्घ ॠकार वाली यङ्लुगन्त धातुओं तथा द्विवचन, बहुवचन लट् आदि के उपलक्षण हैं। अतः जो व्यक्ति यह जानता है कि कहाँ रुक् आदि होते हैं और कहाँ नहीं होते हैं। उसकी प्रशंसा की जानी चाहिए। क्योंकि यह विषय अति गम्भीर है। ]

[ प्राप्ति को जानने वाला ] इसमें यह प्राप्ति है 'ऋतः' यहाँ तपरकरण के सामर्थ्य से यह अङ्ग का विशेषण बनता है, [—ऋकारान्त अङ्ग का जो अभ्यास उसे रुक् आदि आगम होते हैं। ] और इस कारण [ दीर्घ ॠकार वाले अङ्ग ] 'कॄ' को रुक् आदि आगमों की अप्राप्ति है। [ जो प्राप्ति को जानता है वह व्याकरण शास्त्र को जानने वाला है। ]

**विमर्श**—'ऋतश्च' इसमें 'अङ्गम्' और 'अभ्यासस्य' दोनों की अनुवृत्ति होती है। फिर भी 'ऋतः' यह अङ्ग का ही विशेषण मानना चाहिए—ऋकारान्त अङ्ग का जो अभ्यास। कारण यह है कि तपरकरण दीर्घनिवृत्ति के लिये है। किन्तु ह्रस्व सर्वत्र हो ही जाता है तब तपरकरण की क्या आवश्यकता। इस कारण अङ्ग का ही विशेषण बनाया जाता है—ऋकारान्त अङ्ग का जो अभ्यास उसे रुक् आदि होते हैं। चूंकि 'कॄ' 'गॄ' आदि अङ्ग ह्रस्व ऋकारान्त नहीं है अतः उनके अभ्यास को रुक् आदि आगम नहीं होते हैं। 'कृ' हृ आदि को होते हैं ॥ ९२ ॥

लघु धात्वक्षर के परे रहते जो अभ्यास उसका चङ्परक णि परे रहते सन् परे के समान कार्य होता है अनग्लोप में ( अक् = अ इ उ ऋ ऌ का लोप न होने पर, ) अर्थात् सन् न होने पर भी उसका भाव मान लिया जाता है। "सन्यतः" ( सन् परे रहते अभ्यास के अकार का इत्व होता है ) ऐसा कहा गया है, चङ्परक णि परे भी ऐसा

'ओः पुयण्ज्यपरे' ( ७।४।८० ) इत्युक्तम्, चङ्परेऽपि तथा—अपीपवत् । अलीलवत् । अजीजवत् ।

'स्रवतिशृणोतिद्रवतिप्रवतिप्लवतिच्यवतीनां वा' ( ७।४।८१ ) इत्युक्तम्, चङ्परेऽपि तथा—असिस्रवत्, असुस्रवत् । अशिश्रवत्, अशुश्रवत् । अदिद्रवत्, अदुद्रवत् । अपिप्रवत्, अपुप्रवत् । अपिप्लवत्, अपुप्लवत् । अचिच्यवत्, अचुच्यवत् ।

लघुनीति किम् ? अततक्षत् । अररक्षत् । जागरयतेः—अजजागरत् ।

**न्यासः**

लघु तस्मिन् परतो योऽभ्यासस्तस्य सन्वद् भवतीति । 'चङ्परे' इति बहुव्रीहिः—चङ्परो यस्मादिति तच्चङ्परम्, न तु चङ्चासौ परश्चेति तत्पुरुषः । तेन सामर्थ्याण्ण्यन्तस्यैवायमतिदेशो विज्ञायते; अन्यथा हि यदि प्रकृत्यन्तस्यायमतिदेशः स्यात् तदा 'सन्वच्चङि' इत्येवं ब्रूयात् । अनग्लोप इति । 'चङ्परे' इत्यस्यैतद् विशेषणम् । अगिति प्रत्याहारग्रहणम् । अको लोपोऽग्लोपः, स यस्य नास्ति तदनग्लोपम् । अपीपचदिति पचेर्णिच्, लुङ्, च्लेश्चङ्, उपधाह्रस्वत्वम्, द्विर्वचनमभ्यासकार्यम्, हलादिशेषे च कृतेऽनेन सन्वद्भावः, 'सन्यतः' इतीत्वम्, उत्तरसूत्रेण दीर्घत्वम् ।

अततक्षत्, अररक्षदिति । अत्र रेफतकारयोः संयोगपरत्वाद् गुरुसंज्ञायां सत्यां न भवति सन्वद्भावः । अजजागरदिति । अत्र जकाराकारस्य दीर्घत्वाद् गुरुत्वम् ।

**पदमञ्जरी**

विशेषणम्—चङ्परे यदङ्गं तस्य योऽभ्यासस्तस्य सन्वत्कार्यं भवति । लघुनि धात्वक्षर इति । चङ्परे णौ यदङ्गं तस्य सम्बन्धि यल्लघ्वित्यर्थः । सामर्थ्याण्ण्यन्तस्य ग्रहणमिति । समीपभूतस्याङ्गस्य ग्रहणमित्यर्थः । ण्यन्तस्यावयवभूतं यदङ्गं तस्य ग्रहणमिति वा । अनग्लोप इति । नास्मिन्नग्लोपो विद्यत इति अनग्लोपः । एतच्च 'चङ्परे' इत्यनेन समानाधिकरणम् । तेनायमर्थः—चङ्परे णावको लोपेऽसतीति । अततक्षदित्यत्र संयोगपरत्वाद् गुरुसंज्ञया लघुसंज्ञाया बाधः, अजजागरदित्यत्र आकारः परः ।

**भावबोधिनी**

होता है—अचीकरत् । अपीपचत् । [ कृ + णिच् = इ + लुङ् = तिप्, च्लि का चङ् आदेश वृद्धि, रपर, 'चङि' से द्वित्व, अभ्यास 'णौ चङ्युपधायाः 'ह्रस्वः' से ह्रस्व, 'चङि' से द्वित्व अ कर् कर् इ अ त्, हलादि शेष, चुत्व प्रस्तुत सूत्र से सन्वद्भाव, 'सन्यतः' से अभ्यास अ का इत्व, 'दीर्घो लघोः' से दीर्घ, 'णेरनिटि' से णिलोप—अचीकर्‌अत । पच् + णिच्, उपधावृद्धि, लुङ् च्लि का चङ्, उपधा का ह्रस्व, द्वित्व, अभ्यासकार्य सन्वद्भाव, अभ्यास इत्व अपि पच् इ अत्, दीर्घ णिलोप—अपीपचत् । ]

'ओः पुयण्ज्यपरे' ( ७।४।८० उवर्णान्त अभ्यास का, पवर्ग यण् और जकार जो अवर्णपरक हैं के परे रहते सन् परे इकार आदेश होता है । ) यह चङ परे भी उसी प्रकार होता है—अपीपवत् । अलीलवत् । अजीजवत् । [ पू, लू जू—इनसे णिच्, लुङ्, च्लि का चङ्, द्वित्व आदि के बाद प्रस्तुत सूत्र से सन्वद्भाव के कारण 'ओः पुयण्ज्यपरे' सूत्र से अभ्यास का इत्व, दीर्घ होने पर उक्त रूप बनते हैं । ]

'स्रवति, शृणोति, प्रवति, प्लवति और च्यवति—इन धातुओं के अभ्यास के उवर्ण का इकार आदेश अवर्णपरक यण् परे रहते सन् परे होता है । ऐसा कहा गया है—यह चङ परे भी वैसा होता है । उदा० असिस्रवत् असुस्रवत् । अशिश्रवत् अशुश्रवत् । अदिद्रवत्, अदुद्रवत् । अपिप्रवत् अपुप्रवत् । अपिप्लवत् अपुप्लवत् । अचिच्यवत् अचुच्यवत् । [ स्रु + णिच् + लुङ् = तिप्, अट्, च्लि का चङ्, द्वित्व अभ्यास के उकार का इकार विकल्प से होता है—(१) असिस्रवत, इत्व न होने पर (२) असुस्रवत् । इसी प्रकार श्रु द्रु, प्रु प्लु और च्यु इनसे भी णिच् के बाद लुङ् चङ् आदि करने पर सन्वद्भाव होने से अभ्यास के उकार का विकल्प से इत्व होता है । अतः दो दो रूप बनते है । ]

लघु ( धात्वक्षर ) परे रहते—इसका क्या फल है ? अततक्षत् । अररक्षत् । जागृ + णिच् से अजजागरत् । [ तक्ष् रक्ष् से णिच्, लुङ्, चङ् द्वित्व, अभ्यासकार्य—अ त तक्ष् इ अत, अ र रक्ष इ अत, णिलोप, सन्वद्भाव नहीं होता है क्योंकि संयोग से पूर्व होने से गुरु हो जाने के कारण लघु धात्वक्षर परे नहीं मिलता है अतः सन्वद्भाव न

**अत्र केचिद् गशब्दं लघुमाश्रित्य सन्वद्भावमिच्छन्ति, सर्वत्रैव लघोरानन्तर्यमभ्यासेन नास्तीति व्यवधानेऽपि वचनप्रामाण्याद्भवितव्यम्? तदसत्; 'येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात्' ( व्या० प० ४६ ) इत्येकेन व्यवधानमाश्रीयते, न पुनरनेकेन।**

**यद्येवम्, कथमचिक्षणदिति? आचार्यप्रवृत्तिर्ज्ञापयति—भवत्येवञ्जातीयकानामित्वमिति। यदयं तद्बाधनार्थं स्मरत्यादीनामत्वं विदधाति।**

**न्यासः**

**अत्र केचिदित्यादि।** तेषामजीजागरदिति भवितव्यम्। किं पुनः कारणं त एवमिच्छन्ति, यावता लघुनि चङ्परे इत्युच्यते, व्यवहितश्चात्र लघुनि चङ्परे? इत्यत आह—**सर्वत्रैवेत्यादि।** अचीकरदित्यादावपि ककारादिना वर्णेन व्यवधानाल्लघोरानन्तर्यमभ्यासे नास्ति; उच्यते चेदं वचनम्, अतो वचनप्रामाण्याद् व्यवधान एव सन्वद्भावेन भवितव्यम्। ततश्च यथाचीकरदित्यादौ व्यवधानेऽपि भवति, तथेहापि व्यवधाने सन्वत्कार्येण भवितव्यम्। अथेह चेद् व्यवधानान्न भवति, अत्रापि न स्यादिति भावः। **तदसदिति।** अजजागरदित्यत्र गृशब्दं लघुमाश्रित्य यत् सन्वद्भावमिच्छन्ति, सर्वत्रैवेत्यादिना च यत् कारणमुक्तम्, तदुभयमत्राशोभनम्; अयुक्तत्वात्। कथम्? इत्याह—**येनेत्यादि।** एकेन वर्णेन व्यवधानमस्ति सर्वत्र। वर्णसङ्घातेन व्यवधानमस्ति नास्ति च। तत्र 'येन नाव्यवधानं तेन व्यवहितेऽपि वचनप्रामाण्यात्' इति यन्नियतभाव्येकेन वर्णेन व्यवधानमशक्यं परिहर्त्तुम्, तदेवाश्रीयते, न तु वर्णसङ्घातेन। अजजागरदित्यत्र वर्णसङ्घातेन व्यवधानम्।

यदि तर्हि वर्णसङ्घातेन व्यवधानं नाश्रीयते, व्यञ्जनसङ्घातेन व्यवधाने न सिद्ध्यति?—इत्यभिप्रायेणाह **कथमचिक्षणदित्यादि।** 'क्षणु हिंसायाम्' इत्येतस्यैतद्रूपम्। अत्रापि ज्ञापकेन सिध्यतीत्यत आह—**आचार्यप्रवृत्तिरित्यादि।** क्षणोतिना ये सदृशाः संयोगादयस्त एवञ्जातीयाः। क्षणोतिप्रकारा इत्यर्थः। तेषां यदीत्वं न स्यात्, तदा तद्बाधनार्थम् 'अत्स्मृदृत्वरप्रथम्रद' इत्यादिनाऽत्वं न विदध्यात्, विदधाति च। तस्मादेतदेवात्त्वविधानलक्षणमाचार्यप्रवृत्तिर्ज्ञापयति—**भवत्येवञ्जातीयकानामित्वमिति।**

**पदमञ्जरी**

**अत्र केचिदित्यादि।** ननु च गकारो जाशब्देन व्यवहितः? अत आह—**सर्वत्रैवेति।** अचीकरदित्यादावपि ककारादिना व्यवधानाल्लघोरानन्तर्यं नास्ति, ततश्च वचनप्रामाण्याद्व्यवधान एव सन्वद्भावेन भवितव्यमिति तेषामभिप्राय इत्यर्थः। दूषयति—**तदसदिति॥**

यदि तर्हि वर्णसङ्घातेन व्यवधानं नाश्रीयते व्यञ्जनसङ्घातेनापि व्यवधाने न सिध्यतीति मन्यमानः पृच्छति—**कथमिति। एवञ्जातीयकानामिति।** संयोगव्यवहितानामित्यर्थः।

**भावबोधिनी**

होने से अभ्यास का इत्व नहीं होता है। जागृ + णिच, चङ् द्वित्व, अभ्यासकार्य हलादिशेष अजजागृ इ अत् में भी 'जा' यह गुरु अक्षर परे है अतः सन्वद्भाव न होने से इत्व नहीं होता है। ]

इसमें कुछ विद्वान् ग शब्द को लघु मानकर सन्वद्भाव को चाहते हैं, [ यहाँ बीच में जा का व्यवधान है? ] सर्वत्र ( अचीकरत् आदि में ) अभ्यास से लघु वर्ण का आनन्तर्य ( अव्यवधान ) नहीं है ( क्योंकि बीच में कोई न कोई ककार आदि व्यञ्जन रहता ही है ) इसलिए इस वचन के प्रामाण्य से व्यवधान में भी सन्वद्भाव होना चाहिये। [ फलतः 'अजीजागरत्' ऐसा रूप बनना चाहिये ]? यह कथन ठीक नहीं है, कारण यह है 'जिसका अवश्य व्यवधान होता है, उसके द्वारा व्यवधान में भी वचनप्रामाण्य से कार्य किया जाता है' इस परिभाषा से केवल एक का व्यवधान सह्य माना जाता है, अनेक वर्णों का नहीं। [ अतः अचीकरत् आदि में केवल 'क' का व्यवधान तो सहन किया जाता है किन्तु 'अजजागर् अ त्' में ज् आ, ज् तीन का व्यवधान सह्य नहीं हो सकता। अतः सन्वद्भाव न होने से इत्व नहीं होता है। ]

**चङ्पर इति किम् ? अहं पपच । परग्रहणं किम् ? चङ्येव केवले मा भूत्—अचकमत । अनग्लोप इति किम् ? अचकथत् । दृषदमाख्यातवान् अदद‍ृषत् ।**

**न्यासः**

**अहं पपचेति ।** उत्तमे णलि यदा 'णलुत्तमो वा' इति णित्त्वं नास्ति तदेदं प्रत्युदाहरणं भवति । अत्र लघुपरतोऽक्षरम्, न तु चङ्परम् । **अचकमतेत्यादि ।** 'कमेश्चोपसंख्यानम्' इति 'कमु कान्तौ' इत्येतस्मात् प्रकृत्यन्तादेव लुङ्, चङ् । **अचकथदिति ।** 'कथ वाक्यप्रबन्धे' चुरादावदन्तः । अत्र 'अतो लोपः' इत्यकारलोपः । अत्र त्वग्लोपस्य स्थानिवद्भावे सति व्यवधानेऽपि न स्यात् । अतः प्रत्युदाहरणान्तरमाह—**दृषदमाख्य-ददद‍ृषदिति ।** 'तत्करोति तदाचष्टे' इति णिच् । 'णाविष्ठवत् कार्यं प्रातिपदिकस्य' इतीष्ठवद्भावाट्टिलोपः । अत्राज्झलोर्लोपः, नाक एव केवलस्येति नास्त्यत्र स्थानिवद्भावः । अन्यार्थं त्वग्लोप इति क्रियमाणमचकथदित्यत्रापि सन्वद्भावं निवर्त्तयतीत्यस्योपन्यासः ।

**पदमञ्जरी**

**अचकमतेति ।** 'कमेरुपसंख्यानम्' इति च्लेश्चङादेशः । **अचकथदिति ।** 'कथ वाक्यप्रबन्धे' चुरादावदन्तः, 'अतो लोपः' । अत्राल्लोपस्य स्थानिवद्भावे सति व्यवधानान्न भविष्यति, अतः प्रत्युदाहरणान्तरोपन्यासः । **अदद‍ृषदिति ।** 'तदाचष्टे' इति णिच इष्ठवद्भावेन टिलोपः । अत्राज्झलोर्लोपः, नाच एव केवलस्येति नास्ति स्थानिवद्भावः । एतदर्थं च 'अनग्लोपे' इत्येतत्क्रियमाणमचकथदित्यत्र सन्वद्भावं निवर्त्तयतीति तस्योपन्यासः ।

**भावबोधिनी**

यदि ऐसा अर्थात् एक वर्ण का व्यवधान ही सह्य होता है, तो 'अचिक्षणत्' यह रूप कैसे बनेगा । [क्योंकि क्+ष = क्ष संयुक्त वर्ण होने से इससे पूर्व गुरु हो जाने पर लघु परे नहीं है ] ? आचार्य की प्रवृत्ति ज्ञापित करती है कि—इस प्रकार वालों का ( = संयोग से व्यवहितों का ) इत्व होता है, जो कि ये आचार्य इस इत्व का बाध करने के लिए 'स्मृ' आदि धातुओं के अत्व का विधान करते हैं । [ भाव यह है कि आगे "अत् स्मृ-दृत्वर-प्रथम्रस्तृस्पशाम्' ( ७।४।९५ ) सूत्र इन धातुओं के अभ्यास का चङ्परक णि परे रहते 'अत्' आदेश करता है । यदि संयुक्त को दो मान उसका व्यवधान सह्य नहीं माना जायगा तो 'सन्वल्लघुनि' से सन्वद्भाव के फलस्वरूप इत्व की प्राप्ति ही नहीं है तब उसके बाधनार्थ 'अत्' आदेश का विधान व्यर्थ है । व्यर्थ होकर ज्ञापित करता है कि 'क्षण्' आदि के सदृश में भी इत्व की प्राप्ति है, उसे रोकने के लिए अत्व का विधान किया गया है । ]

चङ्परक होने पर—इसका क्या फल है ? अहं पपच । [ 'णलुत्तमो वा' इससे णित्व के अभाव पक्ष में यह प्रत्युदाहरण है क्योंकि लिट् में चङ् नहीं होता है । ]

चङ् परे है जिससे ऐसे णि के परे रहते—इसका क्या फल है ? केवल चङ् परे रहते न होने लगे—अचकमत । [ 'कमु कान्तौ' से लुङ् में 'आयादय आर्धधातुके वा' सूत्र से 'कमेर्णिङ्' का णिङ् विकल्प से होता है । अभाव पक्ष में शुद्ध धातु अकम् + च्लि + लुङ् = त में 'कमेरुपसंख्यानम्' ( कमेश्च्लेश्चङ् वक्तव्यः ) से चङ् होता है । किन्तु णि नहीं होने से चङ् परक णि न होने से सन्वद्भाव और इसके फलस्वरूप इत्व दीर्घ आदि नहीं होते हैं । )

अनग्लोप = अर्थात अक् प्रत्याहार के किसी वर्ण का लोप न होने पर—इसका क्या फल है ? अचकथत् । [ 'कथ वाक्यप्रबन्धे' यह अदन्त धातु है । णिच् करने पर अलोप होने से अग्लोपी बन जाती है । अतः चङ्परक' णि होने पर भी सन्वद्भाव नहीं होता है । अतः इत्व भी नहीं होता है । इसी प्रकार ] 'दृषदम् आख्यातवान्' इस अर्थ में 'अदद‍ृषत्' यहाँ भी नहीं होता है । [ दृषदम् आख्यातवान् अर्थ में 'तत्करोति तदाचष्टे' से णिच् और 'णाविष्ठवत् कार्यं प्रातिपदिकस्य' वचन से टि = अत् का लोप अदृष् इ + लुङ् = तिप्, च्लि आदि होता है किन्तु अक् ( अद् ) का लोप है । अतः सन्वद्भाव नहीं होता है । ]

**वादितवन्तं प्रयोजितबान् अवीवददित्यत्र योऽसौ णौ णेर्लोपः, नासावग्लोप इत्याश्रीयते, किं कारणम् ? 'चङ्परे' इति णिजातेर्निमित्तत्वेनाक्षेपात् ततोऽन्यस्याको लोपः परिगृह्यते। मीमादीनामत्र ग्रहणात् 'सन्वद्भावेनाभ्यासलोपो न भवति' इत्युक्तम्।**

**न्यासः**

**अवीवददिति।** वदतेर्ण्यन्ताद् वादितवन्तं प्रयोजितवानिति 'हेतुमति च' इति णिच्, पुनर्णिच्युत्पन्ने 'णेरनिटि' इति णिलोपे कृते सत्यप्यग्लोप्यङ्गं भवति, अतो न भवितव्यं सन्वद्भावेनेति यो मन्यते, तं प्रत्याह—**वादितवन्तं प्रयोजितवानित्यादि। चङ्पर इत्यादिना** णिलोपस्याग्लोपित्वेनानाश्रयणे कारणमाह। 'चङ्परे' इत्यनेन हि सन्वद्भावनिमित्तेन णिजातिराक्षिप्ता। तस्माद् गोबलीवर्दन्यायेन णिजातिर्निमित्तत्वेनाश्रीयते। अतो णिजातेरन्यस्याको लोपः प्रतिषेधनिमित्तत्वेन परिगृह्यते, न तु तस्या एवणिजातेः। तस्माण्णिलोपस्याग्लोपित्वेनानाश्रयणात् तल्लोपेऽग्लोप्यङ्गं न भवति। अतो भवत्येवात्र सन्वद्भावः। सन्वदित्यतिदेशेन यथाचीकरदित्यादावभ्यासस्येत्वं भवति, तथामीमपदित्यादावप्यभ्यासलोपेन मीमादीनां भवितव्यमिति यश्चोदयेत्, तं प्रत्याह—**मीमादीनामित्यादि।** आदिशब्देन घ्वादीनां ग्रहणम्।

**पदमञ्जरी**

यदि चङ्परे णौ यदङ्गं तस्य यल्लघु तत्र परतोऽभ्यासस्य सन्वद्भावो विधीयते, वादितवन्तं प्रयोजितवानवीवददित्यत्रापि तर्हि न प्राप्नोति, किं कारणम् ? यश्चङ्परो णिर्नं तत्र लघुः; पूर्वेण णिचा व्यवहितत्वात्। लोपे कृते नास्ति व्यवधानम्। अजादेशः पूर्वविधौ स्थानिवद् भवतीति स्थानिवद्भावाद्व्यवधानमेव। यद्यपि दीर्घविधिं प्रति स्थानिवद्भावो निषिद्धः, सन्वद्भावे तु प्राप्नोति। यस्मिश्च णौ लघुर्नासौ चङ्परः; द्वितीयेन णिचा व्यवहितत्वात्। भवतु वा स्थानिवत्त्वनिषेधः, अग्लोपित्वान्न प्राप्नोति। वृद्धौ कृतायां णेर्लोपः, तन्नाग्लोप्यङ्गं भवति। अग्लोपि वास्तु, प्रागेव वृद्धेर्णिलोपे कृते ? तत्रापि परिहारमाह—**योऽसौ णौ णेर्लोप इत्यादि।** ततोऽन्योऽग्लोप इति अन्याकारोऽन्य उक्तः जात्याश्रयणे हि गोबलीवर्दन्यायेन णिजातेर्निमित्तत्वेन परिगृहीताया अन्यस्याको लोपः प्रतिषेधविषयः परिगृह्यते, न तु तस्या णिजातेः; ततश्चास्य लोपस्याग्लोपत्वेनानाश्रयणात्तेनाग्लोप्यङ्गं न भवतीति भवत्येवात्र सन्वद्भावः। **मीमादीनामत्र ग्रहणादिति।** तत्र ह्युच इति 'अभ्यासलोपश्च' इत्येव सिद्धेऽत्रग्रहणं विषयावधारणार्थम्। अत्र मुख्ये सन्येव **भवति, न सन्वद्भावविषय इति।**

**भावबोधिनी**

वादितवन्तं प्रयोजितवान्—इस अर्थ में 'अवीवदत्' इसमें द्वितीय णि के परे रहते जो प्रथम णि का लोप होता है वह अग्लोप ऐसा नहीं माना जाता है, क्या कारण है ? 'चङ्परक में' णि जाति का निमित्तत्व रूप से आक्षेप के कारण उस (णि) से भिन्न अक् का लोप लिया जाता है। [ भाव यह है कि वादितवान् तं प्रयोजितवान्—इस अर्थ में णिजन्त वादि से पुनः 'हेतुमति च' सूत्र से णिच् होने पर 'णेरनिटि' सूत्र से प्रथम णिच् का लोप किया जाता है, यह णिच् धातु का अङ्ग बना है अतः अग्लोपी धातु (अंग) होता है, सन्वद्भाव नहीं होना चाहिये ? समाधान यह है कि 'चङ्परे णौ' यहाँ सन्वद्भाव के निमित्त के रूप में णि जाति का आक्षेप किया जाता है, णिजाति मान ली जाती है। इससे भिन्न जो अक् है उसी का लोप अग्लोप कहा जाता है। यहाँ ऐसा अग्लोप न होने से अनग्लोप ही है। सन्वद्भाव इत्व हो जाता है। ]

मी, मा आदि का [ 'अत्र लोपोऽभ्यासस्य' में ] 'अत्र' = 'प्रस्तुतप्रकरणे' ग्रहण के कारण 'सन्वद्भाव से अभ्यासलोप नहीं होता है।' ऐसा कहा गया है। [ भाव यह है कि 'सन्वत्' इस अतिदेश से अचीकरत् आदि में जैसे अभ्यास का इत्व होता है उसी प्रकार 'अमीमपत्' आदि में मी, मा आदि के अभ्यास का लोप भी होना चाहिये ? इस शंका का समाधान है कि 'अभ्यासलोपश्च' इतने से निर्वाह सम्भव होने पर भी 'अत्र' इसका ग्रहण विषय के अवधारण के लिए है—यही 'सनि मीमा० ७।४।५४ से 'मुचोऽकर्मकस्य' ७।४।५७ तक जो सन् परे होता है उसी में

किञ्च—सन्वदिति सनाश्रयं कार्यमतिदिश्यते, न च लोपः सनमेवापेक्षते, किं तर्हि ? इस्भावाद्यपि; तदभावाद् अमीमपदित्यादावभ्यासलोपो न भविष्यति ॥

**२६११. दीर्घो लघोः ॥ ९४ ॥ (२३१८)**

दीर्घो भवति लघोरभ्यासस्य लघुनि णौ चङ्परेऽनग्लोपे । अचीकरत् । अजीहरत् । अलीलवत् । अपीपचत् ।

लघोरिति किम् ? अबिभ्रजत् ।

'लघुनि' इत्येव—अततक्षत् । अररक्षत् ।

**न्यासः**

किञ्चेत्यादिना परीहारान्तम् । सन्वदित्यतिदेशेन हि सनाश्रयमेव कार्यमितिदिश्यते । सनाश्रयञ्च किं कार्यम् ? यत् सनमपेक्षते, नापरं किञ्चित् । न च 'अत्र लोपोऽभ्यासस्य' इत्यनेन विधीयमानो लोपः सनमेवापेक्षते, किं तर्हि ? इस्भावादिकमपि । आदिशब्देन—'आप्ज्ञप्यृधामीत्' इतीत्त्वम्, 'मुचोऽकर्मकस्य' इति गुणश्च परिगृह्यते । तेनामीमपदित्यादाविसादेशो न भवति । अभ्यासलोपोऽपि न भवतीत्यभिप्रायः ॥ ९३ ॥

दीर्घो लघोः ॥ ९४ ॥

**पदमञ्जरी**

किञ्चेत्यादि । अनेनेदमाह—न केवलं मुख्यसम्परिग्रहमात्रमत्र कारणम्, किं तर्हि ? इस्भावाद्यपि विषयत्वेन निर्दिश्यते । इह च धातोः सन्वद्भावादिस्भावादि न भवति, ततश्चाभ्यासलोपोऽपि न भवतीति । यद्वा—सकारादौ सन्यभ्यासलोपो विहितः, न सन्मात्रे, ततश्च सामान्यातिदेशे विशेषानतिदेशात् लोपाभावः ॥ ९३ ॥

दीर्घो लघोः ॥ अबिभ्रजदिति । 'भ्राजभास' इत्यादिना पक्षे उपधाह्रस्वनिषेधः ॥ ९४ ॥

**भावबोधिनी**

अभ्यास का लोप होता है । फलतः सन्वद्भाव मान कर अभ्यासलोप नहीं होता है अर्थात् वास्तविक सन् में अभ्यासलोप होता है । ]

[ दूसरा परिहार है— ] और भी, 'सन्वत्' इससे सन् को आश्रय मान कर होने वाले कार्य ( इत्व आदि ) का अतिदेश होता है, और अभ्यास का लोप तो केवल सन् की ही अपेक्षा नहीं रखता है; तो फिर और किसकी ? 'इस होना' आदि की भी अपेक्षा रखता है अर्थात् जहाँ इस्भाव भी हो वही सन् में लोप होता है, चूंकि यह इस् आदि होना 'अमीमपत्' आदि में नहीं होता है—इस कारण [ सन्वद्भाव हो जाने पर भी ] अभ्यास का लोप नहीं होता है । [ भाव यह है कि 'सनि मीमा०' इससे अच् का 'इस्' आदेश, 'आप्ज्ञप्यृधामीत्' से अच् का ईत्, 'दम्भ इच्च' इससे इत्व आदि और 'मुचोऽकर्मस्य' इससे गुण भी होते हैं वहाँ सन् परे अभ्यासलोप होता है । फलतः केवल सन्वद्भाव में अभ्यासलोप का प्रसङ्ग नहीं आता है । ] ॥ ९३ ॥

लघु अभ्यास का दीर्घ होता है चङ्परक णि परे लघु धात्वक्षर में अनग्लोप में । [ चङ्परक णि परे रहते जो अङ्ग उसके लघु अभ्यास का, लघु धात्वक्षर परे रहते, दीर्घ होता है । ] उदा० अचीकरत् । अजीहरत् । अलीलवत् । अपीपचत् । [ कृ, हृ, लू, पू—इनसे णिच् करके लुङ्, 'च्लि, चङ्, द्वित्व, अभ्यास कार्य, सन्वद्भाव, अ चि कर् अ त्, प्रस्तुत सूत्र से 'अभ्यास का दीर्घ होता है—अचीकरत् । ]

लघु का दीर्घ—इसका क्या फल है ? अबिभ्रजत् । [ भ्राज्+णिच्+लुङ्, चङ्, द्वित्व आदि कार्य, सन्वद्भाव, इत्व होते हैं किन्तु 'भ्र' इस संयोग से पूर्व होने से 'बि' गुरु हो जाता है, इस सूत्र से दीर्घ नहीं होता है । ]

लघु धात्वक्षर परे रहते—इसका क्या फल है ? अततक्षत् । अररक्षत् । [ क्ष् = क्ष् से पूर्व दीर्घ हो जाने से लघु परे नहीं है, दीर्घ नहीं होता है । ]

'चङि' इत्येव—अहं पपच ।
'परे' इत्येव—अचकमत ।
'अनग्लोपे' इत्येव—अचकथत् ॥

**३६१२. अत्स्मृदृत्वरप्रथम्रदस्तॄस्पशाम् ॥ ९५ ॥ ( २५६६ )**

स्मृ, दृ, त्वर, प्रथ, म्रद, स्तॄ, स्पश—इत्येतेषामभ्यासस्य 'अत्' इत्ययमादेशो भवति चङ्परे णौ परतः । स्मृ—असस्मरत् । दृ—अददरत् । त्वर—अतत्वरत् । प्रथ—अपप्रथत् । म्रद—अमम्रदत् । स्तॄ—अतस्तरत् । स्पश—अपस्पशत् । सन्वद्भावादित्वं प्राप्तमनेन बाध्यते ।

तपरकरणसामर्थ्यादति कृते 'दीर्घो लघोः' ( ७।४।९४ ) इत्येतदपि न भवति—अददरत् ॥

**३६१३. विभाषा वेष्टिचेष्ट्योः ॥ ९६ ॥ (२५८३)**

वेष्टि, चेष्टि—इत्येतयोरभ्यासस्य विभाषा 'अत्' इत्ययमादेशो भवति चङ्परे णौ परतः । अववेष्टत् । अविवेष्टत् । अचचेष्टत्, अचिचेष्टत् । अभ्यासह्रस्वत्वे कृते अत्वं पक्षे भवति ॥

**न्यासः**

अत्स्मृदृत्वरप्रथम्रदस्तॄस्पशाम् ॥ 'स्मृ चिन्तायाम्', 'दृ भये', 'ञित्वरा सम्भ्रमे', 'प्रथ प्रख्याने', 'म्रद मर्दने', 'स्तॄञ् आच्छादने', 'स्पश बाधनस्पर्शनयोः'[1] ।

अथाददरदित्यत्र 'दीर्घो लघोः' इति दीर्घत्वं कस्मान्न भवतीत्याह—**तपरकरणसामर्थ्यादित्यादि** । अनेनैव हि लक्षणेन दीर्घो नैव प्राप्नोति, यस्य निवृत्तिस्तपरकरणेन क्रियते; 'भाव्यमानोऽण् सवर्णान् न गृह्णाति' इति भाव्यमानानां सवर्णानामग्रहणात् सर्वत्र स्थानिनो ह्रस्वत्वाच्च । तत्र यदि लक्षणान्तरेणापि प्राप्नुवतो दीर्घस्य निवर्त्तकं तपरकरणं न स्यान्निरर्थकमेव तपरकरणं स्यात् । तस्मात् तपरकरणसामर्थ्यादति कृते 'दीर्घो लघोः' इति दीर्घो न भवतीति भावः ॥ ९५ ॥

**विभाषा वेष्टिचेष्ट्योः** ॥ 'वेष्ट वेष्टने', 'चेष्ट चेष्टायाम्'—एतयोरभ्यासस्य लघुपरता नास्तीत्यप्राप्त एव सन्वद्भाव इति अनेन विभाषाऽकारो विधीयते ॥ ९६ ॥

**पदमञ्जरी**

**अत्स्मृदृत्वरप्रथम्रदस्तॄस्पशाम्** ॥ **तपरकरणसामर्थ्यादिति** । स्थानिनो ह्रस्वत्वाद् भाव्यमानत्वेन सवर्णाग्रहणाच्च नानेन दीर्घस्य प्रसङ्गः, अतो लक्षणान्तरेण प्राप्तं दीर्घत्वं तपरकरणेन व्यावर्त्यते ॥ ९५ ॥ ९६ ॥

**भावबोधिनी**

चङ् परे ही—अहं पपच । [ यहाँ नहीं होता है क्योंकि लिट् में च्रङ् नहीं होता है । ]
चङ् परक णि—इसी मे होता है—अचकमत । [ यह णिङ् के अभाव में रूप है । ]
'अनल्लोप मे'—अचकथत् । [ कथ + णिच् में अलोप होता है । अग्लोपी है । ] ॥ ९४ ॥

स्मृ, दृ, त्वर, प्रथ, म्रद, स्तॄ, स्पश्—इन धातुओं के अभ्यास का 'अत्' यह आदेश चङ् परक णि परे रहते होता है । उदा० स्मृ—असस्मरत् । दृ—अददरत् । त्वर—अतत्वरत् । प्रथ—अपप्रथत् । म्रद—अमम्रदत् । स्तॄ—अतस्तरत् । स्पश्—अपस्पशत् । इनमें सन्वद्भाव से [ 'सन्यतः' सूत्र से ] प्राप्त इत्व का इस सूत्र द्वारा बाध किया जाता है । [ स्मृ + णिच् + लुङ् यहाँ च्लि का चङ् द्वित्व आदि सभी कार्य करने के बाद अभ्यास के अ का इत्व प्राप्त होता है उसे बाधित करके 'अत्' = अ यही किया जाता है । ]

[ इनमें 'दीर्घो लघोः' से दीर्घ क्यों नहीं होता है ? 'अत्' इसमें ] तपरकरण के सामर्थ्य से 'अत्' आदेश कर देने पर 'दीर्घो लघोः' यह भी नहीं होता है—अददरत् ॥ ९५ ॥

'वेष्टि' और 'चेष्टि'—इनके अभ्यास का विकल्प से 'अत्' यह आदेश चङ्परक णि परे रहते होता है । उदा० अववेष्टत्, अविवेष्टत् । अचचेष्टत्, अचिचेष्टत् । अभ्यास का ह्रस्व करने पर पक्ष में अत्व होता है । [ वेष्ट् +

१. 'स्पर्श' इत्यशुद्धः पाठः, धातुपाठे 'स्पश' इत्यस्यैव भ्वादौ दर्शनात् ।
का० ९/४८

**३६१४. ई च गणः ॥ ९७ ॥ (२५७३)**

**गणेरभ्यासस्य ईकारादेशो भवति चङ्परे णौ परतः, चकारादच्च । अजीगणत्, अजगणत् ॥**

**॥ इति श्रीवामनाचार्यविरचितायां काशिकावृत्तौ सप्तमस्याध्यायस्य चतुर्थः पादः ॥**

**समाप्तश्च सप्तमोऽध्यायः**

—०—

**न्यासः**

**ई च गणः ॥** 'गण संख्याने', चुरादावदन्तः । तत्राकारस्य 'अतो लोपः' इति कृतेऽनग्लोप इति वचनादप्राप्तयोरेव सन्वद्भावदीर्घयोरिदमित्वं विधीयते ।

चकारो विभाषेत्यनुकर्षणार्थः ॥ ९७ ॥

**॥ इति बोधिसत्त्वदेशीयाचार्यश्रीजिनेन्द्रबुद्धिपादविरचितायां काशिका-विवरणपञ्जिकायां सप्तमाध्यायस्य चतुर्थः पादः ॥**

—०—

**पदमञ्जरी**

**ई च गणः ॥** 'गण संख्याने' चुरादावदन्तः, तस्यातो लोपेनानग्लोप इति प्रतिषेधाद्वचनम् । कृतयोर्हलादिशेषदीर्घत्वयोरीत्वमत्वं च विधीयते ।

'लोपः पिबतेः' इत्येतदत्रैव पठितव्यम्—पिबतेरालोपश्चेति, चकारात् ई चाभ्यासस्य ? सत्यम्; विभाषेत्यस्यानुवृत्तिः शङ्क्येत ॥ ९७ ॥

**॥ इति श्रीहरदत्तमिश्रविरचितायां पदमञ्जर्यां सप्तमस्याध्यायस्य तुरीयश्चरणः ॥**

—०—

**भावबोधिनी**

णिच् + लुङ्, च्लि का चङ्, द्वित्व अ वेष्ट् वेष्ट् इ अत्, हलादिशेष, 'ह्रस्वः' से अभ्यासह्रस्व—अविवेष्ट् इ अत्, 'णेरनिटि' से णिलोप, प्रस्तुत सूत्र से विकल्प से अत्' आदेश—अववेष्टत् । अत् न होने पर—अविवेष्टत् । इसी प्रकार अचि चेष्ट् अत् में भी विकल्प से अत्व अचचेष्टत् । पक्ष में अचिचेष्टत् । इन दोनों के अभ्यास के बाद लघु अक्षर नहीं है अतः सन्वद्भाव की अप्राप्ति में ही यह विभाषा 'अत्' किया जाता है । ] ॥ ९६ ॥

'गणि' इसके अभ्यास का ईकार आदेश चङ्परक णि परे रहते होता है, चकार के बल से 'अत्' भी होता है अर्थात् ई और अ दोनों आदेश होते हैं । उदा० अजीगणत्, अजगणत् । [ गण् + णिच्, अलोप होने से यह धातु अग्लोपी है, फलतः द्वित्व, अभ्यासकार्य के बाद सन्वद्भाव, इत्व और दीर्घ नहीं प्राप्त हैं, प्रस्तुत सूत्र से ही किये जाते हैं अ गणि + चङ् = अ, + ति, द्वित्व अभ्यासकार्य के बाद अभ्यास का ईत्व और पक्ष में अत्व किया जाने पर (१) अजीगणत् (२) अजगणत् दो रूप होते हैं । ] ॥ ९७ ॥

**॥ इस प्रकार श्री वामनाचार्य द्वारा विरचित 'काशिका' वृत्ति में सप्तम अध्याय का चतुर्थ पाद समाप्त हुआ ॥**

—०—

**॥ इस प्रकार जयशङ्कर लाल त्रिपाठी द्वारा विरचित 'भावबोधिनी'—हिन्दी-व्याख्या में काशिका-वृत्ति के सप्तम अध्याय का चतुर्थ पाद सम्पूर्ण हुआ ॥**

**कृपया काशीश्वरस्याद्य गुरूणां च प्रसादतः ।**
**काशिका-सप्तमाध्यायं व्याचष्ट जयशङ्करः ॥१॥**
**अयं व्याख्यात्रयोपेतः, श्रीत्रिपाठि – परिष्कृतः ।**
**काशिकासप्तमाध्यायः सद्व्याख्यावद्भ्यस्समर्प्यते ॥२॥**

**॥ ॐ शुभमस्तु ॥**

—०—

# पाणिनीय-सूत्र-सूची


| सूत्राणि | सूत्राङ्काः | पृष्ठाङ्काः |
|---|---|---|
| अ | | |
| अकृत्सार्वधातुकयोः | ७.४.२५ | ३१० |
| अच उपसर्गात्तः | ७.४.४७ | ३२७ |
| अचस्तास्वत् थलि | ७.२.६१ | ९३ |
| अचि र ऋतः | ७.२.१०० | १३८ |
| अचो ञ्णिति | ७.२.११५ | १५२ |
| अच्च घेः | ७.३.११९ | २८४ |
| अजिव्रज्योश्च | ७.३.६० | २३३ |
| अञ्चेः पूजायाम् | ७.२.५३ | ८४ |
| अञ्जेः सिचि | ७.२.७१ | १०५ |
| अड् गार्ग्यगालवयोः | ७.३.९९ | २७२ |
| अत आदेः | ७.४.७० | ३५२ |
| अत उपधायाः | ७.२.११६ | १५३ |
| अतो दीर्घो यञि | ७.३.१०१ | २७३ |
| अतो येयः | ७.२.८० | ११२ |
| अतो ल्रान्तस्य | ७.२.२ | ३ |
| अतो हलादेर्लघोः | ७.२.७ | १२ |
| अत्र लोपोऽभ्यासस्य | ७.४.५८ | ३३६ |
| अत् स्मृदृत्वरप्रथम्रद० | ७.४.९५ | ३७७ |
| अदः सर्वेषाम् | ७.३.१०० | २७२ |
| अदस औ सुलोपश्च | ७.२.१०७ | १४७ |
| अनाप्यकः | ७.२.११२ | १५१ |
| अनुशतिकादीनां च | ७.३.२० | १८२ |
| अपचितश्च | ७.२.३० | ५७ |
| अपरिह्वृताश्च | ७.२.३२ | ५८ |
| अपो भि | ७.४.४८ | ३२८ |
| अभाषितपुंस्काच्च | ७.३.४८ | २२० |
| अभेश्चाविदूर्ये | ७.२.२५ | ५१ |
| अभ्यासाच्च | ७.३.५५ | २३० |
| अम्बार्थनद्योर्ह्रस्वः | ७.३.१०७ | २७६ |
| अयङ् यि क्ङिति | ७.४.२२ | ३०८ |
| अर्तिपिपर्त्योश्च | ७.४.७७ | ३५२ |
| अर्तिह्रीब्लीरीक्नूयी० | ७.३.३६ | २०० |

| सूत्राणि | सूत्राङ्काः | पृष्ठाङ्काः |
|---|---|---|
| अर्देः संनिविभ्यः | ७.२.२४ | ५१ |
| अर्धात् परिमाणस्य | ७.३.२६ | १८९ |
| अवयवादृतोः | ७.३ ११ | १७१ |
| अशनायोदन्यधनाया | ७.४.३४ | ३१६ |
| अश्नोतेश्च | ७.४.७२ | ३५४ |
| अश्वाघस्यात् | ७.४.३७ | ३१८ |
| अष्टन आ विभक्तौ | ७.२.८४ | ११८ |
| अस्तिसिचोऽपृक्ते | ७.३.९६ | २७० |
| अस्य च्वौ | ७.४.३२ | ३१५ |
| अस्यतेस्थुक् | ७.४ १७ | ३०७ |
| आ | | |
| आङि चापः | ७.३.१०५ | २७५ |
| आङो नाऽस्त्रियाम् | ७.३.१२० | २८५ |
| आण नद्याः | ७.३.११२ | २८० |
| आतो ङितः | ७.२.८१ | ११४ |
| आतो युक् चिण्कृतोः | ७.३.३३ | १९६ |
| आदाचार्याणाम् | ७.३.४९ | २२१ |
| आदितश्च | ७.२.१६ | ४१ |
| आने मुक् | ७.२.८२ | ११६ |
| आपोऽन्यतरस्याम् | ७.४.१५ | ३०६ |
| आप्ज्ञप्यृधामीत् | ७.४.५५ | ३३३ |
| आर्धधातुकस्येड्वलादेः | ७.२.३५ | ६१ |
| इ | | |
| इट् सनि वा | ७.२.४१ | ७१ |
| इडत्त्यर्तिव्ययतीनाम् | ७.२.६६ | ९९ |
| इण् निष्ठायाम् | ७.२.७४ | ७७ |
| इदमो मः | ७.२.१०८ | १४९ |
| इदुद्भ्याम् | ७.३.११७ | २८४ |
| इदोऽय् पुंसि | ७.२.१११ | १५० |
| इषुगमियमां छः | ७.३.७७ | २४६ |
| इसुसुक्तान्तात्कः | ७.३.५१ | २२४ |
| ई | | |
| ई घ्राध्मोः | ७.४.३१ | ३१४ |

| सूत्राणि | सूत्राङ्काः | पृष्ठाङ्काः |
|---|---|---|
| ई च गणः | ७.४.९७ | ३७८ |
| ईडजनोर्ध्वे च | ७.२.७८ | १०९ |
| ईदासः | ७.२.८३ | ११७ |
| ईशः से | ७.२.७७ | १०९ |
| **उ** | | |
| उतो वृद्धिर्लुकि हलि | ७.३.८९ | २६३ |
| उत्तरपदस्य | ७.३.१० | १७० |
| उत्परस्यातः | ७.४.८८ | ३६७ |
| उदितो वा | ७.२.५६ | ८६ |
| उदीचामातः स्थाने | ७.३.४६ | २१४ |
| उपदेशेऽत्वतः | ७.२.६२ | ९५ |
| उपसर्गाद् ह्रस्व ऊहतेः | ७.४.२३ | ३०९ |
| उरत् | ७.४.६६ | ३४९ |
| उरृत् | ७.४.७ | २९६ |
| **ऊ** | | |
| ऊर्णोतेर्विभाषा | ७.२.६ | १२ |
| ऊर्णोतेर्विभाषा | ७.३.९० | २६४ |
| **ऋ** | | |
| ऋच्छत्यॄताम् | ७.४.११ | ३०२ |
| ऋतश्च | ७.४.९२ | ३७० |
| ऋतश्च संयोगादेः | ७.२.४३ | ७२ |
| ऋतश्च संयोगादेर्गुणः | ७.४.१० | २९९ |
| ऋतो ङिसर्वनामस्थानयोः | ७.३.११० | २७९ |
| ऋतो भारद्वाजस्य | ७.२.६३ | ६६ |
| ऋदृशोऽङि गुणः | ७.४.१६ | ३०६ |
| ऋद्धनोः स्ये | ७.२.७० | १०४ |
| **ए** | | |
| एकाच उपदेशेऽनुदात्तात् | ७.२.१० | १८ |
| एर्लिङि | ७.४.२४ | ३१० |
| **ओ** | | |
| ओः पुयण्ज्यपरे | ७.४.८० | ३५९ |
| ओक उच्चः के | ७.३.६४ | २३६ |
| ओतः श्यनि | ७.३.७१ | २४० |
| ओसि च | ७.३.१०४ | २७४ |

| सूत्राणि | सूत्राङ्काः | पृष्ठाङ्काः |
|---|---|---|
| **औ** | | |
| औत् | ७.३.११८ | २८४ |
| **क** | | |
| कव्यध्वरपृतनस्यर्चि | ७.४.३९ | ३१९ |
| किति च | ७.२.११८ | १५५ |
| किमः कः | ७.२.१०३ | १४३ |
| किरश्च पञ्चभ्यः | ७.२.७५ | १०७ |
| कुतिहोः | ७.२.१०४ | १४४ |
| कुहोश्चुः | ७.४.६२ | ३४२ |
| कृच्छ्रगहनयोः कषः | ७.२.२२ | ४९ |
| कृषेश्छन्दसि | ७.४.६४ | ३४४ |
| कृसृभृवृस्तुद्रुस्रुश्रुवः | ७.२.१३ | ३६ |
| केकयमित्रयुप्रलयानाम् | ७.३.२ | १६० |
| केऽणः | ७.४.१३ | ३०४ |
| क्यचि च | ७.४.३३ | ३१६ |
| क्रमः परस्मैपदेषु | ७.३.७६ | २४५ |
| क्लिशः क्त्वानिष्ठयोः | ७.२.५० | ८२ |
| क्वाति | ७.२.१०५ | १४५ |
| क्षुब्धस्वान्तध्वान्त० | ७.२.१८ | ४३ |
| क्सस्याचि | ७.३.७२ | २४१ |
| **ग** | | |
| गमेरिट् परस्मैपदेषु | ७.२.५८ | ८७ |
| गुणोऽपृक्ते | ७.३.९१ | २६४ |
| गुणो यङ्लुकोः | ७.४.८२ | ३६१ |
| गुणोऽर्तिसंयोगाद्योः | ७.४.२९ | ३१३ |
| ग्रसितस्कभित० | ७.२.३४ | ५८ |
| ग्रहोऽलिटि दीर्घः | ७.२.३९ | ६८ |
| **घ** | | |
| घुषिरविशब्दने | ७.२.२३ | ५० |
| घेर्ङिति | ७.३.१११ | २८० |
| घोर्लोपो लेटि वा | ७.३.७० | २३९ |
| **ङ** | | |
| ङेराम्नद्याम्नीभ्यः | ७.३.११६ | २८३ |
| **च** | | |
| चजोः कु घिण्ण्यतोः | ७.३.५२ | २२५ |

| सूत्राणि | सूत्राङ्काः | पृष्ठाङ्काः |
|---|---|---|
| चरफलोश्च | ७.४.८७ | ३६७ |
| च्वौ च | ७.४.२६ | ३११ |
| ज | | |
| जङ्गलधेनुवलजान्तस्य | ७ ३.२५ | १८८ |
| जनिवध्योश्च | ७.३.३५ | १९९ |
| जपजभदहदशभञ्ज० | ७.४.८५ | ३६६ |
| जराया: जरसन्यतरस्याम् | ७.२.१०१ | १४० |
| जसि च | ७.३.१०९ | २७८ |
| जहातेश्च क्त्वि | ७.४.३३ | ३२३ |
| जाग्रोऽविचिण्णल् | ७.३.८५ | २५३ |
| जिघ्रतेर्वा | ७.४.६ | २९६ |
| जुसि च | ७.३.८३ | २५१ |
| जॄव्रश्च्योः क्त्वि | ७.२.५५ | ८५ |
| जे प्रोष्ठपदानाम् | ७.३.१८ | १८० |
| ज्ञाजनोर्जा | ७.३.७८ | २४८ |
| ठ | | |
| ठस्येकः | ७.३.५० | २२१ |
| ण | | |
| णिजां त्रयाणाम् | ७.४.७५ | ३५५ |
| णेरध्ययने वृत्तम् | ७.२.२६ | ५२ |
| णौ चङ्युपधाया: | ७.४.१ | २८७ |
| ण्य आवश्यके | ७.३.३५ | २३७ |
| त | | |
| तरप्रत्ययस्य च | ७.३.२९ | १९१ |
| तदो: सावनन्त्ययो: | ७ २.१२६ | १४६ |
| तद्धितेष्वचामादेः | ७ २.११७ | १५४ |
| तवममौ ङसि | ७.२.९६ | १३० |
| तस्मान्नुड्द्विहल: | ७.४.७१ | ३५३ |
| तासस्त्योर्लोपः | ७.४.५७ | ३२९ |
| तासि च क्लृपः | ७.२.६० | ९२ |
| ति च | ७.४.८९ | ३६८ |
| तितुत्रतथसिसु० | ७.२.९ | १६ |
| तिष्ठतेरित् | ७.४.५ | २९६ |
| तीषसहलुभरुषरिष: | ७.२.४८ | ७८ |
| तुभ्यमह्यौ ङयि | ७.२.९५ | १३० |
| तुरुस्तुशम्यम: | ७.३.९५ | २६८ |
| तृणह इम् | ७.३.९२ | २६५ |
| त्यदादीनाम: | ७.२.१०८ | १४८ |
| त्रिचतुरो: स्त्रियाम् | ७.२.९९ | १३५ |
| त्वमावेकवचने | ७.२.९७ | १३१ |
| त्वाहौ सौ | ७.२.९४ | १३० |
| द | | |
| दधातेर्हि | ७.४.४२ | ३२२ |
| दम्भ इच्च | ७.४.५६ | ३३४ |
| दयतेर्दिगि लिटि | ७.४.९ | २९८ |
| दश्च | ७.२.१०९ | १४९ |
| दाधर्तिदर्धर्ति | ७.४.६५ | ३४४ |
| दिशोऽमद्राणाम् | ७.३.१३ | १७३ |
| दीर्घं इण: कित् | ७.४.६९ | ३५२ |
| दीर्घाच्च वरुणस्य | ७.३.२३ | १८७ |
| दीर्घोऽकित: | ७.४.८३ | ३६१ |
| दीर्घो लघो: | ७.४.९४ | ३७६ |
| दुरस्युर्द्रविणस्यु: | ७.४.३६ | ३१७ |
| दृढ: स्थूलबलयो: | ७.२.२० | ४६ |
| देवताद्वन्द्वे च | ७.३.२१ | १८६ |
| देवसुम्नयोर्यजुषि | ७.४.३८ | ३१८ |
| देविकाशिशपा० | ७.३.१ | १५७ |
| द्यो दद्घो: | ७.४.४६ | ३२४ |
| द्यति-स्यतिमास्था | ७.४.४० | ३१९ |
| द्युतिस्वाप्यो: सम्प्रसारणम् | ७.४.५७ | ३४९ |
| द्वारादीनां च | ७.३.४ | १६४ |
| द्वितीयायां च | ७.२.८७ | १२० |
| ध | | |
| धृषिशसी वैयात्ये | ७.२.१९ | ४५ |
| न | | |
| न कपि | ७.४.१४ | ३०५ |
| न कर्मव्यतिहारे | ७.३.६ | १६७ |
| न कवतेर्यङि | ७.४.६३ | ३४३ |
| न क्वादेः | ७.३.५९ | २३३ |
| न च्छन्दस्यपुत्रस्य | ७.४.३५ | ३१७ |

| सूत्राणि | सूत्राङ्काः | पृष्ठाङ्काः |
|---|---|---|
| नजः शुचीश्वर० | ७.३.३० | १९२ |
| न यासयोः | ७.३.४५ | २११ |
| न य्वाभ्यां पदान्ताभ्यां० | ७.३.३ | १६१ |
| न लिङि | ७.२.३९ | ७० |
| न वृद्भ्यश्चतुर्भ्यः | ७.२.५९ | ८९ |
| नाग्लोपिशास्० | ७.४.२ | २९३ |
| नातः परस्य | ७.३.२७ | १८९ |
| नाभ्यस्तस्याचि पिति | ७.३.८९ | २५९ |
| नित्यं छन्दसि | ७.४.८ | २९८ |
| निरः कुषः | ७.२.४६ | ७७ |
| नीग् वञ्चुस्रंसुध्वंसु | ७.४.८८ | ३६३ |
| नुगतोऽनुनासिकान्तस्य | ७.८.८५ | ३६४ |
| नेटि | ७.२.४ | ९ |
| नेड् वशि कृति | ७.२.८ | १५ |
| नेन्द्रस्य परस्य | ७.३.२२ | १८७ |
| नोदात्तोपदेशस्य | ७.३.३४ | १९७ |
| न्यग्रोधस्य च केवलस्य | ७.३.५ | १६७ |
| न्यङ्क्वादीनां च | ७.३.५३ | २२५ |
| **प** | | |
| पतः पुम् | ७.४.१९ | ३०७ |
| पदान्तस्यान्यतरस्याम् | ७.३.९ | १७० |
| परिमाणान्तस्यासंज्ञा | ७.३.१७ | १७९ |
| पाघ्राध्मास्थाम्ना० | ७.३.७८ | २४७ |
| पुगन्तलघूपधस्य च | ७.३.८६ | २५५ |
| पूङश्च | ७.२.५१ | ८३ |
| प्रत्ययस्थात् कात् | ७.३.४४ | २०७ |
| प्रत्ययोत्तरपदयोश्च | ७.२.९८ | १३२ |
| प्रथमायाश्च द्विवचने | ७.२.८८ | १२१ |
| प्रभौ परिवृढः | ७.२.२१ | ४७ |
| प्रयाजानुयाजौ यज्ञाङ्गे | ७.३.६२ | २३५ |
| प्रयोज्यनियोज्यौ शक्यार्थे | ७.३.६८ | २३८ |
| प्रवाहणस्य ढे | ७.३.२८ | १९१ |
| प्राचां ग्रामनगराणाम् | ७.३.१४ | १७४ |
| प्राचां नगरान्ते | ७.३.२४ | १८८ |
| प्वादीनां ह्रस्वः | ७.३.८० | २४९ |
| **ब** | | |
| बभूथाततन्थजगृभ्म० | ७.२.६४ | ९८ |
| बहुलं छन्दसि | ७.३.९७ | २७१ |
| बहुलं छन्दसि | ७.४.७८ | ३५७ |
| बहुवचने झल्येत् | ७.३.१०३ | १७४ |
| ब्रुव ईट् | ७.३.९३ | २६७ |
| **भ** | | |
| भवतेरः | ७.४.७३ | ३५४ |
| भस्त्रैषाजाज्ञाद्वास्वा | ७.३.४७ | २१६ |
| भियो हेतुभये षुक् | ७.३.४० | २०५ |
| भुजन्युब्जौ पाण्युपतापयोः | ७.३.६१ | २३४ |
| भूसुवोस्तिङि | ७.३.८८ | २६२ |
| भृञामित् | ७.४.७६ | ३५६ |
| भोज्यं भक्ष्ये | ७.३.६९ | २३९ |
| भ्राजभासभाषदीप० | ७.४.३ | २९४ |
| **म** | | |
| मपर्यन्तस्य | ७.२.९१ | १३४ |
| मिदेर्गुणः | ७.२.८२ | २५० |
| मीनातेर्निगमे | ७.३.८१ | २५० |
| मुचोऽकर्मकस्य | ७.४.५७ | ३३५ |
| मृजेर्वृद्धि | ७.२.११४ | १५२ |
| **य** | | |
| यः सौ | ७.२.११० | १५० |
| यङि च | ७.४.३० | ३१४ |
| यङो वा | ७.३.९४ | २६७ |
| यजयाचरुचप्रवचर्चश्च | ७.३.६६ | २३७ |
| यथातथायथापुरयोः | ७.३.३१ | १९४ |
| यमरमनमातां सक् च | ७.२.७३ | १०६ |
| यस्य विभाषा | ७.२.१५ | ४० |
| याडापः | ७.३.११३ | २८१ |
| यीवर्णयोर्दीधीवेव्योः | ७.४.५३ | ३३१ |
| युवावौ द्विवचने | ७.२.९२ | १२६ |
| युष्मदस्मदोरनादेशे | ७.२.८६ | ११९ |
| यूयवयौ जसि | ७.२.९३ | १२९ |
| योऽचि | ७.२.८९ | १२१ |

| सूत्राणि | सूत्राङ्काः | पृष्ठाङ्काः |
|---|---|---|
| र | | |
| रधादिभ्यश्च | ७.२.४५ | ७५ |
| रायो हलि | ७.२.८५ | ११९ |
| रिङ् शयग्लिङ्क्षु | ७.४.२८ | ३१३ |
| रि च | ७.४.५१ | ३३० |
| रीगृदुपधस्य च | ७.४.९० | ३६८ |
| रीङ् ऋतः | ७.४.२७ | ३११ |
| रुग्रिकौ च लुकि | ७.४.९१ | ३६९ |
| रुदश्च पञ्चभ्यः | ७.३.९८ | १७१ |
| रुदादिभ्यः सार्वधातुके | ७.२.७६ | १०८ |
| रुष्यमत्वरसंघुषास्वनाम् | ७.२.२८ | ५५ |
| रुहः पोऽन्यतरस्याम् | ७.३.४३ | २०६ |
| ल | | |
| लिङः सलोपोऽनन्त्यस्य | ७.२.७९ | १११ |
| लिङ्सिचोरात्मनेपदेषु | ७.२.४८ | ७१ |
| लीलोर्नुग्लुकावन्यतरस्याम् | ७.३.३९ | २०४ |
| लुग्वा दुहदिहलिह० | ७.३.७३ | २४२ |
| लुभो विमोहने | ७.२.५४ | ८५ |
| लोपः पिबतेरीच्चाभ्यासस्य | ७.४.४ | २९५ |
| व | | |
| वच उम् | ७.४.२० | ३०७ |
| वचोऽशब्दसंज्ञायाम् | ७.३.६७ | २३८ |
| वञ्चेर्गतौ | ७.३.६३ | २३५ |
| वदव्रजहलन्तस्याचः | ७.२.३ | ६ |
| वर्षस्याभविष्यति | ७.३.१६ | १७८ |
| वसतिक्षुधोरिट् | ७.२.५२ | ८३ |
| वस्वेकाजाद्घसाम् | ७.२.६७ | १०० |
| वा दान्तशान्तपूर्ण० | ७.२.२७ | ५३ |
| विभाषा गमहन० | ७.२.६८ | १०३ |
| विभाषा चेः | ७.३.५८ | २३३ |
| विभाषाच्छन्दसि | ७.४.४४ | ३२३ |
| विभाषा द्वितीयातृतीया० | ७.३.११५ | २८२ |
| विभाषा भावादिकर्मणोः | ७.२.१७ | ४२ |
| विभाषा वेष्टिचेष्ट्योः | ७.४.९६ | ३७७ |
| विभाषा सृजिदृशोः | ७.२.६५ | ९९ |
| वॄतो वा | ७.२.३८ | ६९ |
| वो विधूनने जुक् | ७.३.३८ | २०३ |
| व्यथो लिटि | ७.४.६८ | ३५१ |
| श | | |
| शदेरगतौ तः | ७.३.४२ | २०६ |
| शमामष्टानां दीर्घः | ७.३.७४ | २४४ |
| शर्पूर्वाः खयः | ७.४.६१ | ३४१ |
| शाच्छासाह्वाव्यावेपां | ७.३.३७ | २०१ |
| शाच्छोरन्यतरस्याम् | ७.४.४१ | ३२० |
| शीङः सार्वधातुके गुणः | ७.४.२१ | ३०८ |
| शृदॄप्रां ह्रस्वो वा | ७.४.१२ | ३०३ |
| शेषे लोपः | ७.२.९० | १२२ |
| श्र्युकः किति | ७.२.११ | ३१ |
| श्वयतेरः | ७-४.१८ | ३०७ |
| श्वादेरिञि | ७.३.८ | १६९ |
| श्वीदितो निष्ठायाम् | ७.२.१४ | ३९ |
| ष | | |
| ष्ठिवुक्लम्याचमां शिति | ७.३.७५ | २४४ |
| स | | |
| सः स्यार्धधातुके | ७.४.४९ | ३२९ |
| संख्यायाः संवत्सर० | ७.३.१५ | १७६ |
| सनिससनिवांसम् | ७.२.६९ | १०४ |
| सनि ग्रहगुहोश्च | ७.२.१२ | ३५ |
| सनि मीमाघुरभलभ० | ७.४.५४ | ३३२ |
| सनीवन्तर्धभ्रस्ज० | ७.२.४९ | ७९ |
| सन्यतः | ७.४.७९ | ३५७ |
| सन्लिटोर्जेः | ७.३.५७ | २३२ |
| सन्वल्लघुनि चङ्परे | ७.४.९३ | ३७१ |
| सम्बुद्धौ च | ७.३.१०६ | २७६ |
| सर्वनाम्नः स्याड्० | ७.३.११४ | २८२ |
| ससूवेति निगमे | ७.४.७४ | ३५५ |
| सार्वधातुकार्धधातुकयोः | ७.३.८४ | २५२ |
| सिचि च परस्मैपदेषु | ७.२.४० | ७० |
| सिचि वृद्धिः परस्मैपदेषु | ७.२.१ | १ |
| सुधितवसुधितनेमधित० | ७.४.४५ | ३२३ |
| सुपि च | ७.३.१०२ | २७४ |
| सुसर्वार्धाज्जनपदस्य | ७.३.१२ | १७२ |

| सूत्राणि | सूत्राङ्काः | पृष्ठाङ्काः |
| --- | --- | --- |
| सेऽसिचि कृतचृतछृद० | ७.२.५७ | ८६ |
| सोमे ह्वरितः | ७.२.३३ | ५८ |
| स्तुसुधूञ्भ्यः परस्मैपदेषु | ७.२.८२ | १०५ |
| स्नुक्रमोरनात्मनेपद० | ७.२.३६ | ६३ |
| स्फायो वा | ७.३.४१ | २०६ |
| स्मिपूङ्रञ्ज्वशां | ७.२.७४ | १०७ |
| स्रवतिशृणोतिद्रवति० | ७.४.८१ | ३६० |
| स्वरतिसूतिसूयति | ७.२.४४ | ७३ |
| स्वागतादीनां च | ७.३.७ | १६८ |
| **ह** | | |
| ह एति | ७.४.५२ | ३३० |

| सूत्राणि | सूत्राङ्काः | पृष्ठाङ्काः |
| --- | --- | --- |
| हनस्तोऽचिण्णलोः | ७.३.३२ | १९५ |
| हलादिः शेषः | ७.४.६० | ३३९ |
| हलि लोपः | ७.२.११३ | १५१ |
| हृद्भगसिन्ध्वन्ते | ७.३.१९ | १८१ |
| हृषेर्लोमसु | ७.२.२९ | ५६ |
| हेरचङि | ७.३.५६ | २३१ |
| हो हन्तेर्ञ्णिन्नेषु | ७.३.५४ | २२७ |
| ह्म्यन्तक्षण० | ७.२.५ | ९ |
| ह्रस्वः | ७.४.५९ | ३३८ |
| ह्रस्वस्य गुणः | ६.३.१०८ | २७७ |
| ह्वृह्वरेश्छन्दसि | ७.२.३१ | ५८ |


—:०:—

नत्वा साम्बं शिवं भक्त्या ग्रन्थानालोच्य यत्नतः ।
वृत्तिं प्रस्तौति सम्पाद्य व्याख्यात्रयविभूषिताम् ॥ १ ॥
प्रसादाद् विश्वनाथस्य त्रिपाठी जयशङ्करः ।
कृतवान् 'काशिका'—व्याख्यामपूर्वां 'भावबोधिनीम्' ॥ २ ॥